Beginning शिव आदौ गुरुः प्रोक्तः पश्चाद्विष्णुः प्रकीर्त्तितः ।
ततो ब्रह्मा वसिष्ठश्च ततः शक्तिः पराशरः ॥
व्यासः शुको गौड़पादो गोविन्दाख्यो गुरुस्ततः ।
ततः श्रीशङ्कराचार्य्यो विश्वरूपार्य्य एव च ॥
ततो बोधघनाचार्य्यस्ततो ज्ञानघनाह्वयः ।
ज्ञानोत्तमशिवः पश्चात्ततो ज्ञानगिरिः स्मृतः ॥
ततः सिंहगिरिः पश्चादीश्वरतीर्थसंज्ञकः ॥
ततो नृसिंहतीर्थश्च विद्यातीर्थशिवस्ततः ॥
भारतीतीर्थनामा च विद्यारण्यगुरुः परः ।
ततः श्रीमलयानन्दो देवतीर्थसरस्वती ॥
सरस्वती यादवेन्द्रः परः + + सरस्वती ।
ततस्तु श्रीगुरुवरः श्रीनृसिंहसरस्वती ॥
ततस्तु श्रीगुरुश्रेष्ठो माधवेन्द्रसरस्वती ।
मल्लिकार्ज्जुनयोगीन्द्रस्तत्शुश्रूषाप्तवैभवः ॥
ततः श्रीरामदेवाख्यः शिवः श्रीगुरुरूपधृक् ।
दायदेवयतिः पश्चाद्गणनानन्दसंज्ञकः ॥
ततः श्रीचिद्घनानन्दः सम्प्रदायप्रवर्तकः ।
ततो महेश्वरानन्दो गुरुः श्रीशिवरूपधृक् ॥
श्रीचिदानन्दनाथाख्यो महानन्दैकविग्रहः ।
ततश्चित्प्रतिविम्बाख्यो देव आनन्दपूर्व्वकः ॥
एते वै गुरवः प्रोक्ताः शिवादिस्वगुरुक्रमात् ।
गुरुक्रमं पठेद्यस्तु प्रातर्नित्यमतन्द्रितः ॥
न्यासार्च्चनजपादीनामनन्तं फलमश्नुते ।
श्रीनृसिंहगुरुं वन्दे साक्षान्नारायणात्मकं ।
चिदानन्दघनं पूर्व्वं कारुण्यामृतसागरं ॥
-- — — -- ब्राह्मे मुहूर्त्ते उत्थाय ब्रह्मरन्ध्रे सिताम्बुजे । इत्यादि ।

End एवं ध्यात्वा माहात्म्यमपि संस्मृत्य योन्यादिमुद्रादशकं दर्शयित्वा जपं कुर्व्वीत ।
श्रीमुखाब्दे शके वाणत्रिवेदशशिसम्मिते ।
याम्यायने सिते मार्गे गुरावेकादशीदिने ॥
गुरुदेवात्मनामैक्यं सञ्चिन्त्यातिविशारदः ।
करोरपञ्चिजानन्दः श्रीप्रसादपराक्रमं ॥

**Colophon**. इति श्रीनिजात्मप्रकाशानन्दनाथमल्लिकार्ज्जुनयोगीन्द्रविरचितायां गद्यपद्यमय्यां अनुक्रमोत्तमायां श्रीविद्यापद्धतौ प्रथमखण्डः परिपूर्णः। सवत् १७९२। ज्येष्ठमास।

विषयः। ग्रन्थकारस्य गुरुपरम्पराकथनप्रसङ्गेन सम्प्रदायप्रवृत्तिकथनं। दैशिकस्य प्रातःकृत्यनिरूपणं। तान्त्रिकसन्ध्यादिकथनं। अर्द्धरात्रे तुरीयसन्ध्याविधिकथन। तर्पणादिविधिकथनं। श्रीविद्याया पूजाविधिकथनं। प्राणप्रतिष्ठादिविधिकथनं। प्रपञ्चयागविधिकथनं। बालासम्पुटितादिमातृकान्यासादिकथनं। एवं लक्ष्मीसम्पुटित-कामसम्पुटित-श्रीविद्यासम्पुटितादिन्यासकथनं। श्रीकण्ठ-केशवादि-कामरतिप्रणवोत्थानकलादिमातृकान्यासनिरूपणं। मालिनी-कालसङ्कर्षिण्यादिन्यासकथनं। परा-वैखरी-सूर्य्यकला-योगपीठ-ग्रह-नक्षत्रादिन्यासकथन। जपविधिकथनं। मण्डपध्यानादिकथन। स्तोत्रादिकथनं। श्रीविद्यामाहात्म्यकथनञ्च।

---

**No. 2262**. दानपारिजातः। Substance, country-made paper, 11 × 4 inches. Folia, 300. Lines, 10 on a page. Extent, 7,475 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, old. Prose and verse. Correct.

**Dána-párijáta**. A summary of the rules and rituals for the consecration of religious gifts. By Ananta A'chárya, son of Náges'a Bhaṭṭa, grandson of Jahnu Bhaṭṭa, and nephew of Vishṇupadás'rita Bhaṭṭa. The author wrote several works on Smṛiti topics under the generic name of Párijáta.

**Beginning**. वन्दे श्रीमदनन्तसंज्ञ + + + लक्ष्मीनिवासं हरिं
विघ्नध्वान्तदिवाकरं सुरगुरुं सर्व्वार्थसिद्धिप्रदं।
ब्रह्मेशार्कसुरेन्द्रपूर्व्वकसुरा यस्य प्रसादात् सदा
सर्व्वारम्भसमाप्तिमीयुरमलं मद्वंशदेवं परं॥
— — — — — — — — — —।
श्रुतिसकलरहस्यं विम्बितं यस्य चित्ते
मुकुर इव मुखाब्जे दोषमालिन्यशून्ये।
स्वपदविमलभक्त्या यस्य तुष्टोरमेशो-
जनकजनकजह्नुं भट्टमेनं नतोऽस्मि॥
जातोऽहमग्रेण मनोरथेन
यस्यानुकम्पामृतवृष्टिपुष्टः।
पारङ्गतस्याखिलदर्शनानां
नागेशभट्टं जनकं नतोऽस्मि॥

श्रीमत्काश्यकुलाब्धिशीतकिरणो विद्याकलानां निधिः ।
श्रीमद्विष्णुपदाश्रितः सरसगीर्विद्वच्चकोरप्रियः ॥
भट्टश्चन्द्र इमं पितृव्यमभिनम्यानन्तभट्टः सुधी-
र्नानादानविधानसत्सुरतरुं व्यारोपयद्भूतले ॥

अथ दानप्रशंसा तैत्तिरीयश्रुतौ । दानेन द्विषन्तोमित्रा भवन्ति । इत्यादि ।

End. तस्माल्लक्षणसम्पन्नां प्रतिमां सर्व्वदार्पयेत् ।
महदैश्वर्य्यमाप्नोति स्वर्गलोके महीयते इति ॥

Colophon. इति श्रीमदनन्ताचार्य्यविरचिते दानपारिजाताभिधाने निबन्धे मूर्त्तिदानविधानानि ।

विषयः । दानमाहात्म्यकीर्त्तनं । दानस्वरूपनिरूपणं । दानदोषकथनं । दानाङ्गनिरूपणं । दानपात्रनिरूपणं । देयद्रव्यनिरूपणं । ग्राह्याग्राह्यद्रव्यनिरूपणं । दानदेशनिरूपणं । कालादिनिरूपणञ्च । दानेतिकर्त्तव्यताकथनं । दक्षिणानिरूपणं । अधिकारिनिरूपणं । द्रव्यमानकथनं । कलशादिमानकथनं । दर्भादिलक्षणकथनं । धान्यादिमानकथनं । भूमिमानादिकथनं । अङ्गुल्यादिभेदमानादिनिरूपणं । वास्तुनिरूपणं । प्राचीदिक्साधनविधिः । तोरणपताकामण्डपादिलक्षणं । कुण्डनिरूपणं । मेखलायोनिकुण्डादिनिरूपणं । तुलापुरुष-हिरण्यगर्भ-ब्रह्माण्ड-कल्पपादप—गोसहस्र-हिरण्यकामधेनु-हिरण्याश्व-हिरण्याश्वरथप्रभृतिषोड़शमहादानविधानादिकीर्त्तनं । अत्र प्रत्येकं प्रयोगकथनञ्च । अथ धान्यमेरुदानविधानं । धान्यादिमेरुदानदशकप्रायोगकथनं । लवणाचलतिलाचलादिदानविधानं । कनकाश्वादिदशविधान्यतममहादानविधानं । स्वर्णदानविधिः । आनन्दनिधिदानविधिः । भद्रनिधिदानविधिः । शतमानदानविधिः । रजतदानविधिः । श्वेताश्वादिदानविधिः । तिलदानविधिः । तिलमृग-तिलकांस्यपात्र-तिलराशि-तिलपद्म-तिलगर्भादिदानविधिकथनं । रुद्रैकादशदानविधिः । गजदानविधिः । दासीदानविधिः । रथदानविधिः । शिविकादानविधिः । भूमिदानविधिः । गृहदानविधिः । मठदानविधिः । कन्यादानविधिः । द्विजस्थापनविधिः । राजस्थापनविधिः । कपिलाधेनुदानविधिः । अथ अतिदानविधानकथनं । गोदानविधिः । उभयतोमुखीदानविधिः । वैतरणीदानविधिः । वृषभदानविधिः । गुड़धेन्वादिदानविधिः । विद्यादानविधिः । वेदवेदाङ्गादिदानविधिः । त्रिपुरुषदानविधिः । नवग्रहदानविधिः । दशावतारदानविधिः । द्वादशादित्यदानविधिः । चन्द्रमूर्त्तिदानविधिः । सूर्य्यमूर्त्तिदानविधिः । कालपुरुषदानविधिः । आत्मप्रतिकृतिदानविधिः । उदकुम्भदानविधिः । यमप्रतिमादानविधिः । लोकपालाष्टकदानविधिः । मेषाजमहिषादिदानविधिः । कृष्णाजिनादिदानविधिः । तिथिवारनक्षत्रयोगादिषु दानविधिः । प्रकीर्णकदानविधिः । जलाशयदानविधिः । आरामवापीकूपादिदानविधिः । अत्र प्रतिष्ठाविधिकथनं । प्रत्येकं सर्व्वत्र प्रयोगकथनञ्च । इति श० ।

---

**No. 2263.** **शिवसंहिता ।** Substance, country-made paper, 13 × 6 inches. Folia, 362. Lines, 12 on a page. Extent, 11,913 slokas. Character, Nágara. Date, SM. 1909. Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Correct.

**S'iva-sañhita.** A work of this name has already been noticed under No. 424, (Vol. I, p. 270), but that is a Tantra. The present work professes to be a part of the Váyu Puráṇa, but the MS. noticed under No. 1678, Vol. VI, p. 252, and a number of others which have been examined by me do not include this work. According to the most ancient and authentic accounts the Váyu Puráṇa extends to 24,000 s'lokas, whereas the work now under examination professes to comprise 24,000 s'lokas, just as much as the whole of the Váyu Puráṇa. It is obvious, therefore, that the affliation is unwarrantable, and that the work is distinct. The codex under examination is limited to 12,000 and its colophon shows that it is incomplete. A complete copy I am told is contained in the Library of his Highness the Mahárájá of Benares, but I have not seen it. Professor Wilson, in the Preface to his translation of the Vishṇu Puráṇa, remarks:

"The Puráṇa in which Váyu has declared the laws of duty, in connexion with the S'weta kalpa, and which comprises the Máhátmya of Rudra, is the Váyaviya Puráṇa: it contains twenty-four thousand verses." (श्वेतकल्पप्रसङ्गेन धर्म्मान्वायुरिहा ब्रवीत् । यत्तद्वायवीयं स्याद्रुद्रमाहात्म्य संततम् ॥ चतुर्विंशत् सहस्राणि पुराणं तदिहोच्यते ।) The S'iva or S'aiva Puráṇa is, as above remarked, omitted in some of the lists; and, in general, when that is the case, it is replaced by the Váyu or Váyavíya. When the S'iva is specified, as in the Bhágavata, then the Váyu is omitted; (see p. xxiv, *supra*), intimating the possible identity of these two works. (This identity is distinctly asserted in the *Revá-máhátmya*, as follows: चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतं । शिवभक्ति समायोगाच्छैवं तच्चापराख्यया ॥) This, indeed, is confirmed by the Matsya, which describes the Váyaviya Puráṇa as characterised by its account of the greatness of Rudra or S'iva: and Bálam Bhaṭṭa (commentary on the Mitákshará, Vyavahára Káṇḍa) mentions, that the Váyavíya is also called the S'aiva, though, according to some, the latter is the name of an Upapuráṇa. (For accounts of works entilted *S'iva-puráṇa* and *Laghus'iva-puráṇa*, see *Catalogue Cod. Manuscript. Sanscrit Postvedic Bodelian*, &c., §§ 113, 127, and 129. Regarding the first, described in § 113, Dr. Aufrecht observes:

'De libro ipso, quem ad celebrandum cultum Laingicum scriptum esse vides, in praesentia nihil temere asseveraverim; exspectandum enim est, dum de Skandapuráṇae parte, quae S'ivamáhátmya appellatur, accuratiora audiamus. Ex quo libellum nostrum desumtum esse, iis quae infra dicta sunt, suspicari possis.' Colonel Vans Kennedy observes that, in the west of India, the Siva is considered to be an Upa or 'minor' Puráṇa. (A. S. Journ., March, 1837, p. 242, note.)

"Another proof that the same work is intended by the authorities here followed, the Bhágavata and Matsya, under different appellations, is their concurrence in the extent of the work; each specifying its verses to be twenty-four thousand. A copy of the S'iva Puráṇa, of which an index analysis has been prepared, does not contain more than about seven thousand. It cannot, therefore, be the S'iva Puráṇa of the Bhágavata: and we may safely consider that to be the same as the Váyavíya of the Mátsya. (Analysis of the Váyu Puráṇa: Journ. As. Soc. of Bengal, December, 1832)."*

The conclusion here arrived at does not seem to be tenable, for the contents of the Váyu as given under No. 1678, and in the first volume of the work published by me are totally different. The second volume now in the press is also quite distinct. Besides the discussion is limited to a S'iva Puráṇa and not to S'iva-saṅhita of the Váyu Puráṇa.

The work comprises notices of all the sacred pools and places of pilgrimages in India, and recites a great number of legends in connection with them. The names of the Tírthas are associated with those of S'iva. For the sake of convenience I have omitted the word Tírtha from the specific name in the following summary. Each Tírtha has a lingam of S iva close by it.

Contents: Introduction. Puráṇas and Upapuráṇas described. Account of Narmadá. Kalpas. Tortoise incarnation. Kalpas described in detail. Destruction of created beings. Birth of Kapila. Origin of the Vis'alí river, its contact with the Narmadá. Nílagaṅgá. Kalis'vara. Story of Nárada. Do. of S'iva's sports. Káverí. Váráhí. Chaṇḍavegá. Edaṇḍí. Pitṛi. Origin of Koṭitírtha. Kákaprada. Sárasvatá. Hells described. Amares'vara. Mátaṅga. Mṛigavana. Manoratha. Vilvámalaka. As'okes'vara. Vágís'vara. Sahasravarṇaka. Saugandhikánana. Brahmoda. S'aṅkara. Soma. Sahasrayajṇa. Agni. Adi-

* Wilson's Vishṇu Puráṇa, Vol. I, pp. xxxv*f*.

tís'vara. Varáha. Devapatha. Diptikes'vara. Vishṇu. Marutes'vara. Yoges'vara. A'ditya. Meghanáda. Dáruka. Deva. Narmades'vara. Kapiles'vara. Karaṇjes'vara. Kuṇdes'vara. Pippaláda. Vimales'vara. S'úlabheda. Story of Andhakes'vara. Merit of bestowing brides. S'ráddhas at the gift of daughters. Story of Kás'írája and Chitrasena. Do. of Ṛishyas'riñga. Do. of Dírghatapa. Do. of Bhánumati and Vírasena. Vimales'vara. Ulúka. Pushkaraṇí. A'dityes'vara. Pippales'vara. Karoṭís'vara. S'akres'vara. Kumáres'vara. Agnes'vara. Vyáses'vara. Vaidyanáthes'vara. Kedára. Mátri. Narmadá. Muṇḍes'vara. Ghanada. Jaṭes'vara. Ravi. Kámes'vara. Mañgales'vara. Gautames'vara. S'añkhachúḍes'vara. Kedáres'vara. Chandres'vara. Ambes'vara. Nárades'vara. Pakshinága. Vánares'vara. Kúrmes'vara. Meghes'vara. Dadhiskandes'vara. Nandikes'vara. Varuṇes'vara. Kuveres'vara. Hanumades'vara. Pútikes'vara. Revárisañgama. Nandá. Piñgales'vara. Riṇamochana. Jalasáyichakra. Chaṇḍá. Praise of Chaṇḍi. Mahusásya. Kalpadigañges'vara. Nandikes'vara. Naranáráyaṇa. Nales'vara. Vyása. Koṭis'vara. Prabhes'vara. S'ukes'vara. Karanadí. Márkaṇḍyes'vara. Janakes'vara. Manmathes'vara. Anusúyá. Eraṇḍisañgama. Ambikes'vara. Karajes'vara. Bharates'vara. Mukules'vara. Vanades'vara. Saubhágya-sundarí. Rauhiṇes'vara. Senápurachakra. Bhages'vara Kedára. Nishphales'vara. Bhútapápes'vara. Añgirases'vara. Ajonijes'vara. Añgárakes'vara. Skandes'vara. Narmades'vara. Brahmas'ilá. Valmíkes'vara. Páṇḍu. Trilochanes'vara. Kambukes'vara. Chandraprabhása. Kohales'vara. Indres'vara. Yáges'vara. Gotames'vara. Kapardísvara. Ahalyes'vara. Rámes'vara. Ghauráditya. Ajonisambhava. S'ruti. Bhrigvís'vara. Korilápurasthabrahma. A'dityavaráha. A's'ápurí. Váruṇes'vara. Vánavates'vara. Karkaṭes'vara. Nandáhrada. Chakraváráha. Kes'ava. Rukmiṇí. Amohaka. Siddhes'vara. Tapes'vara. Lankes'vara. Párás'ares'vara. Kusumáyudhes'vara. Kalakales'vara. S'vetavaráha. Huñkárasvámivishṇu. Chánakya. S'ukla. Madhumatisañgama. Anarakes'vara. Káverisañgama. Sarpes'vara. Gopes'vara. Udambarísañgama. Sámbáditya. Siddhes'vara. Vaidyanátha. Pingales'vara of Bhrigutírtha. Bhútes'vara. Story of Saindhaváyatana. Gañgáváha. Story of Bhrigukachchha. Dhautapápa. Kanakes'vara. S'áles'vara. Sálagráma. Dvádas'áditya. Vis'varúpa. Hañsa. Kanthes'vara. Aṭṭahása. Bhúrbhuves'vara. S'úles'vara. Dárukes'vara. Sávitrí. Mahes'vara. Deva. S'ikhi. Bháṇḍava. Akrures'vara. Revá

Chaḍchaḍ-sávitrí. Ḍimḍimes'vara. Sriṅges'vara. Laṅkes'vara. Merit of bathing at the confluence of a river with the sea. Luṇṭhanes'vara. Vásanes'vara. Vimales'vara. Merit of pilgrimage in favour of another. Total number of Tírthas. Merit of reading the work.

**Beginning.** उभयतटपुण्यतीर्था प्रक्षालितसकललोकदुरितौघा ।
देवमुनिजनवन्द्या हरतु सदा नर्म्मदा दुरितं ॥
— — — — — — — — — — ।
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीञ्चैव ततोजय मुदीरयेत् ॥
नैमिषे पुण्यनिलये नानाऋषिनिषेविते ।
शौनकः सत्रमासीनः सूतं पप्रच्छ विस्तरात् ॥
मन्येऽहं धर्म्मनैपुण्यं त्वयि सूत सदर्च्चितं ॥
पुराणामृतकथावक्ता व्यासशिष्यस्त्वमेव हि ॥
श्रतस्त्वां परिपृच्छामि धर्म्मतीर्थाश्रयं कवे ।
बहूनि सन्ति तीर्थानि वसुधामे श्रुतानि च ॥
— — — — — — — — — ।
सूत उवाच ।
पुराणं यन्मयोक्तं हि चतुर्थं वायुसंज्ञितं ।
चतुर्विंशतिसाहस्रं शिवमाहात्म्यसंयुतं ॥
महिमानं शिवस्याह पूर्व्वं पराशर + + ।
अपरार्द्धे तु रेवाया माहात्म्यमतुलं मुने ॥
पुराणे प्रथमं प्राज्ञः पुराणं वायुनोदितं ।
यस्य श्रवणमात्रेण शिवलोकमवाप्नुयात् ॥
यथा शिवस्तथा शैवं पुराणं वायुनोदितं ।
शिवभक्तिसमायोगान्नामद्वयविभूषितं ॥ इत्यादि ।

**End.** पठतां शृण्वताञ्चापि सर्व्वकामार्थसिद्धिदं ।
यत्प्रदत्तमिदं पुण्यं पुराणं वाच्यते द्विजैः ॥
शिवलोके स्थितिस्तस्य पुराणाक्षर + + + ॥
इति निगदितं वै नर्म्मदायाश्चरित्रं
पदनिगदितमग्र्यं सर्व्ववक्त्रादवाप्य ।
त्रिभुवनजनवन्द्याव + + दो मुनीनां
कुलपतिपुरतस्तत् सूतमुख्येन साध ॥

**Colophon.** इति श्रीवायुप्रोक्तचतुर्विंशतिसाहस्र्यां शिवसंहितायामुत्तरखण्डे श्रीनर्म्मदामाहात्म्ये पुराणपरिसमाप्तिर्नामाध्यायः ॥ श्रावणसुदि संवत् । १९०९ ।

विषयः। सूतेन सह शौनकादीनां संवादेन महापुराणोपपुराणनामकश्लोकसंख्यादिकथनं। नर्म्मदामाहात्म्यादिकथनं। तत्र कल्पसमुद्भवविवरणकथनं। कूर्म्मावतारादिकथनं। कल्पानुकीर्त्तनकीर्त्तनं। तत्र प्रजासंहारादिलक्षणकथनं। कपिलासमुद्भवादिकथनं। विशल्यायाः उत्पत्तिकथनं। विशल्यासङ्गममाहात्म्यकथनञ्च। नीलगङ्गासङ्गममाहात्म्यकीर्त्तनं। कालेश्वरमाहात्म्यकथनं। नारदेन सह बाणस्य संवादेन मधूकतृतीयाव्रतविधिकथनं। त्रिपुरक्षोभणविवरणकथनं। गिरिजया सार्द्धं गिरिशस्य नर्म्मदायां जलक्रीड़ादिवर्णनं। कावेरीसङ्गममाहात्म्यकथनं। वाराहीसङ्गममाहात्म्यादिकथनं। चण्डवेगाया माहात्म्यकथनमुखेन चण्डसेनस्य राज्ञ उपाख्यानकथनं। एरण्डीसङ्गममाहात्म्यकथनं। पितृतीर्थमाहात्म्यकथनं। ओङ्कारोत्पत्तिकथनप्रसङ्गेन शिवसन्तोषणार्थं ब्रह्मणस्तपस्यादिकथनं। कोटितीर्थमाहात्म्यकथनं। काकह्रदतीर्थकथनं। सारस्वततीर्थकथनं। नरकवर्णनं। शारीरव्यवस्थाकथनं। अमरेश्वरक्षेत्रकथनमुखेन गोदानमाहात्म्यादिकथनं। मतङ्गतीर्थोत्पत्तिकथनादिकं। भृगवनतीर्थविवरणकथनं। मनोरथतीर्थमाहात्म्यकथनमुखेन अङ्गारगर्त्तासङ्गममाहात्म्यकथनं। विल्वामूकविवरणादिकथनं। अशोकेश्वरतीर्थमाहात्म्यकथनं। वागीश्वरतीर्थकथनं। सहस्रवर्णकतीर्थकथनं। सौगन्धिकावनमाहात्म्यकथनं। ब्रह्मोदतीर्थमाहात्म्यकथनं। शङ्करतीर्थकथनं। सोमतीर्थकथनं। सहस्रयज्ञतीर्थकथनं। अग्नितीर्थकथनं। अदितीश्वरतीर्थकथनं। वराहतीर्थकथनं। देवपथतीर्थकथनं। दीप्तिकेश्वरतीर्थकथनं। विष्णुतीर्थकथनं। मारुतेश्वरतीर्थकथनं। योगेश्वरतीर्थकथनं। रोहिनीतीर्थकथनं। दारुकेश्वरतीर्थकथनं। ब्रह्मावर्त्ततीर्थकथनं। पात्रेश्वरतीर्थकथनं। आदित्यतीर्थकथनं। मेघनादतीर्थकथनं। दारुकतीर्थकथनं। देवतीर्थकथनं। नर्म्मदेश्वरोत्पत्तिकथनं। कपिलेश्वरतीर्थकथनं। करञ्जेश्वरतीर्थकथनं। कुण्डेश्वरतीर्थकथनं। पिप्पलादतीर्थकथनं। विमलेश्वरतीर्थकथनं। विमलेश्वरपुष्करिणीसम्भवकथनं। शूलभेदतीर्थकथनं। अत्र अन्धकासुराय वरदानविवरणकथनञ्च। अन्धकासुरविप्रकृतानां देवानां महादेवकृतसमाश्वासनवृत्तान्तकथनं। अन्धकवधविवरणकथनं। महादेवेन सह उत्तानपादस्य संवादेन कन्यादानादिमाहात्म्यकथनं। श्राद्धविधितत्कालादिकथनं। काशीराजचित्रसेनयोरुपाख्यानकथनं। ऋष्यशृङ्गस्य स्वर्गगमनवृत्तान्तकीर्त्तनञ्च। दीर्घतपःस्वर्गगमनवृत्तान्तकथनं। भानुमतीवीरसेनयोरुपाख्यानकथनं। तत्र शबरस्य स्वर्गगमनविवरणकथनञ्च। विमलेश्वरतीर्थकथनं। उलूकतीर्थकथनं। पुष्करिणीतीर्थकथनं। आदित्येश्वरतीर्थकथनं। पिप्पलेश्वरतीर्थकथनं। करोटीश्वरतीर्थकथनं। शक्रेश्वरतीर्थकथनं। कुमारेश्वरतीर्थकथनं। अगेश्वरतीर्थकथनं। व्यासेश्वरतीर्थकथनं। वैद्यनाथतीर्थकथनं। केदारतीर्थकथनं। मातृतीर्थकथनं। नर्म्मदातीर्थकथनं। मुण्डेश्वरतीर्थकथनं। अनङ्गाहीसङ्गमकथनं। भीमेश्वर-

तीर्थकथनं। अर्ज्जुनेश्वरतीर्थकथनं। धर्म्मेश्वरतीर्थकथमं। धनदतीर्थवर्णनं। जटेश्वरतीर्थ-
कथनं। रवितीर्थकथनं। कामेश्वरतीर्थकथनं। मङ्गलेश्वरतीर्थकथनं। गौतमेश्वरतीर्थवृत्तान्त-
कीर्त्तनं। शङ्खचूड़ेश्वरतीर्थकथनं। केदारेश्वरतीर्थकथनं। चन्द्रेश्वरतीर्थकथनं। अम्बेश्वरतीर्थ-
कथनं। नारदेश्वरतीर्थकथनं। पत्निनागतीर्थवर्णनं। वानरेश्वरतीर्थवर्णनं। कुम्भेश्वरतीर्थ-
कथनं। मेघेश्वरतीर्थकथनं। दधिस्कन्देश्वरतीर्थकथनं। नन्दिकेश्वरतीर्थकथनं। वरुणेश्वरतीर्थ-
कथनं। कुवेरेश्वरतीर्थकथनं। हनूमदीश्वरतीर्थविवरणकथनं। पूतिकेश्वरतीर्थकथनं। सोम-
तीर्थवृत्तान्तकीर्त्तनमुखेन रेवारिसङ्गममाहात्म्यकथनं। नन्दातीर्थकथनं। पिङ्गलेश्वरतीर्थकथनं।
ऋणमोचनतीर्थकथनं। जलशायिचक्रतीर्थकथनं। चण्डादित्यतीर्थकथनं। तत्र चण्डिकामा-
हात्म्यकथनञ्च। महाशस्यतीर्थकथनं। कङ्काड़िगङ्गेश्वरतीर्थकथनं। नन्दिकेश्वरतीर्थकथनं।
वदरिकाश्रमवृत्तान्तकथनप्रसङ्गेन नरनारायणतीर्थकथनं। नलेश्वरतीर्थकथनं। व्यासतीर्थवृत्ता-
न्तकीर्त्तनं। कोटीश्वरतीर्थकथनं। प्रभेश्वरतीर्थकथनं। शूकेश्वरतीर्थविवरणकथनं। नागेश्व-
रवृत्तान्तकथनमुखेन करनदीसङ्गमतीर्थकथनं। मार्कण्डेयेश्वरतीर्थकथनं। तत्र मार्कण्डेयसङ्कर्ष-
णसंवादादिकथनं। जनकेश्वरतीर्थकथनं। मन्मथेश्वरतीर्थकथनादिकं। अनसूयातीर्थवृत्तान्त-
कथनं। एरण्डीसङ्गमतीर्थवृत्तान्तकथनं। अम्बिकेश्वरतीर्थकथनं। करजेश्वरतीर्थकथनं। भर-
नेश्वरतीर्थकथनं। मुकुटेश्वरतीर्थकथनं। धनदेश्वरतीर्थकथनं। सौभाग्यसुन्दरीतीर्थविवरणं।
रौहिणेश्वरतीर्थकथनं। सेनापुरचक्रतीर्थकथनादिकं। भोगेश्वरतीर्थकथनं। केदारतीर्थ-
कथनं। निष्कलेश्वरतीर्थकथनं। भूतपापेश्वरतीर्थकथनं। आङ्गिरसेश्वरतीर्थकथनादिकं।
अयोनिजेश्वरतीर्थकथनं। अङ्गारकेश्वरतीर्थकथनं। स्कन्देश्वरतीर्थमाहात्म्यादिकथनं। नर्म्मदे-
श्वरदेवतीर्थकथनं। ब्रह्मशिलातीर्थकथनं। वल्मीकेश्वरतीर्थकथनं। पाण्डुतीर्थविवरणं।
त्रिलोचनेश्वरतीर्थविवरणं। कम्बुकेश्वरतीर्थविवरणं। चन्द्रप्रभासतीर्थविवरणं। कोहलेश्वर-
तीर्थविवरणं। इन्द्रेश्वरतीर्थविवरणं। यागेश्वरतीर्थविवरणं। गौतमेश्वरतीर्थकथनं। कप-
र्द्दीश्वरतीर्थकथनं। अहल्येश्वरतीर्थविवरणं। रामेश्वरतीर्थकथनं। धौरादित्यतीर्थविवरणं।
अयोनिसम्भवतीर्थकथनं। श्रुतितीर्थविवरणं। भृग्वीश्वरतीर्थकथनं। कोरिलापुरस्थब्रह्म-
तीर्थादिविवरणं। आदिवाराहतीर्थविवरणं। आशापुरीतीर्थकथनं। वारुणेशतीर्थविव-
रणं। वाणवातेश्वरादितीर्थचतुष्टयकथनं। कर्कटेश्वरतीर्थकथनं। नन्दाह्रदतीर्थकथनं।
चक्रवाराहतीर्थकथनं। केशवतीर्थविवरणं। रुक्मिणीतीर्थवृत्तान्तकीर्त्तनं। अमोहकतीर्थ-
विवरणं। सिद्धेश्वरतीर्थकथनं। तापेश्वरतीर्थविवरणं। लङ्केश्वरतीर्थविवरणं। पाराशरे-
श्वरतीर्थविवरणं। कुसुमायुधेश्वरतीर्थविवरणं। कलकलेश्वरतीर्थविवरणं। श्वेतवराहती-
र्थविवरणं। ऊङ्कारस्वामिविष्णुतीर्थविवरणं। चाणक्यतीर्थविवरणं। अत्र इक्ष्वाकुवंशीयचा
णक्यनृपतेरुपाख्यानकथनञ्च। रुद्रदेहमाहात्म्यकथनमुखेन शुक्लतीर्थविवरणकथनं। मधु-
मतीसङ्गमविवरणं। अनरकेश्वरतीर्थवृत्तान्तकीर्त्तनं। कावेरीसङ्गमविवरणं। सर्पेश्वरतीर्थ-

कथनं । गोपेश्वरतीर्थविवरणं । उदम्बरीसङ्गमविवरणं । शाम्बादित्यतीर्थविवरणं । सिद्धेश्वरकपिलेश्वरतीर्थकथनं । वैद्यनाथतीर्थकथनं । भृगुक्षेत्रस्थपिङ्गलेश्वरतीर्थविवरणं । भूतीश्वरतीर्थकथनं । सैन्धवायतनस्य वृत्तान्तकीर्त्तनं । गङ्गावाहतीर्थविवरणं । भृगुकच्छोत्पत्तिविवरणं । धौतपापतीर्थविवरणं । कनकेश्वरतीर्थविवरणं । शालेश्वरतीर्थविवरणं । शालग्रामतीर्थविवरणं । द्वादशादित्यतीर्थविवरणं । विश्वरूपतीर्थविवरणं । हंसतीर्थविवरणं । कण्ठेश्वरतीर्थविवरणं । अट्टहासतीर्थविवरणं । भूर्भुवेश्वरतीर्थविवरणं । शूलेश्वरीतीर्थविवरणं । दारुकेश्वरतीर्थविवरणं । सावित्रीतीर्थविवरणं । महेश्वरतीर्थविवरणं । देवतीर्थविवरणं । शिखितीर्थविवरणं । माण्डवतीर्थकथनमुखेन माण्डव्यशूलारोपणविवरणकथनं । अक्रूरेश्वरतीर्थविवरणं । रेवन्ततीर्थविवरणं । चड़हड़िमातृतीर्थविवरणं । डिण्डिमेश्वरतीर्थविवरणं । शृङ्गीश्वरतीर्थविवरणं । लङ्केश्वरतीर्थविवरणं । सागरसङ्गमस्नानविधिकथनं । तत्र लुण्ठनेश्वरतीर्थविवरणं । वासवेश्वरतीर्थकथनं । विमलेश्वरतीर्थविवरणं । परार्थं तीर्थयात्राफलकीर्त्तनञ्च । तीर्थसंख्यादिकथनं । फलश्रुतिकीर्त्तनञ्च । इति ।

---

**No. 2264.** स्कान्दपुराणम्, अगस्त्यसंहितायां हालास्यमाहात्म्यम् ।
Substance, country-made paper, 17 × 8 inches. Folia, 134. Lines, 16 on a page. Extent, 3,192 ślokas. Character, Nágara. Date, Sm. 1802. Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, fresh. Verse. Generally correct.

**Hálásya-máhátmya.** This work professes to be a part of the Agastya-sañhitá of the Skanda-puráṇa, but it is, like most other Máhátmyas, of doubtful authenticity. It contains a lot of Puráṇic legends, as also notices of sacred pools presided over by liñgams, in different parts of India, an abstract of which is given in the Sanskrit Contents. The object of the work is to glorify the divinity of S'iva.

**Beginning.** शुक्लाम्बरधरं विष्णुं शशिवर्णचतुर्भुजं ।
प्रसन्नवदनं ध्यायेत् सर्व्वविघ्नोपशान्तये ॥
— — — — — — — — — ।
इक्षुकोदण्डपुष्पेषु पाशाङ्कुशकरोज्ज्वलां ।
उद्यत्सूर्य्यनिभां देवीं वन्दे हालास्यसुन्दरीं ॥
— — — — — — — — — ।
ऋषय ऊचुः । वह्निकुण्डसमुद्भूत भगवन् भक्तवत्सल ।
समस्तशिवधर्म्मज्ञ सर्व्ववेदान्तपारग ॥

शिवक्षेत्राणि सर्व्वाणि भक्तिमुक्तिप्रदानि च ।
मेरुमन्दरकैलासश्रीपर्व्वतमुखानि च ॥
संक्षेपतोविस्तरेण भवता कथितानि च ।
अल्पबुद्धिभिरस्माभिस्तानि नावधृतानि च ॥
तस्माद्विशिष्टं सर्व्वेषां स्थानानां यच्चिरन्तनं ।
शम्भुनाधिष्ठितं नित्यं तदेव वक्तुमर्हसि ॥
इति पृष्टोमुनिवरैः सूतः कारुण्यविग्रहः ।
सर्व्वज्ञं साम्बमीशानं देवदेवं जगद्गुरुं ॥
श्रीमन्तं दक्षिणामूर्त्तिं त्रिनेत्रं चन्द्रशेखरं ।
व्याघ्रचर्म्मपरीधानं शुद्धस्फटिकनिर्म्मलं ॥
मुद्रां विद्याञ्च वह्निञ्च भुजङ्गञ्च भुजैर्धृतं ।
वीरासने समासीनं व्याघ्रचर्म्मावृतं शिवं ॥
सर्व्वाभरणभूषाढ्यं सर्व्वभूषणभूषितं ।
सनकादिमुनीन्द्राणां ज्ञानदं देशिकोत्तमं ॥
योगिभिः सनकाद्यैश्च सेवितं गणपुङ्गवैः ।
ध्यात्वा चेचोत्तमं शम्भं वक्तुमारभते मुनिः ॥
श्रीसूत उवाच ।
— — — — — — — — — ।
अगस्त्यसंहितेत्यासीन्नाम्ना च सार्थसंहिता । इत्यादि ।

**End.** वन्दे हालास्यनगरीं वन्दे हेमाब्जिनीमपि ।
वन्दे सुमीननयनां वन्दे सुन्दरनायकं ॥
जुष्टं द्विजा भो युष्माभिर्विशिष्टतरमद्भुतं ।
क्षेत्रं तीर्थञ्च लिङ्गञ्च तत्सर्व्वं कथितं मया ॥
सव्वस्तरति दुर्गाणि सर्व्वाभद्राणि पश्यति ।
सर्व्वः सद्गतिमाप्नोति श्रुत्वा हालास्यवैभवं ॥

**Colophon.** इति स्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये वसिष्ठऋषीश्वराणां काश्यां मुक्तिमण्डपे अगस्त्यप्रोक्तहालास्यलीलाकथनं नाम एकसप्ततितमोऽध्यायः । संवत् १८०२ ।

विषयः । १–२ अध्याय,—सूतेन सह सनकादीनां संवादेन काश्यां ब्रह्मकृतब्रह्मेश-लिङ्गस्थापनदशाश्वमेधानुष्ठानविवरणकथनं । वसिष्ठादीनां पुरतोऽगस्त्येन हालास्यमाहात्म्यकीर्त्तनं । हालास्येश्वरलिङ्गमाहात्म्यकथनमुखेन काशीक्षेत्रादपि हालास्यतीर्थस्य माहात्म्याधिक्य-

वर्णनं। ४—अध्याये,—महादेवस्य चतुःषष्टिलीलोद्देशकीर्त्तनं। इन्द्रस्य गुरुद्रोहानुष्ठानपूर्व्वकं त्वष्टुः पुत्रस्य विश्वरूपस्य देवपौरोहित्ये वरणकथनं। अथ दैत्यकुलभागिनेयस्य तस्य दैत्येषु पक्षपातवृत्तान्तमवगत्य नितरां मन्युमापन्नः शतमन्युः वज्रेण तच्छिरश्चिच्छेद। तत्र प्रथमेन शिरसा कपिञ्जलः, द्वितीयेन कलविङ्कः, तृतीयेन च तित्तिरिरिति पक्षिणः सम्बभूवुरितिवृत्तान्तकथनं। वृत्रासुरस्य उत्पत्तिकथनं। इन्द्रकृततन्निधनादिवृत्तान्तकथनञ्च। ५—९—अध्याये,—महेन्द्रानुग्रहात्मिका शिवस्य प्रथमा लीला इति कथनं। ऐरावतशापमोचनरूपद्वितीयलीलाकथनं। तृतीयलीलायां वैश्यस्य कदम्बवने नगरीनिर्म्माणादिविवरणकथनं। तुरीयलीलायां मलयध्वजस्य वृत्तान्तकथनमुखेन तटातकोत्पत्तिकथनं। एवं षष्ठादिषु शिवलीलासु क्रमेण शिवस्य तटातकापरिणयकल्याणलीलावर्णणं। १०—१६,—अध्याये,—पतञ्जल्यनुग्रहताण्डवदर्शनलीलाकथनं। कुण्डोदरान्नभोजनलीलाकथनं। नद्यागमनलीलावर्णनं। हालास्यक्षेत्रे सप्तसमुद्रानयनलीलावर्णनं। काञ्चनमालामलयध्वजयोः शिवसारूप्यप्राप्तिलीलावर्णनं। तटातकायाः पुत्रोत्पत्तिलीलावर्णनं। तत्पुत्रस्य उग्राभिधानस्य विवाहपट्टाभिषेकमहोत्सवादिलीलावर्णनं। १७—२१, अध्याये,— सिन्धुताड़नलीलाकथनं। किरीटभेदनलीलाकथनं। सोमवारव्रतविधिकथनं। तन्नियमतदुद्यापनादिकथनञ्च। काञ्चनहरणलीलाकथनं। कन्वादीन्दृषीनुद्दिश्य श्रीशिवाशिवयोर्वेदवेदान्तार्थोपदेशप्रदर्शनलीलाकथनं। २३, अध्याये,— बलनामकस्य दानवस्य अस्थि-दशन-रक्त-लोम-पिशितादिभ्यः क्रमेण वज्र-मुक्ता-पद्मराग-वैदूर्य्य-प्रवालादीनामुद्भवकथनं। तत्र वज्रलक्षणपरीक्षादिकथनं। मुक्तालक्षणादिकथनं। पद्मरागलक्षणादिकथनं। एवं वैदूर्य्य-प्रवाल-महानील-गारुत्मत-पुष्पराग-गोमेदादिलक्षणकथनं। २४—३२, अध्याये,—मेघकृतसमुद्रपानलीलावर्णनं। हालास्येश्वरस्य वरुणं प्रति अनुग्रहकथनञ्च। सुन्दरेश्वरचरितवर्णनं। शिलामयगजाय इक्षुकाण्डप्रदानलीलावर्णनं। नागहस्तिहननलीलावर्णनं। द्विजकन्याया देवसारूप्यप्रदर्शनलीलावर्णनं। सुन्दरेशस्य नृत्यकरणलीलावर्णनं। विप्रवनिताबधूबधलीलावर्णनं। ब्रह्मघ्नमातृगमनदोषोपशमनलीलावर्णनं। ३३—४०, अध्याये,—अङ्कविजयलीलावर्णनं। सर्पहननलीलावर्णनं। नग्नधेन्वसुरहननलीलावर्णनं। कुलभूषणस्य राज्ञः सेनादर्शनलीलावर्णनं। नीविदानलीलावर्णनं। वैश्यकन्यानां वलयविक्रयलीलावर्णनं। यक्षकन्यानामष्टसिद्ध्युपदेशलीलावर्णनं। कान्तारच्छेदद्वारभेदलीलावर्णनं। ४१—४६, अध्याये,—पाण्ड्यसेनाभ्यः पानीयदानलीलावर्णनं। रसवादकर्म्मप्रदर्शनलीलावर्णनं। चोलसेनाप्रभञ्जनलीलावर्णनं। वृषलस्य अक्षयतण्डुलप्रदर्शनलीलावर्णनं। सुन्दरेशस्य वैश्यमातुलत्वग्रहणलीलावर्णनं। वरगुणस्य नृपतेः शिवलोकदर्शनलीलावर्णनं। ४७—५३, अध्याये—भद्राय भक्तोत्तमाय काष्ठभाराहरणलीलावर्णनं। भद्रस्य कृते चोलभूपालाय पत्रिकाप्रेषणलीलावर्णनं। भद्राय फलकदानलीलावर्णनं। भद्रविजयप्रदानलीलावर्णनञ्च। शूकरशिशुभ्यः स्तन्यप्रदानलीलावर्णनं। शूकरशिशूनां सचिवत्वप्राप्तिलीलावर्णनं। भरद्वाजपक्षिणे मृत्युञ्जयमन्त्रोपदेशलीलावर्णनं।

५४—६१, अध्याये,—कीयष्टये मुक्तिप्रदानलीलावर्णनं। वंशशेखराय हालास्यपुरीसीमाप्रदर्शनलीलावर्णनं। चोलसेनानाशनलीलावर्णनं। संघकवीश्वरवरप्रदानलीलावर्णनं। द्विजस्याय्याविकल्पनलीलावर्णनं। कीरानुग्रहलीलावर्णनं। कीरस्य सूक्तोपदेशलीलावर्णनं। प्रबन्धतारतम्यनिरूपणलीलावर्णनं। ६२—६६, अध्याये,—अग्नीश्वराख्यलिङ्गप्रादुर्भावलीलाकथनं। कैवर्तकन्यापाणिग्रहणलीलावर्णनं। वातपुरेश्वरस्य ज्ञानदीक्षाकरणलीलावर्णनं। अश्वविक्रयलीलाकथनमुखेन अश्वलक्षणादिकथनं। भक्तोपशान्त्यर्थं वेगवतीजलाकर्षणलीलावर्णनं। ६७--७१, अध्याये,—बौद्धनिरसनलीलावर्णनं। कुब्जज्वरनाशादिलीलावर्णनं। ज्ञानसम्बन्धेन नग्नानां तरुशूलारोहणलीलावर्णनं। वैश्यकन्यानुग्रहार्थं शम्भुकूपशमीहृत्तानयनलीलावर्णनं। हालास्येश्वरलीलामाहात्म्यश्रवणादिफलकीर्तनञ्च।

---

**No. 2265.** परानन्दपुराणम्। Substance, country-made paper, 16 × 5½ inches. Folia, 200. Lines, 8 on a page. Extent, 3,990 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Very incorrect.

**Paránanda-puráṇa.** A collection of Puráṇic legends related by Sauti to Utañka and others. It calls itself a Puráṇa, but its name does not occur in any of the published lists of Puráṇas or Upapuráṇas.

**Beginning.** नेत्रापाङ्ग+ज्ञाकरणक्षतमतिः सृष्टिमिष्टेः विधातुं
धाता पाता प्रदी+ङ्गुलिक्षतविक्षतिं प्राप्य लोकस्य विष्णुः।
+ + + + प्रसङ्गात् क्षयमिदमखिलं याति संसारचक्रं
युष्मांश्चन्द्रार्द्धमूर्द्धा + + + + सरितां भर्त्तुरुद्धर्त्तुमर्हः॥
यदीयपदपङ्कजस्मरणमात्रनिष्कल्मषः
प्रयाति परमां गतिं + + समस्त + + नरः।
सुरासुरशिरोमणिद्युतिसमर्च्चिताङ्घ्रिद्वयः
करोतु दुरितक्षयं + + + महेशः सतां॥
— — — — — — — — —।
सौतिरुवाच।
विगमप + + + मधुव्रतं नवपयोदसहोदरविभ्रमं।
मुनिगणार्च्चितपादसरोरुहं द्विजं नमामि पराशरनन्दनम्॥
उतङ्क द्विजशार्दूल शूलपाणिपदार्चक।
परानन्दमिदं पुण्यं पुराणं कथयाम्यहं॥ इत्यादि।

End. शोकैरग्निप्रतापे जनधन + + + द्वेयसीमोहदुर्गे
मायाजालाहिभीमे विषयरसविषे क्लेशपङ्कप्रचारे ॥
क्लेशानन्दाखपूरे + वनरकतटे कर्म्मपाशावसाने-
+ + + + + + + + वितरतु करालम्बमापतिर्वः ॥

Colophon इति श्रीमत्परानन्दपुराणे षट्चत्वारिंशोऽध्यायः । ४६ ॥ ॐ ॥

विषयः । सौतिना सह उतङ्कादीनां संवादेन सृष्टेः पूर्व्वं रुद्र एव एक आसीदितिकथनं । रुद्रस्य इच्छामात्रेण महत्तत्वादिप्रकृतिवर्गाणामुत्पत्तिकथनं । ब्रह्मविष्णुप्रभृतीनामुत्पत्तिकथनपूर्व्वकं सृष्ट्यादिकार्य्ये प्रवृत्तिकथनं । भारतयुद्धोत्तरम् अश्वत्थामकृतशिवाराधनविवरणकथनं । शिवमाहात्म्यकीर्त्तनं । गविना सह द्रोणपुत्रस्य संवादेन देवव्रतस्य उपाख्यानकथनं । शान्तवृत्तिचरित्रवर्णनं । राजीवलोचनन्टपतेरुपाख्यानकथनं । सुश्रुतिसुमुखयोरुपाख्यानकथनं । तत्र संसारतारणोपायकथनमुखेन भगवद्विभूतिवर्णनञ्च । भगवद्गीताकीर्त्तनं । अश्वत्थाम्ना सार्द्धं स्वर्गलोकगतस्य दुर्य्योधनस्य संवादेन ब्रह्मलोकगमनपुरःसरं तयोः धृतराष्ट्रद्रोणादिभिः सह संवादकथनं । अथ तेषां निरतिशयां सङ्गतिमवलोक्य नितरां निर्व्विन्नस्य अश्वत्थाम्नः शिवोपदेशेन परशुरामसमीपगमनविवरणकथनं । तत्र धर्म्मव्रताभिधानविप्रस्य वृत्तान्तकीर्त्तनं । परदारगमनमिथ्याभाषणादिनिरतस्य प्रत्यवायादिकथनमुखेन वासुकिनामकविप्रस्य शिवदूतेन सह संवादकथनं । अकृतदारपरिग्रहेण शिलादेन सह पितॄणां संवादकथनं । शिलादकृतशिवस्तोत्रकीर्त्तनं ।] शिलादपुत्रस्य नन्दिन उत्पत्तिकथनं । तस्य शिवानुचरत्वप्राप्तिकथनञ्च । नन्दिनोगणाधिपत्वे अभिषेकमहोत्सववर्णनञ्च । शिवस्य सतीपरिणयमहोत्सवादिवर्णनं । समुद्रमन्थने गरलपानेन शिवस्य नीलकण्ठत्वप्राप्तिकथनं । त्रिपुरवधवृत्तान्तकीर्त्तनं । कपालमोचनतीर्थस्योत्पत्तिकथनमुखेन महादेवस्य वृषध्वजत्ववृत्तान्तकथनं । काशीमाहात्म्यकीर्त्तनञ्च । शिवपूजाविधिकथनं । दक्षयज्ञविवरणकथनं । सतीदेहत्यागकथनं । हिमालयकुमार्य्या काल्या सह शिवस्य विवाहवर्णनं । सुदेवस्य विवाहवृत्तान्तकथनमुखेन सत्यव्रतकुम्भकर्णयोरुपाख्यानकीर्त्तनं । मदयन्तीपरिणयविवरणकथनं । गिरिजाप्रीतिसम्पादनाय गिरिशकृतपारिजातकुसुमवृष्टिविवरणकथनं । हव्यवाहनशरवनादिषु शैवतेजस आधानेन कार्त्तिकेयस्य उत्पत्तिकथनं । तारकासुरनिधनकथनञ्च । दक्षस्य काश्यां शिवाराधनविवरणं । तत्कृतशिवसहस्रनामस्तोत्रकथनं । दक्षेशलिङ्गोत्पत्तिकथनञ्च । भूतसृष्टिविवरणकथनं । परात्मजीवात्मस्वरूपादिकथनं । धर्म्मनिधेरुपाख्यानकथनं । शिवकृतान्धकासुरनिधनवृत्तान्तकथनं । जम्भकुजम्भयोर्दानवयोरुपाख्यानकथनं । शैवसिद्धान्तकीर्त्तनं । शैवानां कर्त्तव्यादिकथनं । योगकथनञ्च । परानन्दपुराणश्रवणादिमाहात्म्यकीर्त्तनं ।

---

**No. 2266. त्रिकूटारहस्यतन्त्रम्।** Substance, country-made paper, 15 × 5 inches. Folia, 33. Lines, 8 on a page. Extent, 585 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Incorrect.

**Trikúṭárahasya Tantra.** One of the minor Tantras. Its object is to glorify Trikúṭá, a form of Durgá. It treats of all the topics usually included in the Tantras. The contents are given in detail in Sanskrit; it is scarcely worth while to translate them.

श्रीदेव्युवाच।

**Beginning.** भगवन् सर्व्ववेत्ता त्वं त्रैलोक्यप्रभुरीश्वरः।
त्रिगुणात्मा त्रिलोकेशस्त्रिनेत्रस्त्रिपुरान्तकः॥
त्वमेव सृष्टिकर्त्ता च त्वं रक्षाप्रलयक्षमः।
त्वमेव तन्त्रसारज्ञस्त्वं मन्त्राम्भोनिधिर्भवः॥
भगवंस्त्वत्प्रसादेन श्रुतस्तन्त्रसमुच्चयः।
इदानीं श्रोतुमिच्छामि रहस्यं तन्निवेदितं॥
+ + + + श्रीविद्या या महाविद्यासमाश्रिता॥
मन्त्रराजं परं तत्त्वं वद शीघ्रं कृपानिधे॥
श्रीभैरव उवाच।
शृणु देवि प्रवक्ष्यामि रहस्यं सर्व्वकामिकं।
श्रीविद्यायाः परं तत्त्वं तन्त्रं मन्त्रैकसागरं।
— — — — — — — — — — —।
श्रीत्रिकूटारहस्याख्यं तन्त्रमन्त्रैकसागरं॥ इत्यादि।

**End.** इदं रहस्यं परमं भक्त्या तव मयोदितं।
सर्व्वस्वं मे शिवे तत्र गोपनीयं स्वयोनिवत्॥

**Colophon.** इति श्रीत्रिकूटारहस्यतन्त्रे भक्तिसाधनकवचाख्यानं द्वात्रिंशः पटलः।
समाप्तोऽयं त्रिकूटारहस्याख्यस्तन्त्रराजः॥

विषयः। शिवाशिवयोः संवादेन श्रीविद्यामन्त्रोद्धारविधिकथनं। त्रिकूटानिरूपणं। पुरश्चर्य्याविधिकथनं। कुलाचारविधिकथनं। नित्यकामेश्वरमन्त्रोद्धारादिविधिकथनं। नित्यपूजाविधिकथनं। सूर्य्यग्रहणकाले पूजनविधिकथनं। चन्द्रग्रहणकाले पूजाविधिकथनं। भूकम्पकाले पूजाविधिकथनं। चैत्रमासि नवरात्रपूजाविधिकथनं। आश्विनमासे नवरात्रपूजाविधिकथनं। तत्र कुमारीपूजाविधिकथनञ्च। कन्यासंक्रान्तौ पूजाविधानकथनं। स्तम्भनादिषट्क्रिया-

विधिकथनं। पञ्चरत्नेश्वरीविद्याविधिकथनं। दीपदानविधिकथनं। शक्तिपूजाविधिकथनं। चिन्तामणिकवचकथनं। वज्रपञ्जरकवचकथनं। जगन्मङ्गलकवचकथनं। जगन्मोहनकवचकथनं। जगदीशकवचकथनं। कामकवचकथनं। त्रिविक्रमकवचकथनं। त्रैलोक्यभूषणकवचकथनं। विरूपाक्षकवचकथनं। सर्व्वार्थसाधककवचकथनं। सर्व्वसिद्धिप्रदकवचकथनं। ज्वरहरकवचकथनं। वैरिनाशकवचकथनं। विजयकवचकथनं। विघ्नापहकवचकथनं। मुक्तिसाधनकवचकथनं। त्रिकूटारहस्यकथनञ्च।

---

**No. 2267.** सेतुबन्धः। Substance, country-made paper, 17 × 4 inches. Folia, 197. Lines, 12 on a page. Extent, 8,126 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Máhárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Prose. Incorrect.

**Setubandha.** A commentary on that portion of the Vámakes'vara-tantra which describes the goddess Durgá as Nitya-sodas'iká. By Bháskararáya *alias* Bhasuránandanáth Díkshita, son of Gambhirarája Bháratí Díkshita Súri.

**Beginning.** श्रीगम्भीरविपश्चितः पितुरभूद्यः कोन + वेदरे
विद्याष्टादशकस्य मर्म्मभिदभूद्यः श्रीन्हसिंहाद्गुरोः।
यस्य श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभवत्
स त्रेतात्रिपुरात्रयीति मनुते तामेव नाथत्रयीम्॥
वामकेश्वरतन्त्रस्थे नित्यषोड़शिकार्णवे।
पूर्व्वोत्तरचतुःशत्यौ व्याचष्टे भास्करः सुधीः॥
नित्यषोड़शिकार्णवनामनि तन्त्रे शिवैकवरतन्त्रे।
अतिगहने फणिपटले स्पन्दितुमपि यः क्षमोमनुजः॥
नित्यषोड़शिकाम्भोधेः परं पारं यियासवः।
विश्रामैरष्टभिर्युक्तं सेतुबन्धं भवन्त्विमं॥
— — — — — — — — —।

इह खलु निखिलजनाभिलषितं सुखमेव पुरुषार्थः। तच्च क्रत्रिमञ्चाक्रत्रिममिति द्विविधं। क्रमेण काममोक्षपदाभ्यामभिलप्यते। इत्यादि।

**End.** आद्यतोकाक्षरं जटावाचकं ताभिः सहितः मन्त्रः शिवोहरिरित्यर्थः॥

**Colophon.** इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणनिखिलतन्त्रस्वतन्त्रश्रीमद्गम्भीरराजभारतीदीक्षितसूरिसूनुना भासुरानन्दनाथदीक्षिताभिधानेन भास्कररायेण प्रणीतो नित्यषोड़शिकार्णवव्याख्यात्मा सेतुबन्धः समाप्तः।

विषयः। वामकेश्वरतन्त्रान्तर्गतनित्यषोड़शिकार्णवव्याख्यानम्।

**No. 2268. त्रिस्थलीसेतुः, (काशीप्रकरणम् ।)** Substance, country-made paper, 14 × 4 inches. Folia, 252. Lines, 8 on a page. Extent, 3,898 ślokas. Character, Nágara. Date, Sм. 1852. Place of deposit, Calcutta, Government of India; another copy at Bettiyá, Máhárájá Rájendrakiśora Siñha, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Tristhalisetu.** A digest of Smṛiti rules regarding pilgrimages to sacred places, and descriptions of, and the duties to be observed at, those places. By Náráyaṇa Bhaṭṭa, son of Bhaṭṭa Rámes'vara Súri. The codex contains only that portion which treats of Kás'í.

**Beginning.** भवानीशङ्करौ नत्वा भट्टरामेश्वरात्मजः ।
भट्टनारायणः काशीं विविनक्ति सदुक्तिभिः ॥

तत्र माहात्म्यज्ञानस्य प्रवृत्त्यौपयिकत्वेन तत्रावश्यवक्तव्यत्वात् तदेव प्रथमं निरूप्यते । अत-एव पद्मपुराणे पातालखण्डे भृगुं प्रति ऋषिकृतेषु पञ्चप्रश्नेषु प्रथमं माहात्म्यप्रश्नएव कृतः ।
किं माहात्म्यं कथं वेद्यं सेव्यं कैश्च द्विजोत्तम ॥ इत्यादि ।

**End.** ते मृता हंसयानेन दिव्यं यान्त्यकुतोभयाः ।
इत्यादीनि तु सलोकताविषयाणीति सर्व्वमनवद्यम् ॥

**Colophon.** इति श्रीमद्विद्वन्मुकुटमाणिक्यदाक्षिणात्यालङ्कारश्रीमद्भट्टरामेश्वरसूरि-सूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे तन्मरणमुक्तिविचारः । समाप्तं काशी-प्रकरणम् । इत्यतोगयाप्रकरणं भविष्यति । संवत १८५२ ।

विषयः । काशीमाहात्म्यसूचकपुराणवाक्यानां मूलभूतश्रुतिवाक्यप्रदर्शनं । काशीमाहा-त्म्यश्रवणादिमहिमा । काशीस्वरूपनिरूपणं । काशीध्यानकथनं । प्रार्थना । काशीकथामहिमा । काशीनाममहिमा । काश्यादिशब्दनिर्व्वाचनं । काशीस्मरणमहिमा । काशीस्तुतिमहिमा । का-शीगमनमहिमा । काशीदर्शनमहिमा । काशीप्रवेशमहिमा । काश्यादिक्षेत्रपरिमाणनिरूपणं । काशीक्षेत्रनिरूपणं । कियत्कालं काशीवासफलं । क्षेत्रसन्न्यासमाहात्म्यकथनं । काशीवासिनो-विहितनिषिद्धानि । क्षेत्रसन्न्यासविधिकथनं । काश्यां विविधकाम्यकर्म्माणि । कालविशेषे काश्या-मनेकतीर्थागमनकथनं । मत्स्योदरीयोगनिरूपणं । मणिकर्णिकाप्रमाणकथनं । मणिकर्णिकोत्प-त्तिकथनं । मणिकर्णिकाध्यानमन्त्रादिकथनं । ज्ञानवापीमाहात्म्यादिकीर्त्तनं । पञ्चनदविन्दुमा-धवयोर्महिमा । गभस्तीश्वरादिमाहात्म्यकथनं । वीरेश्वरलिङ्गमहिमा । दशाश्वमेधमहिमा । योगिन्युद्देशकथनं । अम्बरीषेश्वरादिमाहात्म्यकथनं । दुर्गाकुण्डादिमाहात्म्यकथनं । केदारमा-हात्म्यादिकथनं । धर्म्मेशमाहात्म्यादिकथनं । धर्म्मकूपमाहात्मं । अविमुक्तेश्वरमाहात्म्यं । ॐका-

रेश्वरमहिमा। त्रिलोचनलिङ्गमहिमा। कालेशमहिमा। कपालमोचनेशमहिमा। वृषभध्वजमहिमा। विष्णुपादोदकतीर्थमहिमा। वृद्धकालेश्वरमहिमा। अल्पमृत्युहरेश्वरमहिमा। समुद्रकूपमहिमा। पिशाचमोचनादितीर्थमाहात्म्यकथनं। अथ विश्वेश्वरप्रादुर्भावकथनं। विश्वेश्वरलिङ्गे अस्पृश्यस्पर्शनिबन्धनोदोषोनास्तीतिनिरूपणं। विश्वनाथप्रसादादिमहिमा। मुक्तिमण्डपादिमहिमा। दण्डपाणिमहिमा। भैरवप्रादुर्भावकथनं। भवानीमहिमा। आदित्येशमहिमादिकथनं। षट्पञ्चाशद्विनायकस्थानमाहात्म्यादिकथनं। विष्णुमूर्त्तयः। आवश्यकतीर्थादिनिरूपणं। तत्र गङ्गादिमाहात्म्यकथनञ्च। काश्यामवश्यपूज्यदेवाः। काश्यां नित्ययात्रादिविधानं। तत्र प्रदक्षिणादिविधिकथनं। अथ ऋतुयात्राविधिः। मासयात्राविधिः। तिथिकृत्यनिरूपणं। अथ वासरयात्राविधिः। नक्षत्रयात्राकथनं। प्रकीर्णकयात्राकथनञ्च। काशीकृतपापकर्म्मविपाककथनं। काशीकृतपापप्रायश्चित्तकथनञ्च। काशीवासप्रकारकीर्त्तनं। पञ्चक्रोशयात्रायां नियमकथनं। अन्तर्गृहयात्रा। क्षुद्रपापप्रायश्चित्तं। काशीमरणविवेचनं। मुक्तिनिरूपणञ्च।

---

**No. 2269.** अकालभास्करः। Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq. Extra Asst. Commissioner, Goálpárá.

**Akála-bháskara.** A treatise on intercallary months, how to calculate them, and the duties appropriate or forbidden during their currency. By Sambhúnátha S'iddhántavágís'a. The author completed the work in the S'aka year 1669. He appears to have written several works on Smṛiti topics under the generic title of *Bháskara.* Some of his works have other names. He is apparently a Bengal Bráhmaṇ, who had settled in Assam. The author in one place has the title of Nyáya-chúḍámaṇi. His works are not known in Bengal.

नमोगणेशाय।

**Beginning** नत्वा श्रीमत्कृष्णपदमनपायपदप्रदं।
अकालभास्करं श्रीमच्छम्भुनाथेन तन्यते॥
अथाधिमासोनिरूप्यते। तदुत्पत्तिकालमाह ज्योतिषे।
गते चाब्दद्वये सार्द्धे पञ्चपक्षे दिनत्रये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥
तत्स्वरूपमाह यमः।
अमावास्याद्वयं यत्र प्रतिपत्त्रितयं तथा।
अधिवासः स विज्ञेयः सर्व्वकर्म्मवहिःकृतः॥

एवञ्च। अमावास्याद्वयं यत्र सोऽधिमासोऽविनामकः इति।
अत्रामावास्याद्वयं सखण्डाखण्डामावास्याद्वयपरं।

यदा शशी याति गभस्तिमण्डलं दिवाकरः संक्रमणं करोत्यनु।
तदाधिमासः कथितोविरिञ्चिना विवाहयात्रोत्सवयज्ञदूषकः। इत्यनेन विरोधः।

ननु माधवादिषु षट्केषु मासि दर्शद्वयं यदा।
द्विराषाढ़ः स विज्ञेयः शेते तु श्रावणेऽच्युतः॥

इति ज्योतिर्वचनेऽधिमासस्य द्विराषाढ़ादिसंज्ञाश्रुत्या कथं विनामकत्वमितिचेदुच्यते। अस्य यत्राधिमासस्तस्य संज्ञाग्राहकार्थकत्वेन संज्ञाविधायकत्वाभावात्।

अन्यथा, एकराशिस्थिते सूर्य्ये यदिस्याद्धिमासकः।
एक एव हि मासोऽसौ षष्टिभिर्द्दिवसैर्मतः॥
षष्टिभिर्द्दिवसैर्मासः कथितोवादरायणैः॥
पूर्व्वमर्द्धम्परित्यज्य उत्तरार्द्धं प्रशस्यते।

इत्यादिवचनबाधापत्तेः।

End. अथ शास्त्रविशेषे अनध्यायापवादमाह पराशरभाष्ये कूर्म्मपुराणं।

अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वस्वेतानि वर्ज्जयेत्॥

अङ्गेषु शिक्षादिषु। तथा चरणव्यूहे। शिक्षा कल्पोव्याकरणं निरुक्तं छन्दोज्योतिषमिति षड़ङ्गानि। तथा, छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतं।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

कल्पोज्योतिष्टोमपद्धतिरिति वागीशभट्टाचार्य्यः। निरुक्तं वैदिकशब्दग्रन्थः। शिक्षा वेदपाठोपयुक्तताल्वादिनिरूपणग्रन्थः। पर्व्वाण्याह विष्णुपुराणे।

चतुर्द्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥

पर्व्वपदं सन्ध्यागर्ज्जप्रतिपदाद्युपलक्षणं॥

मनुः, वेदोपकरणे चैव होममन्त्रे च चैव हि।
नानुरोधोस्त्यनध्यायः स्वाध्याये चैव नैत्तिके॥

नैत्तिके ब्रह्मयज्ञादिमन्त्रे। इत्यनध्यायनिरूपणकिरणः।

शाकेङ्गाग्निरसक्षोणीमिते सज्जनतामुदे।
श्रीमत्सिद्धान्तवागीशस्यकाराकालभास्करं॥

**No 2270.** दिनभास्करः। Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq , Extra Asst. Commissioner, Goálpárá.

**Dina-bháskara.** A digest of the daily religious duties of householders. The topics are the same as are given in the A'hnika Tattva of Raghunandana. By Sambhúnátha S'iddhántavágis'a.

नमोगणेशाय।

**Beginning.** अथ प्रातःकृत्यं। तत्र ब्रह्मपुराणं।

ब्राह्मे मुहूर्त्ते बुध्येत स्मरेद्देवमणान्दपौन्।

इतिवचनात्तेषां स्मरणं कार्य्यं। तद्यथा,

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतोबुधश्च।

गुरुश्च शुक्रः शनिराहुकेतुः कुर्व्वन्तु सर्व्वे मम सुप्रभातं॥

भृगुर्वशिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः।

वैशोमरीचिश्च्यवनः दृषद्गुः कुर्व्वन्तु सर्व्वे मम सुप्रभातं॥

सनत्कुमारः सनकः सनन्दः सनातनोप्यासुरिपिङ्गलौ च॥

सप्त स्वराः सप्त रसातलाश्च कुर्व्वन्तु सर्व्वे मम सुप्रभातं॥

पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुः ज्वलितश्च तेजः।

नभः सशब्दं महता सहैव कुर्व्वन्तु सर्व्वे मम सुप्रभातं॥

सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयोद्वीपचराश्च सप्त।

भूरादिकानि भुवनानि सप्त कुर्व्वन्तु सर्व्वे मम सुप्रभातं॥

इत्थं प्रभाते परमं पवित्रं हरोदितं यः शृणुयात् स्मरेद्वा।

दुःस्वप्ननाशोऽनघसुप्रभाते भवेच्च नित्यं भगवत्प्रसादात्॥

महाभारते, कर्क्कोटकस्य नागस्य दमयन्त्या नलस्य च।

ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनं॥

**End.** वृद्धशातातपः। ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतं।

अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवदिति॥

गौतमश्च, मैथुनीभूय शौचम्प्रति न विलम्बेत्।

वृद्धशातातपः। द्वावेवाशुचौ स्यातां दम्पती मैथुनेन तौ।

शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥

स्मृतिः, दिवा तु मैथुनं गत्वा स्नानाद्विप्रोविशुध्यतीति।

एतदनृतावपि। कूर्म्मपुराणं।

इत्येतदखिलं प्रोक्तमहन्यहनि वै मया।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदं॥
नास्तिक्यादथवालस्याद्ब्राह्मणोन करोति यः।
स याति नरकान् घोरान् पशुयोनौ च जायते।
इत्यभिगमननिरूपणकिरणः।

**Colophon** इति श्रीसिद्धान्तवागीशभट्टाचार्य्यविरचितोदिनभास्करः समाप्तः।

---

**No. 2271.** दुर्गोत्सवकृत्यकौमुदी। Place of deposit, Goálpárá. MS. examined by H. C. Clarke, Esq., Extra Asst. Commissioner, Goálpárá.

**Durgotsava-kṛitya-kaumudi.** A treatise on the worship of Durgá in the month of Ás'vina, giving excerpts from original texts on the propriety and mode of performing it, the advantage thereof, and the ritual. By Sambhúnátha S'iddhántavágis'a.

नमोगणेशाय।

**Beginning** प्रणम्य विश्वेश्वरपादपद्मं स्मृत्यादिशास्त्रं वहुशोविलोक्य।
सिद्धान्तवागीशकृती प्रयत्नात् तनोति दुर्गोत्सवकृत्यकौमुदीं॥

अथ दुर्गोत्सवः। तत्र च शरत्कालीयदुर्गापूजनमावश्यकं।
योमोहादथवालस्याद्देवीं दुर्गां महोत्सवे।
न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव॥
क्रुद्धा भगवती तस्य कामानिष्टान् निहन्ति वै।
परत्र च महामायावलिर्भूत्वा स जायते॥
इति कालिकापुराणेऽनिष्टश्रुतेः देवीपुराणे वीप्साश्रुतेश्च।
यथा, चरलग्ने चरांशे वा देव्या नियतमानसः।
प्रतिसंवत्सरं कुर्य्यात् स्थापनञ्च विसर्ज्जनं॥
चरलग्ने तुलायां मकरादीनां पूर्व्वाह्णेऽसम्भवात्॥
तथा, द्विशरीरे चरे चैव लग्ने केन्द्रगते रवौ।
वर्षे वर्षे विधातव्यं स्थापनञ्च विसर्ज्जनं॥
द्विशरीरे कान्यायां। अन्यस्य तदानीमसम्भवात्। केन्द्रगते लग्नगते। तथा,
पूजयेत्तत्र कन्यास्थे चण्डं पूजां न लङ्घयेत्।
चण्डं उत्सवं प्राप्य लङ्घनं न कुर्य्यादित्यर्थः। अत्र पूजातिक्रमनिषेधश्रुतेः। संवत्सरे अतीते

तु पुनरागमनाय च इति मन्त्रलिङ्गाच्च। काम्यमपि फलश्रुतेः। यथा, कालिकापुराणं पूर्व्वोदित इत्यादि॥

**End.** संवत्सरप्रदीपे। अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनं।
शान्तिं कुर्व्वीत कुर्य्याच्च स्नानं सर्व्वौषधीजलैः।

अशुभमिति अशुभवर्णमशुभचेष्टितमशुभदिने। अशुभाधिकरणत्वञ्च एषामन्यतमं दृष्ट्वेत्यर्थः। मिलितदर्शने आह वर्षकृत्ये।

कुचेष्टितोयः परदृष्टदेशे निरीक्षितः खञ्जनकः कदाचित्।
द्रष्टा विशेषात् परितोषयेत्तद्विघातयेत् सूचितदुष्कृतेषु॥
मासं न भुञ्जीत शयीत भूमौ स्त्रियं न सेवेत दिनानि सप्त।
स्नायात् जपेत् स जुहुयाच्च वह्नौ पैष्टं पुमान् खञ्जनमर्चयेच्च॥

किं घातयेदितिसूचितपापनाशाय प्रायश्चित्तं कुर्य्यादित्यर्थः। नानामतं स्मृतिपुराणविदां विदित्वा ज्ञात्वागमार्थमखिलं गुरुसम्मतञ्च। श्रीकामरूपपृथिवीपतिपण्डितेन वागीश्वरेण रचितोरुचिरानुबन्धः॥

**Colophon.** इति श्रीमहामहोपाध्यायजगद्गुरुसिद्धान्तवागीशभट्टाचार्य्यविरचिता दुर्गोत्सवकौमुदी समाप्ता॥

---

**No. 2272.** प्रायश्चित्तरत्नाकरः। Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq., Extra Asst. Commissioner of Goálpárá.

**Práyaśchitta-ratnákara.** A digest of the Smṛiti rules for performing expiatory rites for various offences. By Ratnákara Mis'ra. The work is not known in Bengal.

**Beginning.** नमोगणेशाय। चतुर्व्वर्गप्रदानाय चतुर्बाहून् विभर्त्ति यः।
तस्मै विश्वैकनाथाय नमः कृष्णाय वेधसे॥
हरिं गुरुं नमस्कृत्य विश्वं चेतयते तु यः।
रत्नाकरेण मिश्रेण क्रियते सारसंग्रहः॥
नानास्मृतीः समालोक्य संहितागमसंहितान्।
प्रयत्नेन समालोक्य संग्रहोयं वितन्यते॥

तत्र प्रथमं क्रमप्रा[प्त]त्वात् गुरुत्वाच्च ब्रह्मवधप्रायश्चित्तं निरूप्यते। तथा च मनुः।
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
महान्तिपातकान्याहुः संसर्गश्चापि तैः सह, इति॥

तथा, विश्वामित्रासितस्वायम्भुवाः।
ब्राह्मणेन च हन्तव्यः सुरा पेया न च द्विजैः।

ब्राह्मणस्वर्णहरणं न कर्त्तव्यं कथञ्चन ॥

गुरुपत्नीं न गच्छेच्च संग्रहस्यापि तैः सह ।

महापातकसंज्ञा च निर्दिष्टैषा मनीषिभिरिति ॥

तथा च प्रयोजकस्यापि बधभागित्वञ्चाह विष्णुः ।

रागाद्द्वेषात् प्रमादाद्वा स्वतः परत एव वा ।

ब्राह्मणं घातयेद्यस्तु स भवेद्ब्रह्मघातकः इति ॥

अनुग्राहकस्यापि बधभागित्वञ्चाह मनुः ।

बहूनामेककार्य्याणां सर्व्वेषां शस्त्रपाणिनां ।

यद्येकोघातकस्तत्र सर्व्वे ते घातकाः स्मृताः ॥

प्रयोजकस्य बधभागित्वञ्चाहापस्तम्बः । प्रयोजयितानुमन्ता कर्त्ता चेति सर्व्वे ते स्वर्गनरक-फलभोक्तारोयोभूय आरभते तस्मिन् फले विशेष इति ।

निमित्तिनोऽपि बधभागित्वे षट्त्रिंशन्मतं ।

आक्रोशितस्ताड़ितोवा धनैर्वा परिपीड़ितः ॥

यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकं ।

**End.** अथ रजस्वलापात्रस्थजलपानविषयं । पीतशेषजलपाने तु द्विगुणमिति । यत्तु हरितमवचनं रजस्वलापात्रस्थजलपाने कृच्छ्रं चरित्वा पूतोभवतीति । तद्द्वितीयदिवसीय रजस्वलाजलपानविषयं । यत्तु ऋष्यशृङ्गवचनं पीत्वा जलञ्च पात्रस्थमात्रेय्यास्त्र्यहमुपवसेदिति । आत्रेयी रजस्वला । एतच्च तृतीयदिवसीयरजस्वलाविषयं । पीतशेषजलपाने तु षडुपवासाः । यत्तु षट्त्रिंशन्मतं उदक्याजलं पीत्वा आनत्त्रमुपवसेत् ।

पञ्चगव्यन्ततः कृत्वा शुद्धोभवति तत्क्षणात् ।

उदक्या रजस्वला । एतच्च स्नानात् पूर्व्वं चतुर्थदिवसीयरजस्वलापात्रस्थजलपाने अथो-रात्रत्रयमुपवासः । सर्व्वमेतद्ब्राह्मणविषयं । शूद्रादीनान्तु भागहानिर्द्रष्टव्या ॥

कृष्णपादमहाम्भोजगन्धमाघ्राय निर्वृतः ।

मिश्रोरत्नाकरोधीमानकरोत् सारसंग्रहं ॥

**Colophon** इति श्रीरत्नाकरमिश्रविरचितसारसंग्रहोयं समाप्तः ।

---

**No. 2273.** प्रयोगरत्नमाला । Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq., Extra Asst. Commissioner, Goálpárá.

**Prayoga-ratnamálá.** An elementary grammar of the Sanskrit language, founded on the system of Pánini, but greatly simplified. By Purushottama Vidyávágís'a Bhaṭṭáchárya. The work was compiled by order of Rájá Malladeva, a rájá of Manipur. It is not current in Bengal.

**Beginning.** नमो गणेशाय । नन्दसूनोर्वदनारविन्दमुपास्महे यत्र नितान्तमेव ।

स्फुरच्छ्रुतीनां परमं रहस्यं स्मितश्रियानन्दमयं विभाति ॥ १ ॥

अमृताधिकमाधुरीधुरीणाधरनिर्य्यासगुणोज्झितेन वेणोः ।

रणितेन जगन्ति रञ्जयन्तं भगवन्तं घनकान्तिमन्तमीडे ॥ २ ॥

श्रीमल्लदेवस्य गुणैकसिन्धोर्महीमहेन्द्रस्य यथानिदेशं ।

यत्नात् प्रयोगोत्तमरत्नमाला वितन्यते श्रीपुरुषोत्तमेन ॥ ३ ॥

महतामपि हृद्विभावनीयैर्महनीयैर्गुणवृद्धिमत्प्रयोगैः ।

रचितां पुरुषोत्तमेन बालाः प्रतिभायै परिधत्त मालां ॥ ४ ॥

दम्भादराङ्कुरधियः सुधियः प्रसाद्य विज्ञापये यदहमत्र मनोनिषत्त ।

एतेषु मद्वचनकैरवकोरकेषु युष्मत्प्रसादशरदिन्दुरुचः स्फुरन्तु ॥ ५ ॥

अकारादिहकारान्ता वर्णमालानुवर्त्तते ।

स्वरादिसंज्ञाविधानार्थं । उक्तः चोवर्णमालायां मन्त्रस्योपचिकीर्षया ।

कादिसंयोगसङ्केतविषयं कैश्चिदाहृतं ॥

अथ संज्ञाविधानानुपयुक्तोऽपि ऌवर्णः पाणिनीयवर्णक्रमव्यवच्छेदार्थः ॥

तस्यामकारादौकारं यावत् वर्णाः स्वरा अचः स्वरसंज्ञका अच्संज्ञकाश्च भवन्ति । संज्ञा-संज्ञिनोरभेदाद्वर्णा इति प्रथमा । एवमग्रेऽपि स्वराच्संज्ञाप्रयोजनं नामिनः स्वरेटाद्यचौ-त्यादौ ।

**End.** इति पौधातुनिर्द्देशे सिद्ध्यति दुहियुञ्जि ।

जुहोतिः स्तौतिः आप्नोतिः प्रीणातिरिति सिद्ध्यति ।

धातुनुकारत्वादुवादेशे ह्रुविरिति अतएव न ब्रुवोवच् । सानुबन्धसामर्थ्यात् शितितनौ यद्धातुकार्य्यं तत् सिध्यतीति सिद्धं । सन्ध्यभावः पौनरुक्तं विभक्तीनाञ्च लोपनं । व्याख्येय व्याख्ययोरैक्यं सुखबोधकृते कृतमिति ।

**Colophon.** इति द्विजकुलकमलप्रकाशकमहामहोपाध्यायश्रीविद्यावागीशभट्टाचा-र्य्यापरनामश्रीपुरुषोत्तमशर्म्मनिर्म्मितायां प्रयोगरत्नमालायां कृत्प्रकरणं षष्ठोविन्यासः सम्पू-र्णोऽयं ग्रन्थः ।

---

**No. 2274.** वर्षभास्करः । Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq., Extra Asst. Commissioner, Goálpárá.

**Varsha-bháskara.** A dissertation on time meet for religious observances, giving in detail definitions of years, days and their divisions

according to both solar and lunar calculations, and the rites appropriate at particular times. The modes of pacifying adverse planets are also given. By S'ambhunátha Mis'ra, S'iddhántavágís'a, of Coch Behar. The work was compiled by order of Dharmadeva Deva, a rájá.

**Beginning.** श्रीमन्नारायणं देवं तथा श्रीश्यामसुन्दरं।
नत्वापि वाणीविघ्नेशं शिवौ च शशिशेखरौ॥
नवीनवाक्यतिमिराच्छन्नप्राचीनपद्धतिः।
प्रकाशार्थं स्वमतितः सुधियां सुखहेतवे॥
देवश्रीधर्म्मदेवस्य द्विजानामप्यनुज्ञया।
श्रीशम्भुनाथमिश्रेण तन्यते वर्षभास्करः॥

इति मङ्गलाचरणं। इह खलु निखिलमित्यादिकर्म्मणः कालाङ्गत्वप्रतीतेरतः काल एव प्राङ्निरूप्यते। स चेश्वररूपविशेषः। कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तते इति विष्णुपुराणीयात्। कर्म्माङ्गत्वञ्चास्य, ततः प्रभृति जन्तूनां सदसत्कर्म्मसूचकः। होराख्योवर्त्तते कालोह्यहोरात्रेऽत्र लोपतः॥ इति ज्योतिर्वचनात्। गुरुणापि तदङ्गीकृतं। कालोहि कर्म्म चेद्युते न कर्म्मणि काल इति। ननु कर्म्मणि कालस्याकाङ्क्षत्वमेव नास्ति अतस्तेनैवोक्तं न कालोगुण इति। सत्यमस्य महाकालपरत्वात्। अन्यथा, तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः॥

इत्यादीनि सोपाधिकरणकालस्य कर्म्माङ्गत्वप्रतिपादकानि नानावचनानि विरुध्येरन् इत्यादि।

**End.** सर्व्वेषां शिल्पभाण्डानां विश्वकर्म्मा च दैवतं।
द्रुमाणां कलिकानाञ्च शाकादीनाञ्च सर्व्वशः॥
फलानामपि सर्व्वेषां तथा ज्ञेयोवनस्पतिः।
मत्स्ये मांसे विनिर्द्दिष्टे प्राजापत्ये तथैव च॥
छत्रं कृष्णाजिनं शय्या रथमासनमेव च।
उपानहौ तथा यानं यच्चान्यत् प्राणवर्ज्जितं॥
उत्तानाङ्गिरसे तद्वत् शय्यादारुमये शृणु।
उत्तानाङ्गिरसे तत्र वस्त्रा चान्यत्र ते द्विजाः॥
महाच्छत्रे भवेत् सूर्य्यः पेयानामथ वारुणं।
रसोपकरणं सर्व्वं कथितं शक्रदैवतं॥
मठस्य लक्ष्मीर्विज्ञेया खड्गस्य चापि कालिका।
छुरिकाया भवेद्दुर्गा कट्टारस्यापि चण्डिका॥

आदर्शस्य भवेच्चन्द्रः षष्ठायाश्चापि वासवः ।
कम्बलस्य भवेत् सूर्य्यः सर्व्वं वा विष्णुदैवतमिति ॥

अत्र स्मृतिपुराणयोः सप्रमाणत्वेऽपि शिष्टाचारवशात् व्यवहर्त्तव्यः ।

**Colophon.** इति समाप्तः ।

---

**No. 2275.** देवीपूजनभास्करः । Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq., Extra Asst. Commissioner, Goálpárá.

**Devípújana-bháskara.** A treatise on the worship of Durga, similar to No. 2271, and by the same author, but apparently more elaborate. The codex, however, breaks off in the middle.

नमो गणेशाय ।

**Beginning.** नत्वा दुर्गां जगद्धात्रीं तारिणीं दुःखहारिणीं ।
श्रीसिद्धान्तसुनीतोऽतद्देवीपूजनभास्करं ॥

दुर्गापूजाया नित्यतामाह कालिकापुराणं ।
येमोहादथवालस्याद्देवीं दुर्गां महोत्सवे ॥
न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव ।
क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ॥
परत्र च महामायाबलिर्भूत्वा प्रजायते ।

देवीपुराणं ।

द्विशरीरे चरे चैव लग्ने केन्द्रगते रवौ ।
वर्षे वर्षे विधातव्यं स्थापनञ्च विसर्ज्जनं ॥

अत्र द्विशरीरचरपदेन कन्यातुलयोरेव ग्रहणं पूर्व्वाङ्केऽन्येषाम्तदानीमसम्भवादिति ।

एवञ्च, पूर्व्वोदितविधानेन पूजामस्यान्दिवौकसः ।
कृत्वैव परमामापुर्निर्वृतिं दुःखहानये ॥

एवं, अन्यैरपि सदा कार्य्यं दुर्गादेव्याः प्रपूजनं ।
विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकं ॥

तथा, भवानीतुष्टये पार्थ संवत्सरसुखाय च ।
भूतप्रेतपिशाचानां नाशाय चोत्सवाय च ॥

इति कालिकाभविष्यपुराणयोः करणे फलश्रुतेश्चास्याः काम्यत्वञ्च ।

चण्डिकामुपहारैश्च पूजयेदिष्टवृद्धये ।

तथा ज्योतिषे, ऋक्षत्रये च मूलादौ सप्तम्यादिदिनत्रये॥

इत्यत्रापि तथाप्रतीतेरस्या नित्यत्वं काम्यत्वञ्च । अत्र सर्व्ववर्णाधिकार इत्याह भविष्यपुराणं ।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च सेवकैः ।
एवं नानाम्लेच्छगणैः पूज्यते सर्व्वदस्युभिः ॥
अङ्गवङ्गकलिङ्गैश्च किरातैर्व्वर्व्वरैः शकैरिति ।

**End.** स्मृतिसागरे च मत्स्यसूक्तं ।
ज्येष्ठा वाप्यथवा षष्ठी सायङ्काले न चेद्भवेत् ।
सायमेव तथापि स्याद्विल्वशाखाभिमन्त्रणं ॥
पूर्व्वां षष्ठीं सनक्षत्रां सायम्प्राप्तामपि त्यजेत् ।
यदा तु पत्रिकापूजा न परेद्युर्भविष्यति ॥
सन्निकृष्टं तु यत्पूर्व्वं पत्रिकादिवसस्य तु ।
तद्दिने वरणं कृत्वा परे शाखां प्रवेशयेत् ॥

तथा पूर्व्वलिखितयज्ञीया देवता इत्यादि । अत्र सायं पदं सायंसन्ध्यापरं सायंसन्ध्यास्विति भविष्ये विशिष्याभिधानात् । सायंसन्ध्या च, अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत् तेजःपरिहानिरुषा भानोरर्द्धोदयं यावदितिमिहिरोक्तेः । एतेन यदा तु पूर्व्वदिने सायंषष्ठीलाभः परदिने सायं विनैव तदा पूर्व्वदिने बोधनं परदिने सायं विल्वाभिमन्त्रणमिति स्मार्त्तेन यदुक्तं तन्निरस्तं षष्ठ्या गुणत्वात् अन्यथा तिथिह्रासवशादुभयदिने सायं षष्ठ्यलाभे बोधनबाधापत्तेः । अतएव स्मृतिः, सायं षष्ठ्यान्तु कर्त्तव्यं पार्व्वत्या आधिवासनं । षष्ठ्यभावेऽपि कर्त्तव्यं सप्तम्यामपि मानवेति । तथा, पत्रीप्रवेशात् पूर्व्वेद्युरिति पूर्व्वलिखितभविष्यपुराणीयाच्च । विल्ववासिनीत्यत्र विन्ध्यवासिनीति ब्रह्माण्डनन्दिकेश्वरयोः पाठः आमन्त्रयेद्बोधयेदिति यज्ञीयदेवताया यज्ञदिनाव्यवहितपूर्व्वदिनसायमावाहनस्य सर्व्वयज्ञे दृष्टत्वात् अतोहयशीर्षपञ्चरात्रीये नान्यत्रेतिनिमित्तकादित्युक्तं । निमित्तान्तरसत्त्वेऽपि अन्यत्रावाहनं न कुर्य्यादित्यर्थः । अत एव स्कन्दाश्रितहोमोदेवावाहनं विनापि विहित इति । विल्वफलद्वयमुपक्रम्य गवाक्षे । वायव्यं राक्षसं न गृह्णीयात् कदाचन । अथ तद्दिने कुण्डनिर्म्माणं ।

---

**No. 2276.** स्मृतिरत्नाकरः । Place of deposit, Goálpárá. MS. seen by H. C. Clarke, Esq. Extra Asst. Commissioner, Goálpárá.

**Smriti-ratnákara**. A digest of the rules regarding expiations. By Vedácharya. The name given is a literary title, and not a personal name. The author follows the digest of Bhavadeva.

ॐ नमोगणेशाय ।

**Beginning**. त्रिकालोद्भवपापानां स्मरणाद्यस्य नोदयः ।
नमस्तस्मै जगद्धात्रे नमोहरिहरात्मने ॥
निष्कृतौ बहुपापानां स्मृतीनां भेददर्शनात् ।
व्रतस्य निर्णयं कर्त्तुं साध्वसं जायते मम ॥
मन्वादिस्मृतिशास्त्रार्थं भवदेवादिसम्मतं ।
प्रायश्चित्तमहं वक्ष्ये विज्ञाय पापनिष्कृतौ ॥

इदानीं गुरुत्वात् पञ्चमहापातकप्रायश्चित्तनिरूपणपुरःसरमेव प्रायश्चित्तं निरूपयितुं युज्यते । गुरवे प्रणामं कृत्वा । तत्र मनुः, ब्रह्महत्या सुरापाणं स्तेयं गुर्व्वङ्गनागमः महान्ति पातकान्याहुः संसर्गश्चापि तैः सह । तथा च विश्वामित्रासितस्वायम्भुवाः ।
ब्राह्मणेन च हन्तव्यः सुरा पेया न च द्विजैः ।
ब्राह्मणस्वर्णहरणं न कर्त्तव्यं कथञ्चन ॥
गुरुतल्पं न गच्छेच्च संसर्गन्तैश्च वर्ज्जयेत् ।
महापातकसंज्ञा च निर्द्दिष्टैषा मनीषिभिः ॥

अत्र निषेधविषयस्य हननस्यानिरूपणे हनननिमित्तप्रायश्चित्तस्यानिरूपणात् प्रथमं हननमेव निरूप्यते । किमिदं हननं नामेति । तत्र प्राणवियोगफलकव्यापारोहननमिति लोकप्रसिद्धमेव । स च प्राणवियोगफलकव्यापारोयथा साक्षात्कर्त्तुः परम्पराकर्त्तुरपि तेषामपि हन्तृत्वात् तेन साक्षाद्धन्तृवत् प्रयोजकानुग्राहकानुमन्तृनिमित्तिनामपि हन्तृत्वात् पञ्चानामेव निषेधविषयत्वं ।

**End**. हरिवंशे श्लोकशते सुवर्णार्द्धं प्रचक्षते ।
आगमानां सहस्रेण स्वर्णमेकं प्रकीर्त्तितं ॥
धर्म्मशास्त्रसहस्रेण रजतत्रयमीरितं ।
कपिलायाः सुवर्णार्द्धं धेनुमात्रे पुराणकं ॥
प्रायश्चित्तविधौ यत्र पणाधिकपुराणकं ।
पुराणत्रितयं चान्ये वीर्य्यहीने द्वयं भवेत् ॥
कृष्णे वृषे षट्पुराणं श्वेते नवपुराणकं ।
द्वात्रिंशच्च पुराणं स्यात् वृषे नीले तथैव च ॥
नमेरोः प्रतिवक्त्रे च द्वादश स्वर्णरत्तिकाः ।

मूले श्रीफलमात्रे तु पुराणं त्रितयं भवेत् ॥
पक्केऽपि तूर्य्यकं विद्यात् कलौ पणव्यवस्थया ।
धात्रीफलस्य प्रत्येकं भवेद्रजकमासकं ॥
एतान्याहुः प्रशस्तानि मुनयोये पुराविदः ।
यज्ञं कृत्वा यजमानः कुर्य्यान्नामिषभोजनं ॥
वास्तुयागादिकविधौ विशेषश्चापि दृश्यते ।
ज्ञातिभिः सह भुञ्जीत दधिक्षीरामिषं विना ॥
न क्षारञ्च कषायञ्च पूतिगन्धादिकञ्च यत् ।
न शाकं न च काण्डञ्च न पुष्पञ्च कदाचन ॥
शाम्बपुराणे ।
कूपार्थे च तड़ागे वा वाप्यादेर्नैन्त्यान्तथा ।
दीक्षायां सूर्य्ययागे च गर्भाधाने तथैव च ॥
निरामिषेण भोक्तव्यं गव्यवर्ज्यं जलाशयं ।
मूलञ्च सोमधान्यान्नं शृङ्गवेरञ्च शर्करां ॥
सैन्धवं मातुलाङ्गञ्च भोजने शस्तकं विदुः ।

**Colophon.** इति श्रीवेदाचार्य्यकृतौ स्मृतिरत्नाकराख्ये अष्टादशपरिच्छेदः सम्पूर्णः ।

---

**No. 2277.** लक्षणसारसमुच्चयः । Substance, country-made paper, 11 × 6 inches. Folia, 158. Lines, 12—13 on a page. Extent, 3,924 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Incorrect.

**Lakshaṇa-sára-samuchchaya.** A treatise on the worship of the liñgam of S'iva, compiled from various Tantras. Anonymous. CONTENTS: Liñgam praised, its varieties, different advantages desirable from the worship of those varieties. Rules for preparing liñgams of wood, metal &c. The peculiarities thereof. Good and bad characteristics of liñgams. Preparatory duties for establishing a liñgam. Omens, good and bad times. Means of obviating evil omens. Seven rules. Characteristics of a teacher of the S'aiva cult. Trial of teachers. Their education. Trial of woods for making liñgams. Mode of felling trees for making liñgams. Manifest liñgams. Unmanifest liñgams. Images of the nine S'aktis. Do. of the eleven Rudras. Do. of other gods and goddessess. Do. appropriate for the S'ivite cult. Do. of planets, stars, lunations, &c. Do. of Bhútas,

Pretas, Joginís, &c. Characteristics of manifest and unmanifest images. Rules for making seats for images. The symbols of Hara, Hari &c. The vehicles, arms and complements of do. Auspicious times. Appropriate months for the consecratiou of images. Rules for making Maṇḍapas for do. Implements of worship. Rules for collecting earth for fire altars. Do. for the bathing of liṅgams. Do. for setting up columns, gateways &c. Do. for Vánaliṅgas. Do. for setting up flags. Rules for repairs of old liṅgams. Do. for consecration of houses. Sacrifices when commencing to build. Removal of dead bodies from the ground intended to be built upon. Worship of houses. Rules for building palaces. General rules for houses, gateways, &c. Rules for making tanks, wells, orchards, gardens &c. Do. for putting on the Brahmanical thread.

**Beginning.** तत्त्वत्रयत्रिदहनत्रिगुणत्रिलिङ्ग-
कालत्रयत्रिभुवनत्रि + रिशरीरं ।
नेत्रत्रयत्रिपथगात्रिपवित्रगा त्र-
+ + त्रिशूलभृतमीशमहं प्रणम्य ॥
आगमेभ्यः समाकृष्य कुर्य्यां लक्षणसङ्ग्रहं ।
ऋजुसंक्षेपसम्पूर्णं सर्व्वथा + + नाकुलं ॥
असन्दिग्धं स्फुटार्थञ्च धर्म्मकामार्थमोक्षदं ।
हिताय मन्दबुद्धीनां स्मरणाय मनीषिणां ॥
किञ्चित् क्वचित् स्फुटञ्चाङ्गं नैकस्मिन् सर्व्वमङ्गकं ।
वहुतन्त्राण्यथो वीक्ष्य क्रमेणैकत्र लिख्यते ॥
सिद्धिलिङ्गाश्रितेत्येवं शिवप्रोक्तं शिवागमे । इत्यादि ।

**End.** यावत्क्ष्मीमाननन्तोधरति वसुमतीमूर्द्ध + प्रादियुक्तां
यावत् सप्तार्णवीयार्ण + हतपृथिवीमध्यगोमेरुरस्ति ।
यावच्चन्द्रार्कतारागणमणिभिरिद + + + + + + +
तावद्धै रोचणीया जगति चिरमियं पुस्तरूपास्तु कीर्त्तिः ॥

**Colophon.** इति लक्षणसारसमुच्चये द्वात्रिंशत्तमोविधिः समाप्तः । शुभम् ।

विषयः । शिवलिङ्गमाहात्म्यकीर्त्तनं । व्यक्ताव्यक्तमिश्रभेदात् तस्य त्रिविधत्वनिरूपणं । तत्र फलभेदकथनञ्च । मृत्का8धातुरत्नमयादिलिङ्गनिर्म्माणविधिकथन । तत्र प्रत्येकं माहात्म्यकीर्त्तनञ्च । शुभाशुभलिङ्गलक्षणकथनं । विविधफलमयलिङ्गनिरूपणं । मङ्गलाचरणनिरूपणं । शुभाशुभशकुनकथनं । शुभाशुभनिमित्तनिरूपणं । अशुभनाशनोपायकथनं ।

सद्गुरुलक्षणादिकथनं। शैवाचार्य्यलक्षणादिकथनं। आचार्य्यपरीक्षाविधिः। तत्र अध्ययना-दिविधिकथनञ्च। शिलाराजादिनामभेदेन वृक्षाणां परीक्षाविधिकथनं। वृक्षच्छेदनादिविधि-कथनञ्च। अव्यक्तलिङ्गप्रमाणलक्षणादिकथनं। व्यक्तलिङ्गप्रमाणलक्षणादिनिरूपणं। तत्र नवशक्तीनां प्रतिमालक्षणं। एकादशरुद्राणां प्रतिमालक्षणं। एवं प्रसिद्धानां सर्व्वेषां देवानां देवीनाञ्च लक्षणकथनं। एवं भिक्षाकल्पव्याकरणादीनां प्रतिमालक्षणं। ग्रहलक्षनतिथ्यादीनां प्रतिमालक्षणकथनञ्च। तथा, भूतप्रेतकिन्नरप्रभृतीनां योगिन्यादीनाञ्च प्रतिमालक्षणकथनं। व्यक्ताव्यक्तप्रतिमालक्षणकथनं। प्रतिमास्थापनयोग्यपीठनिर्म्माणविधिकथनं। अथ हरिहरा-दीनां .सर्व्वेषां देवानां चक्रत्रिशूलाद्यष्टलक्षणकथनं। तथा प्रत्येकं वाहनायुधादिकथनञ्च। क्षणमुहूर्त्तादिमानकथनं फलादिनिरूपणं। तत्र तत्र प्रतिष्ठायां मासादिनिरूपणञ्च। मण्डप-निर्म्माणविधिकथनं। कुण्डस्रुक्स्रुवादिविधिकथनं। प्रतिष्ठायै उद्धारादिविधिकथनं। त्रिविध-लिङ्गस्नानविधिकथनं। अधिवासनविधिकथनं। लिङ्गारोपणविधिकथनं। ईश्वरस्थापनविधि-कथनं। तोरणस्तम्भग्रहपूजाजरायुजादिस्थापनविधिकथनं। वाणलिङ्गादिस्थापनविधिकथनं। ध्वजादिनिवेशनविधिकथनं। पुरातनलिङ्गाद्युद्धारविधिकथनं। मटादिलक्षणस्थापनादि-विधिकथणं। तत्र स्थानयागलक्षणनिर्णयविधिनिरूपणञ्च। शल्योद्धारविधिकथनं। वास्तुपू-जापदसंस्थापनविधिकथनं। प्रासादनिर्म्माणविधिकथनं। साधारणप्रासादविधिकथनं। द्वार-स्थापनविधिकथनं। पुष्करिणी-कूप-वृक्षोद्यानारामस्थापनविधिकथनं। पवित्रारोहणविधि-कथनञ्च। इति शम्।

---

**No. 2278.** राजनीतिमयूखः। Substance, country-made paper, 12 × 6 inches. Folia, 40. Lines, 15 on a page. Extent, 2,250 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakis'ora Siñha, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Rájaníti-mayúka.** On kings and their duties. By Nílakaṇṭha Bhaṭṭa, son of Ramánátha Dámodara Nṛisiñha, and grandson of Bhaṭṭa S'añkara. CONTENTS: The word *rája* applicable to all Kshatriyas. Coronation, its varieties and rituals. The seven accessories of kings (ministers &c.). The attributes of kings. Duty of keeping subjects in happiness. Merits and demerits of ministers. Royal benefactions. Royal table. Aquatic excursions. Hunting. Daily duties. Rules regarding negotiations, war &c. Princes, their duties. Good, bad and indifferent ministers &c. Priests, courtiers &c. Royal treasury. Kingdom defined. Metropolis. Fortresses. Rewards and Honors. Army. Elephants, horses. Disputes of kings. Embassies. Omens. Encampments. Inimical conduct or *casus belli*. Warfare. Sin of running away from the battlefield. Encouragement of heroes. Chess play.

Beginning. देवर्षिरक्षःसंघानामवाङ्मनसगोचरं ।
प्रत्यक्षमपि तद्धाम सर्व्वदा समुपास्महे ॥
विरोधिमार्गद्वयदर्शनार्थं द्वेधा बभूवाथ परः पुमान् यः ।
श्रीशङ्करोभट्ट इहैकरूपोमीमांसकाद्वैतमुरीचकार ॥
पितृसौहित्यसंसिद्धिर्हेतुमुक्त्वाथ तत्सुतः ।
नीलकण्ठः प्रकुरुते राजनीतिं नृपादृतां ॥

तत्र राजशब्दः क्षत्रियमात्रे शक्तोन राज्ये योगिनि अभिषेकोत्तरभाविराज्ययोगात् प्रागपि राजानमभिषिञ्चेदिति——इत्यादि ।

अथ मामकः प्रकारः ।

End. आद्यं वत्सेकमष्टद्विशिखिविधुपदं वह्निजं नन्दिसंज्ञं
नन्देकं पञ्च युग्मं शरहरनयनं खाग्निगं त्रित्रियुक्तं ।
अश्वद्विव्योम चेन्द्रं युगमितमुडुराड्क्षिषट्त्रित्रिपक्षो-
पान्ते + + + + भूमिमल्लनमुद्धिकुद्धैरदं त्रिद्विषष्ठं ॥
षट्चन्द्रं नेत्रयुग्मं मुनिजमुदधिद्+द्वकाग्नाशुगाधि-
+मले+षुवे+पुनरनयदितोवाजिनं नीलकण्ठः ॥

Colophon. इति श्रीजगद्गुरुनारायणभट्टसूनुपण्डितशिरोरत्नमीमांसाद्वैतसाम्राज्य-धुरन्धरभट्टशङ्करात्मजरचनाथदामोदरन्थसिंहानुजभट्टनीलकण्ठेन कृते भास्करे राजनीति-मयूखः ॥

विषयः । राजशब्दस्य क्षत्रियमात्रे शक्तिरितिनिरूपणं । राज्याभिषेकविधिकथनं । तत्प्रकारकथनं । प्रयोगकथनञ्च । अथ स्वाम्यमात्यादिसप्ताङ्गप्रयोगविधिकथनं । राजगुणकथनं । प्रजारञ्जनविधिकथनं । अमात्यादिलक्षणं । निषिद्धानि । दानविधिकथनं । आहारादिविधि । जलमृगयाविधिकथनं । सामान्यतोमृगयाविधिकथनं । नृपतेराह्निककृत्यनिरूपणं । प्रत्येकं सन्धिविग्रहादीनां प्रयोगविधिकीर्त्तनं । राजपुत्रनिरूपणं । तत्कृत्यनिरूपणञ्च । उत्तममध्य-माधमभेदेन त्रिविधामात्यलक्षणादिकथनं । पुरोहितसुहृदादिलक्षणादिकथनं । कोषादिनि-रूपणं । राष्ट्रनिरूपणं । राजधानीनिरूपणं । दुर्गनिर्म्माणादिविधिकथनं । पुरुषकार एव राज्ञा कर्त्तव्य इतिनिरूपणं । बलनिरूपणं । गजलक्षणादिनिरूपणं । गजबन्धनयोगवृत्तनि-रूपणं । अश्वलक्षणादिनिरूपणं । अभियोग्यनृपनिरूपणं । दूतप्रेरणविधिकथनं । तद्गुणा-दिनिरूपणं । शकुनशास्त्रकथनं । स्कन्धावारशिविरादिविधिकथनं । आततायिलक्षणादिनिरू-पणं । धर्म्मयुद्धविधिकथनं । रणात् पलायने दोषकथनं । वीरोत्साहविधिकथनं । चतुरङ्ग-क्रीड़ा विधिकथनञ्च । इति शम् ।

---

**No. 2279.** जलाशयारामोत्सर्गविधिः । Substance, country-made paper 9 × 4 inches. Folia, 103. Lines, 10 on a page. Extent, 2,178 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Jalásayárámotsarga-vidhi.** Rules and rituals for the consecration of tanks, wells, orchards, &c., for public use. By Náráyaṇa Bhaṭṭa, son of Rámeśvara Bhaṭṭa Súri.

**Beginning.** सरस्वतीं नमस्यामः प्रत्यूहव्यूहहानये ।
यदेकतानचित्तानां चित्ते संविस्फुरत्तमा ॥
विघ्नाधिप नमस्तुभ्यं विघ्नं सर्व्वं विघातय ।
प्रचयं रचया + चं बुद्धिं शुद्धिं विधेहि च ॥
उन्निद्रशतपत्रसगोचनेत्रं
सुग्रीवमित्रमतिचित्रचरित्रपात्रं ।
उन्मीलनीलमणिवर्णसवर्णगात्रं
रामं भजे कुलपतिं कमलाकलत्रं ॥
विश्वामित्रकुलोद्भवो विधुरिवाखण्डः कुलानां निधि-
र्यागगुम्फे निखिलेऽपि यस्य वसुधा शिष्यप्रशिष्यैर्भृता ।
विद्यापद्मविकाशनैकतरणिः श्रीभट्टगोविन्दजः
संख्यावद्गणनाग्रणीर्विजयते श्रीभट्टरामेश्वरः ॥
शास्त्रेष्वधीती पितुरेव यः श्रुतीः
स्मृतीः समालोच्य च देशरीतीः ।
नारायणस्तत्तनयोऽविमुक्ते
जलाशयोत्सर्गविधिं विधत्ते ॥
यद्यपीह बुधैर्नीता ग्रन्थाः सन्ति परःशताः ।
तथापीह विशेषोयः पण्डितैः स विविच्यतां
तत्रादौ + + + न्नाधिका श्रुते तु विधौ
तत् कार्य्यं । इत्यादि ।

**End.** ग्रन्थेऽस्मिन् गुणगणवत्त्वमुच्यते चेत्
स्वं ग्रन्थं गुणगणवन्तमाह कोन ।
तत् सन्तः शिरसि कृताञ्जलिस्तु याचे
शोध्यं तत्यदसदिहोदितं मया यत् ॥

**Colophon** इति श्रीरामेश्वरभट्टसूरिसूनुनारायणभट्टकृतौ जलाशयारामोत्सर्गविधिः समाप्तः ।

**विषयः ।** जलाशयादिकरणप्रशंसाकीर्त्तनं । जलाशययोग्यदेशनिरूपणं । कूपादिपरिमानकथनं । जलाशयारम्भकालकथनं । उत्सर्गकालकथनञ्च । कृतजलाशयस्य उत्सर्गकरणावश्यकता । उदपानशुद्धिनिरूपणं । तड़ागादिविक्रयप्रायश्चित्तं । वाप्यादिभेदनप्रायश्चित्तं । धर्म्मार्थनिखातकूपादौ गवादिपाते दोषाभावनिरूपणं । जलाशयादिप्रतिष्ठाविधिकथनं । मण्डपकुण्डादिरचनाप्रकारकीर्त्तनं । जलाशयोत्सर्गप्रयोगकथनं । नागयष्ट्यारोपणविधिः । जलाशयोत्सर्गस्य चतुर्थीकर्म्मकथनं । पञ्चगव्यस्नानविधिकथनं । वापीकूपोत्सर्गे विशेषकथनं । आरामोत्सर्गपद्धतिकथनं । इति शम् ।

---

**No. 2280.** वैधहिंसाघतिमिरमार्त्तण्डोदयः । Substance, country-made paper, 16 × 5 inches. Folia, 23. Lines, 8 on a page. Extent, 503 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Vaidhahiṅságha-timira-mártaṇḍodaya.** A treatise on the propriety and sinlessness of the sacrifices enjoined in the S'ástras. By Ambikáprasád Miśra, son of Gayádatta, and grandson of Vahoraṇa Miśra. The work was compiled under the auspices of Mahárájá Rájendrakiśora Siñha, Bahádur, of Bettiyá, in the Samvat year 1911, *i. e.*, 28 years ago.

**Beginning.** जगद्भिन्नाभिन्नोजननमरणध्वंसकरणै-

स्त्रिधाप्येकोयस्मिन्नपरिमितदिव्योगुणगणः ।

प्रकृत्या यस्तावत् प्रदिशतु चतुर्व्यूहनिलयः

परब्रह्माख्य + + सगुणपरमानन्दपुरुषः ॥

चम्पारण्याधिराजः श्रुतिविहितकृतौ राजराजाधिराजो-

यद्राजद्राजधानी विलसति विदिता वेतियाख्यातिभव्या ।

श्रीराजेन्द्रः किशोरोत्त्वपमुकुटमणिः सर्व्वशास्त्राधिकारी

तस्याज्ञामाधिगत्य श्रुतिवचनपरं तत्त्वमुद्घाटयामि ॥

— — — — — — — — — — — — ।

न हिंस्यादितिवाक्यस्य वाक्यार्थपरिशीलनात् ।

पापदृष्टि + मञ्जूषा प्रबोधाय विचार्य्यते ॥

मा हिंस्यात् सर्व्वा भूतानीति श्रूयते । तत्र संशयः । इत्यादि ।

**End.** तस्मात्, याज्ञीयहिंसायाः पापाभावस्य निर्णयात् ।
वैधहिंसाघतिमिरमार्त्तण्डोदयनामकः ।
प्रबन्धोरचितः स + चन्द्रभू + + भूमिते ।
माघवलक्षसप्तम्यां वेदतात्पर्य्यनिर्णयः ॥

**Colophon.** इति श्रीमन्महाराजाधिराजश्रीराजेन्द्रकिशोरसिंहाज्ञया श्रीमन्मिश्रवदोरणात्मजमिश्रमयादत्तसूनुमिश्राम्बिकाप्रसादकृतोवैधहिंसाघतिमिरमार्त्तण्डोदयः समाप्तः ।

विषयः । हिंसादिलक्षणनिरूपणपूर्व्वकं श्रुतिस्मृत्यादिवाक्यसंवादेन वैधहिंसायाः प्रत्यवायाजनकत्वनिर्णयः ।

---

**No. 2281.** कालनिर्णयदीपिका । Substance, country-made paper, 13 × 4 inches. Folia, 40. Lines, 6 on a page. Extent, 510 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, old. Verse. Correct.

**Kálanirṇaya-dípiká.** A digest of the rules regarding proper times for the performance of religious rites. Both solar and lunar times are treated of, and rules for the calculation of eclipses are also given. By Rámachandra Ácharya, son of Kṛishṇa Ácharya.

**Beginning.** कालचक्रप्रयोक्तारं नत्वा श्रीविट्ठलं गुरुं ।
धर्मज्ञानार्थमातन्मः कालनिर्णयदीपिकां ॥
यद्यप्यर्थवशात् प्राप्तं स्फुटतार्थे क्वचित् क्वचित् ।
प्रपञ्च्यते स्वशब्देन मूलग्रन्थानुसारतः ॥
प्रथमः सावनोमासोद्वितीयश्चान्द्र उच्यते । इत्यादि ।

**End.** मुख्यकाले हि सम्प्राप्ते गौणमप्यस्तु साधनं ।
मुख्योऽपि साधने तस्य समयस्य न गौणता ॥
दुर्बोधग्रन्थसिद्धान्तध्वान्तसंघातभञ्जिका ।
सुखज्ञाकारि रामार्य्यैः कालनिर्णयदीपिका ॥
समाप्तोऽयं ग्रन्थः ।

विषयः । मास तिथि-नक्षत्र-संक्रान्ति-ग्रहणादिकालनिरूपणपूर्व्वकं तत्र प्रत्येकं कर्त्तव्यकर्म्मणां पद्येन व्यवस्थाकथनम् ।

---

**No. 2282.** कालनिर्णयदीपिकाविवरणम्। Substance, country-made paper, 13 × 4 inches. Folia, 144. Lines, 10 on a page. Extent, 4,036 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, old. Prose and verse. Generally correct.

**Kála-nirṇaya-dípiká-vivaraṇa.** A commentary on the work described under the next preceding (No. 2281). Anonymous.

**Beginning.** श्रीविट्ठलं श्रुतिगिरः प्रथितप्रभावं
भावार्द्रमानससरोवरराजहंसं ।
श्रीरामचन्द्रगुरुमेकमनेकशास्त्र-
पारीणकोविदधुरीणमहं नमामि ॥
येन व्याकरणार्णवैकतरणिः सा प्रक्रियाकौमुदी
वेदान्तानुमता च वैष्णवमहासिद्धान्तसन्दीपिका ।
कालज्ञानविधौ व्यधायि विबुधानन्दिप्रबन्धत्रयं
कृष्णाचार्य्यसुतः स नः सुखयतु श्रीरामचन्द्रो गुरुः ॥
श्रीरामचन्द्रकृतिना निधिना कलाना-
मानीतमेतदधुना वसुधासुधायाः ।
श्रीकालनिर्णयकृदुक्तिसुधाब्धिसार-
मापीयमाकर्णपुटकैः कलयन्तु कालं ॥
तत्सूनुना समयनिर्णयदीपिकायां
गाम्भीर्य्यगर्भपदपद्यगुणान्वितायां ।
निर्णीयते विवरणं कणशः प्रवीणै-
राचूड़मूलमवलोक्य विवेचनीयं ॥
न्यायामृतास्वादनलम्पटा ये ते तर्कसूक्तैरसयन्तु सूक्तिं ।
तन्न्यायनिर्णीतमिहास्ति सम्यक् शिष्टैरनुष्ठेयमिति प्रतीमः ॥

तत्र तावत् कालनिर्णयदीपिकां चिकीर्षवः— — — — — — — — — प्रतिजानीते,-कालचक्रप्रयोक्तारं नत्वा श्रीविट्ठलं गुरुं । इत्यादि ।

**End.** इति विवरणमेतद्दीपिकाया मया यत्
कृतमनुगतवाक्यं न्यायविन्यासगर्भं ।
स्वमतिसदृशमेतद्दर्शितानेकभावं
सुजनजनमनस्तद्वीक्ष्य तुष्टिं प्रयातु ॥

विषयः। रामचन्द्राचार्य्यकृतकालनिर्णयदीपिकायाः व्याख्यानं।

**No. 2283.** कालमार्त्तण्डः। Substance, country-made paper, 8 × 3 inches. Folia, 29. Lines, 10 on a page. Extent, 420 ślokas. Character, Nágara. Date, Sm. 1862. Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Kálamártaṇḍa.** A treatise on lunar times meet for the performance of religious rites. By Krishṇamitra A'chárya, son of Rámasevaka, and grandson of Devídatta Bhaṭṭa.

**Beginning.** शोकोद्रेकाकरः कालोलोकानामवधीरितः।
खेदं छिनत्ति यद्बोधोयदात्मानं श्रये हरिं॥

अथादौ प्रतिपन्निर्णयः। सा च यदि सूर्य्योदयमारभ्य पुनरुदयपर्य्यन्तं भवति तदा सा पूर्णा। इत्यादि।

**End.** मध्यतोऽजघटसंक्रमणे तान् शेषराशिषु परास्त्वतिपुण्याः॥

**Colophon.** इति श्रीमद्देवीदत्तात्मजरामसेवकतनूद्भवाचार्य्यकृष्णमिश्रकृतौ कालमार्त्तण्डाभिधेयोनिबन्धः समाप्तः। संवत् १८६२।

विषयः। प्रतिपदादितिथिद्वैधविवेचनम्। कालनिरूपणं। नवरात्रकालादिनिरूपणं। प्रतिपदादितिथिकृत्यकथनं। विशेषेण जन्माष्टमीमहाष्टम्यादितिथिकृत्यविवेचनं। संक्रान्तिग्रहणादिकृत्यनिरूपणञ्च।

---

**No. 2284.** सुदर्शनसंहिता, (उत्तरखण्डम्।) Substance, country-made paper, 12 × 4 inches. Folia, 142. Lines, 8 on a page. Extent, 2,689 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Incorrect.

**Sudars'ana-sañhitá.** A Tantra treating of mantras, charms, amulets, mystic diagrams, and rituals for malevolent and other rites. The codex under examination contains only the second part of the work.

देव्युवाच।

**Beginning.** पञ्चरात्रं तथा यन्त्रं कथं प्राप्तं सुरेश्वर।
मन्त्रभेदा न्यासभेदा होमभेदाः कथं पुनः॥
दत्तात्रेयमुनेर्मन्त्रः कथं प्रोक्तस्त्रिलोचन।
पुरश्चर्य्या कथं तस्य कथं वा मन्त्रसाधनं॥

दीपदानप्रकारश्च सरहस्यः कथं पुनः ।
चक्रन्यासश्च कवचन्यासोवा तस्य कीदृशः ॥ इत्यादि ।

**End.** इति परमरहस्यमुक्तमार्य्यै
वसुधामङ्गलमण्डनस्य विष्णोः ।
निजमनसि निरुध्य रक्षणीयं
निजवरगात्रवदिन्दुसुन्दराक्षि ॥

**Colophon.** इति श्रीसुदर्शनसंहितायामुत्तरखण्डे सहस्रार्ज्जुनकल्पे द्वादशः पटलः समाप्तः । शुभम् ।

विषयः । १,२, पटले शिवाशिवयोः संवादेन राज्यप्राप्ति-विजय-वशीकरणादिषु मन्त्रोद्धारादिनिरूपणं । ३ ये पटले, दत्तात्रेयमन्त्रादिनिरूपणं । हनूमन्मन्त्रादिनिरूपणं । सुदर्शनमन्त्रादिनिरूपणञ्च । ४ र्थे पटले, पूजाविधिकथनं । मन्त्रसन्ध्यादिकथनं । विशेषेण अन्तर्यागविधिकीर्त्तनञ्च । ५ मे पटले,-विशेषतोबहिर्यागविधिप्रपञ्चनं । ६ ष्ठे पटले,-वर्णचक्रादिन्यासादिनिरूपणं । ७ मे पटले,-कवचन्यासनिरूपणं । ८ मे पटले,-नानाविधमन्त्रभेदनिरूपणं । मन्त्रसिद्धिलक्षणतदुपायादिकथनञ्च । ९ मे पटले,-जप-होम-तर्पण-मार्ज्जन-ब्राह्मणभोजनात्मकपञ्चाङ्गपुरश्चरणप्रपञ्चप्रपञ्चनं । १० मे पटले,-परचक्रनिवारणोपायकथनं । ११ शे पटले,-विजयपताकायन्त्रनिरूपणपूर्व्वकं कवचपरिमाणादिनिरूपणं । १२ शे पटले,-दीपदानविधिकथनं । रक्षान्यासादिनिरूपणं । महादीपदानविधिकीर्त्तनञ्च । इति शम् ।

---

**No. 2285.** कलादीक्षारहस्यचर्य्या । Substance, country-made paper, 14 × 5 inches. Folia, 128. Lines, 14 on a page. Extent, 6,889 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, fresh. Prose and verse. Generally correct.

**Kaládíkshá-rahasyacharyá.** A manual for the performance of the rite of initiation into Tántric mantras. Anonymous.

**Beginning.** ——————करणानि शुभान्येव सर्व्वं तन्त्रेषु पार्व्वति ।
अभितस्तिथयोदिष्टाः शुक्लप्रतिपदादितः ।
एकोनसप्तविहृताः करणं स्याद्बवादिकं ।

अथ लग्ननियमः । इत्यादि ।

**End.** क्षमस्व मे पुनरागमनाय प्रसीद सर्व्वसिद्धीः प्रयच्छ नमोनमस्तेऽस्तु स्वाहा ।
इति विसर्ज्जनमन्त्रः ।

Colophon. इति कलादीक्षारहस्यचर्य्या समाप्ता ।

विषयः । विशेषेण दीक्षाविधिकीर्त्तनं तत्र प्रयोगकथनञ्च तत्र तान्त्रिकदीक्षाया आवश्यकत्वकथनं । दीक्षाकालादिविवेचनं । विशेषतः समयाशुद्ध्यादिनिरूपणं । कुण्डनिर्म्माणविधिकथनं । शान्त्यमृतादिनिरूपणं । परावस्थानिरूपणं । पात्रत्रयनिरूपणं । तत्त्वपञ्चकनिरूपणं । नीलकण्ठादिमूर्त्तिपूजनविधिः । तत्र षोड़शोपचारमन्त्रादिनिरूपणञ्च । होमविधिः । पूर्णपात्रादिविधिः । कलादीक्षाविधिः । शान्त्यतीताकलाशुद्धिनिरूपणं । आत्मविद्याशिवतत्त्वविभागादिकथनं । इति शम् ।

---

**No. 2286.** वेदसारसंहस्रनामव्याख्या । Substance, country-made paper, 12 × 4 inches. Folia, 126. Lines, 13 on a page. Extent, 3,859 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Prose and verse. Correct.

**Vedasára-sahasra-náma-vyákhyá.** A commentary on a chapter of the Padma-puráṇa containing a hymn in which a thousand epithets in praise of S'iva are strung together. By Paramas'ivendra Sarasvatí, disciple of Abhinava-náráyaṇendra Sarasvatí.

**Beginning.** ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्ज्जितं ।
आधारं सर्व्वभूतानामनाधारमविक्रियं ॥
अनन्तानन्दबोधाम्बुनिधिमद्भुतविक्रमं ।
अम्बिकापतिमीशानमनीशं प्रणमाम्यहं ॥
ऐशमाद्यन्तनिर्मुक्तमतिशोभनमादरात् ।
नमामि विग्रहं साम्बं संसारामयभेषजं ॥
महदादिविशेषान्तं जगद्यस्याः समुत्थितं ।
यस्यामेव लयं याति वन्दे तामम्बिकामहं ॥
गुरुमूर्त्तिधरां गुह्यां गुह्यविज्ञानदायिनीं ।
गुह्यभक्तजनप्रीतां गुहार्यां निहितां नमः ॥
नत्वा गणेश्वरं स्कन्दं साम्बं समुरुमेव च ।
वेदसारसहस्रस्य व्याख्या सम्यग्विरच्यते ॥

काशीखण्डे विष्णुवचनं । त्वतापि सुमहापापं त्वां यः स्मरति भावतः । इत्यादि ।

**End.** विष्ण्वादीनां गुणमूर्त्तीनामन्येषामिन्द्रादीनाञ्च परमं पदं भवतीति भावः । सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदमितिश्रुतिः । — — — — ।

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमदभिनवनारायणेन्द्रसरस्वती-पूज्यपादशिष्यश्रीमत्परमशिवेन्द्रसरस्वतीविरचिता वेदसारसहस्रनामव्याख्या समाप्ता ।

विषयः । पद्मपुराणीयवेदसाराभिधानशिवसहस्रनामस्तोत्रस्य विस्तरशोव्याख्यानम् ।

---

**No. 2287.** सौभाग्यभास्करः । Substance, country-made paper 14 × 10 inches, Folia, 291. Lines, 9—10 on a page. Extent, 6,377 ślokas. Character, Nágara. Date, Sm. 1923. Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Prose. Generally correct.

**Saubhágya-bháskara.** A gloss on a commentary by Nṛisiñha on the thousand and one names of Lalitá as given in the Brahmáṇḍa-puráṇa. By Bháskara Ráya, a pupil of the commentator.

**Beginning.** श्रीगम्भीरविपश्चितः पितुरभूद्यः कौन+वोदरे
विद्याष्टादशकस्य मर्म्मभिदभूद्यः श्रीनृसिंहाद्गुरोः
यस्य श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभवत्
स त्रेतात्रिपुरत्रयीति मनुते तामेव नाथत्रयीम् ॥
गुरुचरणसनाथो+सुरानन्दनाथो-
विदितमतिरहस्यां धीरहृन्दैर्नमस्यां ।
रचयति ललिताया नामसाहस्रिकाया
गुरुकृतपरिभाषाः स विहृष्टन्नशेषाः ॥

— — — — — — — — इह खलु निखिलपुरुषार्थसाधने भगवत्याराधनेऽभ्यर्हितमस्य रहस्यनामसाहस्रकीर्त्तनस्य रहस्यतरसद्गुरुसम्प्रदायैकवेद्यस्वरूपत्वेन तान् सम्प्रदायान् शिष्यानुजिघृक्षया दिदर्शयिषवः श्रीनृसिंहानन्दनामानोऽस्मद्गुरुचरणा निरन्तरायाः अपि शिष्यशिक्षायै मङ्गलमाचरन्ति त्रिपुरामिति । त्र्यात्मकं पुरं मण्डलकोणरेखामात्रादिसमूहो यस्याः सा त्रिपुरा । इत्यादि ।

**End.** अध्येषमाणानामानन्दाय शिवं मङ्गलरूपमिति सर्व्वं शिवं ।

**Colophon.** इति श्रीभास्कररायेण कृते सौभाग्यभास्करे फलश्रुतिः ।
श्रीविश्वामित्रवंश्यः शिवभजनपरोभारतीयोपवीती
काश्यां गम्भीर——रभवद्भास्करस्तस्य सूनुः ।
सोऽदृश्कायामितायां शरदि शरहतावाश्विने कालयुक्ते
शुक्ले सोमे नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥
इति शम् । संवत् १९२२ ।

विषयः । ब्रह्माण्डपुराणीयललितानामसहस्रस्य हयग्रीवागस्त्यप्रश्नोत्तरपरिभाषा: विस्तृत व्याख्यानम् ।

---

**No. 2288. रामायणसारः ।** Substance, country-made paper, 15 × 6 inches. Folia, 11. Lines, 10—11 on a page. Extent, 277 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur; also at Benaras, Bábu Hariśchandra. Appearance, fresh. Verse. Generally correct.

**Rámáyaṇa-sára.** A metrical epitome of the story of the Rámáyaṇa, giving its narrative portion divested of episodes and purely poetical descriptive portions. By Agnivesa, a Ṛishi. The most remarkable peculiarity of the work is the attempt made in it to fix specific dates for all the important occurrences in the history of Ráma. Thus, it says Ráma was 15 years old and Sítá 6 years old, when they were married. At the time of their exile they were 27 and 18 years old respectively. They had sojourned in the wilderness 12 years and 6 months when the nose of Súrpanakhá was cut by Lakshmaṇa. The rape of Sítá took place on the 14th day of the waxing moon in the month of Mágha. Hanumán repaired to Ceylon on the 10th of the waxing moon in the month of Márgas'irs'a. Ráma appears on the shore of the sea on the 3rd of Paus'a. On the 4th Vibhísana seeks his shelter. The fall of Rávaṇa took place on the 18th of Chaitra. On the 1st of Vais'ákha, Ráma arrives at the seashore or his return journey. The fire-ordeal of Sítá took place on the 3rd of that month. On the 7th Ráma returns to Ayodhyá to celebrate his coronation. On the 12th of Chaitra, in the seventh month of her pregnancy, Sítá was expelled from her home, and on the 9th of Áshádạ she brought forth her twins. It is scarcely necessary to add that there is nothing to shew that the dates are trustworthy.

अथाग्निवेशर्षिकृतं रामचरितं ।

**Beginning.** श्रीशारदाचरणपद्मयुगं विधाय
चित्ते गणेशचरणौ प्रणयेन नत्वा ।
रामायणीयमखिलं मुनिभिः प्रणीतम्
वाचैरहं तदिह सारतरं प्रवक्ष्ये ॥ १ ॥
पर्व्वं योदितिजोन्द्रराडेवपुषा सिंहेन निवारितः

सोऽयं विश्रवसः सुतोऽसुरसुतागर्भाद्भवो रावणः ।
तेनातीव सदा जगत्त्रयमिदं दुष्टेन सन्तापितं
जातस्तद्बधहेतवे दशरथाच्छ्रीरामनामा हरिः ॥ इत्यादि ।

**End.** इत्येतद्रघुवरचरित्रं पठति रघुपतेर्यो नरो वा शृणोति
सारं रामायणस्य प्रतिदिनमृषिणा चाग्निवेशेन गीतं ।
सोऽयं निर्द्धूतपापोजलधरपदमारुह्य यानेन याति
स्वर्गं दिव्येन देवैरभिमुखमखिलैरागतैः स्तूयमानः ॥

**Colophon.** इति श्रीअग्निवेशमुनिविरचितोरामायणसारः सम्पूर्णः ॥

विषयः । संक्षेपेण वाल्मीकिरामायणसारं सङ्कलय्य रामचरित्रवर्णनं । विशेषतश्च विवाहादिकाले श्रीरामादीनां वयआदिकथनं । तत्र विवाहकाले रामः पञ्चदशवर्षवयस्कः सीता तु षड्वार्षिकी आसीत् । अथ वनगमनकाले रामः सप्तविंशतिवर्षीयः सीता तु अष्टादशवर्षदेशीयेति कथनं । अथ पञ्चासोत्तरद्वादशे वर्षे समतीते पञ्चवट्यां सूर्पणखाया नासिकाच्छेदनादिकथनं । तत्र माघशुक्लचतुर्द्दश्यां सीताहरणकथनं । मार्गशुक्लदशम्यां हनूमतः समुद्रलङ्घनकथनं । पौषस्य तृतीये दिने जलनिधितीरे रामस्य ससैन्यस्य उपस्थितिकथनं । चतुर्थे दिने विभीषणेन सह मित्रताकथनं । एवं सेतुबन्धनलङ्काप्रवेशादिदिनकथनं । माघनवम्यां नागपाशबन्धनादिकथनं । चैत्रस्याष्टादशदिवसे रावणबधकथनं । वैशाखस्य प्रथमदिने रामस्य पुनः सुवेलाचलप्रत्यागमनकथनं । तत्र तृतीयायामग्निशुद्धिकथनं । सप्तमे दिने अयोध्याप्राप्त्यनन्तरं राज्याभिषेककथनं । अथ गर्भाधानात् सप्तमे मासेऽतीते चैत्रस्य द्वादशदिवसे सीताया निर्व्वासनकथनं । आषाढस्य नवमदिवसे सीतायाः पुत्रयुगजननकथनं ।

---

**No. 2289.** धर्म्मारण्यमाहात्म्यम् । Substance, country-made paper, 16 × 5 inches. Folia, 123. Lines, 10 on a page. Extent, 3,508 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Incorrect.

**Dharmáraṇya-máhátmya.** Praise of Dharmáraṇya as a place of pilgrimage. It notices all its sacred spots, and narrates a great number of legends in support of the merits of those spots. The work is so written as to appear as an episode of a Puráṇa, but the codex does not give the name of the Puráṇa. It is obviously apocryphal.

**Begininng.** नत्वा संहृतिवारिधिं त्रिजगतां नौर्नाम यस्य प्रभो-
र्येनेदं सकलं विभाति सततं जातं + + संहृतं ।

यस्यैव + + + + मानविधुरे वेदान्तवेद्योविभु-
र्यं वन्दे सहजप्रकाशममलं श्रीरामचन्द्रं परं ॥
— — — — — — — — — — — — |
नैमिषे निमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥
एकदा सूतमायान्तं दृष्ट्वा तु शौनकादयः ।
परं हर्षं समाविश्य पप्रच्छुर्नैकचेतसा ॥
चित्राः श्रोतुं कथास्तत्र + + + + स्तपस्विनः । इत्यादि ।

**End.** दानादिभिर्यथान्यायं सम्पूर्णफलहेतवे ।
मुद्रिकां कुण्डले चैव ब्रह्मसूत्रं हिरण्मयं ॥
वस्त्राणि च विचित्राणि गन्धमाल्यानुलेपनैः ।
देववत् पूजनं कृत्वा गाश्च + + + + + + ॥

**Colophon.** इति श्रीधर्मारण्यमाहात्म्यं परिपूर्णं ।
(अत्राध्यायसंख्यावैषम्यं वर्त्तते ।)

विषयः । धर्मराजेन सह नारदस्य संवादेन धर्मारण्यमाहात्म्यकीर्त्तनं । अथैकदा धर्मारण्ये तपश्चरतोधर्मराजात् अनिष्टमाशङ्कमानस्य देवराजस्य सार्द्धं देववृन्देन ब्रह्मलोकगमनादिवृत्तान्तकीर्त्तनं । ततोधर्मराजं मोहयितुं धर्मारण्यं प्रविष्टया वर्द्धन्या सह तस्य संलापादिकथनं । धर्मवापीवृत्तान्तकथनं । धर्मक्षेत्रस्थापनविवरणकथनं । धर्मराजकृतशिवस्तोत्रकथनं । धर्मारण्यवासिनां गृहस्थानां सदाचारवर्णनं । सदाचारलक्षणादिकथनं । धर्मवाप्यां पितॄणां तर्पणश्राद्धादिकरणमाहात्म्यकीर्त्तनं । पतिव्रताधर्मनिरूपणं । सामान्यतः कुलस्त्रीणां कर्त्तव्यानि । अथ कार्त्तिकस्य प्रार्थनया महादेवेन सृष्टिवृत्तान्तकीर्त्तनं । तत्रादौ वटवृक्षस्य उत्पत्तिकथनं । तत्पत्रे बालरूपतया भगवतोवासुदेवस्य शयनादिवृत्तान्तकीर्त्तनञ्च । हरिहरादीनां धर्मारण्यगमनपूर्व्वकं तत्र तत्तद्गोत्रसम्पन्नानां मुनीनां निवासस्थापनादिवृत्तान्तकीर्त्तनं । तत्र गोत्रप्रवरकथनपूर्व्वकं प्रेरकं अवस्थादिवर्णनञ्च । धर्मारण्ये गोमातुः सुरभेः प्रभावेण सहस्रशोवेदपारगब्राह्मणानामुत्पत्तिकथनं । गन्धर्व्वराजस्य विश्वावसोः कन्यकाभिः सार्द्धं तेषां परिणयादिवर्णनञ्च । अथैकदा लोलजिह्वाभिधानेन राक्षसेन विप्रकृतानां तेषां परित्राणाय कृतप्रयाणेन नलकूवरेण सह निशाचरराजस्य युद्धवर्णनं । तत्र चाकृतार्थे तस्मिन् विष्णुकृततद्वधवर्णनञ्च । अथ संग्रामर्भे अश्विनीकुमारयोर्जन्मवृत्तान्तकीर्त्तनं । देवसराभिधानस्य नृपतेः विवरणकथनमुखेन भगवतोहयशीर्षावतारवृत्तान्तकथनं । शक्तिस्थापनविवरणकथनं । शान्तादेवीमाहात्म्यादिकथनं । कर्णाटासुरविवरणकथनं । इन्द्रसरोवरमाहात्म्यकीर्त्तनं । तत्र अयनेश्वरमाहात्म्यादिकथनञ्च । शिवमाहात्म्यवर्णनं । वरक्षेत्रवर्णनं । कुलदेवतानामुत्पत्तिकथनं । गोत्र-

प्रवरनिर्णयः। विवाहयोग्यकन्यादिनिरूपणं। योगिन्यादीनां स्थानादिनिरूपणं। सरस्वतीतीर्थमाहात्म्यादिवर्णनं। द्वारकामाहात्म्यादिवर्णनं। गोवत्सतीर्थमाहात्म्यकथनं। श्राद्धविधानकथनञ्च। लोहासुरस्य वृत्तान्तकीर्त्तनं। असुरविजयार्थं ब्रह्मण उपदेशेन धर्म्मारण्ये देवानां यज्ञानुष्ठानमहोत्सववर्णनं। संक्षेपेण श्रीरामचरितवर्णनं। तत्र इन्द्रजित्कुम्भकर्णादीनां सर्व्वेषां रक्षसां निधनप्राप्तिदिनकथनञ्च। अथ ब्रह्मराक्षसादिवधजनितपापक्षयकामेन रामचन्द्रेण वसिष्ठोपदेशेन विविधतीर्थयात्रापूर्व्वकं धर्म्मारण्यगमनवृत्तान्तकथनं। तत्र धर्म्मारण्याधिष्ठात्र्या देवतया सह रामस्य संवादकथनं। रामसन्दिरस्थापनविवरणं। तत्र रामव्रततासशासनस्थापनविवरणकथनञ्च। अथ तत्र रामव्रतयज्ञवृत्तान्तकथनं। सीतापुराभिधाननगरस्थापनविवरणकथनञ्च। कलौ मानवानां चरित्रादिवर्णनं। तत्र बौद्धधर्म्मस्य प्राबल्यकथनं। वणिजान्तु जैनधर्म्मपरत्वनिरूपणं। धर्म्मारण्ये हनूमत्समागमविवरणकथनं। जैनधर्म्मावलम्बस्य आमराजस्य वैष्णवधर्म्मग्रहणादिविवरणकथनं। विप्रवंशविस्तारादिकथनं। तेषां स्थानादिनिरूपणञ्च। क्षत्रियादिवर्णानां स्थानादिनिरूपणं। सङ्करजातीनामुत्पत्तिकर्म्मादिनिरूपणं। कलिधर्म्मकथनं। विशेषेण धर्म्मारण्यमाहात्म्यकीर्त्तनञ्च।

---

**No. 2290.** प्रणवकल्पः। Substance, country-made paper, 13 × 5½ inches. Folia, 76. Lines, 2—3—5 on a page. Extent, 642 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Generally correct.

**Praṇava-kalpa.** On the object, purport, meaning, derivation, and merits of the Praṇava mantra. The work is alleged to be a part of the Skanda-puráṇa.

**Beginning.** सत्रान्ते नैमिषारण्ये शौनकस्य महीयसः।
आसीनं मुनिशार्दूलं सूतं पौराणिकोत्तमं॥
समागत्य परीवृत्य शौनकाद्या महर्षयः।
यथेष्टाः सत्कथाः पुण्याः पर्य्यपृच्छन् मुमुक्षया॥
मन्त्रान् प्रसङ्गयंस्तत्र शौनकः प्रत्यभाषत।
शौनक उवाच।
सूत सूत महाप्राज्ञ व्यासशिष्य महामते। इत्यादि।

**End.** इतीदं प्रणवस्यास्य नाम्नां साहस्रमीरितं।
लभ्यते सर्व्वतपसां वेदानां पर्य्यवाप्नये॥

**Colophon.** इति प्रणवकल्पे पञ्चमोऽध्यायः। समाप्तोऽयं ग्रन्थः।

विषयः। स्कन्दपुराणीयप्रणवकल्पोऽयं। सूतशौनकसंवादेन प्रणवमाहात्म्यं प्रपञ्चयति।

तत्र प्रणवस्य अपवर्गप्रदत्वकथनं। अथ महादेवस्य प्रमुखात् पार्व्वत्याः प्रणवमाहात्म्यश्रवणेच्छा-कथनं। तत्र प्रणवस्याङ्गस्तुतिकथनं। तस्य कवचकथनं। हृदयकथनं। पुरश्चरणविधिकथनञ्च। प्रणवाष्टोत्तरशतनामस्तोत्रकथनं। प्रणवषोडशनामकीर्त्तनं। प्रणवपञ्जरकथनं। प्रणवमालामन्त्रकथनं। प्रणवगायत्रीकथनं। प्रणवस्तवराजकथनं। प्रणवाक्षरमालामन्त्रकथनं। प्रणवानुस्मृतिकथनं। प्रणवसहस्रनामकीर्त्तनञ्च।

---

**NO. 2291.** प्रणवकल्पप्रकाशः। Substance, country-made paper, 13 × 5½ inches. Folia, 82. Lines, 7 on a page. Extent, 1,046 ślokas. Character, Nágara. Date, ? Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Prose. Correct.

**Praṇava-kalpa-prakáśa.** A commentary on the work noticed under the next preceding No. By Gaṅgádhara Sarasvatí, Bhikshu, pupil of Rámachandra Sarasvatí, who was a pupil of Sarvajna Sarasvatí.

**Beginning.** गुरुगणपतिशम्भुश्रीभवानीशदुर्गा-
रविशशिशुचिमुख्यान् सर्व्वगीर्व्वाणनाथान्।
प्रणवमपि च वेदान् व्यासपूर्व्वांश्च नत्वा
प्रणवहृदयकल्पं व्याचिकीर्षे शिवार्त्तं॥

प्रणवजपध्यानार्थविचारादौ यज्ञदानतपोविशोधितचित्तानां तीव्रमुमुक्षापर्य्यवसितसाधनसम्पन्नानां ब्राह्मणोत्तमानामेवाधिकार इति प्रदर्शनार्थमाख्यायिकां प्रस्तौति सचान्त इति।

**End.** शब्दतोऽर्थतश्च परिशीलनीय इति सिद्धं।
वासुदेवेन्द्रयतिना प्रीत्यर्थं शिवतुष्टये।
मया प्रणवकल्पोऽयं यथामति विकाशितः॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीसर्व्वज्ञसरस्वतीपूज्यपादप्रशिष्येण श्रीरामचन्द्रेन्द्रसरस्वतीपूज्यपादशिष्येण श्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुणा विरचितः प्रणवकल्प-प्रकाशः सम्पूर्णः।

विषयः। स्कन्दपुराणीयप्रणवकल्पस्य व्याख्यानम्।

---

**No. 2292.** वृहत्कोशलखण्डं, (श्रीरामरासः।) Substance, countrymade paper, 13 × 7 inches. Folia, 129. Lines, 12 on a page. Extent 3,072 ślokas. Character, Nágara. Date, Sм. 1914. Place of deposit, Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur. Appearance, new. Verse. Generally correct.

**Rámarása** ALIAS **Vrihatkośola-khaṇḍa.** An amplified description of the story of Ráma. The codex comprises only the last book which describes a great number of incidents in the life of Ráma which have

not been noticed in the Rámáyaṇa of Válmíki. The most prominent incident noticed is the Rása festivals and throughout an attempt is made in the book to produce in the life of Ráma a counterpart of the amours of Krishṇa as described in the Bhagavata Puráṇa. The work is written in the style of a Puráṇa, and is intended to serve as an appendix to some Puráṇa or other, the name of which is not given.

**Beginning.** नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीं व्यासं ततोजयमुदीरयेत् ॥
अथाष्टस्कन्धहाभागः शौनकः स्नातकश्च सः।
रहस्यं रामचन्द्रस्य भक्तानां भक्तिवर्द्धनं ॥
भो भो सूत महाबुद्धे स्मृतिमन् मतिमन् विभो।
रामोऽपि स्त्रीसहस्रैस्तु रेमे कच्चिन्मनोरमः ॥
कान्ताः + त्यारतिस्ताभिः कदा वा कथमास सा।
एकपत्नीव्रतं तस्य श्रुतं धर्म्मगुरोः कथं ॥
यावदूक तदाचक्ष गोप्यं कर्णरसायनं।
श्रोतुं मत्तुं स्थिरस्तेहं मादृशं यदि मन्यसे ॥
श्रोतुर्यस्मिन् श्रवे स्नेहः + + सीतापतेः पदे।
अविच्छिन्नं भवेत्तन्न श्रोतुं संलरते मनः ॥
श्रुतं रामायणं क्वत्स्नमार्षं हि महतां गतिं।
शान्तिं नैति तथाप्येष वैष्णवोमन्मनोन्दरः ॥ इत्यादि।

**End.** एषा पञ्चदशाध्यायी रामरासविलासिनी।
आनन्दोल्लासिनी भूयाद्धृदि दुष्कामनाशिनी ॥
रामकेलिकथामेतां श्रुत्वा भार्गवसत्तमः।
आशीःपूर्व्वं समभ्यर्च्य सूतं वासोविभूषणैः ॥
सर्व्वेष्वपि पुराणेषु श्रुतेषु संहितासु च।
तादृशी न मम प्रीति र्जातैतस्यान्तु यादृशी ॥
अस्याः श्रवणमात्रेण ससीतालक्ष्मणोहरिः।
मानसं न त्यजेज्जातु जनानां जनवत्सलः ॥
अद्भुता परमा रामकेलिरेषा मनोरमा।
कर्णौ च मानसं कस्य रमयेन्न विना पशुं ॥
येषां तु मानसं रामे लग्नं नेह मनोरमे।
वञ्चिता विधिना पापास्ते वै क्रूरतरेण च ॥

रासं शृण्वन्ति सङ्गत्या सम्भूताः कथयन्ति ये।
श्रूयन्ते च सुकथ्यन्ते देवैरिन्द्रादिभिस्तु वे॥
येषां रामः प्रियोनैव रामे न्यूनत्वदर्शिनां।
द्रष्टव्यं न मुखं तेषां सङ्गतन्तु कुतस्तरां॥
अस्मङ्गाग्यवशाङ्गक्तो रामस्य त्वमुपस्थितः।
श्रोतव्यं तन्मुखादेव रामचारित्रमङ्गुतं॥
चतुर्द्दशसहस्राणि वर्षाणां रघुनन्दनः।
स्थित्वा पुरे वने वापि यद्यच्चक्रे सुरारिजित्॥
— — — — — — — — —।
तांश्च श्रावय सौतेय भक्तान् श्रद्धावतोहि नः।
उवाच श्रवणानन्दी भद्राभद्रं भवत्विति॥

**Colophon.** इति श्रीमद्बृहत्कोशलखण्डे श्रीरामरासे पञ्चदशोऽध्यायः। संवत् १९१४॥

विषयः। प्रथमेऽध्याये,—सूतेन सह शौनकादीनां संवादेन रामस्य बाल्यलीलावर्णनं। यौवनारम्भे रामरूपस्य रमणीयतावर्णनं। अथैकदा समं समवयस्कैः रामः क्रीड़ारसमनुभवितुं कदलीकाननं प्रविवेश। तत्र हि रामरूपमुग्धतया विस्मृतपुरुषभावैः सखिभिः सादरमभ्यर्थितोऽसौ रासरसमभिनन्दितुं नन्दनमिव कदलीकुञ्जमासाद्य कुसुमग्रथनन्त्यगीतादिविनोदेनापि चित्तविनोदमलभमानः स्वेच्छया तेषां स्त्रीत्वं ससर्ज्ज। अथ प्रभाते स्वप्रभावेणैव भूयस्तेषां पौरुषभावं सम्पाद्य राजधानीं प्रपेदे। २ये अध्याये,—रामरूपं निरुप्य गोपप्रमदानां समदानां पतित्वेन राममधिगन्तुं शिवाराधनकथनं। अथ रामोऽपि शिवाराधनार्थं सरयूतीरमधिगच्छन्नेव गोपीभिः सह रासोत्सवं संवर्द्धयामास। कथयामास च पुनरपि यूयं वृन्दावने राससुखमवाप्स्यथेति। ३—५मे अध्याये देवकन्याभिः सह रामस्य रासवर्णनं। रामं प्रति दशरथस्य उपदेशः। रामकृतशम्बरासुरस्तनुपराजयकथनं। रामस्य शारदरासोत्सववर्णनं। ६—८ अध्याये, रामगुणश्रवणेन सीतायाः पूर्व्वरागवर्णनं। अथ नारदमुखात् सीताया अनुरागवृत्तान्तं विज्ञाय रामस्य स्मरदशा। जनकालये तस्य परिणयमहोत्सववर्णनं। कौतुकगृहे कामिनीनां रामं प्रति वक्रोक्त्यादिवर्णनं। सरयूतीरस्थिताभिनवप्रासादे सीतया सह रामस्य विहारवर्णनं, तया सह रासोत्सववर्णनं। रासमण्डपे देवाङ्गनानां लतादिरूपेणावस्थितिकथनं। ९—१२, अध्याये,—अथ वनभूमौ कामिनीनां मुग्धतया विलासवर्णनं। वनशोभावर्णनं। अथ सीतया सह रामस्य दोलोत्सववर्णनं। तत्र सीतासखीनामुपचाररचनादिचातुर्य्यवर्णनञ्च। अथ सीतामुद्दिश्य रामस्य सङ्गीतरहस्यकीर्त्तनं। तत्र च क्रमेण रागादीनां लक्षणभेदादिकथनं। वाद्यभेदरहस्यकथनं। तत्र विविधतालस्वरूपादिकथनं। नृत्यभेदप्रपञ्चनं। रसशास्त्ररहस्योद्घाटनञ्च।

१३—१५ अध्याये,—अथैकदा रासरसोन्मत्तया रामस्य सीतासखीनां पुरतः लास्यलीलाप्रदर्शनकथनं। तासां मौग्ध्यवर्णनं चित्रविलासवर्णनञ्च। अथ कौतुकार्थं तत्र रामस्य अन्तर्द्धानादिवर्णनं। दोलिकोत्सववर्णनं। सम्भावितवियोगानां कामिनीनां राममुद्दिश्य कारुण्योक्तिवर्णनञ्च।

---

**No. 2293.** विष्णुधर्म्मोत्तरम्, वा विष्णुधर्म्मः। Substance, country-made paper, 18 × 6 inches. Folia, 135. Lines, 12 on a page. Extent, 3,819 ślokas. Character, Nágara. Date, Sm. 1910. Place of deposit, Calcutta, Government of India; also at Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur; another copy, at Darbháñgá, Bábu Guneśvara Siñha. Appearance, fresh. Verse. Generally correct.

**Vishṇu-dharma.** A work on Vishṇu as the supreme divinity. The codex contains only the second part of the work, and is called Vishṇudharmottara. It dilates at great length on the divinity of Vishṇu, and gives in detail all the rituals and rules for his worship, and the fasts and penances to be observed in honour of him. The work is held in considerable esteem by the Vaishṇavas, and largely quoted. It professes to be a Puráṇa.

**Beginning.** नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवींसरस्वतीञ्चैव ततोजयमुदीरयेत्॥
द्वैपायनोष्ठपुटनिःसृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शुभञ्च।
योभारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलैरभिषेचनेन॥
कृताभिषेकं तनयं राज्ञः पारीक्षितस्य च।
द्रष्टुमभ्याययुः प्रीत्या शौनकाद्या महर्षयः॥
तानागतांश्च स राजर्षिः पाद्यार्घ्यादिभिरर्च्चितान्।
सुखोपविष्टान् विश्रान्तान् कृतसंप्रश्नसत्कथान्॥
तत्कथाभिः कृताह्लादः प्रणिपत्य कृताञ्जलिः।
शतानीकोऽथ पप्रच्छ नारायणकथां परां॥ इत्यादि।

**Colophon.** नहि तत् सर्व्वतीर्थेषु सरित्सु च निमज्जनात्।
फलं भवत्यनन्तस्य यादृक् पादाम्बुधारणात्॥

रासं शृण्वन्ति सङ्गत्या सम्भूताः कथयन्ति ये ।
श्रूयन्ते च सुकथ्यन्ते देवैरिन्द्रादिभिस्तु ते ॥
येषां रामः प्रियेणैव रामे न्यूनत्वदर्शिनां ।
द्रष्टव्यं न मुखं तेषां सङ्गतन्तु कुतस्तरां ॥
अस्मद्भाग्यवशाद्भक्तो रामस्य त्वमुपस्थितः ।
श्रोतव्यं त्वन्मुखादेव रामचारित्रमद्भुतं ॥
चतुर्द्दशसहस्राणि वर्षाणां रघुनन्दनः ।
स्थित्वा पुरे वने वापि यद्दुयच्चक्रे सुरारिजित् ॥
— — — — — — — — — ।
तान्स्त्र श्रावय सौतेय भक्तान् श्रद्धावतोहि नः ।
उवाच श्रवणानन्दी भद्राभद्रं भवत्विति ॥

**Colophon.** इति श्रीमद्बृहत्कोशलखण्डे श्रीरामरासे पञ्चदशोऽध्यायः । संवत् १९१४ ॥

**विषयः ।** प्रथमेऽध्याये,—सूतेन सह शौनकादीनां संवादेन रामस्य बाल्यलीलावर्णनं । यौवनारम्भे रामरूपस्य रमणीयतावर्णनं । अथैकदा समं समवयस्कैः रामः क्रीड़ारसमनुभवितुं कदलीकाननं प्रविवेश । तत्र हि रामरूपमुग्धतया विस्मृतपुरुषभावैः सखिभिः सादरमभ्यर्थितोऽसौ रासरसमभिनन्दितुं नन्दनमिव कदलीकुञ्जमासाद्य कुसुमशयनन्त्यगीतादिविनोदेनापि चित्तविनोदमलभमानः स्वेच्छया तेषां स्त्रीत्वं ससर्ज्ज । अथ प्रभाते स्वप्रभावेणैव भूयस्तेषां पौरुषभावं सम्पाद्य राजधानीं प्रपेदे । २ये अध्याये,—रामरूपं निरूप्य गोपप्रमदानां समदानां पतित्वेन राममधिगन्तुं शिवाराधनकथनं । अथ रामोऽपि शिवाराधनार्थं सरयूतीरमधिगच्छन्नेव गोपीभिः सह रासोत्सवं संवर्द्धयामास । कथयामास च पुनरपि यूयं वृन्दावने राससुखमवाप्स्यथेति । ३—५मे अध्याये देवकन्याभिः सह रामस्य रासवर्णनं । रामं प्रति दशरथस्य उपदेशः । रामकृतशम्बरासुरहननुपराजयकथनं । रामस्य शारदरासोत्सववर्णनं । ६—८ अध्याये, रामगुणश्रवणेन सीतायाः पूर्व्वरागवर्णनं । अथ नारदमुखात् सीताया अनुरागवृत्तान्तं विज्ञाय रामस्य स्मरदशा । जनकालये तस्य परिणयमहोत्सववर्णनं । कौतुकगृहे कामिनीनां रामं प्रति वक्रोक्त्यादिवर्णनं । सरयूतीरस्थिताभिनवप्रासादे सीतया सह रामस्य विहारवर्णनं, तथा सह रासोत्सववर्णनं । रासमण्डपे देवाङ्गनानां लतादिरूपेणावस्थितिकथनं । ९—१२, अध्याये,—अथ वनभूमौ कामिनीनां मुग्धतया विलासवर्णनं । वनशोभावर्णनं । अथ सीतया सह रामस्य दोलोत्सववर्णनं । तत्र सीतासखीनामुपचाररचनादिचातुर्य्यवर्णनञ्च । अथ सीतामुद्दिश्य रामस्य सङ्गीतरहस्यकीर्त्तनं । तत्र च क्रमेण रागादीनां लक्षणभेदादिकथनं । वाद्यभेदरहस्यकथनं । तत्र विविधतालस्वरूपादिकथनं । नृत्यभेदप्रपञ्चनं । रसशास्त्ररहस्योद्घाटनञ्च ।

१३—१५ अध्याये,—अथैकदा रासरसोन्मत्ततया रामस्य सीतासखीनां पुरतः लास्यली-लाप्रदर्शनकथनं। तासां मौग्ध्यवर्णनं चित्रविलासवर्णनञ्च। अथ कौतुकार्थं तत्र रामस्य अन्तर्द्धानादिवर्णनं। दोलिकोत्सववर्णनं। सम्भावितवियोगानां कामिनीनां राममुद्दिश्य कारुण्योक्तिवर्णनञ्च।

---

**No. 2293.** विष्णुधर्म्मोत्तरम्, वा विष्णुधर्म्मः। Substance, country-made paper, 18 × 6 inches. Folia, 135. Lines, 12 on a page. Extent, 3,819 ślokas. Character, Nágara. Date, Sm. 1910. Place of deposit, Calcutta, Government of India; also at Bettiyá, Mahárájá Rájendrakiśora Siñha, Bahádur; another copy, at Darbhángá, Bábu Guneśvara Siñha. Appearance, fresh. Verse. Generally correct.

**Vishṇu-dharma.** A work on Vishṇu as the supreme divinity. The codex contains only the second part of the work, and is called Vishṇudharmottara. It dilates at great length on the divinity of Vishṇu, and gives in detail all the rituals and rules for his worship, and the fasts and penances to be observed in honour of him. The work is held in considerable esteem by the Vaishṇavas, and largely quoted. It professes to be a Puráṇa.

**Beginning.** नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥
द्वैपायनोष्ठपुटनिःसृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शुभञ्च।
यो भारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलैरभिषेचनेन॥
कृताभिषेकं तनयं राज्ञः पारीक्षितस्य च।
द्रष्टुमभ्याययुः प्रीत्या शौनकाद्या महर्षयः॥
तानागतान् स राजर्षिः पाद्यार्घ्यादिभिरर्चितान्।
सुखोपविष्टान् विश्रान्तान् कृतसंप्रश्नसत्कथान्॥
तत्कथाभिः कृताह्लादः प्रणिपत्य कृताञ्जलिः।
शतानीकोऽथ पप्रच्छ नारायणकथां परां॥ इत्यादि।

**Colophon.** नहि तत् सर्व्वतीर्थेषु सरित्सु च निमज्जनात्।
फलं भवत्यनन्तस्य यादृक् पादाम्बुधारणात्॥

**End.** इति विष्णुधर्म्मेषु प्रशंसा समाप्तेति । श्रीसंवत् १९१० ।

विषयः । १अध्याये,—शतानीकेन सह जनमेजयस्य संवादेन श्रीकृष्णस्याराधनोपयोगि क्रियायोगकथनं। भगवन्माहात्म्यकीर्त्तनं। इन्द्ररूपधारिणा उपेन्द्रेण सह तपस्यतः अम्बरीषस्य संवादकथनेन भक्तियोगमाहात्म्यकीर्त्तनं। भक्तियोगस्यापि क्रियायोगाश्रितत्वकथनं। शुक्रेण सह प्रह्लादस्य संवादेन भक्तियोगकथनं। उपवासलक्षणं। उपवासस्य भगवत्प्रीत्याधायकत्व-कथनं। तत्र सुगतिद्वादशीव्रतविधानकीर्त्तनञ्च। याम्यक्लेशविमुक्तिकारणकथनं। एकभक्तव्रत-विधिकथनं। द्वादशमासिककृष्णाष्टमीव्रतविधिकथनं। चातुर्मास्यव्रतविधिकथनं। कुलाप्ति-द्वादशीव्रतविधिकथनं। विजयद्वादशीव्रतविधिकथनं। जयन्त्यष्टमीव्रतविधानं। अजितैका-दशीव्रतविधानं। घृतेन विष्णोः स्नपनविधिः। विष्णुव्रतविधिः। संप्राप्तिद्वादशीव्रतविधिः। गोविन्दद्वादशीव्रतविधिः। अखण्डद्वादशीव्रतविधिः। पापनाशिनी द्वादशी। पदद्वयव्रतविधि-कथनं। मनोरथद्वादशीव्रतकथनं। अशोकपौर्णमासीव्रतविधानं। सुकलत्रप्राप्तिव्रतविधानं। पतिव्रताधर्म्मादिकथनं। स्त्रीधर्म्मव्रतकथनं। नरकवर्णनं। पापविशेषेण नरकविशेषकथनं। नरकद्वादशीव्रतविधानं। पाषण्डानां स्वरूपवर्णनं। तैः सार्द्धमालापे प्रायश्चित्तविधानञ्च। मासर्क्षपूजाविधिः। तत्र शाम्भरायण्या उपाख्यानकथनञ्च। सर्व्वबाधाप्रशमनविधिकथनं। नक्षत्रपुरुषव्रतविधानं। अनन्तव्रतविधानं। देवगृहलेपनविधिकथनं। तत्र दीपदानविधिक-थनं। देवादिस्तुतिप्रशंसाकीर्त्तनं। तिलद्वादशीव्रतविधानं। भगवता सह अर्ज्जुनस्य संवादक-थनेन स्तोत्रकथनं। स्थानविशेषे प्रधानानि विष्णोः पञ्चपञ्चाशन्नामानि। वीरभद्रगीतायां शुक्ल-तद्वादशीव्रतप्रभावकथनं। अग्निपुरूरवसादिमङ्गलस्तोत्रकीर्त्तनं। ब्रह्माख्यानककीर्त्तनं। अशून्य-शयनद्वितीयाव्रतकीर्त्तनं। संसारहेतुमुक्त्याख्यानकथनं। श्रीकृष्णेन सह युधिष्ठिरस्य संवादेन याम्यपथाख्यानकीर्त्तनं। गोदानमाहात्म्यादिकीर्त्तनं। दानमौनब्रह्मचर्य्यादिनियमफलकथनं। द्रव्यदानविशेषे फलविशेषकीर्त्तनं। वृथादाननिरूपणं। विप्रावमाननपूजनयोः फलकथनं। विप्रमाहात्म्यकीर्त्तनं। दानप्रशंसा। तपःप्रशंसा। सत्यप्रशंसा। उपवासप्रशंसा। एकभक्तादि-प्रशंसा। ब्राह्मणादिवर्णान्यत्वप्राप्तिकारणकथनं। सुवर्णदानमाहात्म्यकीर्त्तनं। विशेषेण गोदान-माहात्म्यकथनं। भूमिदानमाहात्म्यकीर्त्तनं। संग्राममाहात्म्यकथनं। मांसभक्षणत्यागमाहात्म्य-कीर्त्तनं। दण्डनीतिकीर्त्तनं। हरिभक्तिमाहात्म्यकीर्त्तनं। युधिष्ठिरचण्डालप्रश्नसंवादः। जनक-गीताकथनं। जन्मरहस्यकथनं। गजेन्द्रमोक्षविवरणं। अनुस्मृतिकीर्त्तनं। विष्णुपञ्जरकथनं। सारस्वतस्तवकथनं। विष्ण्वष्टककथनं। वसुसुरसंवादकथनं। भक्तिमाहात्म्यादिवर्णनं। विष्णु-श्रीसंवादकथनं। स्वधर्म्माचरणप्रशंसा। अदितिस्तवकथनं। वामनस्तवकथनं। बलिवञ्चनवि-वरणकथनं। चक्रस्तवकीर्त्तनं। उत्क्रान्तिस्मरणकथनं। वैवस्वतगाथाकीर्त्तनं। पुष्पादिवि-भागकथनं। मान्धातुः राज्यप्राप्तिहेतुकथनं। त्रिविक्रमव्रतकथनं। पदत्रयव्रतकथनं। गोदा-नविधिकथनं। तिलधेनुदानविधिकथनं। घृतधेनुकल्पविधिकथनं। जलधेनुदानविधिकथन-

मुखेन पुङ्गवगाथाकीर्त्तनं। शुद्धिव्रतकथनं। देवकीव्रतकथनं। प्रह्लादबलिसंवादकथनं। पाप-प्रशमनस्तवकीर्त्तनं। अन्यविधपापप्रशमनस्तवकथनं। चत्रबन्धूपाख्याने कारुण्यस्तवकथनं। परमपदाख्यानकथनं। ब्रह्माद्वैतस्वरूपादिकीर्त्तनं। पापक्षयोपायकथनं। योगस्वरूपादिकथनं। भगवन्मूर्त्तिलक्षणादिकथनं। यमनियमादिसमाख्यानादिनिरूपणं। वर्णाश्रमधर्म्मकथनं। नर-नारायणाख्यानकथनमुखेन उर्व्वश्याः सम्भवादिकथनं। विश्वरूपदर्शनकथनं। चतुर्युगावस्था-कथनं। विस्तरेण कलिधर्म्मकथनं तत्र नराणां चरित्रादिवर्णनञ्च। शास्त्रमाहात्म्यकीर्त्तनं। अनुक्रमणिकाकथनञ्च।

---

**No. 2294** बृहत्पाराशरः। Substance, country-made yellow paper, 18 × 5½ inches. Folia, 115. Lines, 8—9 on a page. Extent, 3,200 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Vṛihat-páráśara.** A complete code of laws for the guidance of the Hindus during the current or Kali age. According to its introduction certain pious Bráhmaṇs repaired to Vyása at his hermitage amidst a Deodar forest on the Himálaya, and requested him to expound the duties of householders and others during the Kali-Yuga, even as Manu and others had expounded the laws meet for previous ages. Vyása took the enquirers with him to his father, Parás'ara, and obtained from him instructions, which form the substance of the work, which accordingly is said to be the composition of Parás'ara himself. The very first verse of the text, however, belies this assumption, as there we have a third party who says he will describe the duties as expounded by Parás'ara. We are next told that it was one Suvrata who prepared the compilation. (*Proktaván Vyásamukhyánám śesham munirabhásatah, niyuktam subratah śaham vipránám prinanáya cha.* (I. 60). The epithet *Vṛihat* added to its name shows that the work is an amplified recension of a previous work, and that work is said to be the *Párás'ara-sañhitá* which is reckoned the most authentic, being the one which is usually and very largely quoted by digest writers and commentators. That has the advantage too, of an elaborate and exhaustive commentary by Mádhava Achárya. There is a third work which is especialised by the epithet *Vṛiddha* or old, but I have not yet seen a copy of it.

Both the *Páráśara-sañhitá* and the *Vṛihat-páráśara* are divided into 12 chapters, but whereas the former extends to only 592 verses, the

latter comprises 3,200 verses, and the subject matter of the different chapters is not the same. The first treats of *A'chára* in the first three chapters, and of *Práyaśchitta* (expiation) in the following nine, whereas the second makes *A'chára* the principal theme of its instructions, and expiation a subsidiary or casual one. The style of writing, too, is markedly different. The former is written in an archaic style similar to, but somewhat later than, that of the other Smṛiti Sañhitás including Manu and Yajn̲avalkya, the latter affects the loose colloquial form of the later Puráṇas and the Tantras. It should be added, however, that the *Páráśara-sañhitá* is unquestionably much later than Manu, Yajn̲avalkya and the other authentic Smṛitis which it names in its introduction. And this is what was to be expected, for avowedly the work is not the composition of Parásara, father of Vyása, but of some one of a much later date. Anyhow it is earlier and more authentic than the work now under notice. The quotations given in the Digests are all taken mostly from the short treatise and a few from sources not now known; they do not occur in the large recension which, as far as I can ascertain, has nowhere been cited, showing clearly its apocryphal character.

CONTENTS: *Chapter I.* Introduction. Summary of the special duties of the four Yugas. Peculiarities of Aryan and non-Aryan countries.

*Chapter II.* The eight daily duties, including bathing at the three conjunctions of the day, repetition of mantras, worship, hospitality, &c. Sandhyás described in detail. Rules for bathing, and varieties of bathing. Water fit for bathing. Dressing. Offering of water to the manes, (*tarpaṇa*). Different classes of sacred pools. Rules for the repetition of sacred mantras. Rosaries. *Praṇava.* Merit of each letter of the Gáyatrí mantra.

*Chapter III.* *Worship,* to whom to be offered. Water, fire, breast, sun, altars and images are the six classes of objects through which worship is to be made. Worship of Vishṇu specially recommended. Worship of Vaiśvadeváh. Hospitality. Duties of the four castes. Duties of householders. Ploughing. Milking. Duties of Bráhmaṇs who betake to agriculture. Merits of cattle and of protecting them. Making of ploughs. Trees not to be felled, nor clothes sent to the washerman, on the day of the new-moon. Rules for sowing seeds. Proper times and places for sowing. Classification of agriculture into bad and good.

*Chapter IV.* *Marriage*—eight kinds. Selection of bridegrooms. Defects of brides and grooms. Respect due to women. Constancy.

Polygamy, when admissible. The five things in a house called Panchas'uná, where animal life may be accidently destroyed. The five daily Yajnas. Pránágnihotra. Knowledge of Brahma. Rules for performing Pránáyáma. Water to be tasted before a meal. Conception. The ten sacraments. The sacred cord. Education. Evil of not putting on the sacred cord. Fasts. Duties of men and women. Merits of sons. S'ráddha at Gayá, a duty for a son to perform. Family customs and local customs. Impurity. Acceptance of gifts. Condemned and prohibited kinds of food. Purification. Times of vacation at school.

*Chapter V.* Bráhmaṇs for performing S'ráddha. Invitations of Bráhmaṇs to a S'ráddha. Persons bound to perform S'ráddhas. Sráddhas with undressed articles. Times meet for S'ráddhas. Leaves, flowers, fruits, &c., for S'ráddha. Periodical S'ráddhas. Articles fit for gift at S'ráddhas. Cooking of rice at a S'ráddha. S'ráddha on the day of Maghá constellation. Special rites for suicides, persons killed by tusked animals &c. Cremation of an image when the corpse is not found. Gradation of the 12 kinds of sons as regards S'ráddhas.

*Chapter VI.* Impurity of the person resulting from birth or death in a family. Distinction between the two. When impurity does not result under such circumstances. Rules for cremation.

*Chapter VII.* Expiatory rites of various kinds for various offences.

*Chapter VIII.* Religious gifts. Their nature, time and advantages. Special merits of gifts at particular specified times.

*Chapter IX.* Propitiatory rites for preventing evils likely to result from adverse planets. Omens, &c. Excavation of tanks, &c. The rite of *Lakshahoma*, or the offering of a hundred thousand oblations to the fire. Do. of *Koṭihoma*. Altars for ditto. Rites for obtaining a son.

*Chapter X.* Duties of kings and polity generally. War, peace, negotiations. Penal laws. Prosperity of the people. Duties of Vánaprasthas.

*Chapter XI.* Distinctions between Brahmachárís, householders, Vánaprasthas, and Bhikshus.

*Chapter XII.* Performance of the Yoga. Details of practical Yoga, of meditative Yoga, and of Yoga of knowledge. Discrimination of time.

**Beginning.** व्यक्ताव्यक्ताद्यदेवाय वेधसेऽनन्तवेधसे ।
नमस्कृत्य प्रवक्ष्यामि धर्म्मान् पाराशरोदितान् ॥
अथातो हिमशैलाग्रे देवदारुवनाश्रमे ।

व्यासमेकान्तमासीनं द्विजाः पृच्छन्ति धार्म्मिकाः ॥
मानुषाणां हितं धर्म्मं वर्त्तमाने कलौ युगे ।
वर्णानामाश्रमाणाञ्च किञ्चित् साधारणं वद ॥
युगे युगे च ये प्रोक्ता धर्म्मा मन्वादिभिर्मुने ।
शक्यन्ते नैव ते कर्त्तुं वर्णैराश्रमवासिभिः ॥
संहृष्टोमुनिभिर्व्यासोमुनिभिः परिवारितः ।
प्रष्टुं जगाम पितरं धर्म्मान् पराशरं ततः ॥
सर्व्वेषामाश्रमाणाञ्च वरे वदरिकाश्रमे ।
— — — — — — — — — — ।
तस्मिन् ऋषिसभामध्ये शक्तिपुत्रः पराशरः ।
सुखासीनोमहातेजा मुनिमुख्यगणावृतः ॥
कृताञ्जलिपुटोभूत्वा व्यासस्तु मुनिभिः सह ।
प्रदक्षिणाभिवाद्यैश्च मुनिभिः प्रतिपूजितः ॥
ततः सन्तुष्टमनसा पराशरमहामुनिः ।
व्यासस्य स्वागतं ब्रूया (?) दासीनोमुनिपुङ्गवः ॥
पृच्छतः स्वागतं तस्य आसीनानां समन्ततः ।
(शनं) ? कुशलमित्युक्ता व्यासः पृच्छत्यतः परं ॥
यदि जानासि मां भक्तं स्नेहाद्वा यदि वत्सल ।
धर्म्मं कथय मे तात अनुग्राह्योह्यहं यदि ॥
— — — — — — — — — — ।
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।
सुखासीनोमहातेजा इदं वचनमब्रवीत् ॥ इत्यादि ।

**End.** य इदं शृणुयाद्विप्रः श्रावयेत् पाठयेदिति ।
स तु ध्वस्तसमस्तैना ब्रह्मलोकमवाप्नुयात् ॥

**Colophon.** इति वृहत्पाराशरे धर्म्मशास्त्रे सुव्रतप्रोक्तायां संहितायां द्वादशोऽध्यायः । समाप्तोऽयं ग्रन्थः ।

विषयः । १ अध्याये, धर्म्मशुश्रूषया समवेतैः सार्द्धं महर्षिभिर्व्यासस्य पराशरसमीपगमनपूर्व्वकं तद्विषयिणी जिज्ञासा । अथ पराशरस्य संक्षेपेण चतुर्युगधर्म्मकथनं । वेदानां अपौरुषेयत्वकथनं । आर्य्यदेशम्लेच्छदेशादिनिरूपणञ्च ।

२ अध्याये, सन्ध्या-स्नान-जप-देवता-वैश्वदेव-आतिथ्यरूपषट्कर्म्मनिरूपणं । तत्र विशेषेण सन्ध्याविधिकथनं । तत्कालकथनादिकञ्च । अथ मान्त्र-पार्थिव-आग्नेय-वायव्य-दिव्य-वारुण-

मानसभेदात् सप्तविधस्नानविधिकथनं। स्नानयोग्यसलिलनद्यादिनिरूपणं। मार्जनस्नानक्रमकथनं। वस्त्रधारणविधिकथनं। तर्पणविधिकथनं। पैत्र्यब्राह्मदैवतीर्थादिनिरूपणं। जपविधिकथनं। प्रणवस्वरूपनिरूपणं। जपमालाविवेचनं। प्रत्यक्षरं गायत्र्याः माहात्म्यादिकथनं।

३ अध्याये,—देवपूजाविधिकथनं, तत्र जले, वह्नौ, हृदये, सूर्य्ये, स्थण्डिले, प्रतिमायाञ्च तदर्च्चनविधानकथनं। तत्र अधिकारभेदेन आलम्बनभेदकथनञ्च। विशेषतोविष्णुपूजाविधिकथनं। वैश्वदेवविधिकथनं। आतिथ्यविधिकथनं। ब्राह्मणादिचातुर्वर्ण्यधर्म्मकथनं। विशेषेण गार्हस्थ्यधर्म्मनिरूपणं। तत्र हलवाहनगोदोहनादिविधिकथनं। कृषिवृत्तिसमाश्रितस्य ब्राह्मणस्य धर्म्मनिरूपणं। गोमाहात्म्यादिकथनं। गोसेवामाहात्म्यादिकथनं। हलादिनिर्म्माणविधिकथनं। अमावस्यायां वृक्षादिच्छेदनादिनिषेधः। अमावस्यायां रजकाय वस्त्रदानादिनिषेधकथनं। धान्यादिवपने विधिविशेषकथनं। कालविशेषे भूमिविशेषे च शस्यादिवपनादिविधिकथनं। कृषिशुद्धिनिरूपणं।

४ अध्याये,—दैवार्षाद्यष्टविधिविवाहनिरूपणं। पुरुषपरीक्षाकथनं। कन्यावरयोः गुणदोषनिरूपणं। स्त्रीणां सम्मानकर्त्तव्यतानिरूपणं। पातिव्रत्यधर्म्मादिनिरूपणं। अधिवेदनकालादिनिरूपणं। पञ्चसूनानिरूपणं। ब्रह्मयज्ञादिपञ्चयज्ञनिरूपणं। प्राणाग्निहोत्रविधिः। ब्रह्मविद्यानिरूपणं। प्राणायामविधिकथनं। आपोशानादिविधिकथनं। आधानविधिकथनं। दशविधसंस्कारादिकालकथनं। मुञ्जोपवीतादिनिरूपणं। विद्यास्नानादिनिरूपणं। व्रात्यनिरूपणं। स्त्रीपुरुषधर्म्मकथनं। पुत्रमाहात्म्यकथनं। गयायां पुत्रकर्त्तृकपिण्डदानावश्यकताकथनं। कुलाचारदेशाचारयोर्धर्म्मत्वकथनं। शौचाचारमाहात्म्यकथनं। प्रतिग्रहादिविधिकथनं। भक्ष्याभक्ष्यकथनं। द्रव्यादिशुद्धिनिरूपणं। अनध्यायकालादिनिरूपणं।

५ अध्याये,—श्राद्धपात्रयोग्यब्राह्मणलक्षणादिकथनं। श्राद्धपूर्व्वदिने ब्राह्मणनिमन्त्रणविधिकथनं। श्राद्धाधिकारिनिरूपणं। आमश्राद्धविधिकथनं। सामान्यतः श्राद्धकालादिनिरूपणं। तत्र पत्रपुष्पधूपादिविवेचनं। पार्व्वणसपिण्डीकरणादिविधिकथनं। श्राद्धे दानयोग्यानि फलमूलादीनि। स्थालीपाकविधिकथनं। मघाश्राद्धादिविधिकथनं। दन्तिशृङ्गिव्यालादिहतानाम् आत्मघातिनाञ्च मरणात् षण्मासोत्तरं नारायणबलिं विधाय श्राद्धादिकरणविधानं। कुशनिरूपणं। विशेषेण औरसादिद्वादशपुत्राणां जात्यनुसारेण श्राद्धाद्यधिकारकथनञ्च।

६ अध्याये,—अशौचनिरूपणं। जननमरणयोः शुद्धिभेदकथनं। दाहविधिकथनं। क्वचिदशौचाभावकथनं।

७ अध्याये,—विस्तरेण प्रायश्चित्तविधिनिरूपणं। तत्र द्वादशवार्षिकादिव्रतादिप्रक्रियाकीर्त्तनं। तदनुकल्पविधानञ्च। द्रव्यशुद्धिकथनं।

८ अध्याये,—विस्तरतोदानविधिकथनं। तत्र तिलधेनुहेमधेनुप्रभृतिमहादानविधिकथनञ्च। अथ मासतिथिनक्षत्रादिविशेषे दानविशेषविधिकथनं।

९ अध्याये,—विविधशान्तिविधिकथनं। तत्र विनायकशान्तिविधानं। ग्रहशान्तिविधि-कथनं। अद्भुतशान्तिविधिकथनं। तत्र अद्भुतनिरूपणञ्च। रुद्रशान्तिविधिकथनं। तड़ागाद्युत्सर्ग-विधिकथनं। लक्षहोमविधिकथनं। कोटिहोमविधिकथनं। तत्र कुण्डलक्षणादिनिरूपणञ्च। अथ पुत्रकामनया पुत्रसूक्तविधिः कर्त्तव्य इति तद्विधानकथनं।

१० अध्याये,—राजधर्म्मनिरूपणं। तत्र सन्धिविग्रहादिविधिनिरूपणं। दण्ड्यादण्ड्यनिरू-पणं। प्रजापालनविधिकथनं। वानप्रस्थधर्म्मकथनं।

११ अध्याये,—ब्रह्मचारि-गृहस्थ-वानप्रस्थ-भिक्षुकाणामवान्तरभेदनिरूपणं।

१२ अध्याये,—योगाभ्यासविधिनिरूपणं। तत्र ध्यानयोग-कर्म्मयोग-ज्ञानयोग-निरूपणं। काललक्षणादिकथनञ्च।

---

**No. 2295.** कणादसंहिता, (नाड़ीपरीक्षाप्रकरणम्)। Substance, country-made paper, 15 × 4 inches. Folia, 13. Lines, 10 on a page. Extent, 422 ślokas. Character, Bengali. Date, ? Place of deposit, Deoghar, the family physician of the head Páṇḍá. Appearance, new. Verse. Incorrect.

**Kaṇáda-sañhitá.** A treatise on pathology and medicine. By Kaṇáda. The codex contains only the chapter on the pulse as an index to disease and when its indications imply approaching death. It is followed by a chapter on the tongue, but it is not complete.

**Beginning.** यद्वक्त्रेभ्यः पञ्चसंख्यागतेभ्यो-
वेदा जाता ऋग्यजुःसामरूपाः।
आयुर्व्वेदोऽथर्व्ववेदश्च तस्मिन्
आस्तां शम्भौ श्रीकणादस्य भक्तिः॥
आस्ते वेदः पञ्चमो वैद्यकाख्यो-
वेत्ता कश्चित्तस्य नास्ते महेशात्।
तस्माज्ज्ञातोऽध्येत तस्यानुरागात्
तस्माज्ज्ञात्वा वक्तुमर्हामि शास्त्रं॥
प्रथमे नाड़िकाज्ञानं द्वितीये रोगनिर्णयः।
तृतीये च कषायौषधं चतुर्थे पारदादिकं।
पञ्चमे तु महाविद्यारसजारणमारणं॥ इत्यादि।

**End.** दिनैकं जीवितं तस्य द्वितीये मरणं ध्रुवं।
इति नाड़ीपरीक्षा।

**Colophon.** इति कणादसंहितायां नाड़ीपरीक्षाप्रकरणं।
(इतःपरं जिह्वापरीक्षायाः कियत्यः पङ्क्तयः सन्ति।)

**विषयः।** सर्व्वेषु रोगेषु नाड़ीनां गतिविशेषेण साध्यासाध्यादिपरिज्ञानविधिनिरूपणं।

---

**No. 2296.** श्लोकवार्त्तिकम्। Substance, country-made paper, 14 × 4 inches. Folia, 82. Lines, 11 on a page. Extent, 3,361 ślokas. Character, Nágara. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Míśra. Appearance, fresh. Verse. Incorrect.

**Mimáñsá-śloka-vártika** or simply **S'loka-vártika.** A metrical exposition of the Mimáñs'á Aphorisms of Jaimini, noticing prominently the different doctrines therein adverted to. By Kumárila Bhaṭṭa. The doctrines noticed are Nirálamba, S'únyaváda, Pratakshaváda, S'abdaváda, Abhávaprámáṇyaváda, Chitrákshepa, Sambandhákshepa, Sphoṭaváda, A'kritiváda, Apohaváda, A'tmaváda, &c. All these topics are taken from the first section of the first chapter of Jaimini's work. The work is looked upon as an introduction to the Tantra-vártika.

**Beginning.** विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे॥
अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन्।
तत्प्रसादात् करिष्येऽहं मीमांसाश्लोकवार्त्तिकं॥
तद्विद्वांसोऽनुगृह्णन्तु चित्तस्रोतैः प्रसादिभिः।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः॥
न चात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः॥
दोषोह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥
कुतो वा गृह्यते दोषं स्वरयोमद्विधोक्तिषु।
नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथं॥
निर्द्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति॥
आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि।
नहि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते॥ इत्यादि।

**End.** इति प्रमाणत्वमिदं प्रसिद्धं
युक्त्येह धर्म्मं प्रति चोदनायाः
कृतः परन्तु प्रविभज्य वेदं ॥
त्रेधा ततोवक्ष्यति यस्य योऽर्थः ॥

**Colophon** इति भट्टकुमारिलकृते मीमांसाश्लोकवार्त्तिके प्रथमाध्यायस्य प्रथमः पादः ।

विषयः । जैमिनिसूत्रतर्कपादीयशावरभाष्यस्य व्याख्यानं । तत्र विशेषेण निरालम्बनकथनं । शून्यवादः । प्रत्यक्षादिवादः । शब्दवादः । अभावप्रामाण्यवादः । चित्राक्षेपः । सम्बन्धाक्षेपः । स्फोटवादः । आकृतिवादः । अपोहवादः । सम्बन्धाक्षेपपरिहारादिकथनं । चित्रापरिहारः । आत्मवादादिकथनञ्च ।

---

**No. 2297.** तन्त्रवार्त्तिकम् । Substance, country-made paper, 14 × 5 inches. Folia, 256. Lines, 8-9-10 on a page. Extent, 6,024 ślokas. Character, Tailañga. Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, fresh. Prose. Generally correct.

**Tantra-vártika.** A prose commentary on the Mímáñsá Aphorisms of Jaimini. By Kumárila Bhaṭṭa. This begins with the second section of the first chapter and extends to the close of the seventh chapter of the text. This along with the *S'loka-vártika* and a few others gives a running dissertation on the whole of Jaimini's work.

Mr. Hall gives the following account of this work :—" The first four books of the present work bear, collectively, the titles of *Tantra-ṭíká*, *Mímáñsá-bháshya-vártika*, *Mímáñsá-vártika*, and *Guru-vákya-leśa-sañgraha*. The last eight books are called, as an aggregate, *Ṭub-dushi*, *Ṭup-ṭíká*, and *Laghu-vártika*. If there be any general name for Nos. III and VII, it seems to be *Sábara-bháshya-vártika*. Most of this is doubtful and sufficiently improbable; but it is the result of a long investigation by the best paṇdits of the Benares College. * * * *

" The author of the *Tantra-chúḍámaṇi*, or Kṛishṇa Deva, asserts that *vártika* is the common name of five separate works of Kumárila: the *Bṛihaṭ-ṭíká*, *Madhyama-ṭíká*, *Káriká*, *Tantra-ṭíká*, and *Ṭup-ṭíká*; these compositions diminishing as to size from first to last in the order in which their appellations are here arranged. The same authority says that *Tantra-vártika* is another name for *Tantra-ṭíká* and that the *Ṭup-*

*ṭíká* is likewise denominated *Tantra-ratna.* Krishṇa Deva further alleges that the *vártika* has been annotated by Bhavadeva, Ambeka, Párthsárathí, Somes'vara, the author of the *Páráyaṇa*, and Paritosha." *Contributions*, p. 170.

**Beginning.** आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ।

सिद्धप्रमाणभावस्य धर्म्मे वेदस्य सर्व्वशः ॥

विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ।

सामान्यतः सिद्धे प्रामाण्येऽधुना विभज्य विनियोगः प्रतिपाद्यते। इत्यादि ॥

**End.** मुख्यानुग्रहे मुख्यस्य प्रायणीयस्य नामधेयातिदेशेन ज्योतिष्टोमधर्म्मप्राप्ते-र्द्वादशोपसद्दर्शनं नावकल्पते ।

तस्मादैकाहिकोधर्म्म एकाहेषु प्रवर्त्तते ।

प्रत्यक्षं नामधेयं हि चोदकाद्बलवत्तरम ॥

**Colophon.** इति श्रीभट्टकुमारिलस्वामिविरचिते तन्त्रवार्त्तिके सप्तमोऽध्यायः समाप्तः ॥

विषयः । जैमिनिसूत्रशाबरभाष्यस्य अर्थवादपादादारभ्य सप्तमाध्यायपर्य्यन्तं व्याख्या-ख्यानम् । तर्कपादवार्त्तिकन्तु श्लोकवार्त्तिकनाम्ना विख्यातमिति ज्ञेयं ।

---

**No. 2298.** तन्त्ररत्नम् । Substance, country-made paper, 11 × 5 inches. Folia, 285. Lines, 8 on a page. Extent, 8,835 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavkágrám, Post Delsiñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, new. Prose. Correct.

**Tantra-ratna.** A gloss by the author on his own Tantra-vátika. (No. 2297.)

**Beginning.** अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा । पूर्व्वाध्याये शेषपर्य्यायमिदमथ्यमेव चिन्तितं । इहापि क्रतुपुरुषैदमर्थ्यमेव चिन्त्यतां इति न लक्षणभेदः स्यादत आह,—तृतीयेना-ध्यायेन अवधृते शेषत्वे कः क्रत्वर्थः कः पुरुषार्थ इति चिन्त्यत इति सम्बन्धः । इत्यादि ।

**End.** इति हविषोविनाशदर्शनात् क्रतुवैगुण्यमेव दर्शितं । लिङ्गदर्शनानि च ब्राह्म-णानामिदं हविरित्येवमादीनि ॥

आर्त्विज्यं न भवेत्कर्म्म स्वतः चत्रियवैश्ययोः ।

ब्राह्मणानान्तु विदुषामार्त्विज्यं स्यादिति श्रुतं ॥

**Colophon.** इत्युपाध्यायश्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशाध्यायस्य चतुर्थ-पादः । अध्यायश्च समाप्तः ।

विषयः । भट्टकुमारिलकृततन्त्रवार्त्तिकस्य व्याख्यानम् ।

---

**No. 2299.** परमलघुमञ्जूषा । Substance, country-made paper, 13 × 4 inches. Folia, 18. Lines, 7 on a page. Extent, 409 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbhángá, Mímáñsaka Chitradhara Miśra. Appearance, new. Prose Correct.

**Paramalaghu-manjúshá.** An epitome of his own Vyákaraṇa-siddhánta-manjúshá grammar, giving briefly the philosophy and uses of the case affixes. By Náges'a Bhaṭṭa. The large text has not yet been met with, and the abridgment is generally called Manjúshá simply. (*cf.* My Catalogue of Sanskrit Grammars, p. 89.)

**Beginning.** नत्वा साम्बं शिवं शान्तं बालानां बोधहेतवे ।
परमलघुमञ्जूषा नागेशेन वितन्यते ॥
अथ कारकाणि निरूप्यन्ते ।
कर्त्ता कर्म्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥
तत्र क्रियानिष्पादकत्वं कारकत्वं । इत्यादि ।

**End.** विशिष्यार्थवाचकान्नामार्थत्वाभावान्न कदाचिदुत्पत्तिरित्यलं ॥

**Colophon.** इति श्रीमहामहोपाध्यायनागेशभट्टकृता परमलघुमञ्जूषा समाप्ता ॥

विषयः । कारकार्थस्वरूपादिविवेचनं ।

---

**No. 2300.** मीमांसाकौस्तुभः । Substance, country-made paper, 12 × 4½ inches. Folia, 97. Lines, 11 on a page. Extent, 2,970 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavka-grám, Post Delsiñsarái, Zillá Darbhángá, Mímáñsaka Chitradhara Miśra; another copy at Calcutta, Library of the Asiatic Society of Bengal. Appearance, new. Prose. Correct.

**Mímáñsá-kaustubha.** An exposition of the Mímáñsá doctrine in the form of comments on the aphorisms of Jaimini, with occasional interpretations of the words of the aphorisms. By Khaṇḍadeva, son of Rudradeva. The codex is imperfect, commencing with the second section of the first chapter and ending with that chapter. The Asiatic Society's copy is, likewise, incomplete, containing only parts of the first two chapters. A complete copy has not yet been met with.

**Beginning.** विघ्नध्वान्तनिवारणैकतरणिर्भक्तैकचिन्तामणि-

विद्याकाननगाहनैकसरणिर्म्मश्चित्तभूषामणिः ।
भूयादेष कुतर्ककर्कशधियां हन्तापहन्ता तथा
मोहानां सुधियां सदैव सविता कात्यायनीशात्मजः ॥
वृन्दाविपिनविहारी गिरिवरधारी स्वकीयसुखकारी ।
मच्चित्तरङ्गचारी भूयान्नृत्यप्रियः कृष्णः ॥
शब्दौघतरङ्गा विद्यागङ्गोत्तमाङ्गेऽस्य ।
श्रीरुद्रदेवसंज्ञं जनकं वन्दे सदा स्फूर्त्त्यै ॥

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते । अत्र सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं । वायुर्वै क्षेपिष्ठा देवतेत्यादयोऽर्थवादा धर्म्माधर्म्मयोः प्रमाणं । इत्यादि ।

**End.** धर्म्मे प्रमाणमेतान्युक्तानि अथ तस्य भेदोक्तिः ।
मीमांसाम्बुनिधिं प्रमथ्य विविधैर्न्यायोच्चयैर्निर्ज्जरैः
कृत्वा जैमिनिसूत्रमन्दरमयं वेदं तथा वासुकिं ।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्योमणिः ॥
श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य ।
मीमांसाकौस्तुभ इति प्रथमाध्याये चतुर्थोऽङ्घ्रिः ॥

**Colophon.** इति श्रीमत्पूर्व्वोत्तरमीमांसापारावारपारीणधुरीणश्रीरुद्रदेवसूनोः खण्डदेवस्य कृतौ मीमांसाकौस्तुभे प्रथमाध्यायस्य चतुर्थः पादः ।

विषयः । मीमांसासूत्रमवलम्ब्य विशदरूपेण सविस्तरं मीमांसादर्शनप्रतिपाद्यानामर्थानामवधारणं ।

---

**No. 2301.** काशिका । Substance, country-made paper, 13 × 4 inches. Folia, 507. Lines, 13 on a page. Extent, 28,333 ślokas. Character, Nágara. Date, Sm. 1653. Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, old. Prose. Correct.

**Káśiká.** A commentary on the S'loka-vártika of Bhaṭṭa Kumárila (No. 2296). By Sucharita Mis'ra. This is quite distinct from the work of the same name by Vaidyanátha Páyaguṇḍá, which is a commentary on the grammatical work called *Paribháshendu-śekhara.*

**Beginning.** वार्त्तिककारोवार्त्तिकारम्भे शिष्टाचारमनुविदधानोमङ्गलं तावत्करोति विशुद्धेति । दृष्टा हि शिष्टानां प्रवृत्तिः सर्व्वकार्य्येषु मङ्गलपूर्व्विका । मङ्गलञ्च देवतास्तुतिनमस्कारादि—इत्यादि ।

**End.** कतृत्वस्याध्यायस्य प्रमाणलक्षणोपपत्तिं। तथाचोक्तं। चोदनासूत्रनिर्दिष्टो-यः प्रमाणपरिग्रहः। स प्रकारः स आद्येन लक्षणेन प्रपञ्चित इति।

**Colophon.** इत्युपाध्यायसुचरितमिश्रकृतौ काशिकायां वेदाधिकरणं समाप्तं। समाप्ता चेयं काशिकाटीका।

हरनेत्राग्निषड्भूमिमिते विक्रमभूभुजः।
शकेऽब्दे + + + इषे शुक्ले नागतिथावदः॥
काशिकापुस्तकं काश्यां भट्टमाधवसूनुना।
स्वपाठार्थं पटुधिया रघुनाथेन पूरितं॥

विषयः। भट्टकुमारिलेन मीमांसासूत्रतर्कपादीयशाबरभाष्यस्य पद्येन या श्लोकवार्त्तिकाभिधेया टीका कृता तद्व्याख्यानम्।

---

**No. 2302.** मञ्जूषाकुञ्चिका। Substance, country-made paper, 14 × 4 inches. Folia, 104. Lines, 7 on a page. Extent, 2,524 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbhañgá, Mímáñsaka Chitradhara Miśra. Appearance, new. Prose. Correct.

**Manjúshá-kunchiká.** A key to the Vaiyákaraṇa-manjúshá of Náges'a Bhaṭṭa. By Kṛishṇa Mis'ra.

**Beginning.** मञ्जूषाकुञ्चिकाशिल्पशाब्दब्रह्मसमन्वयः।
दिश दिशेति दिश्यान्तः शर्म्म शाश्वतिकं परं॥

नागेशेनेति। भटतीति भट्टः वाग्मी भट परिभाषणे तन् प्रत्ययः मज्जतीति मञ्जूषा मस्जे-श्रम् चेत्यूषन् इत्यादि।

**End.** द्रव्यसंस्कारकर्म्मत्वं गुणत्वमितिसिद्धान्तात्। एतेन दृष्टोपकारजनकत्वाभावात् सम्मार्ज्जनस्य प्राधान्यमित्यपास्तमिति।

**Colophon.** (इतः परं समाप्तिसूचकवाक्यं नास्ति।)

विषयः। नागेशभट्टकृतवैयाकरणमञ्जूषाव्याख्यानम्।

---

**No. 2303.** आचारचन्द्रिका। Substance, country-made paper, 16 × 4 inches. Folia, 90. Lines, 8 on a page. Extent, 1,627 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbhâñgá, Mímáñsaka Chitradhara Miśra. Appearance, decayed. Prose and verse. Correet.

**A'chára-chandriká.** A digest of the Smṛiti rules regarding A'chára or duty. By Ratnes'vara Mis'ra.

**Beginning.** वन्दे सीतापतिं रामं स्वात्मारामाभिवन्दितं ।
दीक्षितं रणयज्ञेषु विबुधानन्ददायिषु ॥
अथाचारप्रभवो धर्म्म इत्युक्तेराचारस्य धर्म्मकारणतया स एवादौ विविच्यते। तत्र मनुः।
ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयन्। इत्यादि ।

**End.** चतुर्द्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ इति ॥

**Colophon.** इति महोपाध्यायमिश्रश्रीरत्नेश्वरविरचिताचारचन्द्रिका सम्पूर्णा ॥

विषयः। सुप्तोत्थितस्य नियमकथनं। मूत्रपुरीषोत्सर्गविधिः। तत्र मृत्तिकाग्रहणसंख्याकथनं। आचमनस्वरूपविधिकथनं। प्रौढ़पादलक्षणादिकथनं। द्विराचमननिमित्तकथनं। उच्छिष्टस्पर्शे आचमनादिकथनं। दन्तधावनविधिः। प्रातःस्नानादिविधिः प्रातःसन्ध्यानियमकथनं। त्रिविधस्नानविधिः। शिवनिर्म्माल्यस्पर्शनिषेधः। अनुदकमूत्रपुरीषकरणे प्रायश्चित्तं। सन्ध्योपासनविधिः। सन्ध्याकालपरिमाणं। पवित्रधारणप्राणायामतर्पणादिविधिः। देवपूजाविधिः। शिवलिङ्गमहिमादिकथनं। वैश्वदेवविधिः। पञ्चमहायज्ञविधिः। भिक्षादानादिविधिः। अतिथिपूजादिविधिः। भोजनविधिः। शयनविधिः। दारोपयामविधिः। पर्व्वनिरूपणञ्च।

---

**No. 2304.** वैद्यनाथमाहात्म्यम्। Substance, foolscap paper, 14 × 3½ inches. Folia, 62. Lines, 7 on a page. Extent, 987 ślokas. Character, Nágara. Date, Sm. 1929. Place of deposit, Deoghara, Kamalalochana Jhá. Appearance, new. Verse. Incorrect.

**Vaidyanátha-máhátmya.** An account of the Liṅgam of Vaidyanátha at Deoghar, in the Sántal Pargannah. It professes to be an extract from the Pátála-khaṇḍa of the Padma-puráṇa. For remarks on the authenticity of this work see my paper on the temples of Deoghar in the Journal of the Asiatic Society of Bengal, for 1883.

**Beginning.** आनन्दपूर्णहृदयः सदयः सर्व्वजन्तुषु ।
वैद्यनाथो जगद्वन्द्यो मय्यस्तु किल दक्षिणः ॥
पुरा देवेन्द्रदर्पस्य दलको रावणोऽसुरः ।
यमाराध्य विमुक्तोऽभूत् तं नमामि महेश्वरं ॥
पार्व्वत्युवाच ।

प्राणेश वैद्यनाथस्य माहात्म्यं वद मां प्रति ।
लोकानामुपकाराय यदि श्रद्धा मयि प्रिय । इत्यादि ।

**End.** स्तुतिपाठं ततः कुर्य्याद्ब्राह्मणान् भोजयेत् ततः ।
स्वयम्भुवापि देवेशि अनुज्ञाप्य+ ब्राह्मणान् ।
तदा फलमवाप्नोति पुराणे कथितं शिवे ॥

**Colophon.** इति पद्मपुराणे पातालखण्डे वैद्यनाथमाहात्म्ये अष्टमोऽध्यायः ।
संवत् १९२९ ।

विषयः । वैद्यनाथस्य माहात्म्यादिकथनं । तत्र रावणस्य कैलासात् शिवलिङ्गानयनादिवृत्तान्तवर्णनं । तस्य मूत्रपीड़ादिवृत्तान्तकथनं । शिवगङ्गाचन्द्रकूपादीनामुत्पत्तिकथनं । तपोवनादिमाहात्म्यकीर्त्तनं । वैद्यनाथस्थदेवदेवीनां माहात्म्यादिकथनं । षोड़शोपचारेण वैद्यनाथस्य पूजाविधानकथनं । तत्र मन्त्रादिकथनञ्च । काश्यामपि वैद्यनाथक्षेत्रस्य माहात्म्यकीर्त्तनं ।

---

**No. 2305.** वीरविरुदम् । Substance, country-made paper, 14 × 3½ inches. Folia, 12. Lines, 4 on a page. Extent, 132 ślokas. Character. Maithili. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbhâṅgá, Mímáñsáka Chitradhara Miśra. Appearance, fresh. Verse. Incorrect.

**Víraviruda.** A poem in praise of Kṛishṇa as the supreme divinity. By Chandradatta.

**Beginning.** विमलाजिनवसने सुविकटदशने चञ्चलरसने भीमरवे ।
करधृतकरवाले, रणविकराले नगरबाले ललितशिवे ॥
मधुरस्मितहासिनि शम्भुविलासिनि गिरिवरवासिनि मयि सकलं ।
सुरवैरिविदारिणि मृगवरचारिणि मङ्गलकारिणि कुरु कुशलं ॥
भूभारोद्धरणाय भूसुरसुरत्राणाय भूमितले
ब्रह्मेन्द्रामरवृन्दवन्दितपदे वंशे प्रशंस्ये यदोः ।
त्वय्याविर्भवति प्रभौ विलसति ब्रह्माण्डभाण्डोदरे
चण्डीभर्त्तुरकाण्डताण्डवविधौ शङ्खध्वनिः पातु माम् ॥

जय घनसुन्दर नमितपुरन्दरनन्दितचरणतलागतनिजशरणागतवन्दित—इत्यादि ।

**End.** जय जय दितिसुतलक्षयक्षविक्षेपविधायकपरजन + + फलदानदायकशायककान्तकलिका ॥

**Colophon.** इति वीरविरुदं चन्द्रदत्तनिर्म्मितं ।
श्रीकृष्णस्य स्तोत्रव्याख्यानरूपगणादिमाहात्म्यवर्णनं ।

---

**No. 2306. वीरविरुदटीका ।** Substance, country-made paper, 14 × 3 inches. Folia, 10. Lines, 6 on a page. Extent, 217 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, fresh. Prose. Incorrect.

**Víraviruda-ṭíká.** A commentary on the poem noticed under the next preceding No. By Chandradatta, the author of the poem.

**Beginning.** प्रणम्य हरिपादाब्जं जानकीजन्मभूमिभूः ।
चन्द्रदत्तः स्वरचितां व्याचष्टे विरुदावलीं ॥
चिकीर्षितग्रन्थनिर्व्विघ्नसिद्ध्यर्थं स्वेष्टदेवताप्रार्थनरूपं मङ्गलमाचरति विमलेति । इत्यादि ।

**End.** विकलं दानं यस्य तस्य दानस्य संदायकः दाता सायकोयस्य ।

विषयः । निजकृतवीरविरुदस्य व्याख्यानम् ।

---

**No. 2307. तर्कपल्लवः ।** Substance, country-made paper, 14 × 4 inches. Folia, 90. Lines, 12 on a page. Extent. 3,871 ślokas. Character, Maithili. Date, ? Place of deposit, Ṭavká-grám, Post Delsiñsarái, Zíllá, Darbháñgá, Mimáñsaka Chitradhara Miśra. Appearance, fresh. Prose. Correct.

**Tarka-pallava.** An epitome of the Nyáya system of inference, (*Anumána*). The codex is incomplete, and the author's name cannot be made out.

**Beginning.** वावदूकयितुं मूकान् मूकीकर्त्तुञ्च वाग्मिनं ।
गौरीनाथेन सुधिया तायते तर्कपल्लवः ॥
ज्ञानं तावद्द्विविधं । अनुभवः स्मृतिश्च । तत्रानुभवश्चतुर्द्धा प्रत्यक्षानुमित्युपमितिशाब्दभेदात् तत्र प्रत्यक्षप्रमापि षड्विधा । इत्यादि ।

**End.** न च कर्षकादुत्पन्नमङ्कुरमित्यादिप्रतीतिबलात् कर्तृजन्यत्वं तत्र सेत्स्यतीति वाच्यं एतादृशप्रतीतेरभावात् । इति ।

**Colophon.** इतःपरं लिप्यभावात् परिसमाप्तिसूचकवाक्यं नास्ति ।

विषयः । प्रत्यक्षानुमानोपमानशाब्दप्रमाणप्रपञ्चनं । पुस्तकेऽस्मिन् अनुमानप्रकरण यावदस्ति । अत्र तु अतीवसूक्ष्मानुसन्धानेन प्राचीननवीनमतयोः सारासारं विविच्य समुद्भाविता स्तर्कास्तत्र इति ज्ञेयम् ।

---

**No. 2308.** शिवस्तवटीका। Substance, country-made paper, 13 × 3 inches. Folia, 32. Lines, 7 on a page. Extent, 827 ślokas. Character, Bengali. Date, Sk. 1678. Place of deposit, Iṭákumárí-grám, Zillá Ruṅgpur. Vaikuṇṭheśvara Bhaṭṭácbárya. Appearance, old. Prose. Correct.

**S'ivastava-ṭíká.** A commentary on Pushpadanta's hymn to S'iva. By Rámajívana Tarkavágís'a. An English translation of the hymn occurs in the Journal of the Asiatic Society.

**Beginning.** शिवं प्रणम्य देवेशं चतुर्व्वर्गफलप्रदं।
पुष्पदन्तसमुद्गीतस्तवकाठिन्यविस्तरे॥
शैववैष्णवसौराणां परमाह्लादकारकं।
व्याख्यात्रयं प्रवक्ष्यामि विनिश्चित्य विभाव्य च॥

ननु तन्महिम्नोऽवधिमजानन् कथं स्तवे प्रवृत्तः प्रवर्त्तकज्ञानाभावादिति स्तवाधिकारतामात्मनः सूचयन् स्तौति महिम्न इति। इत्यादि।

**End.** तथा च वाग्देवताया असाध्यं यत् तत् सुतरामन्येषामसाध्यमिति भावः। विष्णुपक्षे सूर्य्यपक्षेऽप्येवं बोध्यमिति संक्षेपः।

**Colophon.** इति श्रीरामजीवनतर्कवागीशकृता शिवस्तवटीका समाप्ता। शाकाब्दाः १६७८।

विषयः। पुष्पदन्तकृतस्य शिवमहिम्नः स्तोत्रस्य शिवपक्षे विष्णुपक्षे सूर्य्यपक्षेऽपि व्याख्यानम्।

---

**No. 2309.** व्रतोद्यापनकौमुदी। Substance, country-made paper, 16 × 4 inches. Folia, 88. Lines, 5 on a page. Extent, 1,576 ślokas. Character, Bengali. Date, ? Place of deposit, Iṭákumárí-grám, Zillá Ruṅgapur, Vaikuṇṭheśvara Bhaṭṭácbárya. Appearance, decayed. Prose and Verse. Incorrect.

**Vratodyápana-kaumudí.** A digest of the rules for the performance of optional fasts called Vratas. By Rámakṛishṇa. The work is founded principally on the Vrata-khaṇḍa of Hemádrí's Chaturvarga-chintámaṇi.

**Beginning.** प्रणम्य शारदां देवीं शरचन्द्रसमप्रभां।
क्रियते रामकृष्णेन व्रतोद्यापनकौमुदी॥
हेमाद्रिव्रतखण्डोक्तव्रतानि कानिचित् खलु।
समाहृतानि गौड़ेषु तानि वक्ष्यामि यत्नतः॥

अथ नियतसंकल्पविषयः कर्म्मविशेषोव्रतं। तच्च काम्यनित्यभेदेन द्विविधं। तत्र काम्यत्वं नाम फलापेक्षत्वं। इत्यादि।

**End.** इह लोके सुखं भुक्त्वा परे च त्रिदिवं व्रजेत्।
इति भविष्यपुराणे चीरपूर्णिमाव्रतं॥

**Colpohon.** इति श्रीरामकृष्णविरचिता व्रतोद्यापनकौमुदी समाप्ता।

**विषयः।** व्रतलक्षणादिकथनं। नित्यकाम्यभेदेन तस्य द्वैविध्यकथनं। व्रतारम्भकालनिरूपणं। मलमासादिनिरूपणं। अधिकारिनिरूपणं। व्रतिनां नियमकथनं। प्रतिष्ठाकालादिनिरूपणं। संकल्पादिवाक्यविवेचनं। प्रतिष्ठापद्धतिकथनं। सर्व्वत्र व्रतानां विधानकथनं। प्रयोगकथनञ्च। प्रतिपदादिपञ्चदश्यन्ततिथिव्रतनिरूपणं। संक्रान्तिव्रतनिरूपणं। वारव्रतनिरूपणं। नक्षत्रव्रतनिरूपणं। प्रकीर्णकव्रतकथनञ्च।

---

**No. 2310. विचारनिर्णयः।** Substance, country-made paper, 15 × 3 inches. Folia, 46. Lines, 6 on a page. Extent, 1,104 ślokas. Character, Bengali. Date, Sk. 1663. Place of deposit, Iṭákumárí-grám, Zillá Ruṅgpur, Vaikuṇṭheśvara Bhaṭṭáchárya. Appearance, old. Prose and verse. Incorrect.

**Vichára-nirṇaya.** On judicature. By Gopála Nyáyapanchánana. This is a different and fuller recension of the work noticed under No. 2184, *ante* VI, p. 210.

**Beginning.** अथ विचारनिर्णयः। स विचारार्हवाक्यस्य संशयपूर्व्वपक्षोत्तरोपन्यासपूर्व्वकं यथार्थतात्पर्य्यनिश्चयात्मकः। तदुक्तं भट्टपादैः। विषयोविशयश्चैव पूर्व्वपक्षस्तथोत्तरं। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतं। इत्यादि।

**End.** एवं संवत्सररूपकालस्य वृद्धिनिमित्तकालविशेषस्यापि सहकारित्वेन संवत्सरमध्ये वृद्धिनिमित्तं विना कृते + + + + + प्रेतत्वविमुक्तिरिति कृतं पल्लवितेन।

**Colophon.** इति गोपालन्यायपञ्चाननविरचितोविचारनिर्णयः समाप्तः। शकाब्दाः १६६३।

**विषयः।** विचारलक्षणकथनप्रसङ्गेन अधिकरणस्वरूपनिरूपणं। यागलक्षणादिनिर्णयः। तिर्य्यगधिकरणनिरूपणं। देवतास्वरूपनिरूपणं। योगसिद्ध्यधिकरणनिरूपणं। सर्व्वशब्दार्थनिरूपणं। अर्थवादाधिकरणनिरूपणं। तत्र गुणवादानुवादादिस्वरूपकथनं। विधिस्वरूपादिविवेचनं। स्यास्त्रिष्टाधिकरणादिस्वरूपकथनं। वैधहिंसाविवेचनं। दानस्वरूपादिनिरूपणं। स्तेयलक्षणादिकथनं। दत्ताप्रदानिकनिरूपणं। प्रसङ्गाद्ब्राह्मणादीनां नामस्वरूपनिरूपणं। देवद्रव्याणां

दवताकथयं। सम्प्रदानवाक्ये परस्मैपदात्मनेपदप्रयोगभेदविवेचनं। विरोधाधिकरणनिरूपणं। प्रतिग्रहलक्षणादिकथनं। दानफलकथनं। वृषोत्सर्गकालादिनिरूपणं। अशौचकृत्यकथनं। पूरकपिण्डदानादिविधिकथनं। प्रेतश्राद्धाधिकारिनिरूपणं। वृषोत्सर्गस्य यागत्वव्यवस्थापनं। वृषोत्सर्गविचारप्रसङ्गेन तद्दक्षिणाविवेचनं। वृषाङ्कादिनिर्णयः। होमलक्षणादिविवेचनं। कुण्डनिर्म्माणादिविधिकथनं। मलमासलक्षणादिविवेचनं। उपवासलक्षणादिविवेचनं। अनुकल्पादिस्वरूपविवेचनं। सपिण्डीकरणस्वरूपादिविवेचनञ्च।

---

**No. 2311.** वर्षकृत्यम्। Substance, country-made paper, 16 × 4, inches. Folia, 240. Lines, 6 on a page. Extent, 4,230 ślokas. Character, Bengali. Date, ? Place of deposit, Iṭákumárí-grám, Zillá Ruṅgpur, Vaikuṇṭheśvara Bhaṭṭáchárya. Appearance, new. Prose and verse. Correct.

**Varsha-kṛitya.** A calendar of feasts, fasts, and ceremonies. By Rávana S'armá, Champati.

**Beginnnig.** प्रणम्य कमलाकान्तं वीक्ष्य प्राक् स्मृतिसङ्ग्रहान्।
श्रीमता शर्म्मणा साधु वर्षकृत्यं विधीयते॥

अथ संक्रान्तिनिरूपणं। अयने द्वे विषुवे द्वे चतस्रः षड़शीतयः। चतस्रोविष्णुपद्यश्च संक्रान्त्योद्वादश स्मृताः। इत्यादि।

**End.** ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणां।
सन्न्यासिनाञ्च गोमांससुरातुल्यं श्रुतौ श्रुतं॥
न कालनियमः कश्चित् कृष्णनामानुकीर्त्तनात्।
इति प्रकीर्णकं।
सच्चम्पट्टिकुलपद्मविकाशभानः
श्रीमान् शर्म्मधरणीविबुधोत्तमेन।
व्याकारतर्कसुकृतागमकाव्यवारि-
धीन्दुना (?) परिसमाप्यत वर्षकृत्यं॥

**Colophon.** इति वर्षकृत्यं सम्पूर्णं।

विषयः। संक्रान्तिनिरूपणं। वैशाखादिषु द्वादशसु मासेषु प्रत्येकं कृत्यविधानकथनं। तत्र तत्र प्रत्येकं प्रयोगकथनञ्च। अथ धर्म्मघटव्रतविधिः। पिपीतकीद्वादशीव्रतविधिः। चम्पकचन्दनव्रतविधिः। सावित्रीव्रतविधिः। अम्बुवाचीविधिः। चातुर्म्मास्यव्रतविधिः। अशून्यशयनद्वितीयाव्रतविधिः। अघोरचतुर्द्दशीव्रतविधिः। मनसापूजाविधिः। अमावास्याव्रतविधिः। अनन्तव्रतविधिः। कुक्कुटीव्रतविधिः। दुर्व्वाष्टमीव्रतविधिः। तालनवमीव्रतविधिः। वीराष्टमीव्रतविधिः। कोजागरकृत्यविधिः। खञ्जनदर्शनविधिः। आकाशदीपप्रतिष्ठाविधिः। गोष्ठाष्टमीवि-

धिः। विष्णूत्थानविधिः। बकपञ्चकविधिः। प्रेतचतुर्द्दशीविधिः। उल्कादानादिविधिः। द्यूतप्रतिपद्विधिः। भ्रातृद्वितीयाविधिः। कार्त्तिकेयव्रतविधिः। नवान्नविधिः। दानद्वादशीव्रतविधिः। पाषाणचतुर्द्दशीव्रतविधिः। विधानचतुर्द्दशीव्रतविधिः। चन्द्रभागाव्रतविधिः। विभूतिद्वादशीव्रतविधिः। सर्व्वजयाव्रतविधिः। संसारफलत्यागविधिः। पार्व्वतीचतुर्थीव्रतविधिः। सन्तानद्वादशीव्रतविधिः। नारायणीद्वादशीव्रतविधिः। व्रतराजव्रतविधिः। दधिसंक्रान्तिव्रतविधिः। वरदाचतुर्थीविधिः। पञ्चमीव्रतविधिः। माकरीसप्तमीविधिः। भीष्माष्टमीविधिः। महानन्दाविधिः। वराहद्वादशीव्रतविधिः। रटन्तीचतुर्द्दशीविधिः। दोलयात्राविधिः। फलचतुर्द्दशीव्रतविधिः। शिवरात्रिव्रतविधिः। वारुणीविधिः। एकादश्या विधिः। तत्र नियमादिकथनं। तिलकादिविधिः। गीतामाहात्म्यकीर्त्तनं। वैष्णवस्य कृत्याकृत्यनिरूपणं। तुलसीमाहात्म्यकीर्त्तनं। द्वादशीनियमकथनं। शिवमाहात्म्यकथनं। रुद्राक्षमाहात्म्यं। वंशपौर्णमासीव्रतविधिः। बुधाष्टमीव्रतविधिः। शालग्रामदानविधिः। खण्डतिथिव्यवस्थाकथनं। अधिमासादिनिरूपणं। युगाद्याकथनं। मन्वन्तरादिकथनं। ग्रहणनिरूपणं। सूतिकाषष्ठीपूजाविधिः। शीतलापूजाविधिकथनञ्च।

---

**No. 2312.** गीतगोविन्दमाधुरी। Substance, country-made paper, 16 × 4 inches. Folia, 48. Lines, 7 on a page. Extent, 1,006 ślokas. Character, Bengali. Date, ? Place of deposit, Khurshe-grám, Post Káliganj, Zillá Ruñgpur, Rámadhana Bhaṭṭáchárya. Appearance, old. Prose. Correct.

**Gítagovinda-mádhurí.** A commentary on the Gítagovinda of Jayadeva. By Rámatárana Chúḍámaṇi.

**Beginning.** नवीननीरदश्यामं गोविन्दं नन्दनन्दनं।

प्रणम्य क्रियते टीका गीतगोविन्दमाधुरी॥

अथ सहृदयकुलशिरोमणिरुद्भवान् महाकविर्जयदेवः हरिभक्तिमाधुरीसमनुभवविधुराणां पामराणां श्मशानसदृशानि हृदयानि पवित्रयितुं गीतिव्याजेन भगवल्लीलावर्णनमुपक्रमते मेवैरिति।

**End.** कविर्हि लोकोत्तरवर्णननिपुणः। अत्र हि प्रतिभैव परं निदानं। सा च प्रज्ञा नवनवोन्मेषशालिनी प्रतिभोच्यते इत्युक्तलक्षणा। उपजातिवृत्तं।

**Colophon.** इति श्रीरामतारणचूडामणिकृतायां गीतगोविन्दमाधुर्य्यां टीकायां द्वादशः सर्गः समाप्तः।

विषयः। जयदेवकृतगीतगोविन्दस्य व्याख्यानम्।

---

**NO. 2313.** प्रायश्चित्तवारिधिः । Substance, country-made paper, 16 × 4 inches. Folia, 68. Lines, 6 on a page. Extent, 1,231 ślokas. Character, Bengali. Date, ? Place of deposit, Khurshe-grám, Post Kálíganja, Zillá Ruṅgpur, Rámadhana Bhaṭṭáchárya. Appearance, new. Prose and verse. Correct.

**Práyaśchitta-váridhi.** A summary of the rules for the performance of expiatory rites to avert the evil effects of sins. By Bhavánanda S'armá.

**Beginning.** नमस्कृत्य रमेशानं सच्चिदानन्दविग्रहं ।
क्रियते बालबोधाय प्रायश्चित्तस्य वारिधिः ॥

अथ प्रायश्चित्तस्वरूपं । तत्र पापक्षयमात्रसाधनत्वेन वेदबोधितं कर्म्म प्रायश्चित्तं क्वचित् गङ्गास्नानाश्वमेधादीनां पापक्षयमात्रसाधनत्वेन न प्रायश्चित्तत्वव्याघातः । इत्यादि ।

**End.** तत्र तत्र विश्वजिन्न्यायेन स्वर्गसाधनत्वमवसेयं । अधिकन्तु प्रायश्चित्तविवेकादौ द्रष्टव्यमिति ।

**Colophon.** इति श्रीभवानन्दशर्म्मकृतौ प्रायश्चित्तवारिधिः परिपूर्णः ।

विषयः । प्रायश्चित्तस्वरूपनिरूपणं । तत्र तार्किकरीत्या विविधमतोपन्यासपूर्व्वकं तत्र तत्र खण्डनं । धर्म्मस्वरूपविवेचनं । धर्म्मे प्रमाणानि । पापनिरूपणं । तत्र कारणकथनं । अतिपातकमहापातकादिलक्षणकथनं । मातृगमनादितुल्यत्वनिरूपणं । अतिपातकप्रायश्चित्तकथनं । महापातकप्रायश्चित्तकथनं । गोवधप्रायश्चित्तं । गोवधापराधकथनं । अभक्ष्यभक्षणप्रायश्चित्तं । अगम्यागमनप्रायश्चित्तं । भोजनादिकाले मार्ज्जारादिस्पर्शनप्रायश्चित्तं । लशुनपलाण्डुनादिभक्षणप्रायश्चित्तं । मत्स्यमांसादिभोजनप्रायश्चित्तं । भक्ष्याभक्ष्यद्रव्यकथनं । प्रकीर्णकप्रायश्चित्तकथनञ्च ।

---

**No. 2314.** तत्त्वचन्द्रिका । Substance, country-made paper, 16 × 4 inches. Folia, 28. Lines, 7—6 on a page. Extent, 567 ślokas. Character, Bengali. Date, ? Place of deposit, Khurshe-grám, Post Kálíganja, Zillá Ruṅgpur, Rámadhana Bhaṭṭáchárya. Appearance, old. Prose, Correct.

**Tattva-chandriká.** A summary of the adual Vedánta doctrine. By Mahádeva Sarasvatí, disciple of Sachchidánanda Sarasvatí.

**Beginning.** परात्मानं नमस्कृत्य सच्चिदानन्दविग्रहं ।
नमामि स्वगुरुं भक्त्या सच्चिदानन्दनामकं ॥

अथ आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति विधिस्तावदात्मश्रवणादौ जीवान् प्रवर्त्तयति । तत्र चिन्त्यते । इत्यादि ।

**End.** न स पुनरावर्त्तते इति श्रुत्या मुक्तस्यात्मनोनिरस्तसमस्तभेदज्ञानस्य मायातीतत्वात् कथं पुनरागमनं सम्भवतीति।

**Colophon.** इति श्रीपरमहंसपूज्यपादसच्चिदानन्दसरस्वतीपादपद्ममधुपश्रीमहादेवसरस्वतीविरचिता तत्वचन्द्रिका सम्पूर्णा।

विषयः। आत्मश्रवणादीनां विधेयतानिरूपणं। जीवात्मस्वरूपकथनं। अत्र चार्व्वाकवौद्धतार्किकादीनां मतखण्डनं। परात्मजीवात्मनोरभेदकथनं। सूक्ष्मदेहादिनिरूपणं। अविद्यानिरूपणं। मायानिरूपणं। जीवस्य ब्रह्मप्रतिविम्बत्वकथनं। तुरीयहिरण्यगर्भादिचतुर्व्यूहकथनं। अध्यारोपापवादादिनिरूपणं। प्रमाणादिनिरूपणं। तत्र प्रत्यक्षानुमानादिलक्षणकथनं। जगत्सृष्टिविवेचनं। प्रपञ्चस्य मिथ्यात्वकथनं। पञ्चीकरणकथनं। जीवस्य उत्क्रान्त्यादिनिरूपणं। तत्त्वज्ञानकथनं। मोक्षनिरूपणञ्च।

---

**NO. 2315.** वैराग्यचन्द्रिका। Substance, country-made paper, 15 × 3⅓, inches. Folia, 16. Lines, 6 on a page. Extent, 303 ślokas. Character, Bengali. Date, Sk. 1702. Place of deposit, Khurshe-grám, Post Káliganja, Zillá Ruṅgpur, Rámadhana Bhaṭṭácharya. Appearance, new. Prose and verse. Correct.

**Vairágya-chandriká.** On asceticism as appropriate to Vaishṇavas. By Purushottamadása. The divinity invoked is Krishṇa.

**Beginning.** प्रणम्य गुरुपादाब्जं संशयध्वान्तनाशनं।
क्रियते वैष्णवप्रीत्यै रम्या वैराग्यचन्द्रिका॥

अथ यदहरेव विरज्येत् तदहरेव प्रव्रजेदिति श्रुत्या पुरुषः खलु वैराग्यान्मोक्षशास्त्रे प्रवर्त्तते वैराग्यञ्च, दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं। तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमिति।

**End.** गुरूणां पादयुगलकमलभ्रमरायितः।
वैराग्यचन्द्रिकां चक्रे दासः श्रीपुरुषोत्तमः॥

**Colophon.** इति समाप्तं। शकाब्दाः १७०२।

विषयः। वैराग्यस्वरूपादिकथनं। जीवस्वरूपकथनं। संसारस्य अनित्यत्वकथनं। वैराग्यसाधननिरूपणं। परापरभेदेन द्विविधवैराग्यकथनं। भगवान् नन्दनन्दन एव परब्रह्मशब्दवाच्य इति निरूपणं। सालोक्यादिपञ्चविधमुक्तिनिरूपणञ्च।

---

**No. 2316.** **विल्वमङ्गलटीका** । Substance, country-made paper, 15 × 3½ inches. Folia, 23. Lines, 6 on a page. Extent, 405 ślokas. Character, Bengali. Date, ? Place of deposit, Iṭákumárí-grám, Zillá Ruṅgpur, Paṇḍit Yádaveśvara Tarkaratna. Appearance, old. Prose. Incorrect.

* **Vilvamaṅgala-ṭíká.** A commentary on a poem by Vilvamaṅgala in praise of Krishṇa. By Vidyálaṅkára. The author's personal name has not been made out; what is given is obviously a literary title.

**Beginning.** प्रथमपचं नास्ति। पद्मं रूपकत्वेन उदारगर्भस्टहं यस्य सः। अन्यपदार्थे वहुव्रीहिसमासः। तं किम्भूतं गोधूलिधूसरशरीरं। इत्यादि।

**End.** अस्माभिः सदा तव पादपद्मं भावनीयं नान्यत् किञ्चिच्चिन्तनीयं। यद्यपि मायापाशनियन्त्रितोऽस्मि तथापि नान्योभावनीयः।

**Colophon.** इति विद्यालङ्कारविरचिता विल्वमङ्गलटीका समाप्ता।

**विषयः।** विल्वमङ्गलकृतविल्वमङ्गलाभिधानश्रीकृष्णस्तुतिकाव्यस्य व्याख्यानम्।

---

**No. 2317.** **निर्द्धारणवादार्थः** । Substance, country-made yellow paper, 17 × 3½ inches Folia, 2. Lines, 6 on a page. Extent, 47 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhánḍára, Zillá Ruṅgpur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Nirdháraṇa-vádártha.** A logico-grammatical dissertation on the uses of the genitive and the locative cases. The name of the author is not given in the codex; it is probably a part of the work noticed under the next following work.

**Beginning.** ननु पुरुषाणां चत्रियः शूरतम इत्यादि निर्द्धारणस्थले कीदृगन्वयबोध इति चेत्। निर्द्धारणषष्ठ्यादिभेदोभेदस्वार्थः। इत्यादि।

**End.** आख्यातार्थे उद्देश्यतावच्छेदकताकान्वयबोधानङ्गीकारात्।

**Colophon.** इति निर्द्धारणवादार्थः समाप्तः।

**विषयः।** निर्द्धारणविहितयोः षष्ठीसप्तम्योरर्थनिरूपणं।

---

**No. 2318.** **तदादिसर्व्वनामविचारः** । Substance, country-made yellow paper, 17 × 3½ inches. Folia, 3. Lines, 6 on a page. Extent, 48 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhánḍára, Zillá Ruṅgpur, Ráya Ramaṇimohána Chaudhuri, Bahádur. Appearance, new. Prose. Correct.

**Tadádi-sarvanáma-vichára** A logico-grammatical dissertation on pronouns. By Gadádhara.

**Beginning.** अथ तदादिसर्व्वनामविचारः । ननु तदादिसर्व्वनाम्नः केन रूपेण शक्तिः अत्र प्राहुः । सर्व्वनाम्नोबुद्धिस्थ एव शक्तिः । न चैवं येन रूपेण—इत्यादि ।

**End.** घटपटादिनिष्ठा एकैवप्रकारतेति लाघवमिति प्राहुः ।

**Colophon.** इति श्रीगदाधरकृततदादिसर्व्वनामविचारः समाप्तः ।

**विषयः ।** तदादिसर्व्वनामशब्दानां शक्तिनिरूपणं ।

---

**No. 2319** निर्द्धारणविचारः । Substance, country-made yellow paper, 17 × 3⅓ inches. Folia, 3. Lines, 6 on a page. Extent, 60 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándár, Zillá Ruñgpur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Nirddháraṇa-vichára.** A logico-grammatical dissertation on the uses of the genitive and the locative cases in definitions. By Gadádhara.

**Beginning.** अथ निर्द्धारणविचारः । नराणां क्षत्रियः शूरतम इत्यादौ षष्ठी निर्द्धारणे निर्द्धारणञ्च जात्यादिभिः समुदायादेकदेशस्य पृथक्करणं । इत्यादि ।

**End.** पृथिवी गन्धवतीत्यादौ विशेष्यतावच्छेदकगन्धवत्त्वादेर्द्वयव्यभिचारितया कर्म्मधारयासाधुत्वात् षष्ठीसमासे निषेधसार्थक्योपपादनेऽपि न प्रतीकारः ।

**Colophon.** इति श्रीगदाधरकृतोनिर्द्धारणविचारः समाप्तः ।

**विषयः ।** निर्द्धारणविहितयोः षष्ठीसप्तम्योरर्थविवेचनं ।

---

**No. 2320.** सादृश्यवादः । Substance, country-made yellow paper, 17 × 3½ inches. Folia, 2. Lines, 6 on a page. Extent, 48 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándár, Zillá Ruñgapur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Sádriśya-váda.** A Nyáya dissertation on similitude. By Gadádhara.

**Beginning.** अथ सादृश्यवादः । सादृश्यञ्च तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वमिति मीमांसकाः । तत्र चन्द्रवन्मुखमित्यत्राव्याप्तिः । चन्द्रगताह्लादजनकत्वेऽपि चन्द्रत्वस्य मुखेऽसत्त्वात् । इत्यादि ।

**End.** रामरावणयोर्युद्धं रामरावणयोरिव । इत्यादावभेदेऽपि सादृश्यं । तस्मात् क्वचित् सादृश्यं भेदगर्भमितिरीत्या समाधा कार्य्या ॥

**Colophon.** इति श्रीगदाधरकृतः सादृश्यवादः ।

विषयः । साधर्म्म्यापरनामधेयस्य सादृश्यस्य स्वरूपविवेचनं ।

---

**No. 2321.** नानार्थसन्दिग्धार्थविचारः । Substance, country-made yellow paper, 17 × 3½ inches. Folia, 4. Lines, 6 on a page. Extent, 85 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándár, Zillá Rungapur, Ráya Ramanímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Nánártha-sandigdhártha-vichára.** A Nyáya dissertation on synonymes and their relations to each other. By Gadádhara.

**Beginning.** ननु नानार्थसन्दिग्धार्थयोः कोभेदः । नह्यनयोर्भेदमुपलभामहे । उभयोरर्थविशेषाप्रतिपत्तौ तुल्यत्वात् सत्यमस्त्येव भेदः । इत्यादि ।

**End.** अन्यादयोऽपि नित्यं संप्रति योगिका इत्यन्ये ।
अत्रापेर्वाङ्गत्वादिति अपरे इति गौतममतं ॥

**Colophon.** इति श्रीगदाधरकृतोनानार्थसन्दिग्धार्थविचारः समाप्तः ।

विषयः । नानार्थसन्दिग्धार्थयोरभेदवादं निरस्य तयोः स्वरूपादिविवेचनं ।

---

**No. 2322.** साहित्यविचारः । Substance, country-made paper, 17 × 3½ inches. Folia, 3. Lines, 6 on a page. Extent, 70 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándár, Zillah Rungapur, Ráya Ramanímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Sáhitya-vichára.** A Nyáya dissertation on the relation of rhetoric to logic. By S'ríkrishna Tarkálankára.

**Beginning.** ननु पित्रादीनां निरपेक्षाणां न देवतात्वं ।
अथ श्राद्धममावस्यायां पितृभ्योदद्यादित्यादिगौतमवचने, पूर्व्वेद्युः ब्राह्मणान् सन्निपात्य इति वसिष्ठवचने बहुवचनात् साहित्यप्रतीतेः । इत्यादि ।

**End.** निरुक्तसाहित्यस्य प्रत्येकं परिसमाप्ततया ।
उभयसाधारण एकरूपत्वासम्भवादिति ॥

**Colophon.** इति श्रीकृष्णतर्कालङ्कारविरचितसाहित्यविचारः समाप्तः ।

विषयः । साहित्यलक्षणविवेचनं ।

**No. 2323.** त्वतलादिभावप्रत्ययविचारः । Substance, country-made yellow paper, 17 × 3½ inches. Folia, 4. Lines, 6 on a page. Extent, 72 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándár, Zillá Ruñgapur, Ráya Ramanímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Tvataládibháva-pratyaya-vichára** A Nyáya dissertation in the uses and imports of affixes for the formation of abstract nouns. By Gadádhara.

**Beginning.** ननु त्वतलादिभावप्रत्ययस्य केन रूपेण शक्तिरिति चेदत्र प्राञ्चः । धर्म्मत्व-रूपेण धर्म्म एव शक्तिर्लाघवात् । इत्यादि ।

**End.** तादृशेतरत्वरूपेण पूर्व्वपदार्थविशिष्टोत्तरपदार्थावच्छेदकमेव कर्म्मधारयो-त्तरभावप्रत्ययेर्बोधयति । नान्यसमभिव्याहारव्युत्पत्तेरेव द्वयत्वादेरप्रत्ययः ।

**Colophon.** इति श्रीगदाधरकृतस्त्वतलादिभावप्रत्ययविचारः समाप्तः ।

**विषयः ।** त्वतलादिभावप्रत्ययानां शक्तिनिरूपणमुखेन अर्थनिरूपणं ।

---

**No. 2324.** अनुकरणविचारः । Substance, country-made paper, 18 × 4 inches. Folia, 7. Lines, 9 on a page. Extent, 219 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Ruñgpur, Kumára Mahimáranjana Ráya, Chaudhurí. Appearance, fresh. Prose. Generally correct.

**Anukarana-vichára.** A Nyáya dissertation on onomatopoetic words which are not definable by grammatical rules. By Gadádhara.

**Beginning.** अथानुकरणं । अनुक्रियते उच्चार्य्यते यत् तदनुकरणं । तच्च द्विविधं शब्दानुकरणार्थानुकरणभेदात् । इत्यादि ।

**End.** काले सप्तम्यन्त इत्यनुक्तं प्रथमार्थऽपदमिति ।

**Colophon.** इत्यनुकरणविचारः समाप्तः ।

**विषयः ।** अनुकरणस्वरूपनिरूपणं । अनुकार्य्यानुकरणयोर्भेदविवेचनं । प्रकृतिवदनुकर-णमिति कातन्त्रसूत्रार्थनिरूपनञ्च ।

---

**No. 2325.** गणेशपुराणं, पूर्व्वखण्डम, वा उपासनाखण्डम् । Substance, country-made yellow paper, 22 × 6 inches. Folia, 120. Lines, 8—9 on a page. Extent, 4,802 ślokas. Character, Nágara. Date, ? Place of deposit, Kákiníyá, Zillá Ruñgpur, Kumár Mahimáranjana Ráya, Chaudhurí. Appearance, new. Verse. Incorrect.

**Gaṇeśa-puráṇa**. On the divinity of Gaṇesa, illustrated by a great number of traditions. Súta relates the Puráṇa at the request of the sages assembled at the Naimísha forest. An abstract of this work occurs in the Journal of the Bombay Branch of the Royal Asiatic Society. The codex comprises only the first part.

**Beginning**. नमस्तस्मै गणेशाय ब्रह्मविद्याप्रदायिने ।
यस्य संस्यायते नाम विघ्नसागरशोषणे ॥

ऋषय ऊचुः ।

सूत सूत महाप्राज्ञ वेदशास्त्रविशारद ।
सर्व्वविद्यानिधे त्वत्तोवक्तान्यो नोपलभ्यते ॥
जन्मजन्मान्तरीयं नः स्थितं पुण्यं महत्तरं ।
तेन सन्दर्शनं जातं सर्व्वज्ञस्य सतस्तव ॥
वयं धन्यतमा लोके जीवितं नः सुजीवितं ।
पितरोवेदशास्त्राणि तपांस्याश्रम एव च ॥
अष्टादश पुराणानि विस्तराच्छ्राविताणि नः ।
अन्यान्यपि हि नः श्रोतुमिच्छास्ति द्विजसत्तम ॥
शौनकीये महासत्रे + + द्वादशवार्षिके ।
त्वत्कथामृतपानान्नोनान्यद्विश्रामकारणं ॥

सूत उवाच ।

साधु पृष्टं महाभागा भवद्भिः पुण्यकर्म्मभिः ।
साधूनां समचित्तानां मतिर्लोकोपकारिणी ॥
ममापि परितोषोऽस्ति कथानां कथने द्विजाः ।
अतोऽहं साधुवृत्तेभ्यः कथयिष्ये विशेषतः ॥
अन्यान्यपि पुराणानि वर्त्तन्तेऽष्टादशैव तु ।
गाणेशं नारसिंहञ्च नृसिंहादीन्यथापि च ॥
गणेशस्य पुराणं यत्तचादौ कथयाम्यहं ।
दुर्लभं श्रवणं यस्य मर्त्त्यलोके विशेषतः ॥ इत्यादि ।

**End**. पूरयत्यखिलान् कामान् जनानां भक्तिकारिणां ।
माहात्म्यं विस्तृतं तस्याः स्कान्दे प्रोक्तं विशेषतः ॥
अतिविस्तरभीत्याच न प्रोक्तं मुनिसत्तम ॥

**Colophon**. इति श्रीगणेशपुराणे पूर्व्वखण्डे भार्गवीये ८१ अध्यायः ।

विषयः। सूतेन सह ऋषीणां संवादेन गणेशस्य हरिहरादिभिः सेव्यमानस्य ओङ्काररूप तया निर्गुणत्वेऽपि उपासकानामनुग्रहार्थं सगुणत्वकथनं। तन्माहात्म्यकीर्त्तनमुखेन सौराष्ट्रदेशवास्तव्यस्य सोमकान्तस्य नृपतेरुपाख्यानकीर्त्तनं। अथ सञ्जातकुष्ठरोगतया नितरां निर्व्वेदमापन्नोऽसौ सुकुमारहृदयं कुमारं हेमकण्ठाभिधानं राजपदे प्रतिष्ठाप्य वानप्रस्थोभविष्यामीतिकृतनिश्चयोगार्हस्थधर्म्मं राजनीतिञ्च सम्यक्समुपदिदेश। अथासौ कुमारः निर्व्वन्धातिशयेनापि तेन निर्व्वार्य्यमानः राज्यादिकं विहाय सपत्नीकस्य पितुः स्तोमात्रसहाय एवानुगामी बभूव। अथैकादा वनमध्ये च्यवनस्य मुनेरनुग्रहेण तत्पितुर्भृगुनामकस्य महर्षेराश्रमगमनवृत्तान्तकथनपूर्व्वकं तेषां शान्तिलाभवृत्तान्तकीर्त्तनं। तत्र विन्ध्याचलसमीपवर्त्तिकङ्कारनगरनिवासिनश्चिद्रूपसंज्ञस्य वैश्यस्य उपाख्यानकथनं। सोमकान्तस्य पूर्व्वजन्मविवरणकथनं। अथ तत्पुरतोभृगोर्गणेशपुराणगमवृत्तान्तकीर्त्तनं। तत्र ग्रन्थारम्भे अकृतगणेशप्रणतितया सर्व्वत्र चित्तमालिन्यमनुभवतोव्यासस्य ब्रह्मलोकगमनपूर्व्वकं पितामहप्रमुखाद्गणेशमाहात्म्यादिश्रवणवृत्तान्तकीर्त्तनं। गणेशमन्त्रराजनिरूपणादिकं। तत्रैकदा महाप्रलये हरिहरादीनां ज्योतिःस्वरूपगजाननदर्शनादिकथनं। हरिहरादिकृतगणेशस्तोत्रकीर्त्तनं। अथ लम्बोदरस्य उदरं प्रविश्य ब्रह्मणःद्वितीयब्रह्माण्डदर्शनादिना चमत्कृतिमापन्नस्य गणेशस्तोत्रादिकीर्त्तनं। तत्र वटवृक्षस्थितबालगजाननदर्शनकथनं। गणेशाज्ञयाब्रह्मणः सृष्टिकरणवृत्तान्तकीर्त्तनं। मधुकैटभविप्रकृतस्य प्रजापतेर्भगवतीस्तोत्रादिकीर्त्तनं। अथ सिद्धक्षेत्रगमनपूर्व्वकं महाविष्णुकृतगणेशमन्त्रजपादिवृत्तान्तकथनं। सिद्धक्षेत्रोत्पत्तिकथनञ्च। विदर्भविषयेषु कौण्डिल्यनगरपतेर्भीमनामकस्य उपाख्यानकीर्त्तनं। दक्षकृतगणेशाराधनविवरणकथनं। कर्णाटदेशीयभानुनगरस्थस्य वल्लभाभिधानस्य राज्ञ उपाख्यानकथनं। सिन्धुदेशीयपल्लीपुरनिवासिनः श्रेष्ठिनः उपाख्यानकथनं। वल्लालविनायकक्षेत्रोत्पत्तिविवरणं। कौण्डिल्यनगराधिपतेश्चन्द्रसेनस्य नृपतेरुपाख्यानकीर्त्तनं। रुक्माङ्गदाभिषेकवर्णनं। अथैकदा वटवृक्षसमारूढ़स्य तस्य नारदेन सह संवादकथनं। तत्र विदर्भेषु कदम्बपुरवास्तव्यस्य कस्यचित् श्रेष्ठिनोगृहे चिन्तामणिगणेशस्थितिविवरणकथनं। इन्द्रकृताहल्याधर्षणविवरणकथनं। तस्य च कदम्बतरुतलनिषण्णस्य गणेशमन्त्रजपादिना सहस्राक्षत्वादिविवरणकीर्त्तनञ्च। चिन्तामणितीर्थवृत्तान्तकीर्त्तनं। रुक्माङ्गदस्य विनायकपुरगमनविवरणं। तत्र रुक्माङ्गदरूपधारिणा वज्रधरेण मुकुन्दाभिधाना रुक्माङ्गदकामिनी समालिङ्गितेतिविवरणकथनं। तद्गर्भं गृत्समदस्य जन्मादिकथनञ्च। वरदाभिधानगणेशमूर्त्तिवृत्तान्तकीर्त्तनं। गणेशपुरविवरणकथनमुखेन त्रिपुरासुरस्य गणेशाद्वरग्रहणादिवृत्तान्तकीर्त्तनं। अथ समरसंरम्भे त्रिपुरासुरात् महेन्द्रस्य पराजयवृत्तान्तमवगत्य नितरां दुःखितस्य ब्रह्मणोविष्णुलोकगमनपूर्व्वकं तदुपदेशेन सार्द्धं सुरगणैः गणेशस्तोत्रादिकीर्त्तनं। त्रिपुरासुरेण सह पशुपतेः संग्रामवर्णनं। तत्र च पराङ्मुखस्य पञ्चमुखस्य तद्वधार्थं गणेशार्च्चनादिवृत्तान्तकथनञ्च। तत्र शिवकृतगणेशसहस्रनामस्तोत्रकीर्त्तन। कार्त्तिकपूर्णिमायां त्रिपुरासुरस्य निधनमिति तद्दिने त्रिपुरारिपूजनस्यावश्यकतानिरूपणं।

अथ हिमालयगुहामुखात् हैमवत्या आविर्भावादिकथनं। तत्र धीवरमुखेन देव्या वृत्तान्तमुपलभ्य हिमालयस्य कन्यारूपेण तस्याः स्वगृहरचणादिविवरणकथनं। पशुपतिं पतित्वेनाधिगन्तुं तस्या गणेशमन्त्रादिसाधनविधिकथनं। तत्र पार्थिवगणेशपूजनविधिकथनं। षोड़शोपचारमन्त्रादि-कथनञ्च। गणेशमन्त्रादिकथनं। गणेशचतुर्थीव्रतविधिकथनं। तद्व्रतस्येतिहासकथनप्रसङ्गेन सौभरेः कर्दमस्य च मुनेरुपाख्यानकीर्त्तनं। नलोपाख्यानकथनं। चन्द्राङ्गदमहिष्या इन्दुमत्या उपाख्यानकथनं। पार्व्वत्या सह शिवस्य विवाहकथनं। शूरसेनस्य नरपतेः सदसि विमानस-हितस्य सुरपतेः पतनवृत्तान्तकथनं। तत्र सङ्कटचतुर्थीव्रतविधिकथनं। अङ्गारकचतुर्थीविधि-कथनं। तत्र अवन्तीनगराधिपतेर्भारद्वाजस्य उपाख्यानकथनं। चन्द्रं प्रति गणेशस्य शापदाना-दिवृत्तान्तकथनं। गणेशाय दूर्व्वाङ्कुरदानमाहात्म्यकथनप्रसङ्गेन सुमद्राया उपाख्यानकीर्त्तनं। शिशुरूपधारिणा गजाननेन अनलासुरबधवृत्तान्तकथनं। नारदेन सह मिथिलानाथस्य जन-कस्य विरोधवर्णनं। दूर्व्वया गणेशप्रीतिजनने विविधोपाख्यानकथनं। चतुर्थीव्रतोद्यापन-विधिकथनं। कार्त्तवीर्य्यस्य गणेशप्रीत्यर्थं तपस्यादिवर्णनं। सारङ्गधरकुमार्य्याः सुन्दराया उपा-ख्यानं। परशुरामकार्त्तवीर्य्यार्ज्जुनयोरुपाख्यानादिकथनञ्च।

---

**No. 2326.** गणेशपुराणम्, क्रीड़ाखण्डम्, वा उत्तरखण्डम्। Substance, country-made paper, 23 × 7 inches. Folia, 249. Lines, 8 on a page. Extent, 6,820 ślokas. Character, Nágara. Date, Sm. 1882. Place of deposit, Kákiníyá, Zillá Rañgapur, Kumár Mahimáranjana Ráya, Chaudhurí. Appearance, new. Verse. Incorrect.

**Gaṇeśa-puráṇa.** Second part of the work described under the last preceding number.

मुनय ऊचुः।

**Beginning.** सम्यगाख्यानमाख्यातं त्वया सूत महामते।
सादरं श्रुतमस्माभिर्न च तृप्तिं गता वयं॥
यथा न तृप्यते जन्तुरन्नमश्नन् दिने दिने।
अन्यत् कथान्तरं ब्रूहि येन तृप्यामहे वयं॥

सूत उवाच।

उक्तश्चोपासनाकाण्डं क्रीड़ाखण्डं वदामि वः।
यथा कृतं गणेशेन नानादैत्यविहिंसनं॥
साधुद्विजगवाञ्चैव पालनं परमादरात्।
तदहं संप्रवक्ष्यामि श्रूयतां स्थिरचेतसा॥ इत्यादि।

**End.** युष्माभिः परिपृष्टं यत् सर्व्वं पापप्रणाशनं ।
सर्व्वकामप्रदं भक्तिमोक्षदं पुण्यवर्द्धनं ॥
गणेशस्य परेशस्य नानालीलाधरस्य च ।
वक्तृश्रोतॄणामघहरं किमन्यच्छ्रोतुमिच्छथ ॥

इति श्रीमद्गणेशपुराणे उत्तरखण्डे फलश्रुतिवर्णनं सम्पूर्णं । शुभमस्तु । संवत् १८८२ ।

**Colophon.** इति श्रीमद्गणेशपुराणे क्रीड़ाखण्डे बालचरित्रे गणेशगीता । समाप्तं पुराणं ॥

विषयः । ब्रह्मणा सार्द्धं व्यासस्य संवादेन गणेशस्य युगभेदेन रूपगुणवाहनादिभेदकथनं । अङ्गदेशीयनगरनिवासिनोधूम्रकेतोर्विवरणकथनं । देवान्तकनरान्तकयोरुपाख्यानकथनं । तयोर्महादेवाद्वरलाभपूर्व्वकं स्वर्गविजयादिवृत्तान्तकथनं । अथादितेः पुत्रकामनया कश्यपं सेवमानायास्तदुपदेशेन गणेशप्रीत्यर्थं तस्यास्तपस्यादिवर्णनं । दैत्यभारनिपीड़िताया मेदिन्या ब्रह्मलोकगमनपूर्व्वकं निजदुरवस्थावर्णनं । अदितिपुत्रत्वेन गणेशस्य जन्मग्रहणादिकथनं । विरजामोक्षकथनं । तत्र कृष्णस्येव कश्यपकुमारस्य बाल्यलीलादिवर्णनप्रसङ्गेन विरजाया राक्षसीरूपप्राप्तिविवरणकथनं । ग्राहरूपस्य गन्धर्व्वराजस्य मोचनकथनं । बालगजाननस्य चूड़ापनयनादिमहोत्सवकथनं । तत्र शक्रादिप्रसादात् अङ्कुशादिशस्त्रप्राप्तिकथनं । रौद्रकेतोस्तपस्यादिवर्णनं । काशीराजेन सह रथमारुह्य गच्छन्तं बालगणेशं निहन्तुं नरान्तकस्य राक्षसपतेश्चेष्टादिवर्णनं । अथैकदा धर्म्मदत्ताभिधानः कश्चिद् ब्राह्मणः बालगणेशसन्दर्शनार्थं काशीराजगृहं समागत इति तद्वृत्तान्तकीर्त्तनं । काशीराजपुरे राक्षसानामुपद्रवातिशय्यवर्णनं । बालगणेशस्य राक्षसदलनिधनपूर्व्वकं तत्र शान्तिः स्थापितेतिवृत्तान्तकथनं । तदाज्ञया काशीराजस्य दण्डकारण्यगमनपूर्व्वकं भृशुण्डिना सह संवादकथनं । अथ काशीराजगृहे गणकरूपेण कस्यचिद् दैत्यस्य प्रवेशवर्णनं । कूपकन्दरयोर्निधनवृत्तान्तकथनं । बालगणेशहतान्धकादिनिधनकथनं । अदितिरूपधारिण्या राक्षस्या नाशवृत्तान्तकथनं । शुक्लाभिधेयस्य ब्राह्मणस्य गृहे विनायकभोजनवृत्तान्तकीर्त्तनं । विदर्भदेशवास्तव्यस्य भीमनामकस्य व्याधस्य गणेशोपासनया अतुलैश्वर्य्यादिप्राप्तिकथनं । दितिगर्भे हिरण्याक्षस्य जन्मादिवृत्तान्तकथनं । हिरण्यकशिपुप्रह्लादविरोचनबलीनां जन्मादिकथनं । विष्णोर्वामनरूपेण अवतारकथनं । तत्कृतगणेशाराधनादिविवरणकथनं । बलिविचेष्टितकथनं । शिवाशिवयोः संवादेन शमीपत्रस्य गणेशप्रीतिजननकारणत्वकथनं । तत्र मद्रदेशाधिपस्य प्रियव्रतस्य उपाख्यानकथनं । शमीगर्भे अग्नेरवस्थितिकारणकथनं । शमीमाहात्म्यकथनमुखेन मन्दारमाहात्म्यकीर्त्तनं । काशीपुरीनिर्म्माणविवरणकथनं । तत्र शिवस्य कर्णकुण्डलपतनादिना मणिकर्णिकादीनामुत्पत्तिकथनं । शिववरदर्पितस्य दुरासदस्य दानवपतेर्विचेष्टितवर्णनं । भस्मासुरवृत्तान्तकथनं । दुरासदवधवृत्तान्तकथनमुखेन गणेशस्य काश्यां षट्पञ्चाशन्मूर्त्तिताकथनं । अथ गणकरूपधारिणो गणेशस्य दिवोदासवशीकरणादिवृत्तान्तकथनं । महादेवस्य काश्यामागमनादि-

विवरणकथनं। मुद्गलस्य उपदेशेन काशीराजस्य वैनायकलोकगमनवृत्तान्तकथनं। काशी-राजगृहागतयोः सनकसनन्दनयोर्बालगणेशदर्शनादिविवरणकथनं। अथ बालगणेशकृतरा-सभासुरकुञ्जरासुरजम्भकासुरादिनिधनकथनं। नरान्तकदेवान्तकादिभिः सार्द्धं बालगणेशस्य समरसंरम्भवर्णनं। तेषां विनाशकथनञ्च। अथ पितरौ स्वावतारप्रयोजननिवेदनेन प्रबोध्य गणनाथस्य अन्तर्द्धानमितिवृत्तान्तकथनं। अथ सिन्धुनामकासुरनिधनार्थं गणेशस्य पार्व्वतीपुत्रत्वेन जन्मग्रहणे निश्चयकथनं। तत्र मैथिलविषयेषु गण्डकीनगरे चक्रपाणिरितिनाम्ना समाख्यातो-नरपतिरासीदिति तद्विवरणकथनं। सिन्धोरुत्पत्त्यादिकथनं। सिन्धुविचेष्टितविधुराणां विबु-धानां दुरवस्थादिवर्णनं। अत्र गणेशं पुत्रत्वेनाधिगन्तुंपार्व्वत्यास्तपस्यादिवर्णनं। गणेशजन्मोत्-सववर्णनं। अलङ्कारदानार्थं हिमालस्य तत्र गमनादिवृत्तान्तकीर्त्तनं। तत्र गणेशस्य हेरम्बेति-नामकरणकथणं। हेरम्बकृतगृध्रासुरवधवृत्तान्तवर्णनं। एवं बालासुरवधवृत्तान्तवर्णनं। मरी-चिकृतगणेशकवचकथनं। गणेशकृतव्योमासुरविनाशकथनं। कमठासुरविनाशकथनं। दुन्दुभि-बधकथनं। गणेशस्य बाल्यलीलावर्णनं। मत्स्यरूपेण दैत्येन गणनाथोजलमध्ये नीत इतिविवर-णकथनं। गणनाथस्य मुखमध्ये गिरिजादीनां ब्रह्माण्डदर्शनवृत्तान्तकीर्त्तनं। क्रीड़ाव्याजेन चञ्च-लासुरस्य स्कन्धारोपितगणनाथस्य पलायनादिवर्णनं। वृकासुरबधकथनं। अथैकदा शिवालय-गमनपूर्व्वकं गणनाथं दृष्ट्वा विमुग्धया अदित्या पुत्रत्वेन तं स्वगृहं नेतुकामया तया सार्द्धं पार्व्व-त्या विवादः समजनीतिवृत्तान्तकीर्त्तनं। विनताप्रसूतादण्डाद् गणेशपादस्पर्शेन विदीर्णतया शिखण्डिन उत्पत्तिकथनं। तस्य गणेशवाहनत्वकथनञ्च। कमलासुरादिबधकथनं। ब्रह्मकृतगणेश-स्तोत्रकथनं। कमण्डलुभवाया नद्या उत्पत्तिकथनं। ब्रह्मणे गणेशस्य विश्वरूपप्रदर्शनविवरणकथ-नञ्च। गणेशस्य मयूरेशेतिनामकथनं। गणेशकृतशतमखमखध्वंसनवृतान्तकीर्त्तनं। गणेशेन सह युद्धवर्णनपुरःसरं यमस्य दर्पहरणवृत्तान्तकीर्त्तनं। सिन्धुदैत्यस्य विनाशादिकीर्त्तनं। मित्रकौस्तुभा-भिधानयोर्दैत्ययोर्निधनवृत्तान्तकीर्त्तनं। पितृसिन्धुसंवादकथनं। गणेशस्य विवाहमहोत्सववव-र्णनं। सिन्दूरोत्पत्तिवृत्तान्तकथनं। गणेशस्य अन्तर्द्धानकथनं। पुनः पार्व्वतीगर्भे गजाननरूपेण जन्मग्रहणादिकथनं। तत्कृतगन्धर्व्वादिपराजयकथनं। पराशरसंवादकथनं। सिन्दूरासुरवि-प्रकृतानां देवादीनां दुरवस्थादिवर्णनपुरःसरं गणेशकृततन्नाशनादिवृत्तान्तकीर्त्तनं। वरेण्यमु-द्दिश्य गजाननस्य सांख्ययोगोपदेशदानविवरणकथनं। कर्म्मयोगादिकथनं। जीवादीनामुत्क्रा-न्त्यादिनिरूपणञ्च। कुष्ठरोगसन्तप्तस्य चन्द्रकान्तस्य रोगशान्तिर्विमानप्राप्तिश्च। हेमकण्ठदर्शन-वर्णनं। गणेशस्तोत्रकीर्त्तनं। पुराणफलश्रुतिकथनं। गणेशगीताकथनञ्च।

---

**No. 2327.** कल्पसूत्रम्, गूढार्थभावसहितम्, वा कल्पसूत्रकल्पद्रुमकलिकासहितम्। Substance, country-made paper, 11 × 6 inches. Folia, 169. Lines, 13—14—15 on a page. Extent, 5,322 ślokas. Character, Nágara. Date, ? Place of deposit, Kákiníyá, Zillá Rangpur, Kumára Mahimáranjana, Ráya Chaudhurí. Appearance, new. Prose. Incorrect.

**Kalpa-sútra** with a commentary named **Kalpa-druma-kaliká** ALIAS **Gúḍárthabháva.** The life of the last Jina Mahávíra, in the Mágadhi language with a Sanskrit paraphrase. The text by Bhadraváhu; the paraphrase by Lakshmívallabha. An English translation of the text was published many years ago by the Oriental Translation Fund.

टीकायाः,—ॐ नमः श्रीअर्हते नमः।

**Beginning.** श्रीवर्द्धमानस्य जिनेश्वरस्य जयन्तु सद्वाक्यसुधाप्रवाहाः।
येषां श्रुतिस्पर्शनजप्रसत्तेर्भव्या भवेयुर्विमलात्मभासः॥
श्रीगौतमो गणधरः प्रकटप्रभावः
सल्लब्धिसिद्धिनिधिरञ्चितवाक्प्रबन्धः।
विघ्नान्धकारहरणे तरणिप्रकाशः
साहाय्यकृद्भवतु मे जिनवीरशिष्यः॥
कल्पद्रुकल्पसूत्रस्य सदर्थफलहेतवे।
कतुरा + + सद्योग्या कलिकेयं प्रकाश्यते॥

श्रीकल्पसूत्रस्य गम्भीरार्थस्य श्रीगुरुप्रसादादर्थः क्रियते। यथा चैत्रमासे कोकिलोमधुरं वक्ति तत्र सहकारमञ्जरी कारणं। — — — — — तत्रादौ श्रीकल्पसिद्धान्तस्य अधिकारत्रयवाचिकेयं गाथा। पुरिम इत्यादि।

मूलस्य,—पुरिमचरमाणकप्पोमंगलं वद्धमाणन्ति तिच्छम्मि। तो परिकहिया जिनगणहराचिथे + बलिचरित्तं॥ अचेनुक उद्देशिय सिज्जायर रायपिण्ड कियकम्मे। वय जिक्ट पभिक्कमणेमा संयज्जोसवणकप्पो॥ इत्यादि।

**End.** मूलस्य,—उसभस्सणं अरहो कोसलियस्स चउरासीगणाः गणहरा होत्व। तेणं कायेणं तेणं समएणं उसभेणं अरहा कोसलीए वीसं पूव्वसयसहस्सां ई कुमारवासमज्झे वसित्ता॥

टीकायाः,—आदीश्वरस्य निर्व्वाणात् एककोटिकोटिः सागरोपमाणां त्रिवर्षसार्द्धाष्टमासद्विचत्वारिंशत्सहस्रवर्षैरूना यदा गता तदा श्रीवीरनिर्व्वाणमभूत्। श्रीवीरनिर्व्वाणात् नवशतमशीतिवर्षैश्च कल्पसूत्रं पुस्तकेषु लिखितमित्यनेन श्रीआदीश्वरस्य पञ्चकल्याणकानि विस्तरेण निरूपितानि॥ इति श्रीआदीश्वरजीवाख्यानं सम्पूर्णं। श्रीरस्तु।

श्रीकल्पसूत्रवरनाममहागमस्य
गूढार्थभावसहितस्य गुणाकरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य
व्याख्यानसप्तममगात् परिपूर्त्तिभावं ॥

शासनाधीश्वरश्रीवर्द्धमानस्वामिगुरुक्रमे गौतमं यावज्जिनदत्तसूरिश्रीजिनकुशलसूरितत्-पट्टानुक्रमे भट्टारकश्रीजिनचन्द्रसूरिजीतत्पट्टालङ्कारवर्त्तमानभट्टारकश्रीजिनहर्षसूरिजीतणी आम्नाये श्रीसङ्घजयवन्तोप्रवर्त्ते ॥ इति सप्तमीवाचना ॥

विषयः । चतुर्विंशतितमतीर्थङ्करस्य महावीरस्य जीवनवृत्तकथनं । तदुक्तजैनधर्म्मवाचनाकीर्त्तनञ्च । तत्र वृषभदेवमहावीरयोः पञ्चमहाव्रतनिरूपणं । अन्येषां द्वाविंशतितीर्थङ्कराणां चत्वारि व्रतानीतिकीर्त्तनं । अथ मोक्षमार्गप्रतिपन्नानां सर्व्वेषां जिनानामाचारभेदे कारणकथनं । कल्पसूत्रश्रवणादिमाहात्म्यकीर्त्तनं ।

---

**No. 2328.** न्यायतरङ्गिणी । Substance, country-made paper, 16 × 4 inches. Folia, 60. Lines, 28 on a page. Extent, 309 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mahimáranjana Ráya Chaudhurí. Appearance, new. Verse. Correct.

**Nyáya-tarañginí.** An exegesis of the Bháshápárichchheda. By Kesáva. The text has been translated into English by Dr. E. Roer in the Bibliotheca Indica.

**Beginning.** तस्मै नमः प्रणवपङ्कजषट्पदाय
श्रीकेशवेश्वरविरिञ्चिपरात्मनेऽस्मिन् ।
सर्व्वञ्च चिन्तितद्युतिप्रतिभाय योऽयं
मन्तव्य एकपुरुषस्त्रिगुणस्त्रिमूर्त्तिः ॥
ओङ्कारकारणगुणार्ज्जितकार्य्यभाव-
श्रीकेशवेश्वरगुरुप्रमितात्मनेऽर्थे ।
तद्भावदर्शितगुणप्रतिभाय तस्मै
कस्मै नमः शाश्वतभास्वतेऽग्रे ॥

— — — — — — — ।

भान्त्युत्थारिततत्त्वमौक्तिकमयी कीर्त्तिस्थिरं प्रीतये
येषावास्तु सतां नचेद्गुरुजनानन्दैः चिरं स्थायिनी ।
आम्नानामथवास्तु वस्तुमननी शम्भोः शिरोभूषणी
मानाभावगवेषणाद्यगरिमश्रेयःश्रिया श्रेयसी ॥

आस्तां न्यायतरङ्गिणी सुललिता ज्ञानेन्दुसान्द्रामृता
पूता पूतजनप्रमोदजनिकानन्दप्रवाहावहा ।
भावाभावविचारतत्त्वमधुरा सिद्धान्तशुद्धाश्रया
स्वर्द्धन्या इव सत्यवित्रपटुतायस्यास्त्वियं सेव्यतां ॥
द्रव्यात्तन्मिगुणक्रियैकरुचिरा सामान्यमान्याग्रतः
स्वव्याहृत्तविशेषशेषगणिता सद्रम्यभावाकृतिः ।
साभावप्रतिभावयुक्तिरचिता तत्त्वप्रसंख्यान्वया
सत्यन्दर्भनिगर्भरत्नविभवा सिद्धान्तसारात्मिका ॥
— — — — — — — — — — ।
द्रव्यं गुणाः कर्म्म तथैवजातिर्विशेष इष्टः समवाय एकः ।
अभाव उक्तः परबोधनार्थस्त्वमर्ममाधुर्य्यरसेनसिद्धः ॥ इत्यादि—

**End.** अस्मात् तत्त्वावधानैः सुकृतिवङ्कतरायासत तेऽपिधीरा-
स्तद्विश्वासैकचित्ताः किमिदमशुभदं वर्त्म संच्छेदयन्ति ।
नानोपायप्रयत्ना अपि च कति कृताः पारमासादयन्तः
संसाराब्धेस्तु सन्तीमुखरितवङ्कलक्षेशरूपोर्म्मिकायाः ॥

**Colophon.** इति श्रीकेशवकृतन्यायतरङ्गिण्यामनुमानप्रमाणपरिच्छेदः सम्पूर्णः ।

**विषयः ।** भाषापरिच्छेदरीत्या द्रव्यगुणकर्म्मसामान्यविशेषसमवायाभावरूपसप्तपदार्थनिरूपणं ।

---

**No. 2329.** सर्व्वसिद्धान्तः । Substance, country-made paper, 13 × 6 inches. Folia, 85. Lines, 12—13—16 on a page. Extent, 3,300 ślokas. Character, Nágara. Date, ? Place of deposit, Kákiníyá, Zillá Rañg-pur, Kumára Mahimáranjana Ráya Chaudhurí. Appearance, new. Prose and verse. Incorrect.

**Sarvasiddhánta.** An essay on the divinity of Rámachandra and the truth of the dual theory of the elder Vedánta. By Rájakumára Vis'vanátha Siñha.

**Beginning.** सान्द्रानन्दसुधाम्बुधेरुदयभूः सत्यप्रतिज्ञावशी
मायेशप्रतिपादकोपनिषदां प्रामाण्यमेव स्वयं ।
सीतालक्ष्मणवायुसूनुसहितः सर्व्वेश्वरेशोविभु-
र्ज्ञानाद्यद्भुतभूरिशक्तिरवतु श्रीरामचन्द्रः स नः ॥
शक्तिः संविदसौ हरेः प्रणयिणी जाय' हरन्ती हर्णां

मुक्ताकुन्द + +न्दुकम्बुमिहिकाकर्पूरकान्तद्युतिः ।
वीणावादनहर्षितार्त्तजगतीहस्ताचमालामति-
हंसीव प्रतिगाहतामविरतं मे मानसं भारती ॥
व्यासव्यासक्तचित्तप्रथितहरिगुणानर्थधारावगाहं
सद्योयोलेखितुं ताननुपममहणं मोदकं मात्वदत्तं ।
शुण्डाग्रे सन्धानत्रुटितरदरयोविघ्नराजोमदीयं
प्रत्यूहं काण्डमस्मिन् हरतु दुरि + + + वमानोदरीयं ॥
पतितोद्धृतिमहिमानः सदयहृदयप्रिया दासगुरुचरणाः ।
विश्वनाथहृदयस्थमतसिद्धान्तं तन्वते स्वयमेव ॥

भो महाराजकुमार विश्वनाथसिंहदेव भवन्निर्म्मितभाषाप्रबन्धरामायणप्रतिपादितश्रीरामपरत्ववैष्णवपरत्वपर्य्यालोचनया बुद्धिमत्प्रवराग्रगणनीयसमधिगतसमस्तवेदान्ततत्त्वभवदमात्यश्रीमद्भोदूलालसततप्रतिपादिताद्वैतमतपर्य्यालोचनया—इत्यादि ।

**End.** चन्द्रलालोऽनिरुद्धोवै युग्मभक्तिप्रवर्त्तकः ।
यतः श्रीराधिकाकृष्णकृपापात्रं हि मद्वपुः ॥
गुरुत्तमस्य केशस्य लियं शुद्धा परम्परा ।
तनोतु मङ्गलान्याशु प्रियादासनिरूपिता ॥
तस्य शिष्योऽस्मदाचार्य्यः परमानन्दरूपवान् ।
भुवने श्रीप्रियादासोनित्यं तस्मैनमोनमः ॥

**Colophon.** इति श्रीगुरुपरम्परा—इति श्रीसर्व्वसिद्धान्ते श्रीमहाराजकुमारश्रीविश्वनाथसिंहविरचिते भिक्षुकाचार्य्यसंवादे पञ्चमः सिद्धान्तः । समाप्तश्चायं ग्रन्थः ॥

विषयः । भगवान् रामचन्द्र एव श्रुतिस्मृतिपुराणदर्शनादिप्रतिपाद्यः सर्व्वतः परः पदार्थ इति सप्रपञ्चप्रपञ्चनं । तत्र श्रीराममूर्त्तेर्नित्यत्वकथनमुखेन ब्रह्मणः साकारत्ववादव्यवस्थापनं । श्रीरामचन्द्रस्योपासनैव सर्व्वतः परमेतिनिरूपणं । मुक्तिरपि श्रीरामचन्द्रादेवेतिनिरूपणं । भक्तिस्वरूपादिनिरूपणं । वैराग्यस्वरूपतद्भेदादिनिरूपणं । भगवन्नामरूपलीलाधामगुणानां नित्यत्वनिर्णयः । भगवतोभक्त्यधीनत्वकथनं । अद्वैतवादखण्डनपुरःसरं विशिष्टाद्वैतवादव्यवस्थापनं । प्रतिविम्ववादखण्डनं । मोक्षस्य ज्ञानानधीनत्वनिरूपणं । जीवस्य उत्क्रान्त्यादिविवेचनं । जीवात्मस्वरूपादिविवेचनं । उपासनास्वरूपादिनिरूपणं । भक्तियोगनिरूपणं । तत्र चक्रादिचिह्नधारणविधिकथनं । ऊर्द्ध्वपुण्ड्रादिधारणविधिकथनं । भगवन्मन्त्रादिनिरूपणं । अर्चनवन्दनादिभक्त्याङ्गनिरूपणं । अतिथिसत्कारविधिकथनं । नैष्ठिकी भजनक्रिया षड्विधेति तन्निरूपणं । भगवद्भक्तेः रसत्वनिरूपणञ्च ।

---

**No. 2330.** कलापतत्त्वार्णवः। Substance, country-made yellow paper. 20 × 3¾ inches. Folia, 63. Lines, 8 on a page. Extent, 2,232 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mahimáranjana Ráya Chaudhurí; also another copy at Iṭákumárí, Zillá Rañgpur, Paṇḍit Yádaveśvara Tarkaratna. Appearance, fresh. Prose. Correct.

**Kalápa-tattvárṇava.** A commentary on the Kátantra grammar. By Raghunandana Ácharya. The codex examined contains only that portion which treats of *Kṛit* affixes.

**Beginning.** प्रणम्य परमं देवं गोपालं चित्तरञ्जनं।
करोमि शब्दशास्त्रस्य प्रवृत्तिं प्रक्रियां शुभां॥
सदर्थामृतलाभाय स्तुक्तिरत्ना + + वृतं।
कलापपूर्वतन्त्रस्य समुद्रः सेव्यतामयं॥
कुनिबन्धानुसन्धानमुत्सृज्य दूरतः खलु।
ग्रान्थोऽयं सेव्यतां साधो मनोजज्ञानहेतवे॥

अथ कृदन्ताः शब्दाः सर्व्ववर्म्मणा कथमव्युत्पादिता वररुचिना वा कथं व्युत्पादिता इति शिष्यजिज्ञासायां प्रतिपादयन्नाह वृत्तादिवदिति। इत्यादि।

**End.** वातविषयाश्चेति वातश्चेत् कर्त्तृत्वेन विषयं करोतीत्यर्थः।

**Colophon.** इति रघुनन्दनाचार्य्यशिरोमणिकृते कलापतत्त्वार्णवे कृत्सु षष्ठः पादः समाप्तः।

विषयः। कातन्त्रीयकृद्वृत्तेर्व्याख्यानम्।

---

**No. 2331.** मण्डपकुण्डसिद्धिः। Substance, country-made yellow paper. 13 × 4½ inches. Folia, 10. Lines, 7 on a page. Extent, 173 ślokas, Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mahimáranjana Ráya Chaudhurí. Appearance, fresh. Verse. Incorrect.

**Maṇḍapa-kuṇḍa-siddhi.** Rules for the erection of altars and halls for sacrificial rites. By Viṭṭhala Díkshita, son of Vara S'armá.

**Beginning.** गाढ़ध्वान्तमनेकभानुजठरे राजत्कलाधारिणि
प्रोद्यच्चक्रकरीयुगं हरदलत्पद्मे + + रावणिः।
स्वर्णाणुङ्गगिरिद्वयाधरचरी दीना कलिन्दात्मजा
पश्यास्वय्यमिदं शिवामिति वदन् स्मेरः शिवः पातु वः॥

छत्याणतिगोत्रे नितरां पवित्रे
पवित्रकर्म्माजनि वूरशर्म्मा ।
तत्सूनुना विट्ठलदीक्षितेन
विरच्यते मण्डपकुण्डसिद्धिः ॥
श्रवोर्ङ्वाद्योः समभूगतस्य
कर्त्तुः शरांशप्रपदोच्छ्रितस्य ।
योवासदस्तोऽस्य जिनांशकोच्चि
स्यादङ्गुलं तत्तद्विभांशका ये ॥ इत्यादि ।

**End.** ग्रन्थे परोक्ते + + दूषणोक्त्या
किं वा गुणोक्त्या विदुषा विचार्य्यं ।
ग्रन्थे मदुक्ते सदसद्विशोध्यं
सर्व्वेस्तु सर्व्वं नहि वेद कश्चित् ॥
अङ्गीकार्य्या मत्कृतिर्निस्तुषेयं
कस्मादेवं पण्डितान् प्रार्थयेऽहं ।
क्षीरं पेयं नीरमेतद्विहाय
कोवा विज्ञं हंससमा+र्थयेत ॥

**Colophon.** इति विट्ठलदीक्षितविरचिता मण्डपकुण्डसिद्धिः समाप्ता ।

विषयः । मण्डपनिर्म्माणप्रक्रियाकथनं । तत्र भूमिनिरूपणादिकथनं । स्तम्भतोरणचूड़ादिनिर्म्माणविधिकथनं । वेदिनिर्म्माणविधिकथनं । कुण्डनिर्म्मानविधिकथनं । तत्र शूल्यसूत्ररीत्या भूक्षेत्रपरिमाणविधिकथनञ्च ।

---

**No. 2332.** मण्डपकुण्डसिद्धिविवृतिः । Substance, country-made yellow paper. 13 × 4½ inches. Folia, 27. Lines, 10 on a page. Extent, 975 ślokas, Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mahimáranjana Ráya Chaudhurí. Appearance, fresh. Prose. Generally correct.

**Maṇḍapa-kuṇḍa-siddhi-vivṛiti.** A commentary on his own treatise on the formation of halls and altars for sacrificial rites. By Viṭṭhala Díkshita, (next preceding No.).

**Beginning.** मत्तमतङ्गजवदनं सादितविघ्नावलीसदनं ।
गौरीहरयोः स्तोकं पालितलोकं सदावलम्बे ॥

कल्याणि वाणि निजपाणिसरोजयुग्मं
संयोज्य देवि करवाणि तव प्रणामं।
मत्तुण्डमण्डललसद्रसनाङ्गणं ते
नृत्याय नृत्यमिदमस्तु रसानुषिक्तं॥
सन्तानकल्पतरुमण्डनमण्डितायां
कुण्डोल्लसज्ज्वलनकाञ्चनवेदिकायां।
सीतारघूद्वहकराकलितैकपाणि-
वैवाहहोमसमये दिशताच्छुभानि॥
कुण्डमण्डपसंसिद्धेर्विवृतिं लिखितोन्निषु।
प्राचीनवाक्यसन्दर्भं सन्दर्शयितुमारभे॥

इह हि शिष्टाः ग्रन्थारम्भे स्वेष्टदेवतानमस्कारादिरूपं मङ्गलमाचरन्ति। तस्मान्माध्यन्दिनीयो दीक्षितविट्ठलशर्म्मा स्वकृतकुण्डसिद्धिं व्याचिख्यासुः स्वाभीष्टदेवतास्मरणमाशीरूपं मङ्गलमाचरति शार्दूलविक्रीडितेन। इत्यादि।

अथ कृतिदिवसमाह।

**End.** शशियुगतिथिगण्ये याति शाके वरेण्ये
विभवशरदि रम्ये मासि शस्ये तपस्ये।
शशधरसुतिदस्ये मुख्यपक्षेऽवलक्षे
कमलनयनतिथ्यां भानुमद्वारवत्यां॥

**Colophon.** इति सङ्गमजेरस्थविट्ठलदीक्षितरचिता स्वकृतमण्डपकुण्डसिद्धविवृतिः सम्पूर्णा।

विषयः। निजकृतमण्डपकुण्डसिद्धेर्व्याख्यानम्।

---

**No. 2333.** ऋभुगीता। Substance, country-made paper, 14 × 4 inches. Folia, 52. Lines, 10 on a page. Extent, 1,300 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mahimárañjana Ráya Chaudhurí. Appearance, fresh. Verse. Incorrect.

**Ribhugítá.** A series of lectures on the adual doctrine of the later Vedánta. By Ṛibhu, who descends from the region of Brahmá, and, in the company of Sanatkumára, repairs to the Badaríkás'rama, where he expounds the doctrine for the edification of the sages assembled there. An imitation of the Bhagavadgítá.

**Beginning.** चैतन्यमात्रं ब्रह्मैव आत्मा केवलमद्वयः ।
परमानन्दरूपं वा अखण्डैकरसः परः ॥
पुरा सर्व्वे ब्रह्मनिष्ठाः कदाचिन्मिलिताः परे ।
सनत्कुमारमागत्य पप्रच्छुर्ज्ञानमुत्तमं ॥
मुनय ऊचुः ।
भगवन् सर्व्वतत्त्वज्ञ आत्मज्ञानं मत्ता + + ।
उक्तं भगवता सर्व्वमद्वैतं परमाद्भुतं ॥ इत्यादि ।

**End.** मायाकार्य्यञ्च माया वा नास्ति नास्ति न संशयः ।
ज्ञानं वा ज्ञानभेदं वा नास्ति नास्ति न संशयः ।
सर्व्वं प्रपञ्चं हेयञ्च प्रोक्तं प्रकरणञ्च ते ।
यस्य श्रवणमात्रेण आत्माकारं प्रपद्यते ॥

**Colophon.** इति श्रीऋभुगीतायां प्रपञ्चहेयत्वप्रकरणं नाम सप्तविंशतितमोऽध्यायः ॥ ॥ २७ ॥

विषयः । १ प्रथमाध्याये,—सनत्कुमारेण सह ऋषीणां संवादेन ब्रह्मलोकादिनिर्गतस्य ऋभोर्वदरिकाश्रमगमनपूर्व्वकं निदाघगृहगमनवृत्तान्तकीर्त्तनं । निदाघं प्रति ऋभोरुपदेशदान-कथनं । तत्र आत्मस्वरूपनिरूपणं । २ अध्याये,—जगतोब्रह्मात्मकत्वादनात्मकत्वाभावकथनं । ३ ये अध्याये,—आत्मनोब्रह्मरूपत्वात् सर्व्वात्मकत्वनिरूपणं । ४ र्थे अध्याये,—प्रपञ्चमिथ्यात्व-प्रपञ्चनं । ५ मे अध्याये,—ब्रह्मणो अभिन्नत्वेन जीवात्मनः स्वरूपनिर्णयः । ६ ष्ठे अध्याये,—वेदवाक्य-व्रत-भुवन-भवनादीनां मिथ्यात्वप्रपञ्चनं । ७ मे अध्याये,—सर्व्वस्य वस्तुनश्चिन्मात्रत्व-निरूपणं । ८ मे अध्याये,—सर्व्वस्य जगतः अखण्डैकरसत्वनिरूपणं । ९ मे अध्याये,—स्वानु-भवप्रकारकथनं । १० मे अध्याये,—प्रपञ्चस्य शशविषाणतुल्यत्वकथनं । ११ शे अध्याये,—देहा-त्मवादनिन्दनं । मन एव बन्धहेतुरितिनिरूपणं । सङ्कल्पस्यैव महामोहतापत्रयाद्यात्मकत्व-कथनं । १२ शे अध्याये,—अहं ब्रह्मास्मीतिज्ञानमेव महास्नानमितिनिरूपणं । १३ शे अध्या-ये,—ब्रह्मतर्पणविधिकथनं । १४ शे अध्याये,—आत्महोमविधिकथनं । १५ शे अध्याये,—ब्रह्मज्ञानस्वरूपकथनं । जीवन्मुक्तस्वरूपकथनञ्च । १६ शे अध्याये,—विदेहमुक्तिनिरूपणं । १७ शे अध्याये,—आत्मनोऽन्यन्न किञ्चिदस्तीतिनिरूपणं । १८ शे अध्याये,—सच्चिन्मयत्वनिरू-पणं । १९ शे अध्याये,—ब्रह्मैव सत्यमितिनिरूपणं । २० शे अध्याये—सर्व्वमसदेवेतिनिरूप-णं । २१ शे अध्याये,—अस्मदादिपदार्थस्य चिद्रूपत्वनिरूपणं । २२ शे अध्याये सर्व्वस्य प्रप-ञ्चस्य द्वैताद्वैतशून्यत्वनिरूपणं । २३ शे अध्याये,—ब्रह्मानुभवस्वरूपकथनं । २४, २५ शे अध्याये,—सर्व्वानुभवप्रकारकथनं । २६ शे अध्याये,—मोक्षोपायादिनिरूपणं । २७ शे अध्याये,—सर्व्वस्य प्रपञ्चस्य हेयत्वनिरूपणञ्च ।

**No. 2334.** वेदगर्भः। MS. seen by the Political Agent of Manipur.

**Vedagarbha** or "the Womb of the Vedas," a dissertation on the nature, character, meaning, and use as the only means of salvation of the mystic syllable Om. Anonymous.

ॐ गायत्रीकल्पाः।

**Beginning.** ॐकारस्य त्रयं रूपं श्वेतं पीतञ्च लोहितं।
उकारे कृतं पापं ॐकारोद्दहते क्षणात् ॥ १ ॥
उकार चम्पकं वर्णं ब्रह्मविष्णुशिवार्चितं।
ब्रह्महत्याकृतं पापं उकारोद्दहते क्षणात् ॥ २ ॥

**End.** नास्त्येव कल्पकल्पान्ते समः स्वर्गं महीयते।
प्रणवं गीयते नित्यं जपेत् सर्व्वत्र योनरः॥
न तस्य हानिर्जायेत सर्व्वत्र विजयी भवेत्।
इति वेदगर्भे द्वैपायनेनोक्ते प्रणयनंख्या(?) प्रस्तुतः॥

**Colophon.** इति वेदगर्भः समाप्तः।

विषयः। ॐकारस्य माहात्म्यं।

---

**No. 2335.** होमतत्त्वं। MS. seen by the Political Agent of Manipur.

**Homatattva.** A manual for the performance of the Homa rite in connection with various sacrifices. Anonymous.

ॐ ब्रह्मणे नमः।

**Beginning.** अथ होमतत्त्वप्रयोगः। आचार्य्योऽलङ्कृतोहोममण्डपमागत्य सामान्यार्घं विधाय द्वारपूजां कुर्य्यात्। गृहं प्रविश्य तत्तत्कल्पोक्तदेवतां ऐशान्यां दिशि हस्तप्रमाणां वेदिकां विधाय तदुपरि घटं संस्थाप्य यथाशक्ति संपूज्य वीक्षणादिभिः कुण्डं संस्कुर्य्यात्।

**End.** सर्व्वत्राष्टाहुतीर्जुहुयात् एवंक्रमेण तं परमशिवे संहृत्य पुनः सृष्टिवर्णनात् वेदाहुतीर्जुहुक्रमेण जनयेत् (जुहुयात्)। तद्यथा मन्त्रध्वानोभुवनाध्वानस्तमाध्वानः कलाध्वानः एवं क्रमेण जनयेत् (जुहुयात्)।

**Colophon.** इति होमतत्त्वविधिः समाप्तः।

---

**No. 2336. विक्रमभारतम, प्रभवादिकल्पः ।** Substance, country-made yellow paper, 22 × 4 inches. Folia, 402. Lines, 10 on a page. Extent, 6,015 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mahimáranjana Ráya Chaudhurí. Appearance, new. Verse. Generally correct.

**Vikrama-bhárata.** An imitation of the Mahábhárata, giving a description of India as it was under Vikramáditya, designed to extol the worship of S'iva as the supreme divinity, and abounding in illustrative stories and accounts of places dedicated to S'iva. By Rájá Sambhúchandra Ráya, a zemindar in the district of Rañgpur, at the early part of this century. The codex professes to comprise only the part which refers to creation and early history, and is called *Prabhavádi-kalpa.*

**Beginning.** वाक्यार्थाविव योजितौ द्रुहिणनिर्म्माणेतरौ भास्वरौ
शब्दार्थाविव किं तड़िद्द्युतिशरन्मेघद्युतिद्योतितौ ।
सिन्दूराद्रिपयोनिधी युगपदेकस्मिन् समेतौ नु किं
वन्देऽहं परमेश्वरौ शिवकरौ तावर्द्धनारीश्वरौ ॥

— — — — — — — — — — — ।

तमन्तरङ्गेण विवेशयन्तं सदाशिवं चेतसि चित्तविज्ञः ।
पुरा पुरारीच्चणकर्म्ममानसः श्रीब्रह्महंसोमुनिरेक आसीत् ॥
तमापतन्तं सहसा तरस्वी तपस्विनामुत्तममुत्तमश्रीः ।
ज्वलद्धुताशप्रतिमाङ्घ्रिसन्निधौ ज्वलद्धुताशप्रतिमः पपात ॥

— — — — — — — — — — — — — ।

सुखोपविष्टं तं शान्तं प्रसन्नमुखपङ्कजं ।
पप्रच्छ मुनिशार्दूलः पुष्पाञ्जलिपुरःसरः ॥
मेरुपृष्ठ उवाच ।
राजतोनो भयं किञ्चिद्दैवतेनोपसर्गतः ।
शुभं तीर्थजनानां + मङ्गलं तेऽधुना सदा ॥
तपोभिर्वर्द्धते किं नो मुन्यन्नं ते गृहागतं ।
दृषदृष्टस्य धान्यस्य तण्डुलः स्वस्तिवाचनं ॥

— — — — — — — — — ।

ब्रह्महंस उवाच ।
तस्मिन् शासति राज्येऽस्मिन् राजनि श्रीनिकेतने ।
कुतोऽकाले महानिद्रा कुतः पापभयं महत् ॥

किं राजा स न येरचेत् प्रजाः स्त्रीयप्रजासमाः ।
प्रजायां चेमयुक्तायां राजा चेमसमन्वितः ॥
विशेषतः सदाचारं द्विजातीनां विशिष्यते ।
सदाचारान्मनुष्याणां सम्पदः स्युर्निरापदः ॥ इत्यादि ।

**End.** शैवी कथा परमविक्रमभारताख्या
सर्व्वं पुनाति भुवनं परिगीयमाना ।
याराध्यते भवनिबन्धनमोचनाय
ब्रह्मादिभिः सुरगणैः सततादरेण ॥
श्रीशम्भुचन्द्रनृपतेर्हृदयारविन्दे
यद्यन्निगूहितमभूदितिहासवृत्तं ।
यत्वाण्डजीवलसदण्डकदम्बकं तत्
प्रोद्भीयमानमधुना मम बुद्धियोगात् ॥

**Colophon.** इति श्रीमच्छिवायने विक्रमभारते शतसाहस्त्र्यां शाम्भवसंहितायां प्रभवादिकल्पे षट्संवादसन्दर्भे नन्दीश्वरस्य चतुर्व्यूहानुकीर्त्तनं नाम चतुःषष्टितमोऽध्यायः । समाप्तश्चायं प्रभवादिकल्पः ।

विषयः । १—२ अध्याये,—मेरुपृष्ठेन सह ब्रह्महंसस्य संवादेन विक्रमादित्यस्य माहात्म्यादिकीर्त्तनं । बौद्धधर्म्माभ्युदयकाले शौनकादीनां धर्म्मारण्यपरित्यागविवरणकथनं । सात्त्विकपूजाविधिकथनं । धर्म्मवसुसंवादेन वाकदार्व्वमुनिकर्त्तृकविक्रमभारताख्यानकीर्त्तनं । ३—५ अध्याये,—अमरावतीवर्णनं । इन्द्रकर्त्तृकविक्रमादित्यप्रशंसावर्णनं । तत्रैकदा मृगयाप्रवृत्तस्य विक्रमादित्यस्य पुरतः परीचार्थमिन्द्रस्य व्याघ्ररूपेण उपस्थितिविवरणकथनं । तदाक्रमणभीतस्यैव मुनिकुमाररूपस्य धर्म्मस्य शरणत्वेन विक्रमादित्याश्रयणविवरणकथनं । विक्रमादित्यस्य व्याघ्रं प्रति उपदिष्ट स्त्रीयमांसप्रदानञ्च । ६—१० अध्याये,—जयायै दुर्गायाः शापदानादिवृत्तान्तकीर्त्तनं । राजर्षेर्ऋषभदेवस्य कन्यात्वेन तस्याः जन्मादिकथनं । विक्रमादित्यस्य उत्पत्तिकथनं । नन्दीश्वरस्य भृङ्गिरीटेर्ज्जन्मकथनं । जयायाः शापमोचनकथनं । उत्कलराजविलापवर्णनं । तत्पत्न्यां शैव्यायां पुत्रचतुष्टयजन्मकथनादिकञ्च । ११—१३ अध्याये,—भृङ्गिरीटेर्मातामहालयगमनवृत्तान्तकथनं । ऋषभदेवस्य अष्टादशपुत्रवृत्तान्तकीर्त्तनं । पुलहाश्रमे तेषां विद्यालाभादिकथनं । भृङ्गिरीटिकृतदैत्यद्वयवधकथनं । भद्रशिलाग्रामे तस्य प्रस्थानकथनं । वत्सराजकल्पराजयोर्युद्धवर्णनं । भृङ्गिरीटिं प्रति दुर्व्वाससः शापदानादिकथनं । शापमुक्तस्य तस्य दक्षालयवासविवरणकथनं । १४—१६ अध्याये,—दक्षस्य स्वप्नदर्शनेन विस्मितस्य हिमालयगमनपूर्व्वकं महादेवप्रीत्यर्थं तपस्यादिवर्णनं । दक्षयज्ञारम्भः । तत्र सतीसताशयोः संवादेन सत्याः क्रोधादिवर्णनं । दक्षोक्तिश्रवणेन तस्याः प्राणत्यागादिविवरणकथनञ्च । दक्षस्य मेषमुद्ध

त्वादिप्राप्तिकथनं। ध्रुवस्य वंशे दक्षस्य पुनरुत्पत्तिकथनं। १७—२४ अध्याये,—नारदं प्रति दक्षस्य शापदानवृत्तान्तकथनं। दधीचिना सह संवादे दक्षस्य क्रोधादिकथनं। चन्द्रभागानदीतीरे तपश्चरतोऽष्टर्ङ्गिरीटेः विमानलाभादिवर्णनं। तेन सह दक्षस्य कैलासगमनादिवृत्तान्तकीर्त्तनं। दक्षशापेन नन्दिनोवानरास्यताप्राप्तिकथनं। पृथ्व्यवतरणपूर्व्वकं नन्दिनोविष्णुचक्राराधनविश्वकर्म्माराधनादिवृत्तान्तकथनं। सौभरेः पुरीनिर्म्माणादिवृत्तान्तकथनं। २५—३१ अध्याये,—संक्षेपेण रामायणकथनं। नन्दिकृतमहादेवस्तोत्रादिकथनं। महादेवं प्रति नन्दिनः काकुवाक्यकथनादिकं। अवन्तीदेशमाहात्म्यकीर्त्तनं। नन्दिनं प्रति शिवस्य विविधप्रबोधदानकथनं। विक्रमादित्यजन्मकथनं। नवरत्नकथनं। गायकनामादिकथनं। महावीरप्रभृतीनां जन्मकथनं। ३२—३७ अध्याये,—अवन्तीनगरसीमादिकथनं। अवन्तीमालवादिनामनिर्व्वचनं। अवन्तीकन्याविवरणकथनं। होमशीलव्योमशीलयोरुपाख्यानकथनं। शताश्वराजस्य उपाख्यानकीर्त्तनं। गुल्मकोपाख्यानकथनं। क्षेमकासुरस्य तपस्यादिवर्णनं। वज्रदंष्ट्रमूषिकेण सह तस्य बन्धुत्वकरणकथनं। उज्जयिनीशब्दव्युत्पत्तिकथनं। धाराशब्दव्युत्पत्तिकथनं। पञ्चशिखसमाख्यस्य गन्धर्व्वस्य नृपतेः जयत्सेनस्य समीपे शुभङ्करनाम्ना परिचयदानविवरणकथनं। जयत्सेनस्य शक्रेण सह समरार्थं अमरावतीगमनादिविवरणकथनं। ३८—४१ अध्याये,—होमशीलव्योमशीलाभ्यां मुनिवेशधारिणोदैत्यस्य कस्यचिद्वधवर्णनं। दूलूपाख्यानकीर्त्तनं। देवखानामुत्पत्तिकथनं। कोङ्कवेङ्कासुरयोर्युद्धवर्णनं। सान्दीपनेरुपाख्यानकथनं। गिरिव्रजपुराधिपस्य नन्दिवर्द्धनस्य राज्ञ उपाख्यानकथनं। विल्वभुजोवृत्तान्तकीर्त्तनं। गार्ग्येण सह सिंहवसुसंवादकथनं। इन्द्रद्युम्नविष्णुवर्म्मणोर्विरोधविवरणं। तत्र दारुमयमूर्त्तिस्थापनकथनं। स्तम्भस्य मुण्डानामकीर्त्तनञ्च। ४२—४९ अध्याये,—महासेनस्य खड्गलाभकथनं। अङ्गारकासुरकन्यापरिणयवर्णनञ्च। वासवदत्तागर्भान्नरवाहनदत्तस्योत्पत्तिकथनं। शर्किलककर्कटकपानकनिधनवृत्तान्तकीर्त्तनं। तत्र राज्ये चारुदत्तस्य नियोग इति विवरणकथनञ्च। गोपालपुत्रस्य राज्याभिषेकवर्णनं। सप्तपद्मोपाख्यानकीर्त्तनं। दार्व्वाघाटस्य विवरणकथनं। वर्षाङ्कुरस्य वृत्तान्तकथनं। आस्तिकोपाख्यानकथनं। क्षेमधुरविवरणकथनं। गणपतिराजवृत्तान्तकथनं। क्षेमधन्वन उपाख्यानकथनं। तेन सह पिशाचानां संवादकथनञ्च। ५०—५४ अध्याये,—पुलोमागर्भे लक्ष्मीजन्मकथनं। पद्मगर्भे पुलोमायाः गर्भमोचनवृत्तान्तकीर्त्तनं। अदितिपुत्रत्वेन विष्णोर्जन्मग्रहणकथनं। लक्ष्मीनारायणविवाहमहोत्सववर्णनं। यज्ञपत्नीदक्षिणाविवरणं। कीचकस्य जन्म तथा अंशुमत्या सह विवाह इति विवरणकथनं। अनरण्यकन्यायाः पद्मावत्या विवरणकथनं। नर्म्मदाया नद्या जन्मकथनं। तस्या मित्रावरुणेन सह विवाहवर्णनञ्च। चुम्बलोत्पत्तौ रन्तिदेवस्य विवरणकथनं। शोणभद्रनामकस्य नदस्य उत्पत्तिकथनं। (विक्रमभारतीयप्रभवादिकल्पस्य विवरणम्।) ५५—५७ अध्याये,—प्रह्लादस्य जन्मादिवृत्तान्तकथनं। शिप्रानदीमाहात्म्यादिकथनं। राज्ञः शूरसेनस्य राज्ये मर्म्मठासुरचेष्टितादिवर्णनं। तत्र मत्स्यसूक्तविवरणकथनं। मानमित्रकन्याहरणादिकथनं। मर्म्मठक-

तमायापुरीनिर्म्माणादिविवरणकथनं। मार्कण्डेयोपाख्यानकथनं। अहिच्छत्रदेशाधिपयोः कलहन्तबलहन्तनामकयोर्विवरणकथनं। पञ्चशिखमुनिवृत्तान्तकीर्त्तनं। ५८—६४ अध्याये,—फेणानद्युपाख्यानकीर्त्तनं। सूर्य्यवंशकथनं। कटाहविवरणकथनं। कालज्ञानकथनं. प्रणवोत्पत्तिकथनं। हिरण्यगर्भादीनां जन्मकथनं। तत्त्वज्ञाननिरूपणं। ब्रह्मस्वरूपादिनिरूपणं। प्रकृतिभेदकथनं। लिङ्गशरीरादिनिरूपणं। पञ्चकोषविवेचनं। जीवात्मपरात्मनोरभेदचिन्तनप्रकारकथनं। महावाक्यार्थकथनं। पञ्चकुमारजन्मादिकथनं, नन्दिनवृत्तवृत्तान्तनिरूपणं। ग्रन्थफलश्रुतिकीर्त्तनञ्च।

---

**No. 2337.** विक्रमभारतम्, शैशवादिकल्पः। Substance, country-made yellow paper, 22 × 4 inches. Folia, 286. Lines, 10 on a page. Extent, 7,494 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Kumára Mohimáranjana Ráya Chaudhurí. Appearance, new. Verse. Correct.

**Vikrama-bhárata.** A second part of the work described under the next preceding No. It is entitled *S'ais'avádi-kalpa.*

**Beginning.** शम्भुं स्वयम्भुं संनम्य कार्त्तिकेयं गणेश्वरं।
गौरीं सरस्वतीं लक्ष्मीं ततोजयमुदीरयेत्॥
ॐ तत् सत् परमं ब्रह्म त्रिगुणोदयसम्भवं।
भारती भारती यस्य ब्रह्म यन्मुखमण्डलात्॥
— — — — — — — — — — —।

मेरुपृष्ठ उवाच।
ब्रह्महंस श्रुतोऽस्माभिः सत्कल्पः प्रभवादिकः।
शिवकल्पा वयं सर्व्वे शिवकल्पाद्भवादृशात्॥
— — — — — — — — — — — —।

कथमाकलितः पूर्व्वं सत्कल्पः शैशवादिकः।
किं किं विचित्रा परमा कथा तत्र विराजते॥
विशेषं श्रोतुमिच्छामोब्रह्महंस निगद्यतां॥
साङ्गोपाङ्गेन भगवन् अलं मादृग्विलम्बनैः॥
ब्रह्महंस उवाच।
— — — — — — — — — — —।

कलिकल्मषदग्धं श्रीमद्विक्रमभारतं।

यस्यवक्ता स्वयं देवोधर्म्माधर्म्मविदाम्बर ॥
श्रोतारोवसवः सर्व्वे तत्र किन्न मनोरमं ।
सत्कल्पः कल्पितः पूर्व्वं विशेषात् शैशवादिकः ।
तमहं वः प्रवच्यामि यथाक्रमपरिग्रहात् ॥
— — — — — — — — — — ।
प्रमारनामातिबलप्रवीरोयोवह्निवंशोद्भव उग्रकर्म्मा ।
तद्वंशरत्ने पुरुषप्रवीरोरत्नं वभौ श्रीयुतविक्रमाख्यः ॥ इत्यादि ।

**End.** अतः स्त्रैणदोषं विनाशस्य मूलं
सदाहं प्रमण्ये नितान्तञ्च जन्तोः ।
न शातं न मानं भवेत् तस्य कस्मिन्
परं निन्दनं सन्ततं तस्य भूयात् ॥ १८३ ॥
अनेनैव रूपेण मे वाक्यवृन्दं
सदा ये सुमर्त्याः प्रकुर्व्वन्ति पानं ।
न तेषां कदाचित् कुतश्चित् कथञ्चित्
जनैर्निन्दनीया धरायां भवन्ति ॥ १८४ ॥

**Colophon.** इति श्रीमच्छिवायने विक्रमभारते शतसाहस्त्र्यां शाम्भवसंहितायां शैशवादिकल्पे ब्रह्महंससंवादे अवन्तीराजावल्यां दण्डिराजचरिते स्त्रैणतावर्णने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

विषयः । (ग्रन्थोयं काकिनीयाधिपतेः शम्भुचन्द्ररायचतुर्धुरीणस्य कृतिरिति ज्ञेयं ।) तत्र १—३ अध्याये,—अग्निवंशीयप्रमारनामकराजवंशे विक्रमादित्यजन्मकथनप्रसङ्गेन संक्षेपात् भारतयुद्धोद्यमे वीराणां निधनविवरणकथनपूर्व्वकं मगधाधिपतेः महापद्मस्य राज्यकाले भारतवर्षीयदुर्भाग्यराचिवर्णनं । ४—७ अध्याये,—वृचत्तुर्नामकस्य नरपतेः राज्यशासनसमये सप्तस्वप्नदर्शनवृत्तान्तवर्णनं । तत्परतः स्वप्नवृत्तान्तकथनार्थं आजमीरदेशवासव्यस्य पुष्करनामकस्य द्विजस्य समागमादिकथनं । तत्र वैवस्वतकल्पीयप्रलयोपवर्णनं । जलप्लावनोपाख्यानकल्पनाकीर्त्तनं । ८—१२ अध्याये,—वृचत्तुषोराज्ये अनावृष्टिनिवन्धनं प्रजानां दुःखवाहुल्यं राजकृतप्रवोधस्वेतिवर्णनं । दुर्भिक्षादिवर्णनं । बौद्धानां प्रादुर्भाववर्णनं । नेपालादिदेशे बौद्धधर्म्मविस्तारकथनं । बौद्धधर्म्मदेशनामकथनमुखेन जलशरावन्यायस्वरूपकथनं । १३—१५ अध्याये,—बौद्धधर्म्मावलम्बिना दामवेलेन सह आर्य्यधर्म्मरतस्य कटस्य शास्त्रार्थकथनादिकं । निरीश्वरसांख्योत्पत्तिकथनं । तत्र कपिलस्य जन्मादिविवरणकथनञ्च । माध्यमिक-योगाचार-वैभाषिक सौत्रान्तिकरूपचतुष्टयबौद्धानां मतनिरूपणादिकं । जैनधर्म्मोत्पत्तिकथनं । तन्मतविस्तारकथनञ्च । १६—२१, अध्याये,—प्रमारादिवीचचतुष्टयजन्मादिवृत्तान्तकीर्त्तनं । तेषां परिषद्ग-

णोत्पत्तिकथनं। बौद्धराजेन सह समरसन्नद्धनवर्णनञ्च। अथ विस्तरेण जालपर्व्वसुतत्तनुमुखचन्द्र-हत्तान्तकीर्त्तनं। तत्र जलम्पुराश्रितश्यामदुर्गाभिगमनविवरणकथनं। ११—१९ अध्याये,—तातारदेशस्थभीमचूड़ादिनरपतीनां युद्धादिवर्णनं। तत्रणयत्रणाभ्यां सह जालपर्व्वणोबन्धन-विवरणकथनं। जालपर्व्वादीनां शिवसन्दर्शनादिहत्तान्तकथनं। बौद्धधर्म्मपरित्यागानन्तरं तेषां शैवधर्म्मग्रहणविवरणकथनञ्च। जालपर्व्वभूपालस्य मोचनहत्तान्तकथनं। सन्धिकरणविवरणक-थनं। २०—२१ अध्याये,—जालपर्व्ववंशजातानां शिलीमुखादीनां पुनर्युद्धोद्योगहत्तान्तक-थनं। वेदविद्यापारगेण सह चक्रापीड़ादीनां संवादकथनं। तत्र भञ्जरापत्तनसमाक्रमणविव-रणकथनं। चेत्रपार्श्वादिदिव्यचतुष्टयबन्धनहत्तान्तकीर्त्तनं। कोलारसाभिधानस्य नरपतेः विज-यहत्तान्तकनं। बौद्धमतिबालारणाचार्य्यस्योपदेशेन पुनः युद्धोत्साहवर्णनादिकं। २२—३० बौद्धवैदिकयुद्धे इन्द्रस्य पुनः प्रबोधदानकथनं। सप्तकबन्धविजयहत्तान्तकीर्त्तनं। नेपालाधीश्व-रस्य हाम्बीरस्य तथा श्रावस्तिनगराधिपतेः तत्रकस्य च विवरणकथनं। छ्ठासुरस्य दौरात्म्या-दिकथनं। मगधराज्ये चन्द्रवंशीयानां सारणादीनां आधिपत्यादिकथनं। अवन्तीदेशीयरा-जावलीकथनं। सावित्रीविवाहकथनं। ३८—४२ अध्याये,—कुन्तसेनादिद्वादशराजचरित्र-वर्णनं। दण्डिराजचरित्रवर्णनं। तत्र अश्विनीलाभहत्तान्तकथनञ्च। सिलुनदीतीरे श्रीकृष्णेण सह समरसंरम्भे काश्मीराधिपतेः दामोदरस्य निधनप्राप्तिविवरणकीर्त्तनं। दण्डिराजस्य अश्वि-नीदानपराङ्मुखस्य श्रीकृष्णात्पराजयादिप्राप्तिकथनं। स्त्रैणतायाः दुःखपरिणामत्वनिरूपणञ्च।

---

**No. 2338.** श्रीश्वरीमहाकाव्यम्, वा सप्तशतीकाव्यम्। Substance, country-made paper, 16 × 4 inches. Folia, 80. Lines, 5 on a page. Extent, 994 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Gopáleśvara Bhaṭṭáchárya. Appearance, new. Verse. Correct.

**S'ríśvarí-mahákávya** ALIAS **Saptaśatí-kávya**. An epic poem founded on the incidents described in the Chaṇḍí section of the Márkaṇḍeya-puráṇa. By S'rís'vara Vidyálañkára.

**Beginning.** पुष्पगन्धाविव शिवौ चन्द्रचन्द्रकराविव।
जगतोऽभ्युदयाकारौ तौ वन्दे पितरौ वरौ॥
इयं याभ्यां सप्तशती स्वर्गमर्त्यगताभवत्।
महौषधिसमृद्ध्यर्थं शशाङ्कादिव चन्द्रिका॥ युग्मं।
सर्व्वसाधारणा या च पुण्या श्रीश्वरवाङ्मयी।
विवस्वानिव सर्व्वेषां दृष्टिरोधान्धकारहृत्॥
निहन्त्याकर्णनाद्या च पापं पापविभेदिनी।

देवीमाहात्म्यवाग्वादे नदी गङ्गेव पावनी ॥
सा वस्तुशक्त्या हरतु साङ्गा व्याङ्गापि पातकं ।
असम्यगुदितोप्युष्णि सवितेव तमस्ततिं ॥
चैत्रवंशे वभौ पूर्व्वमपूर्व्वगुणगौरवः ।
सुरथः सुरथाख्यानो वह्नीनामिव पावकः ॥ इत्यादि ।

**End.** काशीनामवतस्ततः स्तुतिरियं पुण्याभिगुप्ताभवद्यावत्सन्ति यथार्थपाठकम-णाखि+स्य सन्ध्यागमे सेदानीमभिवक्ष्यते फलतवखसात् फलं लभ्यतां साक्षादध्ययनाख्यवंशघ-टमासंवहनैः काङ्क्षितं ॥

**Colophon.** इति श्रीश्रीश्वरीये महाकाव्ये सप्तशत्यां वरप्रदानोनाम द्वादशःसर्गः । समाप्तमिदं सप्तशतीकाव्यं ।

विषयः । (मार्कण्डेयपुराणीयदेवीमाहात्म्यमवलम्ब्य विरचितमिदं महाकाव्यं ।) तत्र १ प्रथमे सर्गे सुरथस्य राज्ञः जन्मादिवर्णनं । समाधिना सह तस्य समागमः । मेधसाश्रमवर्णनं । मधुकैटभयोरुत्पत्तिः । भगवता सार्द्धं तयोर्युद्धं निधनञ्च । २ये सर्गे,—महिषासुरविप्रकृतानां देवानां विलापादिवर्णनं । महामायोत्पत्तिः । महिषासुरसैन्यवर्णनं । देव्याः समरसंरम्भवर्णनञ्च । ३ये सर्गे,—महिषासुरनिधनवर्णनं । ४र्थे सर्गे,—निशुम्भशुम्भादीनां जन्मचेष्टितादिवर्णनं । हिमालयवर्णनं । ५मे सर्गे,—देवगणकृतमहामायास्तोत्रवर्णनं । ६ष्ठे सर्गे,—देव्या दूतसंवाद-कथनं । ७मे सर्गे,—धूम्रलोचनचण्डमुण्डादिभिः सह देव्या युद्धवर्णनं । कालिकाया आविर्भा-वकथनञ्च । ८मे सर्गे,—शुम्भादीनां युद्धोद्यमवर्णनं । सैन्यवर्णनञ्च । ९मे सर्गे,—रक्तवीजव-धवर्णनं । १०मे सर्गे,—निशुम्भस्य समरसंरम्भवर्णनं । तन्निधनवर्णनञ्च । ११शे सर्गे,—शुम्भ-वधवर्णनं । १२शे सर्गे,—समाधिसुरथयोस्तपस्यावर्णनं । वरलाभकथनञ्च ।

---

**No. 2339.** शिवकुसुमाञ्जलिः । Substance, country-made paper, 14 × 4 inches. Folia, 9. Lines, 4 on a page. Extent, 72 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Gopáleśvara Bhaṭṭáchárya. Appearance, new. Verse. Correct.

**S'iva-kusumáñjalí.** A hymn in praise of S'iva. By S'rís'vara Vidyálañkára.

**Beginning.** रजतसदृशवर्णं सर्पसंशोभिकर्णं
फणिमणिकृतहारं मूर्त्तिमन्मुक्त्यगारं ।
त्रिभवनजनरम्यं केवलं ज्ञानगम्यं
भजत परमहंसं चारुचन्द्रावतंसं ॥ इत्यादि ।

**End.** अयं ते पद्योरस्तु वाक्प्रसूनाञ्जलिर्द्वयोः ।
योग्योवा यदि वायोग्योन किं मूढाभिशंसनं ॥

**Colophon.** इति श्रीश्रीश्वरविद्यालङ्कारकृतशिवकुसुमाञ्जलिः समाप्तः ।

**विषयः ।** स्तोत्रव्याजेन शिवरूपमाहात्म्यादिकीर्त्तनं ।

---

**No. 2340.** सूर्य्यशतकम् । Substance, country-made paper, 15 × 3¼ inches. Folia, 24. Lines, 5 on a page. Extent, 265 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Gopáleśvara Bhaṭṭáchárya. Appearance, new. Verse. Correct.

**Súrya-śataka.** A century of verses forming a hymn in praise of Súrya, the sun-god. By S'rís'vara Vidyálañkára. This is of course distinct from the hymn of this name by Mayúra Bhaṭṭa.

**Beginning.** निर्लक्ष्यं व्याप्तविश्वं पुर इव विलसद्ब्रह्मणोरूपमुक्तं
दृष्टं नासीत्त + + + + + + + विषये संशयोनः प्रवीणः ।
आकाशे यद्गभस्तकिरणैर्वर्त्तयन् दिक्प्रकाशं
बिम्बाकारोभ्रमति परमोहंस एकोऽभ्युदेत्य ॥ इत्यादि ।

**End.** पुनश्चापि प्रसरितुमलं कन्यकामिच्छया वा
स्वे चेचे चेत् चरितरजसि ग्राहयेत् शुक्रमेकं।
नित्यं सैषा प्रभवति पुनर्नूतनं भर्त्तृभोगे
पादन्यासैस्खलितपुरुषा मञ्जुमञ्जीररावैः ॥

**Colophon.** इति श्रीश्रीश्वरीयं सूर्य्यशतकं समाप्तं ।

**विषयः ।** स्तोत्रव्याजेन सूर्य्यस्य मङ्गलमाहात्म्यादिवर्णनं ।

---

**No. 2341.** देवीशतकम् । Substance, country-made paper, 15 × 4 inches. Folia, 30. Lines, 4 on a page. Extent, 262 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur Gopáleśvara Bhaṭṭáchárya. Appearance, new. Verse. Correct.

**Deví-śataka.** A century of verses forming a hymn in praise of the Deví in the form of S'yámá. By S'rís'vara Vidyálañkára.

**Beginning.** अये चेतोऽत्र भ्रमसि किमलं चौद्रकधिया
त्वयान्वेनाद्यापि प्रक्षतमधु पुष्पे न निचितं ।

भक्तिन्याः श्यामाया हरहृदयपद्माकरवने
मधूद्वेलं पद्मं पद्ममधिगतं वापि च यतः ॥ इत्यादि ।

**End.** मयि रसनिमग्नमपि स्खलिते
भवहृदये न तावदारोपय चरणं ।
तद्यदि हृदयग्राहिणी रसहृदये मयि धेहि यावदस्खलितं ॥

**Colophon.** इति श्रीश्रीश्वरीयं देवीशतकं समाप्तं ।

**विषयः ।** श्लोकव्याजेन श्यामायाः रूपमाहात्म्यादिवर्णनं ।

---

**No. 2342.** कुलमुक्तिकल्लोलिनी । Substance, country-made paper, 13 × 8 inches. Folia, 80. Lines, 15 on a page. Extent, 3,205 ślokas. Character, Nágara. Date, ? Place of deposit, Kákiníyá, Zillá Rangpur, Paṇḍit Kamalápati Miśra. Appearance, fresh. Prose and verse. Incorrect.

**Kulamukti-kallolinî.** A digest of the rules regarding rites, sacrifices, ceremonies, and sacraments enjoined in the Tantras for the followers of the Kaula sect of the S áktas. By Ádyánanda.

**Beginning.** अथ तत्त्वरूपा वेरकपे जातवामदेव ऋचाशिवं + वाग्भवं भगशब्दान्ते । इत्यादि ।

**End.** कल्लोलिनीचलितबोधसहस्रपत्र-
प्रोद्यन्मधुक्रमगकालिकाष्टकसंज्ञाः
+ + थिनः सरभ संप्रपिबन्तु नित्यं
गुर्व्वङ्घ्रिपद्मभजनात् तदपीह लभ्यं ॥

**Colophon.** इति श्रीमदाद्यानन्दविरचितकुलमुक्तिकल्लोलिनी समाप्ता ।

**विषयः ।** कुलदीक्षाविधिकथनपूर्व्वकं षट्कर्म्मादिसाधनप्रकारकीर्त्तनं ।

---

**No. 2343.** उद्धारकोषः । Substance, country-made paper, 15 × 5 inches. Folia, 20. Lines, 8 on a page. Extent, 494 ślokas. Character, Nágara. Date, ? Place of deposit, Kákiníyá, Zillá Rangpur, Kamalápati Miśra. Appearance, new. Prose and verse. Incorrect.

**Uddhára-kosha.** A treatise on the derivation, meaning, and use of the mystic mantras of Deví, Gaṇes'a, and other S'ákta divinities,

including rituals for their worship. By Dakshinámúrti. The authorities quoted are the leading Tantras.

ईश्वर उवाच ।

**Beginning** एकदा स्फटिकैरम्ये सन्तानैश्च समाकुले ।
संस्थितौ पार्व्वतीशानौ लोकरचणतत्परौ ॥
पार्व्वती परमेशानं प्रोवाच परमं हितं ।
देव देव सुरश्रेष्ठ दयाचैगुण्यमानस ।
देवी भगवती देव महाचिपुरसुन्दरी ।
अस्मिन् सरोवरेऽव्यक्ता पुरा केन प्रकाशिता । इत्यादि ।

**End.** तथा सप्तकुमाराणां ध्यानं तच विनिश्चितं ।
तथा भेदविहीनानां शृणु पार्व्वति तत्त्वतः ॥

**Colophon.** इति श्रीदक्षिणामूर्त्तिविरचिते उद्धारकोषे षष्ठपटलः ।

विषयः । शक्तिगणेशादिमन्त्रोद्धारप्रकारकथनपूर्व्वकं ध्यानादिकथनं ।

---

**No. 2344.** शुद्धिस्मृतिः । Substance, country-made paper, 16 × 3½ inches. Folia, 25. Lines, 5 on a page. Extent, 281 ślokas. Character, Bengali. Date, ? Place of deposit, Kákiníyá, Zillá Rañgpur, Sríśvara Vidyálañkára. Appearance, new. Verse. Correct.

**S'uddhi-smṛiti.** A digest of the Smṛiti rules regarding impurities of the person resulting from death or birth in one's family. By S rís'vara Vidyálankára.

**Beginning.** नदीशमङ्गामवलम्ब्य तिष्ठतां
यत् स्वर्धुनी कारणवारिसत्क्रियां ।
स्वकेशवं केशवकृत् स्वभावतो-
विभेदतत्तामथवा नदीड़े ॥ इत्यादि ।

**End.** भर्त्तुः शिष्यस्ततः स्यात्तत इह कथितस्तातवंशस्ततः स्यात्
+ त्तवंशद्विजाः स्युस्तत इह कथिता उत्तमासे यदीह ।
स्त्रीणां प्रेतक्रियायां क्रमश इति चतुर्व्विंशतिर्व्यक्तयस्ता
शश्वत् तत्त्वं विलोक्य स्युरिह विलिखितास्तत्त्वमूलाः समाप्ताः ॥

**Colophon.** इति श्रीश्रीश्वरविद्यालङ्कारविरचिता शुद्धिस्मृतिः समाप्ता ।

विषयः । अशौचव्यवस्थादिकथनं ।

---

**No. 2345.** कारकचक्रम्। Substance, country-made yellow paper, 15 × 3½ inches. Folia, 13. Lines, 8 on a page. Extent, 383 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabháṇḍár, Zillá Rañgpur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Káraka-chakra.** An epitome of the rules relating to the use of the Sañskṛit cases. By Purushottama Deva.

**Beginning.** मुनिं प्रणम्य सर्व्वज्ञं सर्व्वज्ञानप्रकाशकं।
बालानां कथ्यतेऽर्थाय मया कारकचक्रकं॥
निमित्तं कारकं प्रोक्तं तथा कार्य्यमपेक्षते।
कार्य्यकारणसम्बन्धाद्विचारः सुप्‌तिङन्तयोः॥
सुप्‌तिङन्तं पदमित्यत्र सुविति स्वादयः सप्त विभक्तयोऽष्टधान्ते। इत्यादि।

**End.** तथापि करणादिकारकानुरोधेन अश्रूयमाणापि क्रिया गम्यत इत्यदोषः।

**Colophon.** इति महामहोपाध्यायश्रीपुरुषोत्तमदेवविरचितकारकचक्रं समाप्तं॥

विषयः। कारकस्वरूपनिरूपणपूर्व्वकं कर्तृकर्म्मादिलक्षणविवेचनमुखेन विभक्त्यर्थकीर्त्तनं।

---

**No. 2346.** जातमार्त्तण्डः। Substance, country-made yellow paper, 16 × 4 inches. Folia, 135. Lines, 6 on a page. Extent, 2,713 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabháṇḍára, Zillá Rañgpur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose and verse. Correct.

**Játa-mártaṇḍa.** A summary of judicial astrology for the preparation of horoscopes. By Práṇakrishṇa.

**Beginning.** आलोक्य विविधं ग्रन्थं प्राणकृष्णेन धीमता।
जातमार्त्तण्डमाख्यातं? क्रियते ग्रन्थसंग्रहः॥
प्रथमतोवेलानिर्णयः।
पच्छायां द्विगुणं कृत्वा चतुर्द्दशसमन्वितं।
पञ्चग्रहकरैर्भागं लब्धदण्डस्थितं पलम्॥
मताक्षरं। इत्यादि।

**End.** शशिनि च कुजदृष्टे बोधनोवल्लभः स्यात्,
सकलगुणनिधानः सर्व्वशास्त्रेषु पूज्यः।

प्रचुरयुवतिभर्त्ता सर्व्वसन्तोषकर्त्ता,
धनद इव धनेन प्राणदा स्यादिपूणाम्॥

विषयः। वेलानिरूपणोपायकथनं। लग्नमानादिकथयनं। तत्र षड्वर्गनिर्णयः। क्षेत्राधिपनिर्णयः। होरानिर्णयः। द्रेक्काणनिर्णयः। नवांशादिनिर्णयः। जारजयोगनिर्णयः। पितृवेद्देशेन बालकजन्मकथनं। यमन-नाल-गण्डयोगादिकथनं। शिशुरिष्टिनिरूपणं। नाशयोगकथनं। मातृरिष्ट्यादिनिरूपणं। ग्रहाणां बलदृष्ट्यादिनिरूपणं। दीर्घजीवि-अपुत्रक-मृतापत्य-तुङ्ग-ग्रह-जीवयोगादिनिर्णयः। तथा सिंहासनयोग-डमरुयोग-चतुःसागरादिविविधयोगनिरूपणं। एवं सर्पाघातयोग-जलजन्तुयोग-सपत्नीयोगादिनिर्णयः। अधिमित्रादिनिर्णयः। वर्गोत्तमादिफलकथनं। तन्वादिद्वादशभावनिरूपणं। धनस्थान-भ्रातृस्थान-बन्धुस्थान-सुतस्थान-लाभस्थानादिनिरूपणं। लग्नफलकथनं। वार-तिथि-नक्षत्र-योग-करण-मास-पक्ष-ऋतु-राशि-गण-वर्णादिफलकथनं। आयुर्निर्णयः। पताकान्तर्दशादिनिरूपणं। अष्टवर्गादिनिरूपणं। पञ्चस्वरादिनिरूपणं। दशावर्षविभागादिकथनं। रविचन्द्रादीनामन्तर्दशानिरूपणं। साङ्केतिकनिदाननिर्णयः। कुत्र कस्य मृत्युर्भविष्यतीति तन्निरूपणं। चरस्थिरराशिनिधनादिफलकथनं। स्त्रीजातकेऽपत्यचिन्तनं। राशीनां गोचरादिफलकीर्त्तनं। ग्रहाणां गोचरफलकथनं। सर्व्वग्रहदृष्टिफलकथनं।

---

**No. 2347.** उपसर्गविचारः। Substance, country-made yellow paper, 17 × $3\frac{1}{2}$ inches. Folia, 3. Lines, 6 on a page. Extent, 47 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándára, Zillá Rañgpur, Ráya Ramanímohana Chaudhurí, Bahádur. Appearance, new. Prose. Correct.

**Upasarga-vichára.** On the meanings, uses and logical influences of Upasarga prefixes. By Gadádhara.

**Beginning.** अथोपसर्गविचारः। प्रायुपसर्गो वाचको द्योतको वेति चेदत्राचार्य्यानुयायिनः। उपसर्गो द्योतक एव न तु वाचकः। द्योतकत्वञ्च धातोः प्रक्रियायां तात्पर्य्यग्राहकत्वं। इत्यादि।

**End.** यत्र धातुलोपोजनितस्वार्थप्रत्ययस्यानुभवसिद्धत्वात्।

**Colophon.** इति श्रीगदाधरविरचित उपसर्गविचारः समाप्तः।

विषयः। प्रादीनामुपसर्गाणां द्योतकत्ववादव्यवस्थापनपूर्व्वकं प्रत्येकं तेषामर्थनिरूपणं।

---

**No. 2348.** वैदिकसर्व्वस्वं । Substance, country-made yellow paper, 16 × 4 inches. Folia, 56. Lines, 6 on a page. Extent, 116 ślokas. Character, Bengali. Date, Sk. 1787. Place of deposit, Tushabhándára, Zillá Rañg-pur, Ráya Ramaṇímohana Chaudhuri, Bahádur. Appearance, new. Prose and verse. Correct.

**Vaidika-sarvasva.** On the images of Vaishṇava divinities, their materials, formation, consecration and adoration, giving in detail all the rites and ceremonies to be observed in the consecration of such images and temples designed for them. By Kṛishṇánandadeva Vidyálañkára. The work was composed about 20 years ago.

**Beginning.** वासुदेवं नमस्कृत्य नमस्कृत्य गुरोः पदं ।
सर्व्वस्वं वैदिकानान्तु क्रियते धीरसम्मतं ॥
हयशीर्षादिकं दृष्ट्वा श्रीकृष्णानन्दशर्म्मणा ।
प्रमाणं वासुदेवस्य प्रतिष्ठायां वितन्यते ॥

इत्यादि ।

**End.** कुर्य्यात् स्वस्तिकवच्छेषमिति चक्राब्जमण्डलं ।

**Colophon.** इति श्रीकृष्णानन्दवेदविद्यालङ्कारकृतौ वैदिकसर्व्वस्वे वस्तुप्रतिष्ठाप्रमाण-तत्त्वं समाप्तम् ।

नत्वा श्रीवासुदेवं सुरमुनिभिः स्तूयमानं मुरारिं
शाके सप्तागसप्तोडुपतिपरिमिते माधवे मासि यत्नात्
कृष्णानन्दप्रणीतं सकलबुधमतं भूमिदेवः सुतार्थं
सर्व्वस्वं वैदिकानां प्रविलिखति मुदा श्रीयुतः श्रीप्रसादः ॥

विषयः । वासुदेवमूर्त्तिकथनं । केशवमूर्त्तिलक्षणं । नारायणमूर्त्तिलक्षणं । माधवमूर्त्ति-लक्षणं । गोविन्दमूर्त्तिलक्षणं । विष्णुमूर्त्तिलक्षणं । मधुसूदनमूर्त्तिलक्षणं । वामनमूर्त्तिलक्षणं । श्रीधरमूर्त्तिलक्षणं । हृषीकेशमूर्त्तिलक्षणं । पद्मनाभमूर्त्तिलक्षणं । दामोदरमूर्त्तिलक्षणं । तथा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपचतुर्व्यूहमूर्त्तिलक्षणञ्च । प्रतिष्ठालक्षणं । देवागारविधिकथनं । तत्र भूमिशोधनविधिः । वास्तुपातालयागविधिः । प्रतिष्ठाकालादिनिरूपणं । मण्डपादिप्रमाण-कथनं । ब्रह्माचार्य्यसदस्ययजमानादिलक्षणकथनं । पञ्चगव्यपञ्चामृतादिप्रमाणं । परिधान-वस्त्रपवित्रादिप्रमाणं । तिलकनिर्णयः । आचमननियमकथनं । श्रुकस्रुवमेक्षणदर्व्वीसमिध्भद्र-पीठचमसप्रोक्षणीगरुड़तोरणशान्तिकुम्भादिप्रमाणकथनं । कुण्डनिर्म्माणविधिकथनं । अग्निजि-ह्वादिकथनं । अग्निनामानि । सर्व्वतोभद्रमण्डल-लवनाभमण्डलादिविधिकथनं । एकाशीति-कलशप्रमाणं । अङ्कुश-चक्र-महाध्वज-पताका-वितानादिप्रमाणकथनं । दीपप्रमाणं । स्नानविधि-

कथनं। सकलीकरणविधिः। अग्निजननविधिः। अनुकल्पविधिः। चलाचलमूर्त्तिप्रतिष्ठा-विधिः। दक्षिणानिरूपणं। वस्त्रप्रतिष्ठाविधिः। तत्र नामग्रहप्रमाणकथनं। चक्राब्जमण्डल-निरूपणञ्च।

---

**No. 2349.** ऋग्वेदिवृषोत्सर्गतत्त्वं। Substance, country-made yellow paper, 20 × 4 inches. Folium, 1. containing 10 lines of writing. Extent, 19 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhándára, Zillá Rañgpur, Ráya Ramaṇímohana Chaudhurí, Báhádur; another copy at S'ántipur Bhuvaneśvara Tarkálañkára. Appearance, new. Prose and verse. Correct.

**Rigvediya-vṛishotsarga-tattva.** On the consecration of bulls according to the rules of the Ṛig Veda as summarised by Saunaka. By Raghunandana Bhaṭṭácharya. This forms a part of the author's well-known Smṛiti digest in 28 parts.

**Beginning.** प्रणम्य सच्चिदानन्दं रामं कामदमीश्वरं।
ऋग्वेदिनां वृषोत्सर्गं वक्ति श्रीरघुनन्दनः॥
कालमाह। कार्त्तिक्यां पौर्णमास्यां वैशाख्यां वा जीववत्सायाः पयस्विन्याः पुत्रं द्विहाय-नमेकहायनं वा नीलं बभ्रुं पिङ्गलं वा—इत्यादि।

**End.** तेन देवता ऋषीन् पितृंश्च प्रीणाति यथोक्तदक्षिणेदित्याह शौनकः। ब्राह्मणान् भोजयित्वा शेषं समापयेत्।

**Colophon.** इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं ऋग्वेदिवृषोत्सर्गतत्त्वं समाप्तम्।

विषयः। शौनकोक्तविधिना संक्षेपेण ऋग्वेदिनां वृषोत्सर्गविधिकीर्त्तनं।

---

**No. 2350.** व्यवस्थासेतुः। Substance, country-made yellow paper, 20 × 4 inches. Folia, 162. Lines, 6 on a page. Extent, 3,864 ślokas. Character, Bengali. Date, Sk. 1771. Place of deposit, Tushabhándára, Zillá Rañgpur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose and verse. Correct.

**Vyavasthásetu.** *Responsa prudentum* on all topics of Smṛiti rites, ceremonies and expiations—in short a digest of Smṛiti rules bearing on householders. By I's'varachandra S'armá.

**Beginning.** प्रणम्य परमात्मानं सच्चिदानन्दविग्रहं ।
ईश्वरेण व्यवस्थायाः सेतुः सम्यग्वितन्यते ॥

अथ प्रायशः सङ्कल्पानामेव कर्म्मणामारम्भकत्वादादौ स एव निरूप्यते । तथाहि काय-वाङ्मनोभिः रचितं कर्म्म फलाय समर्थमिति श्रुत्या एषा सत्यमुक्तं । इत्यादि ।

**End.** दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन । इति वचनात् । — — — — — हरिचन्दनं कम्बलकं चन्दनविशेषः ।

**Colophon.** इति महोपाध्यायश्रीयुक्तेश्वरचन्द्रशर्म्मविरचितो व्यवस्थासेतुः समाप्तः ।
नत्वा शैलसुतासुतस्य चरणौ विघ्नौघनाशौ प्रभो ।
शाके चन्द्रसमुद्रसप्तशशिमे कर्कटके पूषणि ।
श्रीयुक्तेश्वरशर्म्मरचितं नानाव्यवस्थान्वितं
सेतुं प्रत्यलिखन्मुदा परमया श्रीश्रीप्रसादो द्विजः ॥

**विषयः ।** सङ्कल्पस्वरूपनिरूपणं । तस्य कर्म्माङ्गत्वनिरूपणं । तदकरणे दोषकथनञ्च । मासाद्युल्लेखावश्यकतानिरूपणं । गौणमासादिनिरूपणं । कर्म्मविशेषे मासविशेषनियमनं । मलमासादिलक्षणविवेचनं । उपवाससङ्कल्पविचारः । विधिस्वरूपविवेचनं । निषेधपर्य्युदास-विवेचनं । विकल्पनिरूपणं । अनुकल्पनिरूपणं । तिथियुग्मव्यवस्थानिरूपणं । जन्मतिथि-व्यवस्थानिरूपणं । दुरदृष्टसूचकयोगतदुपशमनविधिकथनं । शूद्रस्य पौराणिकमन्त्रे अधिकार-कथनं । जन्ममासे क्षौरादिनिषेधकथनं । प्रतिपदादिषु तिथिषु प्रत्येकं कृत्यनिरूपणं । सर्व्व-काम्यकर्म्मादौ ग्रहपूजाविधानं । वैशाखशुक्लतृतीयायां गङ्गास्नानयवश्राद्धजगन्नाथदर्शनेषु विशेषकथनं । वरदाचतुर्थीविधिः । नष्टचन्द्रविधिः । नागपञ्चमीविधिः । अरण्यषष्ठी-विधिः । स्कन्दषष्ठीविधिः । आरोग्यसप्तमीविधिः । विधानसप्तमीविधिः । माकरीसप्तमी-विधिः । माघस्नानविधिः । जन्माष्टमीनिरूपणं अत्र उपवासासामर्थ्ये प्रतिप्रसवः । दूर्व्वा-ष्टमीविधिः । भीष्माष्टमीविधिः । अशोकाष्टमीविधिः । श्रीरामनवमीविधिः । दुर्गोत्सव-विधिः । चण्डीपाठादिक्रमकथनं । बोधननवमीविधिः । होमनियमः । चातुर्मास्यव्रतविधिः । हरिशयनादिव्यवस्था । श्रवणद्वादशीविधिः । वारुणत्रयोदशीविधिः । सावित्रीव्रतविधिः । अनन्तव्रतविधिः । भूतचतुर्दशी-रटन्ती-यमतर्पणविधिः । तत्र कालीपूजाविधिः । पाषाण-चतुर्दशीविधिः । शिवरात्रिविधिः । मदनचतुर्दशीविधिः । महाज्यैष्ठीविधिः । कोजागर-विधिः । दोलयात्राविधिः । सङ्क्रान्तिनिरूपणं । कार्त्तिककृत्यनिरूपणं । ग्रहणनिरूपणं । अक्षया स्नानविधिः । करतोयास्नानादिविधिः । अर्द्धोदययोगः । युगाद्याविधिः । मन्वन्तराविधिः । भूमिसुवर्णदानादिविधिः । उद्वाहनिर्णयः । तत्र बान्धवादिनिरूपणं । प्रायश्चित्तव्यवस्था-कथनं । अतिपातकमहापातकानुपातकोपपातकप्रायश्चित्तकथनं । गोवधादिप्रायश्चित्तकथनं । धेनुमूल्यादिनिरूपणं । गोमूल्यं । वृषमूल्यं । प्रायश्चित्तपूर्व्वाहकृत्यं । बाल्यादिभेदेन प्रायश्चित्त-

भेदः। गर्भिणीगोवधादिप्रायश्चित्तं। अस्थिभङ्गप्रायश्चित्तं। अपालनप्रायश्चित्तं। द्विजातीनां स्वयं हत्यादिवाहनप्रायश्चित्तं। गोमांसभक्षके गोविक्रयादिप्रायश्चित्तं। गोवधापवादः। क्षत्रियादिवधप्रायश्चित्तं। स्त्रीवधप्रायश्चित्तं। गर्भवधप्रायश्चित्तं। मार्ज्जारादिवधप्रायश्चित्तं। मत्स्यादिवधप्रायश्चित्तं। मण्डपोद्यानादिभेदनप्रायश्चित्तं। अभिचारप्रायश्चित्तं। अभक्ष्यभक्षणप्रायश्चित्तं। अथ अनध्यायविवेचनं। अकालवृष्टिव्यवस्था। शूद्रकर्त्तृकतर्पणवाक्यं। शुद्धिव्यवस्था। शुद्धिपदार्थनिरूपणं। सहमरणानुमरणव्यवस्था। अशौचनिरूपणं। मृत्युविशेषाशौचं। अशौचापवादः। अस्थिचयनादिकालः। द्रव्यशुद्धिनिरूपणं। पर्णनरदाहव्यवस्था। मुमूर्षुकृत्यं। प्रेततर्पणव्यवस्था। तत्र उपवासव्यवस्था। पुत्रस्य वर्षकृत्यव्यवस्था। पिण्डदानव्यवस्था। अशौचान्तदिनकृत्यनिरूपणं। तद्द्वितीयदिनकृत्यं। वृषोत्सर्गकालः। वृषलक्षणादिकथनं। अधिकारिनिरूपणं। चन्दनधेनुप्रयोगः। अङ्गप्रायश्चित्तादिकथनं। षोड़शदानविधिः। प्रेतक्रियाधिकारिणः। अतिदिष्टपुत्रकरणाधिकारकथनं। त्रिविधसूतक्रियानिरूपणं। हरिवंशशालग्रामादिदानविधिः। गोविन्दविवाहपद्धतिः। अथ श्राद्धलक्षणादिविवेचनं। देवतालक्षणं। यागलक्षणं। साहित्यलक्षणं। तन्त्रतालक्षणं। नवान्नश्राद्धकालः। शस्त्रहतचतुर्द्दशीविधिः। अष्टकाश्राद्धविधिः। श्राद्धवेलानिरूपणं। मलमासश्राद्धनिरूपणं। मलमासे दुर्गोत्सवव्यवस्था। वृषोत्सर्गव्यवस्था। जातकर्म्मव्यवस्था। प्रायश्चित्तादिव्यवस्था च। निरवकाशकर्म्मणां कर्त्तव्यताकथनं। मलमासे निषिद्धानि। प्रतिमासं पार्व्वणानुष्ठाने असमर्थस्य पार्व्वणव्यवस्था। दर्भादिनिरूपणं। आमश्राद्धव्यवस्था। जीवत्पितृकश्राद्धव्यवस्था। मासिककालः। सपिण्डनापकर्षकालः। विप्रपतितादिश्राद्धकालः। भर्त्तुरब्दिके रजस्वलाव्यवस्था। एकोद्दिष्टश्राद्धकालादिकथनं। अम्बुघटश्राद्धविधिः। त्रिदण्डिसन्न्यासिनां मरणे तेषां पूर्व्वाश्रमपुत्रकृत्यनिरूपणं। वृद्धिश्राद्धव्यवस्था। श्राद्धशेषभोजनादिव्यवस्थाकथनञ्च।

---

**No. 2351.** **महार्णवः।** Substance, country-made paper, 19 × 4 inches. Folia, 205. Lines, 8 on a page. Extent, 9,384 ślokas. Character, Bengali. Date, ? Place of deposit, Tushabhāṇḍára, Zillá Rañgpur, Ráya Ramaṇímohana Chaudhurí, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Mahárṇava** On diseases and sufferings resulting from sins committed in former existences and expiations suited for them. Every disease has its cause in a particular sin, and each sin has to be expiated in a particular specified manner. By Vis'ves'vara Bhaṭṭa, son of Poñga Bhaṭṭa. The ordinary technical name for works of this class is *Karmavipáka* or "fruition of work."

**Beginning.** नमः सकलकल्याणभाजनाय पिनाकिने ।
नमोलक्ष्मीनिवासाय देवतायै गिरां नमः ॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः ।
परा शीलं साध्यं जगति कृजवस्ते कतिपये ।
चिरं चित्ते येषां स्वकरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥
माता पुण्यचरित्रकीर्त्तिविभवा यः पार्थिवानां मतः
साकल्यापरमूर्त्तिरार्य्यचरितः श्रीपोङ्गभट्टः पिता ।
सोऽयं कौशिकवंशभूषणमणिः श्रीभट्टविश्वेश्वरो-
वेदे स्मार्त्तमते नये च सपदे वाक्ये कृतौ वर्द्धते ॥
श्रुतिस्मृतिपुराणानि समालोक्य यथामति ।
निबध्यते समासेन + + + र्थं महार्णवः ॥
स्वकर्म्मपाकजनितामयकर्षितानां
सत्कर्म्म कर्म्मकरमित्युदितं मुनीन्द्रैः ।
तस्माङ्गजातमितरोक्तविधावपेक्षं
वक्ष्यामि रोगिनिखिलार्त्तिनिवर्हणाय ॥

अत्र तावद्वक्ष्यमाणसकलकर्म्मोपयोगित्वे कर्म्मविपाक + + + + + + अवश्य-कर्त्तव्यता प्रतिपाद्यते । इत्यादि ।

अथ प्रार्थनामन्त्रः ।

**End.** त्वय्यद्य तोषिते स्कन्दे वलिभिस्तूपकल्हभिः ।
तेन महेश्वरस्तुष्टस्त्वमव्याः सततं शिशुं ॥

त्वमव्याः सततं नरमित्यपि पाठः ।

**Colophon.** इति श्रीपोङ्गभट्टात्मजश्रीविश्वेश्वरभट्टविरचिते महार्णवाभिधाने कर्म्म-विपाके प्रकारान्तरेण स्कन्दग्रहहरं ।

विषयः । अथ रोगादिरूपफलनाशस्येष्टत्वात् तन्निदानात्मकदुरितापूर्व्वनाशाय प्राय-श्चित्तादिकं कर्त्तव्यमिति चेन्न समवायिकारणशरीरनाशेनैव तस्य रोगादेर्नाशे किं नित्यका-रणदुरितापूर्व्वनाशेन । यथा,—कपालादिनाशेनैव घटादीनां नाशोन तु दण्डचक्रादि-नाशेन । नच सहजसिद्धं कौनख्यादिकं प्रत्यादेष्टुं शक्यते । अपिच नरकतिर्य्यग्योन्यादि-जन्यदुःखपरम्परामनुभूतवतः कौनख्यादिकोविकारस्वरमं फलम् । तत उत्पन्नमात्रेण रोगेण स्वकारणदुरितापूर्व्वनाशोजन्यते मन्थनजनिताशुशुक्षणिनेव अरणिचयः । तस्मान्न पापवि-नाशार्थं व्रतचर्य्येतिविप्रतिपत्तिनिरासपूर्व्वकं सम्भावितदुरितापूर्व्वविनाशार्थं प्रायश्चित्तादिकं

कर्त्तव्यमिति निरूपणं। महापातकादिरोगकथनं। कर्म्मविपाकपरिभाषाकथनं। व्रताङ्ग-
निरूपणं। सर्व्वपापनाशनकुष्माण्डहोमकथनं। अनुवाकपाठसहस्रतत्प्रयोगादिकथनं। वेद-
विशेषे प्रयोगविशेषकथनञ्च। अथ मन्त्रपाठानुष्ठानक्रमसहितगणहोमकथनं। रोगनाशन-
कामेन व्याधिप्रतिकृतिदानं कर्त्तव्यमितिनिरूपणं। व्याधिप्रतिमालक्षणादिकथनं। प्रतिमादान-
विधेः सस्रक्तपाठप्रयोगकथनं। अथ कर्म्मज-दोषज-उभयजभेदात् व्याधेस्त्रैविध्यनिरूपणं। सा-
मान्यतस्तदुपशमनविधिकथनं। तत्र अश्वत्थानुमन्त्रणविधिकथनं। वेदपारायणविधिकथनं
महासौरसूक्तादिपारायणविधिकथनं। श्रीरुद्रमहारुद्रादिविधिकथनं। अथ होमीयस्थण्डिल-
कुण्डादिनिर्म्माणविधानकथनं। पञ्चाङ्गरुद्रन्यासविधिकथनं। रुद्राभिषेकविधिकथनं। शत-
रुद्रीयपाठक्रमकथनं। तत्र रोगनाशनादिकामनाविशेषे अनुवाकविशेषप्रयोगकथनञ्च। अथ
पुरुषसूक्तप्रयोगकथनं। अथ सामान्यतोरोगप्रशमनार्थं विष्णुसहस्रनामकथनं। अपामार्ज्जन-
स्तोत्रकथनं। विष्णुहृदयस्तोत्रकथनं। विनायकशान्तिविधिकथनं। ग्रहशान्तिविधिकथनं।
नवग्रहयज्ञप्रयोगकथनञ्च। अथ कर्म्मविपाकप्रकरणोक्तहेमरूप्यधान्यादिमानकथनं। कृच्छ्र-
चान्द्रायणादिलक्षणकथनं। महाशान्तपनलक्षणकथनं। पराकव्रतयावकव्रतपयोव्रतादिलक्षण-
कथनं। व्रतादीनामनुकल्पविधानं। गोमूल्यादिकथनञ्च। व्रतविशेषे स्नानविशेषकथनं।
तच जलस्नान-भस्मस्नान-मृत्तिकास्नान-गोमूत्र-गोमय-दधि-दुग्ध घृतस्नानविधिमन्त्रादिकथनञ्च।
गोदान-भूमिदान-लवण-गुड़ादिदानविधिकथनं। अथ महापातकादिजनितरोगानां निदा-
नकथनपूर्व्वकं प्रत्येकं तदुपशमनविधिकथनं। तत्र विशेषेण क्षयरोगनाशनार्थं कदलीदान-
विधिकथनं। राजयक्ष्मप्रतिकृतिदानविधिः। गुड़धेन्वादिदानविधिकथनञ्च। शूलरोगना-
शनाय त्रिशूलदानादिविधिः। अथ अरुचिशूल-अजीर्णशूल-शौचशूल-जठरशूल-कटिशूल-
दन्तशूल-कर्णशूल-नयनशूलादिनाशनोपायकथनं। विविधज्वरनाशनविधिः। तत्र सर्व्वज्वर-
हरकुण्डदानविधिः। ज्वरतर्पणादिविधिकथनञ्च। श्वासकासहरणार्थं ध्वजपाशदानादिविधिः।
शोथरोगहरवस्त्रादिदानविधिः। पाण्डुरोगहरपृथ्वीदानादिविधिः। अन्त्रहरनारायणादि-
विधिः। गतिव्रणघ्नगजादिदानविधिः। वातव्याधिहरमृगादिदानविधिः। अपस्माररोगहर-
विनायकादिदानविधिः। मुखरोगहरगजादिदानविधिः। मूकत्वहरतिलपद्मादिदानविधिः।
गद्गदहरसरस्वतीदानविधिः। अक्षिवेदनाहरगरुड़ादिदानविधिः। नक्तान्धहरगोपालदान-
विधिः। जलोदरहरमकरादिदानविधिः। मन्दाग्निहरमेषादिदानविधिः। प्रज्ञाजाड्यहर-
घण्टादानादिविधिः। प्रमेहहरसुवर्णधेनुदानविधिः। ग्रहणीहरधेनदानादिविधिः। दद्रु-
रोगहरोमहेश्वरदानविधिः। कुष्ठरोगहरवृषादिदानविधिः। गर्भस्रावहरयज्ञोपवीतादिदान-
विधिः। एवं सर्व्वेषु रोगेषु प्रशमनोपायकथनं। तथा सर्व्वदा दुःखहर-सर्व्वकार्य्यासिद्धिहर-
दशाकरगमनक्लेशहर-दारिद्र्यहर-मूर्खत्वहर-पिशाचत्वहरविधानादिकथनं। विविधग्रहहर-
विधिकथनं। तत्र तत्र निदानकथनञ्च।

---

**No. 2252.** **समासवादः।** Substance, country-made paper, 16 × 5 inches. Folia, 9. Lines, 11 on a page. Extent, 262 ślokas. Character, Maithili. Date, ? Place of deposit, Tavká, Post Delsiñsarái, Zillá Darbhañgá, Mímáñsaka Chitradhara Miśra. Appearance, old. Prose. Correct.

**Samása-váda.** A grammatico-logical disquisition on the compounding of words. By Rámabhadra Sárvabhauma. There is a second work of this name, noticed by Mr. Hall, (p. 61), by Jayaráma Nyáya-panchánana Bhattácharya.

**Beginning.** अथ बहुव्रीहौ चित्रगुमानयेत्यादौ चित्रगोःस्वामिनं बोधने गोपदस्य चित्रपदस्य ? उभयपदस्य वा चित्रगोः स्वामिनि लक्षणायामेकपदवैयर्थ्यप्रसङ्गात् । इत्यादि ।

**End.** लक्षणया विनाप्युपपत्तिर्भवतीति संक्षेपः ।

विचार्य + र्यैः सततं नवीनै-
स्तर्काटवीसञ्चरणप्रवीणैः ।
श्रीसार्व्वभौमैर्बहुवादविज्ञैः
कृतः समासेन समासवादः ॥

**Colophon.** इति श्रीमन्महामहोपाध्यायश्रीरामभद्रसार्व्वभौमविरचितः समासवादः समाप्तः ।

विषयः । समासे शक्त्यादिनिरूपणं ।

---

**No. 2353.** **वादसुधाकरः।** Substance, country-made paper, 13 × 3½ inches. Folia, 26. Lines, 6 on a page. Extent, 450 ślokas. Character, Maithili, Date, ? Place of deposit, Tavká, Post Delsiñsarái, Zillá Darbhañgá, Mímáñsaka Chitradhara Miśra. Appearance, new. Prose. Incorrect.

**Váda-sudhákara.** A grammatico-logical disquisition on the effect and purport of declensions and conjugations. By Krishna A'chárya, son of Rámasevaka, and grandson of Devídatta.

**Beginning.** शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।

इति वाक्यस्यवान् विभ्रत् तद्रूपं पातु माधवः ॥

अथाख्यातस्य कृतो शक्तिर्न तु कर्त्तरि । कृत्याश्रयत्वमेव कर्तृत्वं तच्च कृतिरूपं इत्यादि ।

**End.** अन्येत्वाहुः, बोधकतारूपशक्तिरपभ्रंशेष्वपि दुर्व्वारा एवेति ।

**Colophon.** इति श्रीमद्देवीदत्तात्मजरामसेवकतनूद्भवकृष्णाचार्य्यकृतो वादसुधाकरः समाप्तः ॥

विषयः । आख्यातार्थशक्तिनिरूपणं ।

---

**No. 2354.** गूढार्थदीपिका । Substance, palm-leaf, 14 × 2½ inches. Folia, 288 Lines, 5 on a page. Extent, 7,892 ślokas. Character, Maithili. Date, ? Place of deposit, Harinagara, Post Madhuvani, Zillá Darbhangá, Pandit Hali Jhá. Appearance, old. Prose and verse. Correct.

**Gúḍhártha-dípiká.** Expositions of doubtful topics in regard to various Smriti rites and ceremonies. By Vámadeva Upádhyáya.

**Beginning.** गोविन्दचरणद्वन्द्वमाधाय हृदयाम्बुजे ।
वामदेवेन सुधिया क्रता गूढार्थदीपिका ॥
हरिप्रसादादेवैषामवेद्यार्था निरूपिताः ।
इह मात्सर्य्यमुत्सार्य्य विदांकुर्व्वन्तु पण्डिताः ॥

तत्र वर्षक्रत्ये त्रिंशत्तिथिवर्द्धितेर्द्वादशभिर्मासैर्मलमासपाते त्रयोदशभिर्मासैर्वर्षसमाप्तिः । इत्यादि ।

**End.** इदमत्रमिमा आप इदं हविरित्यत्रजलघृतादिषु ज्ञेयमिति शम् ।

**Colophon.** इत्युपाध्यायश्रीवामदेवविरचिता गूढार्थदीपिका समाप्ता ।

विषयः । वर्षक्रत्ये मलमासादिपाते वर्षगणनाविशेषकथनं । धर्म्मकार्य्येषु पञ्चविधमासनिरूपणं । मलमासविधानं । तिथिस्वरूपादिविवेचनं । युग्मादितिथिविवेचनं । एकादशीनिरूपणं । पारणविधिकथनं । चैत्रादिद्वादशमासक्रत्यनिरूपणं । तत्र विशेषेण जन्माष्टमीनिरूपणं । महाष्टम्यादिविधानञ्च । शिवरात्रिविधिः । यजमानस्य कर्त्तव्यकथनं । जननाद्यशौचे शिवलिङ्गादिपूजने विप्रस्य नित्याधिकारकथनं । स्पर्शं विना शालग्रामशिलायामपि स्त्रीशूद्राभ्यां पूजा कर्त्तव्येतिनिरूपणं । व्रतपरिभाषाकीर्त्तनं । व्रतलक्षणादिकथनं । मन्वन्तरादिनिरूपणं । अर्द्धोदयादियोगनिरूपणं । पुण्यकालनिरूपणं । विशेषेण कार्त्तवीर्य्यदीपदानविधिकथनं । अहोरात्रक्रत्यनिरूपणं । तत्र शौचाचमनदन्तधावनादिकथनं । सन्ध्योपासनादिविधिकथनं । शिखाबन्धनादिविधिकथनं । पञ्चयज्ञविधिः । शिवादिपूजनविधिः । आतिथ्यविधि । भोजनविधिः । मांसभोजनविधिविवेचनं । विहितमत्स्यपक्षिप्रभृतिनिरूपणं । माहिषदुग्धस्य आमिषत्वकथनं । सामान्यतोभक्ष्याभक्ष्यनिरूपणं । शयनादिविधिकथनं । अशौचनिरूपणं । सापिण्ड्यनिरूपणं । प्रेतक्रत्यनिरूपणं । दशपिण्डदानादिविधिकथनं । देशभेदेन शौचाद्याचारस्य विहितत्वकथनं द्रव्यशुद्धिनिरूपणं । मुमूर्षुक्रत्यनिरूपणं । द्वादशविधश्राद्धलक्षणकथनं । श्राद्धदेशनिरूपणं । श्राद्धकालनिरूपणं । काम्यश्राद्धविधिकथनं । श्राद्धे देयानि । निमन्त्रणविधिः । सङ्कल्पवाक्यविवेचनं । सपिण्डीकरणादिविधिः । आद्यश्राद्धविधानकथनञ्च ।

**No. 2355.** तत्त्वकौस्तुभः। Substance, country-made paper, 11 × 4 inches, Folia, 172. Lines, 10 on a page. Extent, 4,622 ślokas. Character, Nágara. Date, ? Place of deposit, Tavká, Post Delsíñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, fresh. Prose and verse. Correct.

**Tattva-kaustubha.** A refutation of the dual theory of Madhvácharya, with a view to support the doctrine of S'añkara Ácharya as developed in his commentary on the Vedánta Sútras. By Bhaṭṭojí Díkshita.

**Beginning.** प्रथमपत्रं नास्ति।

कापालं भैरवं शाक्तं गाणपं पूर्व्वपश्चिमं।

पाञ्चरात्रं पाशुपतं तथान्येऽपि सहस्रश इति॥

अत्र च भ्रष्टानां गतिप्राप्तये आगमप्रणयनेऽपि तत्र तत्र प्ररोचनार्थं चतुर्षु वेदेषु परमपुरुषार्थमलभमानः शाण्डिल्य इमां विद्यामधीतवान् इत्यादि।

**End.** आतिवाहिका इति तु माधात् प्राचां पाठङ। एतत् पदार्थखण्डनं प्राग्वत्॥

**Colophon.** इति श्रीभट्टोजीदीक्षितकृते तत्त्वकौस्तुभे चतुर्थाध्यायस्य तृतीयः पादः।

इतः परः चतुर्थपादस्य कियदंशोवर्त्तते॥

विषयः। मध्वाचार्य्यकृतवेदान्तभाष्याधिकरणखण्डनपूर्व्वकं शाङ्करमतस्थापनं।

---

**No. 2356.** भट्टभास्करः। Substance, country-mada paper, 11 × 4½ inches. Folia, 119. Lines, 8 on a page. Extent, 1,896 ślokas. Character, Nágara. Date, ? Place of deposit, Tavká, Post Delsíñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, fresh. Prose and verse. Incorrect.

**Bhaṭṭa-bháskara.** A dissertation on the Mímáñsá theory of Duty (*Dharma*) and the eternity and authority of the Vedas as developed by different schools of Mímáñsákas. By Jívadeva, son of Ápadeva. Hall's 'Contributions,' p. 188.

**Beginning** श्रीकृष्णं प्रणतार्त्तिघ्नमापदेवाभिधं गुरुं।

प्रणम्य जीवदेवेन क्रियते भट्टभास्करः॥

अस्तु मत्सरिणां वार्त्ता सन्तस्तत्त्वार्थदर्शिनः।

विवेचयन्तु तत्त्वार्थमेष तेषु कृताञ्जलिः॥

इह खलु सुखदुःखप्राप्तिनिवृत्त्यर्थिप्रेक्षावतां धर्म्माधर्म्मविषये प्रवृत्तिनिवृत्ती दृश्येते।

**End.** अवेदत्वेऽपि वेदैकदेशत्वादस्यैव प्रामाण्यमिति दिक् ।

**Colophon.** इति श्रीमद्रापदेवात्मजजीवदेवकृतौ भट्टभास्करे धर्म्मप्रमापरिच्छेदः ॥

विषयः । धर्म्मस्वरूपनिरूपणं । धर्म्माधर्म्मयोः प्रमाणकथनं । वेदस्य अपौरुषेयत्वनिरूपणं । वेदलक्षणकथनं । शाब्दीभावनानिरूपणं । आर्थीभावनानिरूपणं । आख्यातादीनां कुत्र शक्तिरिति तन्निरूपणं । विधिस्वरूपविवेचनं । निषेधनिरूपणं । अर्थवादनिरूपणं । मन्त्रनिर्णयः । नित्यत्वादिलक्षणकथनं । यागस्वरूपादिविवेचनं । प्रकृतिविकृत्यादीनां स्वरूपविवेचनं । उत्पत्तिविनियोगाधिकार-प्रयोगभेदेन अपूर्व्वविधेश्चातुर्विध्यनिरूपणं । अङ्गत्वस्वरूपनिरूपणपुरःसरं तत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट्प्रमाणानीतिनिरूपणं । श्रुत्यादीनां प्रत्येकं लक्षणोदाहरणादिकथनं । श्रुत्यादीनां विरोधे पूर्व्वपूर्व्वस्य बलीयस्त्वकथनं । सर्व्वेषु कर्म्मसु मनुष्याणामेव अधिकारोनान्येषां सामर्थ्याभावादितिनिरूपणं । मनुष्येष्वपि अनधिकारिनिरूपणं । द्रव्यादिनिरूपणं । भिन्नकल्पयोः सहाधिकारकथनं । यागविशेषे ब्राह्मणक्षत्रियादीनामधिकारविशेषकथनं । वचनातिदेश-नामातिदेश-चोदनालिङ्गातिदेश-भेदेन अतिदेशस्य त्रिविधत्वकथनपूर्व्वकं तत्स्वरूपादिनिरूपणं । अग्निहोत्रादिशब्दानां नामधेयत्वनिरूपणं । अनुवादनिरूपणं । ऊहनिरूपणं । नियमविधिनिरूपणं। परिसंख्यानिरूपणं । स्वाध्यायविधिविवेचनं । लक्षणाविवेचनं । मन्त्राणां धर्म्मप्रामाण्यकथनं । नाम्नः पदमात्रस्य प्रामाण्यकथनं। नामधेयनिरूपणं । द्रव्यनामविवेचनं । स्मृतेतिहासपुराणादीनां प्रामाण्यमूहनीयनिरूपणं । सदाचाराणां श्रुतिस्मृतिसमूलत्वेन प्रामाण्यकथनं । श्रुत्याद्यविरुद्धानां धर्म्मबुद्ध्या शिष्टैरनुष्ठीयमानानां धर्म्मे प्रामाण्यकथनञ्च ।

---

**No. 2357** अङ्गत्वनिरुक्तिः । Substance, country-made paper, 12 × 4 inches. Folia, 34. Lines, 16 on a page. Extent, 1,944 ślokas. Character, Maithili. Date, ? Place of deposit, Tavká, Post Delsiñsarái, Zillá Darbhañgá, Mímáñsaka Chitradhara Miśra. Appearance, new. Prose Generally correct.

**Añgatva-nirukti.** A dissertation on various Mímáñsá topics, and reconciliation of doubtful points of the theory. By Murári Mis'ra.

**Beginning.** नमामि तुलजां स्वीयकुलजाद्यधिदेवतां ।
स्वस्वाभीष्टफलप्राप्त्यै ब्रह्मादिभिरभिष्टुतां ॥
मुरारिसंसेवनलब्धबुद्धिः
कुमारिलप्रक्रमतानुसारी ।

मुरारिरङ्गत्वमिदन्तिभेत्तां
करोति सद्युक्तिगुणैरपेतां ॥

सचाङ्गत्वं न तावज्जातिः तत्साधकाभावात् क्रियोत्पादिजात्या साङ्कर्य्यप्रसङ्गाच्च इत्यादि ।

End. तयोरेव विनियोजकत्वोदाहरणन्तु द्वयमित्यनयद्यं श्रुत्यादिप्रमाणकमङ्गत्वं ॥

श्रीजैमिनीयं मतमङ्गतायां
तन्निबन्धेष्वपि संनिबद्धं ।
असुग्रहं सुग्रहमत्र कर्तुं
मुरारिरेतामकरोन्निरुक्तिं ॥
मुरारिनिर्म्मितिन्यायमीमांसावासितात्मनां ।
तोषाय विदुषामेषा कण्ठभूषा भविष्यति ॥

Colophon. इति श्रीमुरारिमिश्रविरचिताङ्गत्वनिरुक्तिः समाप्तिमगमत् ॥

विषयः । भट्टकुमारिलमतमवलम्ब्य विरचितमिदं मीमांसाप्रकरणं । अत्र प्राधान्येन अङ्गत्वस्य स्वरूपादिविवेचनं । शेषत्वपरार्थत्वयोः स्वरूपकथनं । प्रकृतिस्वरूपादिनिरूपणं । विकृतिस्वरूपादिकथनं । कारकत्वस्वरूपकथनं । पुरुषार्थस्वरूपादिकथनं । अङ्गत्वे च श्रुति-लिङ्गवाक्यप्रकरणस्थानसमाख्यानानि षट्प्रमाणानि । तत्र श्रुत्यादीनां प्रत्येकं स्वरूपादि-विवेचनञ्च ।

---

**No. 2358** तात्पर्य्यपरिशुद्धिः । ( चतुर्थाध्यायः । ) Substance, country-made paper, 12 × 3½ inches. Folia, 32. Lines, 10 on a page. Extent, 775 ślokas. Character, Maithili. Date, ? Place of deposit, Tavká, Post Delsiñgsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, old. Prose. Correct.

**Tátparyapari-śuddhi.** A gloss on the 4th chapter of Váchaspati Mis'ra's *Nyáyavártika-tátparya* which is a commentary on Udyotakara's Vártikas on the Nyáya aphorisms of Gotama. By Udayana Mahámahopádhyáya. Hall's 'Contributions,' p. 27.

**Beginning.** मनसोऽनन्तरा प्रवृत्तिरवसरप्राप्ता परीक्षितव्येत्यत आह प्रवृत्तिर्यथोक्ता तथा परीक्षितेत्यर्थः । सूत्रस्य । किं पुनः प्रवृत्तेः परीक्षितमिति । इत्यादि ।

**End.** सांख्यं दूषयद्भिरित्यर्थ इति । अर्थः शेष इत्यर्थः । इत्येवमाकार इति । इत्येव-माकारज्ञानगम्य इत्यर्थः ॥

Colophon. इति महामहोपाध्यायाचार्य्यश्रीमदुदयनकृतौ तात्पर्य्यपरिशुद्धौ चतुर्थोऽध्यायः ॥ ४ ॥

षिवयः । मीमांसासूत्रस्य न्यायभाष्यस्य उद्योतकरकृता वार्त्तिकाभिधाना या व्याख्या तस्या व्याख्यानस्य वाचस्पतिमिश्रप्रणीतस्य न्यायवार्त्तिकतात्पर्य्याभिधानस्य चतुर्थाध्यायमात्रस्य व्याख्यानम्।

---

**No. 2359.** शास्त्रदीपिकाप्रकाशः । Substance, country-made paper, 12 × 4 inches. Folia, 69. Lines, 9 on a page. Extent, 1,772 ślokas. Character, Nágara. Daté, ? Place of deposit, Tabká, Post Delsiñgsarái, Zillá Darbhángá, Mímáñsaka Chitradhara Miśra. Appearance, new. Prose. Generally correct, but abounding in lacunæ.

**S'ástradípiká-prakáśa.** A dissertation on the first aphorism of the Mímáñsá Sútra of Jaimini as explained by Párthasárathi Mis'ra in his S'ástradípiká. By S'añkara Bhaṭṭa, son of Náráyaṇa Bhaṭṭa. Hall's 'Contributions,' p. 177.

**Beginning.** लक्ष्मीति । मुकुन्दं मुक्तिं ददातीति मुकुन्दः । पृषोदरादित्वात् साधुत्वं। वर्णाचरसाम्यान्निरुक्तिवचनान्नैरुक्तानां मुकुन्द इतिनिरुक्तिरिति श्रीशङ्कराचार्य्याः । तमीश्वरं मुदा वन्दे । इत्यादि ।

**End.**

परिष्कृतं शास्त्रमुखं ययैव-
माचार्य्य + + मुकुरं पुस्तकात् ।
आधाय मिश्रैर्विमलीकृतं त-
द्विमग्नचेतोहरणं करोतु ॥
शास्त्रं समारिप्सुरिहेदमाद्य-
सूत्रे तदीयोविषयस्तु धर्म्मः ।
प्रयोजनं श्रेयतयेत्यधीति-
विधिं वद + + फलं बभाषे ॥
सूत्रे द्वितीये त्वधुना स्वरूपं
धर्म्मे प्रमाणं स्वत एव वेत्ति।
सामान्यतस्त्वादिमसूत्र एव
जिज्ञासयोपात्तमिहाभिधत्ते ॥

**Colophon.** इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणमीमांसा[illegible]भूषणा । श्रीभट्टनारायणात्मजभट्टशङ्करोन्नीते शास्त्रदीपिकाप्रकाशे प्रथम[illegible]

शुभमस्तु ग्रन्थ १००० ।

विषयः। पार्थसारथिमिश्रकृतशास्त्रदीपिकाभिधानाया मीमांसासूत्रव्याख्याया: अथातो-धर्मजिज्ञासेतिप्रथमसूत्रव्याख्याव्याख्यानम्।

---

**No. 2360.** शब्दकौस्तुभः। Substance, country-made paper, 13 × 4 inches. Folia, 271. Lines, 12 on a page. Extent, 9,737 ślokas. Character, Nágara. Date, ? Place of deposit, Tabká, Post Delsiñsarái, Zillá Darbháñgá, Mímáñsaka Chitradhara Miśra. Appearance, fresh. Prose. Correct.

**S'abda-kaustubha.** A commentary on the first section of the first book of Páṇini's grammar. By Bhaṭṭojí Bhaṭṭa, son of Lakshmídhara Súri.

**Beginning.** विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत्।
चरीकर्त्ति वरीवर्त्ति सञ्जरीहर्त्ति लीलया॥
नमस्कुर्व्वे जगद्वन्द्यं पाणिन्यादिमुनित्रयं।
श्रीभर्तृहरिमुख्यांश्च सिद्धान्तस्थापकान् बुधान्॥
नत्वा लक्ष्मीधरं तातं सुमनोवृन्दवन्दितं।
फणिभाषितभाष्याब्धेः शब्दकौस्तुभमुद्धरे॥
परिभाव्य बहून् ग्रन्थान् योऽर्थः क्लेशेन लभ्यते।
तमशेषमनायासादितोऽस्तद्धीत सज्जनाः॥
समर्प्य लक्ष्मीरमणे भक्त्या श्रीशब्दकौस्तुभं।
भट्टोजिभट्टोजनुषः साफल्यं लब्धुमीहते॥

प्रेक्षावत्प्रवृत्तये व्याकरणविषयं भगवान् भाष्यकारः प्रदर्शयति। अथ शब्दानुशासनमिति यादि।

**End.** तयोरपत्यं वाहीका। नैषा वृद्धिः प्रजापतेरिति। एतच्च विवेचनं वाहीकग्रामेत्यावुभय.च्छत इति सर्व्वं सुस्थम्॥

**Colophon.** इति श्रीविद्वन्मुकुटरत्नस्य लक्ष्मीधरसूरेः सुनुना भट्टोजिभट्टेन कृते शब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे नवमाह्निकं।
पादश्चायं समाप्तः॥

पाणिनिसूत्रस्य प्रथमाध्यायप्रथमपादान्तं व्याख्यानम्।

---

**No. 2361.** श्रीकृष्णविरुदावली । टीकासहिता । Substance, country-made paper, 11 × 3½ inches. Folia, 48. Lines, 9 on a page. Extent, 891 ślokas. Character, Nágara. Date, ? Place of deposit, Harinagara, Post Madhuvaní, Zillá Darbhángá, Paṇḍit Hali Jhá. Appearance, fresh. Text, verse and prose ; commentary only prose.

**S'ríkṛishṇa-virudávalí.** A hymn in praise of Kṛishṇa, describing in course of it his form, his merits, and his loveliness. By Chandradatta, of Mithilá.

टीकायाः ।

**Beginning.** प्रणम्य हरिपादाब्जं जानकीजन्मभूमिभूः ।
चन्द्रदत्तः स्वरचितां व्याचष्टे विरुदावलीं ॥

चिकीर्षितग्रन्थनिर्व्विघ्नसिद्ध्यर्थं स्वेष्टदेवताप्रार्थनारूपमङ्गलमाचरति विमलेति । तत्रादौ विरुदावलीलक्षणं,—गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते । तालप्रस्तावरुद्धा सा कलिकेति प्रगीयते । इत्यादि ।

मूलस्य ।

विमलाजिनवसने सुविकटवसने चञ्चलरसने भीमरवे
करधृतकरवाले रणविकराले नगवरवाले ललितशिवे ।
मधुरस्मितहासिनि शुम्भविनाशिनि गिरिवरवासिनि मयि सकलं
सुरवैरिविदारिणि मृगवरचारिणि मङ्गलकारिणि कुरु कुशलं ॥
भूभारोद्धरणाय भूसुरसुरत्राणाय भूमीतले
ब्रह्मेन्द्रामरवृन्दवन्दितपदे वंशे प्रशंस्ये यदोः ।
त्वय्याविर्भवति प्रभौ विलसति ब्रह्माण्डभाण्डोदरे
चण्डीभर्त्तुरकाण्डताण्डवविधौ शङ्खध्वनिः पातु मां ॥

जय घनसुन्दरनमितपुरन्दर वन्दितचरणतलागतनिजशरणागतवन्दिते इत्यादि ।

मूलस्य ।

**End.** एषा मैथिलचन्द्ररचिता कृष्णस्तुतिर्यद्यपि
काव्यालङ्कृतिवर्ज्जितापि सुधियां सत्कारमेवार्हति ।
यद्भक्ता जगदीश्वरस्य चरितं श्रुत्वाद्यसद्भाषया
हर्षाश्रुप्रतिरुद्धगद्गदगिरस्तामेव सत्कुर्व्वते ॥

**Colophon.** इति मैथिलचन्द्रदत्तकृता श्रीकृष्णविरुदावली सम्पूर्णा ।

टीकायाः ।

विद्वत्सु विनयेन क्षमापयति एषेति ।

इति मैथिलचन्द्रदत्तशर्मा श्रीकृष्णविरुदावलीटीका सम्पूर्णा ।

विषयः । श्रीकृष्णस्तुतिव्याजेन तद्रूपगुणमाधुर्य्यादिवर्णनं ।

---

**No. 2362.** विधिवादः । Substance, country-made paper, 16 × 4 inches. Folia, 18. Lines, 8 on a page. Extent, 378 ślokas. Character, Maithili. Date, ? Place of deposit, Sápura, Zillá Darbháñgá, Paṇḍit, Mádhava Jhá. Appearance, fresh. Prose. Correct.

**Vidhi-váda.** An elementary logical exposition of the nature and force of rules regarding the power of words as propounded in the *S'abdachintámaṇi* of Gañges'a. By Vañs'adhara S'armá. Hall's 'Contributions,' p. 60.

**Beginning.** सरस्वतीं नमस्कृत्य श्रीवंशधरशर्म्मणा ।

बालानां सुखबोधाय विधिवादोवितन्यते ॥

तत्र अभिधापूर्व्वसङ्कल्पभावनाज्ञानं न प्रवर्त्तकं । तस्मिन् सत्यप्यप्रवृत्तेः । इति सत्यं । तस्यायमाशयः । अभिधा नाम पदार्थविशेषः । इत्यादि ।

**End.** तत्पुरुषीयप्रत्यवायं प्रति स्वरूपसम्बन्धेन हेतुत्वमिति न काप्यनुपपत्तिः ।

विषयः । शब्दचिन्तामण्यन्तर्गतविधिस्वरूपविचारस्य व्याख्यानं ।

---

**No. 2363** काशीगीतं । Substance, country-made paper, 11 × 4¼ inches. Folia, 20. Lines, 9 on a page. Extent, 351 ślokas. Character, Nágara. Date, ? Place of deposit, Harinagara, Post Madhuvaní, Zillá Darbháñgá, Paṇḍit Hali Jhá. Appearance, old. Verse. Generally correct.

**Kásigíta.** On the merits of Káśí recited in a pastoral poem in imitation of the Gítagovinda of Jayadeva. By Chandradatta, of Mithilá.

**Beginning.** मोहैर्भङ्गुरमेतदखिलं भुवनं विज्ञाय भूतेश्वरो-

भव्यार्थी जगतोऽज्ञतातिकरुणः काशीशरीरं परं ।

इत्थंभेदवतोजयन्ति जगतोरेकात्मनोरेतयोः

काशीशङ्करयोश्चिरं सुरधुनीकूले रहःकेलयः ॥

आले यद्यपि रामजन्मधरणी श्रीकृष्णजन्मावली

माया नाम पुरी तथा भगवतीकाञ्चीपुरी पुण्यदा ।

नान्यैव प्रकटीकृतस्वमहिमावन्ती तथा द्वारका
एताः सन्तु परन्तु जन्तुनिकरोद्धारे न काशीसमा ॥
यदि हरस्मरणे सरसं मनो—
यदि विवेककलासु कुतूहलं ।
सदुपदेशमहेशकथापथं
शृणु तदा किल मैथिलभारतीं ॥ इत्यादि ।

**End.** मत्कृतेन च गीतेन भवानीशङ्करौ परं ।
प्रीयेतां + + कापि परिवारसमन्वितौ ॥
— — — — — — — — — ।

**Colophon.** इति मैथिलचन्द्रदत्तकृतकाशीगीते द्वादशः सर्गः ।
काशीगीतं समाप्तम् ।

विषयः । जयदेवकृतगीतगोविन्दस्य छायारूपमिदं गीतिकाव्यं । तत्र काश्यां शिवलीला-वर्णनमुखेन काशीमाहात्म्यादिवर्णनं ।

---

**No. 2364** समयप्रदीपजीर्णोद्धारः । Substance, palm-leaf, 14 × 1½ inches. Folia. 52. Lines, 4 on a page. Extent, 1,048 ślokas. Character, Maithili. Date, Ls. 522. Place of deposit, Harinagara, Post Madhuvaní. Zillá Darbhangá, Paṇḍit Hali Jhá. Appearance, old. Prose and verse. Correct.

**Samaya-pradípa-jírṇoddhára.** An appendix to, and commentary on, the *Samaya-pradípa*, of S'rídatta. By Madhusúdana Ṭhakkura, Mahámahopádhyáya.

**Beginning.** चलानप्यचलीकुर्व्वन्नचलानपि चालयन् ।
वृन्दावनविहारी स्तात्तापहारी हरिर्मम ॥

अद्य रविवार इत्यादि । मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वश इति यदि समूलं तदा प्रायश्चित्तपरमेव प्रकरणात् । इत्यादि ।

**End.** नच प्रमाणं लिङ्गं । नच सर्व्वदा मेघादिष्वस्तीति वाच्यं । तत्पुरुषीयदर्शने विशेषस्याऽपि कारकत्वे जात्यवच्छिन्नकार्य्यत्वे इति ।

**Colophon.** इति महामहोपाध्यायसर्व्वठकुरमधुसूदनविरचितः समयप्रदीपजीर्णोद्धारः समाप्तः ।

विषयः । तार्किकसमयरीत्या श्रीदत्तकृतसमयप्रदीपस्य व्याख्यानं । तदनुक्तांशनिरूपणञ्च ।

---

**No. 2365. रत्नसारः ।** Substance, country-made paper, 13 × 4 inches. Folia, 13. Lines, 8 on a page. Extent, 876 ślokas. Character, Maithili· Date, Sk. 1704. Place of deposit, Phaḍkiyá-grám, Post Champánagara, Zillá Púrṇiyá, Jayapati Jhá. Appearance, fresh. Verse. Generally correct.

**Jyotisha-ratnasára** ALIAS **Ratnasára**. Civil astrology, giving rules for ascertaining appropriate and auspicious days for the celebration of sacraments and domestic rites and ceremonies. By Sṛípati.

**Beginning.** वागीश्वरीं देवगणाधिनाथं
प्रणम्य गर्गादिमुनिप्रणीतं ।
विलोक्य दैवज्ञमनोभिरामं
करोम्यहं ज्योतिषरत्नसारं ॥
चौड़स्य श्रुतिवेधनस्य कठिनीदानस्य शास्त्रस्य च ।
मौञ्जीबन्धनपाणिपीड़नविधे र्यात्रा + कूपस्य च ॥ इत्यादि ।

**End.** ज्योतिःशास्त्रमहार्णवस्य विभुतामालोक्य संक्षेपतो-
वाल्मीकिश्रुतिनारदमनुव्यासादिशास्त्रादिदं ।
आकृष्य व्यवहारमात्रमखिलं श्रीरत्नसारं + +
बालानां हृदि मोददं सुविमलं चक्रे ततः सादरं ॥

**Colophon.** इति श्रीपतिविरचितोरत्नसारः समाप्तः ।
शकाब्दाः १७०४ ।

विषयः । चूड़ोपनयनादिषु संस्कारेषु तथा नवान्नधान्यच्छेदनादिषु कार्य्येषु च तिथि-नक्षत्रादिविवेचनेन शुभाशुभादिनिरूपणं ।

---

**No. 2366. संशयतत्त्वनिरूपणं ।** Substance, country-made paper, 14 × 3½ inches. Folia, 20. Lines, on a page. Extent, 504 ślokas. Character, Nágara. Date, ? Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, old. Prose. Incorrect.

**Sañśaya-tattva-nirúpaṇa.** A logical dissertation on doubt, and the means of removing it. By Víres'vara Bhaṭṭa, son of Vis'vanátha.

**Beginning.** उमामुखसुधाहृत्तौ सादरं त्रिपुरद्विषं
भक्तस्य वाप्यभक्तस्य कामदं कामदं नमः ॥

मनोहरं नमस्कृत्य विश्वनाथं महागुरुं ।
वीरेश्वरोऽयं कुरुते सन्देहत्वनिरूपणं ॥

तत्त्वनिर्णयस्यैवापवर्गसाधनतया निर्णयस्य च संशयान्यज्ञानरूपत्वेन संशयज्ञानाधीनत्वात् संशयस्य न्यायाङ्गत्वेन तदुपयोगित्वाच्च इत्यादि ।

**End.** स + प्रसङ्ग + प्रत्वाभाकुलेन चिदशपतिपुरीं या हसन्तीव शश्वत्,
तस्यामास्ते नगर्य्याममरनरपतिः स द्विजः कल्पवृक्षः ।
तत्पुण्याम्भोदवृष्टः सरहरनगरीवासिवीरेश्वरस्त-
न्मूलं प्रायोपहारं सुवचनमकरोद्वीक्ष्यतां कल्पवृक्षः ॥

विज्ञेषु विज्ञप्तिरियं मदीया
देया हि दोषा वचनेष्वमीषु ।
परन्तु भावं नितरां विभाव्य
मार्गागतोनैव दुनोति दोषः ॥
सुधांशुविम्बं किल जातुचिद्दृथा
दष्टं सरोषेण सुरद्विषा तत् ।
पिबन्ति लोकाः किमु + + + '
नेत्रैः प्रशान्तैरमृतं महो + ॥

**Colophon.** इति श्रीमन्नैयायिकमुकुटपूजितचरणारविन्दमनोहरश्रीविश्वनाथसूनु-श्रीवीरेश्वरभट्टविरचितं संशयतत्त्वनिरूपणं पूर्णतामगात् ।

विषयः । विशेषेण संशयपदार्थविमर्शनम् ।

---

**No. 2367.** अमरुशतकटिप्पनी । Substance, country-made paper, 16 × 4 inches. Folia, 28. Lines, 6 on a page. Extent, 516 ślokas. Character, Bengali. Date, ? Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh. Prose. Generally correct.

**Amaruśataka-ṭippaní.** A commentary on the century of miscellaneous verses called *Amaruśataka.* By Rámarudra Nyáyavágis'a Bhaṭṭáchárya.

**Beginning.** अथ ग्रन्थारम्भे विघ्नविघाताय ग्रन्थकृद्भगवतीस्मरणलक्षणमङ्गलमाचरन् राजानमाशीर्वादेन योजयति ज्याकृष्टीति । अम्बिकायाः कटाक्षस्त्वां पातु । कीदृशी ज्या धनुर्गुणः । तस्याश्च शिराकर्षणं तत्र वलायः खटकामुखपाणिः अङ्गुलिरचनाविशेषः—इत्यादि ।

**End.** कामिनीनां स्वनयनयोरतिशयमोहजनकत्वात्
मनोहरत्वाच्च ग्रन्थसमापने उभयमुपवर्णितं ।

**Colophon.** महामहोपाध्यायश्रीयुक्तरामरुद्रन्यायवागीशभट्टाचार्य्यविरचिता अमरुश-तकटिप्पणी समाप्ता ।

विषयः । अमरुशतकस्य व्याख्यानम् ।

---

**No. 2368.** गुणवती । Substance, country-made paper, 21 × 4 inches. Folia, 36. Lines, 8—9 on a page. Extent, 1,856 ślokas. Character, Bengali. Date, Sk. 1682. ? Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, old. Prose. Incorrect.

**Guṇavati.** A commentary on the well known *Prabodha-chandrodaya* of Krishṇa Mis'ra. By Rudradeva Tarkavágis'a.

**Beginning.** जनितस्वीयविश्वेऽपि शम्भुमौलिविधुभ्रमा ।
भवानीनखचन्द्राली प्रकाशयतु मे मनः ॥
प्रवर्त्तितोयेन निगूढभावः स्फुटीकृतेऽहं + + दुर्गमस्य ।
भूयात् शरणं मम विभ्रमेऽच प्रबोधचन्द्रोदयनाम तेऽदः ॥
श्रीरुद्रदेवकविरत्र मनोनिधातुं
मान्याङ्घ्रिपङ्कजदले विनयं करोति ।
संवर्द्धनेऽप्यकुशला न हि कौमुदी कि-
मम्भोनिधेः किमपि कौतुकमातनोति ॥

प्रारिप्सितनाटकस्य निर्व्विघ्नसमाप्तिकामनया अविगीतशिष्टाचारानुमितश्रुतिबोधितेष्ट-साधनताकं कृतमङ्गलमजिहासितं स्यादिति शिष्यान् बोधयितुमुच्चैराचष्टते । मध्याह्नेति । तत् बुद्धिस्थं महः प्रकाशरूपं ब्रह्म उपास्महे । इत्यादि ।

**End.** रसिकं ब्रह्म न रसिकं मैत्र्यादेः परिशोधने कृषिकं ।
गुणवत्येषा टीका रमयतु निशं सुखेन रौद्री ॥

**Colophon** इति रुद्रदेवतर्कवागीशविनिर्म्मितप्रबोधचन्द्रोदयटीका गुणवती समाप्ता । शकाब्दा १६८२ ।

विषयः । कृष्णमिश्रकृतप्रबोधचन्द्रोदयनामनाटकस्य व्याख्यानम् ।

---

**No 2369** पुरुषार्थचिन्तामणिः। कालखण्डः। Substance, country-made paper, 12 × 6 inches. Folia, 422. Lines, 12 on a page. Extent, 11,998 ślokas. Character, Nágara. Date, ? Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh. Prose and verse. Correct

**Purushártha-chintámaṇi.** An elaborate digest of the Smṛitis. By Vishṇu Bhaṭṭa, son of Rámakrishṇa Súri, nicknamed *Áṭabele.* The codex under notice contains only one part, that on times meet for religious rites (Kálakhaṇḍa), out of several which the work comprises. The author attempts to reconcile the differences and discrepancies which exist in the works of Hemádri and Mádhava Ácharya. In the course of the work all the rites, ceremonies, fasts, periodical feasts and anniversary celebrations have been noticed at length.

**Beginning.** ब्रह्मविष्णुमहेशानां सर्व्वेषां जगतां प्रभुः।
ईश्वरोनित्यकालात्मा विभुर्विजयतेतरां॥
अत्रेः समुद्भवाद्रामकृष्णसूरिरभूत् कुलात्।
आठवेले इतिख्याताच+शाचन्द्रमा इव॥
तदात्मजोविष्णुभट्टः पुरुषार्थप्रभाषके।
ग्रन्थे चिन्तामणौ कालसम्यग्ज्ञानप्रसिद्धये॥
हेमाद्रिणा माधवस्य विरोधः कालनिर्णये।
इति ज्ञात्वा कृतालेऽतः परस्परविरोधिनः॥
नवीनविदुषां सुप्रसिद्धमिदं ह्यतः।
सर्व्वेषामृषिवाक्यानां हेमाद्रेर्माधवस्य च।
विसम्वादपरीहारपरिष्कारपुरःसरं॥
करोति कालखण्डन्तु नत्वा विश्वेश्वरं प्रभुं।

तच कालोद्विविधः। नित्योजन्यश्च। इत्यादि।

**End.** गुणग्रह्यैर्विपश्चिद्भिरनुग्राह्योह्ययं सदा॥
धर्म्मसंस्थापनायेह्यावतीर्णैरीश्वरांशतः।
प्रव+ जगतीपालैः सदा धर्म्मविवृद्धये॥

**Colophon.** इति श्रीआठवेले उपनामकश्रीमद्रामकृष्णसूरिसूनुविष्णुभट्टकृते पुरुषार्थचिन्तामणौ कालखण्डः समाप्तिमगमत्।

विषयः। कालस्वरूपविवेचनम्। निमेषमुहूर्त्ताहोरात्रदिवसादिलक्षणकथनं। दर्शादिमासलक्षणकथनं। कार्त्तिकादिद्वादशमासकृत्यकथनं। अयनकथनं। संवत्सरमलमासादिकथनं।

मलमासे कर्त्तव्याकर्त्तव्यानि। तत्र षोड़शमहादानादिकथनं। वषट्कारहोमादिकथनं। पञ्च-निर्णयः। तिथिस्वरूपादिकथनं। दिवसस्वरूपादिकथनं। मुहूर्त्तनामानि। प्रातर्मध्याह्नादिविभागकथनं। विधिनिषेधयोः स्वरूपकथनं। खण्डतिथिस्वरूपादिकथनं। उपवासादौ तिथेर्ग्राह्याग्राह्यत्वनिरूपणं। एकभक्ततिथिनिर्णयः। नक्तव्रते तिथिनिर्णयः। अयाचिते तिथिनिर्णयः। उपवासे तिथिनिर्णयः। नक्षत्रनिरूपणं। योगनिरूपणं। एकभक्तादौ सङ्कल्पपारणादिनिरूपणं। चैत्रशुक्लप्रतिपदि चान्द्रवर्षाद्यारम्भकथनं। अथ विशेषेण प्रतिपत्कृत्यकथनं। तत्र ज्यैष्ठप्रतिपत्कृत्यकथनं। आश्विनशुक्लप्रतिपदि नवरात्रव्रतारम्भकथनं। दुर्गास्वरूपादिनिरूपणं। दुर्गापूजनादिविधानं। कुमारीपूजनादिविधिः। अश्वपूजनविधिः। देवीभ्रामणादिविधिकथनं। बलिदानविधिः। दुर्गाष्टहकरणविधिः। म्लेच्छादीनां नाधिकार इति निरूपणं। द्यूतप्रतिपदादिविधानञ्च। अथ द्वितीयाकृत्यकथनं। तत्र विशेषेण श्रावणद्वितीयायामशून्यशयनव्रतनिरूपणं। भ्रातृद्वितीयादिकथनं। अथ तृतीयाकृत्यकथनं। तत्र अक्षयतृतीयाकृत्यनिरूपणं। युगाद्याकथनं। वैशाखशुक्लतृतीयायां परशुरामपूजादिविधानं। भाद्रशुक्लतृतीयायां हरितालिकाकथनं। मार्गशीर्षे रम्भातृतीयाकथनं। एवमन्यत्र। अथ चतुर्थीकृत्यकथनं। चैत्रशुक्लचतुर्थ्यां गणेशपूजाविधिः। संकष्टचतुर्थीविधानं। भाद्रशुक्लचतुर्थ्यां विनायकव्रतविधिः। तत्र चन्द्रादर्शनविधिः। कार्त्तिके कनकचतुर्थीविधिः। नागचतुर्थीविधिः। वरचतुर्थीविधिः। वरदाचतुर्थीविधिः। तत्र ढुण्ढिराजपूजाविधिः। अथ पञ्चमीनिरूपणं। नागपञ्चमीविधिः। ऋषिपञ्चमीविधिः। आश्विनशुक्लपञ्चम्यामुपाङ्गललिताव्रतविधिः। श्रीपञ्चमीविधिः। अथ षष्ठीनिर्णयः। स्कन्दषष्ठीनिरूपणं। कपिलाषष्ठ्यादिनिरूपणं। सप्तमीनिरूपणं। भास्करसप्तमीविधिः। अपराजितासप्तमीविधिः। नन्दासप्तमीविधिः। रथसप्तमीविधिः। अष्टमीनिर्णयः। अशोकाष्टमीविधिः। त्रिलोचनाष्टमीविधिः। जन्माष्टमीविधिः। जयन्तीव्रतनिर्णयः। शिवाष्टमीविधिः। दूर्व्वाष्टमीविधिः। महालक्ष्मीव्रतविधिः। महाष्टम्यां देवीपूजाविधिः। भीष्माष्टमीविधिः। नवमीनिर्णयः। रामनवमीविधिः। तत्र भद्रकालीपूजाविधिः। आषाढ़नवमी। तालनवमीविधिः। महानवमीविधिः। बलिदानविधिविवेचनं। दशमीनिरूपणं। विजयादशमीकृत्यनिरूपणं। एकादशीनिर्णयः। उपवासविधिः। अनुकल्पविधिः। उन्मीलन्यादिभेदकथनं। हरिवासरविधिः। अत्राधिकारिनिरूपणं। द्वादशीनिर्णयः। श्रवणद्वादश्यादिभेदकथनं। त्रयोदशीनिर्णयः। वारुण्यादिविधिः। चतुर्द्दशीनिर्णयः। दमनकचतुर्द्दशीविधिः। नृसिंहचतुर्द्दशीविधिः। अनन्तचतुर्द्दशीविधिः। दीपचतुर्द्दशीविधिः। शिवचतुर्द्दशीविधिः। शिवपूजनमाहात्म्यकीर्त्तनं। शिवपीठादिलक्षणं। पूजाविधिः। तदधिकारिणः। पूर्णिमानिर्णयः। वटसावित्रीविधिः। श्रावण्यां रक्षाबन्धनादिविधिः। पवित्रारोपणविधिः। उपाकर्म्मकालनिरूपणं। भाद्रपौर्णमास्यां नान्दीमुखश्राद्धविधिः। वकुलसभयात्राविधिः। अथ कोजागरविधिः। कार्त्तिक्यां दामोदरपूजनविधिः। चीरसागरदानविधिः। नीलवृषोत्सर्गविधिः। त्रिपुरदाहोत्सवः। फाल्गुण्याम शून्य-

शयनविधिः। होलिकोत्सवविधिः। अमावस्यानिर्णयः। ज्यैष्ठामायां वटसावित्रीविधिः। कुलक्षयाचाविधिः। वैतरणीदानविधिः। माघामायां नवनीतधेनुदानविधिः। अर्द्धोदययोगकथनं। कल्पस्वलक्षणं। अग्न्याधानादियागकालनिरूपणं। पिण्डपितृयज्ञकालः। ग्रहणनिरूपणं। संक्रान्तिनिरूपणं। सामान्यतः श्राद्धतिथिनिरूपणं। दत्तकपुत्रकथनं। पार्व्वणैकोद्दिष्टवृद्धिश्राद्धादिकालकथनं। खड्गमांसेन श्राद्धविधिदथनं। महालयासपिण्डीकरणादिकालकथनं। युगादिमन्वादिनिरूपणं। नक्षत्रवारादिविशेषे श्राद्धकालादिनिरूपणं। आमश्राद्धकालादिकथनं। शूद्रकर्त्तृकश्राद्धे इतिकर्त्तव्यताकथनं। पतितादिश्राद्धकालकथनं। श्राद्धदिने वैश्वदेवादिकालकथनं। गर्भाधानपुंसवनादिकालादिनिरूपणं। वेदारम्भकालादिकथनं। अनध्यायाः। केशान्तकर्म्मकथनं। गोदानाख्यकर्म्मकथनं। विवाहोत्तरं कन्यागृहे भोजनादिनिषेधः। वाग्दानादिविधिकथनं। वधूप्रवेशद्विरागमनादिविधिकथनं। आवसथ्याधानकालः। अभ्यङ्गस्नानसन्ध्यादिकालकथनं। देवप्रतिष्ठादिकालकथनं। क्षौरवस्त्रधारणादिकालकथनं। सूचीकर्म्मकालादिनिरूपणं। स्वामिसेवागजाश्वदोलारोहण-नृत्य-राजदर्शनादिकालकथनं। जय-सेतु-पण्यकृत्यादिकालकथनं। गजदन्तच्छेद-ऋणमोच-गजमुद्रा-नौकारोहणादिकालकथनं। नवान्नादिकालकथनं। भैषज्यारोग्यस्नानादिकालकथनं। युगधर्म्मकथनं। कलियुगधर्म्मकथनं। कलौ वर्ज्जनीयकथनञ्च।

---

**No. 2370.** ब्रह्मतत्त्वसंहितोद्दीपनी। Substance, palm-leaf, 22 × 2 inches. Folia, 140. Lines, 5 on a page. Extent, 3,837 ślokas. Character, Maithili. Date, Sk. 1649. Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh, the edges destroyed by mice. Prose. Correct.

**Brahmatattva-sañhitoddípaní.** A commentary on Váchaspati Mis ra's *Brahmatattvasañhitá* which is a dissertation on the nondual theory of the Vedánta, refuting in the course of it the Nyáya, Sáñkhya and other adverse systems. Anonymous.

**Beginning.** (अत्र प्रथमतः त्रीणि पत्राणि पार्श्वे मूषिकदष्टानि) इह जगति केचित् स्वस्वरूपानन्दानन्ताद्वयसाक्षात्कारापसारितनिखिलसंशयविपर्य्यासा जीवन्मुक्ताः, केचिद्विषयज्वालाजटिलसंसारानलप्रवल — — — — जगत्कारणस्य जिज्ञास्यत्वं प्रतिपादितमिदानीमपि तत्प्रतिपादनीयमिति हृदि कृत्वा प्रथमं जगत्कारणं प्रदर्शयति नानेति। इत्यादि।

**End.** इहेदमवधेयं सच्चिदानन्दस्वरूपं ब्रह्म सर्व्वात्मत्वमयं तस्य सत्त्वं चित्त्वमानन्दत्वं न ततोभिन्नमिति केवलमद्वितीयं ब्रह्म॥

**Colophon.** इति श्रीवाचस्पतिमिश्रविरचिता ब्रह्मतत्त्वसंहितोद्दीपनी समाप्ता। शकाब्दाः १६४९।

विषयः । न्यायवैशेषिकसांख्यादिमतखण्डनपूर्व्वकमद्वैतवादोपपादनमुखेनग्रन्थ व्यासर्षि-नाभिधानवेदान्तप्रकरणस्य व्याख्यानम् ।

---

**No. 2371.** आचार्य्यमतरहस्यम् । Substance, country-made paper, 17 × 3½ inches. Folia, 11. Lines, 14 on a page. Extent, 823 ślokas. Character, Maithili. Date, ? Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh. Prose. Correct.

**A'chárya-mata-rahasya.** A Nyáya dissertation on Udayana A'chárya's theory of syllogism. By Harírάma Tarkavágís'a.

**Beginning.** वह्निव्याप्यधमवान पर्व्वत इत्यादिपरामर्षात् वह्निव्याप्तिविशिष्टधूमादि-विषयिणी—इत्यादि

**End.** पर्व्वतोघटवान् इत्येतादृशशाब्दबोधसामग्र्याः प्रतिबन्धकत्वमित्यलं पल्लवितेनेति ।

**Colophon.** इति श्रीहरिरामतर्कवागीशविरचितमाचार्य्यमतरहस्यं समाप्तमिति ।

विषयः । वह्निव्याप्यधूमवान् पर्व्वत इत्यादिपरामर्षात् वह्निव्याप्तिविशिष्टधूमादिविष-यिणी वह्निव्याप्यधूमवान् पर्व्वतोवह्निमानित्यनुमितिरुत्पद्यते—इत्युदयनाचार्य्यमतस्य उप-पादनं ।

---

**No. 2372.** नव्यमतरहस्यम् । Substance, country-made paper, 17 × 3½ inches. Folia, 11. Lines, 13—14 on a page. Extent, 915 ślokas. Character, Maithili. Date, Sk. 1733. Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, new. Prose. Correct.

**Navya-mata-rahasya.** A dissertation on some modern theories about inference. By Harirάma Bhaṭṭáchárya, (the same with the author of the last noticed work, though the literary title appears different).

**Beginning.** अनुमितिं प्रति पर्व्वतीय धूमव्यापकोवह्निरित्याकारकः परामर्षोहेतुः न तु व्याप्तिविशिष्टवैशिष्ट्यावगाही वह्निव्याप्यधूमवान् पर्व्वत इत्याकारकः । इत्यादि ।

**End.** अनुमित्यादिकं प्रत्यर्थापत्त्यादिसामग्र्याः प्रतिबन्धकत्वकल्पकवादिमतेऽप्युचमेवेति । आहुः ॥

**Colophon.** इति श्रीहरिरामभट्टाचार्य्यविरचितं नव्यमतरहस्यं सम्पूर्णमिति । शका-ब्दाः १७३३ ।

विषयः । अनुमितिविषये नवीनानां मतोपपादनं ।

---

**No. 2373. तिथिचन्द्रिका।** Substance, country-made paper, 16 × 4 inches Folia, 58. Lines, 7 on a page. Extent, 1,296 ślokas. Character, Maithili. Date, L. S. 348. Place of deposit, Siñhuli-grám, Post Snáḍáśi, Zillá Púrṇiyá, Jhapaṭlála Jhá. Appearance, old. Prose and verse. Correct.

**Tithi-chandriká.** On lunar days and the ceremonies thereto appertaining. By Haridatta Mis'ra.

**Beginning.** नत्वा रमापतिं विष्णुं सच्चिदानन्दविग्रहं।
मिश्रश्रीहरिदत्तेन क्रियते तिथिचन्द्रिका॥

तत्र तिथिस्वरूपमाह सूर्य्यसिद्धान्तः। अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी। इत्यादि।

**End.** तत्र तत्र पुण्यकालः स्वयमूहनीय इति।

**Colophon.** इति मिश्रश्रीहरिदत्तविरचिता तिथिचन्द्रिका समाप्ता। लसं ३४८।

विषयः। तिथिस्वरूपकीर्त्तनं। सामान्यतः प्रतिपदादिपञ्चदशतिथिकृत्यनिरूपणं। तत्र विशेषेण श्रीरामनवमीनिरूपणं। वारुणीनिरूपणं। अक्षयतृतीयानिरूपणं। नृसिंहचतुर्द्दशीनिरूपणं। सावित्रीचतुर्द्दशीनिरूपणं। दशहरानिरूपणं। स्नानयात्रानिरूपणं। रथयात्रानिरूपणं। हरिशयननिरूपणं। नागपञ्चमीनिरूपणं। जन्माष्टमीनिरूपणं। प्रसङ्गादेकादशीनिर्णयः। हरितालिकानिरूपणं। कुक्कुटीव्रतनिरूपणं। दूर्व्वाष्टमीनिरूपणं। अनन्तचतुर्द्दशीनिरूपणं। आश्विनकृष्णपक्षे षोड़शश्राद्धनिरूपणं। मघाश्राद्धनिरूपणं। नवरात्रनिरूपणं। कोजागरनिरूपणं। दीपान्वितानिरूपणं। भ्रातृद्वितीयानिरूपणं। श्रीपञ्चमीनिरूपणं। अर्द्धोदययोगनिरूपणं। भीष्माष्टमीनिरूपणं। भीमद्वादशीनिरूपणं। शिवरात्रिनिरूपणं। होलिकानिरूपणं। संक्रान्तिनिरूपणञ्च।

---

**No. 2374. सुबोधिनी।** Substance, country-made paper, 18 × 5 inches. Folia, 128. Lines, 8 on a page. Extent, 4,508 ślokas. Character, Maithili. Date, ? Place of deposit, Siñhuli-grám, Post Snáḍáśi, Zillá Púrniyá, Jhapaṭlála Jhá. Appearance, old. Prose. Incorrect.

**Subodhiní.** A commentary on the *Rághuvañs'a* of Kalidása. By Bhavadeva Mis'ra.

**Beginning.** प्रणम्य यामिनीकान्तकान्तभालस्थलं हरं।
क्रियते बालबोधाय रघुवंशसुबोधिनी॥

अथ तत्रभवान् महाकविः कालिदासः प्रारिप्सितपरिसमाप्तिप्रतिबन्धकदुरितनाशनाय

शिष्टाचारपरिपालनाय च ग्रन्थारम्भे मङ्गलमाचरति वागर्थाविति। अहं पार्व्वतीपरमेश्वरौ वन्दे अभिवादये। इत्यादि।

End. सर्व्वागमपरार्थज्ञः सत्यधर्म्मपरायणः।

भवदेवोव्यधाद्रम्यां रघुवंशसुबोधिनीं॥

Colophon. इति मिश्रश्रीभवदेवकृतायां सुबोधिन्यामुनविंशः सर्गः॥

विषयः। कालिदासकृतरघुवंशकाव्यस्य व्याख्यानम्।

---

**No. 2375.** स्फोटनिरूपणम्। Substance, country-made paper, 17 × 4 inches. Folia, 16. Lines, 7 on a page. Extent, 357 ślokas. Character, Maithili. Date, ? Place of deposit, Siñhuli-grám, Post Snádási, *Zillá* Púrṇiyá, Jhapaṭlála Jhá. Appearance old. Prose. Generally correct.

**Sphoṭa-nirúpaṇa.** A philosophical enquiry into the nature of sound, as the element of words and letters. By Ápadeva Bhaṭṭa.

Beginning. सर्व्वेश्वरः सर्व्वनिष्ठः सर्व्वशक्तिमयोविभुः।

सर्व्वदः सर्व्वदा पापात् पायान्नोभक्तवत्सलः॥

अथ स्फुटत्यर्थोयस्मादिति व्युत्पत्त्या स्फोटशब्दोऽयं योगरूढः। इत्यादि।

End. एवञ्च स्थान्येव वाचकोलाघवान्न तु आदेशोगौरवादिति तार्किकोक्तमतादरणीयमिति।

Colophon. इति श्रीमदापदेवनिरूपितं स्फोटनिरूपणं समाप्तम्।

विषयः। स्फोटलक्षणादिकथनं। शब्दशक्तिविवेचनं। वर्णस्फोटपदस्फोटादिनिरूपणं। तार्किकादिमताक्षेपकीर्त्तनञ्च।

---

**No. 2376.** प्रायश्चित्तप्रदीपिका। Substance, country-made paper, 17 × 5 inches. Folia, 108. Lines, 7 on a page. Exteut, 3,370 ślokas. Character, Nágara. Date, Sk. 1621. Place of deposit, Siñhuli-grám, Post Snádási, Zillá Púrṇiyá, Jhapaṭlála Jhá. Appearance, fresh. Prose and verse. Incorrect.

**Práyaśchitta-pradípiká.** Nature of expiations for transgressions of Smṛiti rules, and details of expiations for particular offences. By Ananta Bhaṭṭa, son of Ápadeva Bhaṭṭa.

Beginning. नन्दसूनुं नमस्कृत्य सानन्दरसमन्दिरं।

क्रियते विदुषां प्रीत्यै प्रायश्चित्तप्रदीपिका॥

अथ प्रायश्चित्तस्य अधर्म्मनाशनद्वारा परम्परया धर्म्मं प्रति कारणत्वात् प्रथमं तावद्धर्म्मस्वरूपं विविच्यते। तत्र जैमिनिसूत्रं। चोदनालक्षणोऽर्थो धर्म्म इति। इत्यादि।

End. तत्तु गङ्गास्नानतीर्थदर्शनादिना प्रणश्यतीति।

Colophon. इति महायाज्ञिकापदेवभट्टसूनुश्रीमदनन्तभट्टविरचिता प्रायश्चित्तप्रदीपिका समाप्ता। शकाब्दाः। १६२१।

विषयः। धर्म्मस्वरूपकथनं। धर्म्मे वेदस्य प्रामाण्यकथनं। प्रायश्चित्तलक्षणादिकीर्त्तनं। तत्कालनिरूपणं। बालवृद्धादिभेदेन तद्विशेषकथनं। प्रायश्चित्तोपदेशविधिकथनं। तदकरणे दोषकथनं। महापातकादिनिरूपणं। संसर्गनिरूपणं। महापातकादिप्रायश्चित्तविधानं। गोबधादिप्रायश्चित्तकथनं। अभक्ष्यभक्षणप्रायश्चित्तं। मत्स्यमांसादिभक्षणप्रायश्चित्तं। पलाण्डुलसुनादिभक्षणप्रायश्चित्तं। अगम्यागमनादिप्रायश्चित्तं। शूद्राद्यन्नभक्षणप्रायश्चित्तं। मिथ्याकथनादिप्रायश्चित्तं। क्षुद्रजन्तुबधप्रायश्चित्तं। ब्राह्मणस्य सुरास्पर्शादिप्रायश्चित्तं। श्राद्धान्नभोजनप्रायश्चित्तं। असत्प्रतिग्रहप्रायश्चित्तं। श्राद्धाकरणप्रायश्चित्तं। जले मलादित्यागप्रायश्चित्तं। अधमवर्णस्य उत्कृष्टवर्णाक्रोशप्रायश्चित्तं। नीलीवस्त्रादिपरिधानप्रायश्चित्तं। नग्नप्रायश्चित्तं। व्रात्यप्रायश्चित्तं। कन्यादूषणादिप्रायश्चित्तं। विवाहभङ्गादिप्रायश्चित्तं। मिथ्याभियोगप्रायश्चित्तं। अभिचारप्रायश्चित्तं। व्रतभङ्गप्रायश्चित्तं। प्रकीर्णकप्रायश्चित्तकथनञ्च।

---

**No. 2377.** पुरुषार्थकौमुदी। Substance, palm-leaf, 16 × 2 inches. Folia 49. Lines, 5 on a page. Extent, 1,170 ślokas. Character, Maithili. Date, ? Place of deposit, Siñhuli-grám, Post Snáḍáśi, Zillá Púrṇiyá, Jhapaṭlála Jhá. Appearance, decayed. Prose. Correct.

**Purushártha-kaumudí.** A dissertation on salvation, showing that the attainment of the nature of Brahma is salvation. By Raghupati Mahopádhyáya.

Beginning. व्याससूक्तिकृतोद्वेधश्रीरघुपतिशर्म्मणा।
तन्यते पुरुषार्थेषु कौमुदी मुदितात्मना॥

अथ पुरुषार्थेष्वपवर्गस्याभ्यर्हितत्वात् स एव तावन्निरूप्यते। तत्र कस्तावदपवर्ग इत्यपेक्षायामक्षपादीयाः तदत्यन्तविमोक्षोऽपवर्ग इति समामनन्ति। इत्यादि।

End. भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः इत्यादिश्रुतेरिति।

Colophon. इति महोपाध्यायश्रीरघुपतिविरचिता पुरुषार्थकौमुदी परिपूर्णा।

विषयः। मोक्षस्वरूपविवेचनम्। तत्र तार्किकबौद्धजैनभट्टप्राभाकर-सांख्य-शैवादिमतखण्डनपूर्व्वकं ब्रह्मभावापत्तिरेव मोक्ष इति सप्रपञ्चप्रपञ्चनं। प्रसङ्गात् जीवात्मस्वरूपनिरूपणं।

जीवात्मपरात्मनोरभेदनिरूपणं। अविद्याविवेचनं। मायाविद्ययोः पार्थक्यकथनं। तत्त्वज्ञाननिरूपणं। जीवन्मुक्तिनिरूपणं। ब्रह्मस्वरूपविवेचनञ्च।

---

**No. 2378.** मन्त्रकोषः। Substance, country-made paper, 20 × 4 inches. Folia, 10. Lines, 7 on a page. Extent, 279 ślokas. Character, Bengali. Date, ? Place of deposit, Bhaisdirá-grám, Post Gñodoyáḍá, Zillá Púrṇiyá, Khaḍganátha Páṭhaka. Appearance, old. Verse. Incorrect.

**Mantra-kosha.** A collection of Tántric Víja Mantras, with explanations of their meanings and rules for their use. A brief account is also given of the origin and nature of the Sanskrit alphabet. By Jagannátha Bhaṭṭáchárya.

**Beginning.** नत्वानन्दमयीं देवीं भारतीं सर्व्वसिद्धिदां।
मन्त्रकोषं वितनुते जगन्नाथोद्विजोत्तमः॥
अथ व्यक्तिं प्रवक्ष्यामि वर्णानां वदने त्वणां।
प्रेरितां वायुना नित्यं सुषुम्नारन्ध्रनिर्गतां॥
कण्ठादिकरनैर्भिन्नाः क्रमात् प्रादुर्भवन्ति ते॥ इत्यादि।

**End.** जयालोकक्रियानेन जगन्नाथेन धीमता।
मन्त्रव्यक्तिः समुद्दिष्टा तन्त्रं दृष्ट्वा समासतः॥

**Colophon.** इति श्रीमहामहोपाध्यायश्रीजगन्नाथभट्टाचार्य्यणविरचितोमन्त्रकोषः समाप्तः।

विषयः। वर्णानामुत्पत्तिप्रकारकथनपूर्व्वकं तन्त्रोक्तसंकेतेन तेषां पर्य्यायकथनं।

---

**No. 2379.** शिवार्चनरत्नम्। Substance, country-made paper, 20 × 4 inches. Folia, 25. Lines, 7 on a page. Extent, 777 ślokas. Character, Bengali. Date, ? Place of deposit, Bhaisdirá-grám, Post Gñodoyáḍá, Zillá Púrṇiyá, Khaḍganátha Páṭhaka.

**S'ivárchana-ratna.** On the worship of S'iva, or the rules and rituals for the adoration of that divinity. By Sañkara A'chárya, of Gauḍa.

**Beginning.** संसारार्णवमग्नानां समुद्धरणहेतवे।
शिवार्चनमहारत्नं शङ्करेण विरच्यते॥
व्यापारान् सकलांस्त्यक्त्वा पूजयध्वं सदाशिवं।
निकटा इव दृश्यन्ते कृतान्तनगरद्रुमाः॥

कालोत्तरे नारदवाक्यं। असार इह संसारे सारमेतच्चतुष्टयं। काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनं। इत्यादि।

End. विल्वपत्रैस्त्रिमध्वक्तैर्वन्ध्या पुत्रवती भवेत्।

Colophon. इति गौड़भूमिनिवासिश्रीशङ्कराचार्य्यविरचिते शिवार्च्चनरत्ने सप्तमप्रकाशः।

विषयः। शिवपूजामाहात्म्यादिकीर्त्तनं। पूजादिविधिकथनं। लिङ्गनिर्म्माणादिकथनं। पुष्पादिविवेचनं। होमादिकथनं। पुरश्चरणकथनं। स्तवकवचादिकथनञ्च।

---

**No. 2380.** मन्त्रकौमुदी। Substance, country-made paper, 18 × 4 inches. Folia, 26. Lines, 8 on a page. Extent, 983 ślokas. Character, Bengali. Date, Sk. 1709. Place of deposit, Bhaisdirá-grám, Post Gñodoyáḍá, Zillá Púrṇiyá, Khaḍganátha Páṭhaka. Appearance, old. Prose and verse. Incorrect.

**Mantra-kaumudí.** Mantras and rituals for various Vedic and Smṛiti rites. By Tarkapanchánana Bhaṭṭácharya. The name given is apparently a literary title, the personal name is wanting.

**Beginning.** सच्चिदानन्दसन्दोहरूपिणीं भवसुन्दरीं।
प्रणम्य विदुषां प्रीत्यै क्रियते मन्त्रकौमुदी॥

तत्रादौ घटस्थापनमन्त्रव्याख्या। भविष्ये। गणेशादीन् पञ्चदेवान् संपूज्य कलशोदकं। ततः समारभेद्यागं यं यं वै मनसेच्छति॥ इत्यादि।

**End.** सूर्य्यशब्देन सूर्य्याधिष्ठेयं नेत्रमुच्यते।
स्वर्णाकारः सूर्य्योयस्य स भवान् स्वाहा।

**Colophon.** इति तर्कपञ्चाननभट्टाचार्य्यकृता मन्त्रकौमुदी समाप्ता। शकाब्दाः। १७०९।

विषयः। यज्ञादौ सर्व्वत्र प्रथमे गणेशादिपूजनस्यावश्यकताकथनं। घटस्थापनमन्त्रव्याख्या। अधिवासनादिमन्त्रव्याख्या। चतुर्द्दशशान्तिमन्त्रव्याख्या। छन्दोगवृषोत्सर्गमन्त्रव्याख्या। वाजसनेयिनाम् वृषोत्सर्गमन्त्रव्याख्या। शान्तिसूक्तव्याख्यानञ्च।

---

**No. 2381.** व्याख्याप्लवः, वा स्वरोदयटीका। Substance, country-made paper 20 × 4 inches. Folia, 130. Lines, 8 on a page. Extent, 3,756 ślokas. Character, Bengali. Date, Sk. 1693. Place of deposit, Bhaisdirágrám, Post Gñodoyáḍá, Zillá Púrṇiyá, Khaḍganátha Páṭhaka. Appearance, old. Prose. Incorrect.

**Vyákhyáplava** ALIAS **Svarodaya-ṭíká**. A commentary on the Svarodaya *alias* Narapati-jayacharyá, a work on astrology and divination. By Narahari, son of Narasiñha, and grandson of Gaṇes'a, all distinguished astrologers of Mithilá. (*Ante* I, 276; V, 126).

**Beginning.** तातं गुरुञ्च विबुधं नरसिंहमीशं
नत्वा तदीयदयथावगतार्थसार्थः ।
एतत्स्वरोदयसमुद्रगतिप्रसिद्ध्यै
व्याख्याप्लवं नरहरिः प्रकरोत्यवश्यं ॥
श्रीभैरवेन्द्रपदपङ्कजसेवनोत्थ-
कीर्त्तिः समस्तविबुधानसकृत् प्रणम्य ।
याचे यदीह भवति स्खलनं कदाचि-
त्तत्रावनं कुरुत वंशमहाशयत्वात् ॥

प्रारिप्सितपरिसमाप्तिं निर्व्यूहामभिलषमाणः कविरिष्टदेवतानमस्काररूपं मङ्गलमाचरति । अव्यक्तमिति । इत्यादि ।

**End.** सर्व्वं शुभाशुभं ग्रहमयं ग्रहाधीनमित्यर्थः ।
श्रीमाण्डवशश्मिनेह विदितेवंशे बुधालङ्कृते
ख्याते श्रोत्रियमण्डलीषु महति स्वाचारचर्य्योज्ज्वले ।
वेदव्याकरणागमादिनिकषो नैयायिकः सत्कवि-
र्ज्योतिःशास्त्रविकाशनैकमिहिरो धीरो गणेशोऽभवत् ॥
तस्यात्मजोऽभून्नरसिंहधीरो-
न्यायागमाद्यद्भुतविद्य एकः ।
वेदस्मृतिज्योतिषशास्त्रसार-
व्याख्यानशुद्धैकमतिर्द्विजेन्द्रः ॥
तस्यात्मजो नरहरिस्तत एव बुद्ध्वा
व्याख्यामिमां सकलशिष्यजनानुबन्धात् ।
नैयायिकः समकरोद्विपदार्थसार्थां
नानागुणेषु कुतुकी मिथिलावनीस्थः ॥
सुदुस्तरे वर्त्मनि ये चरन्ति
स्खलन्ति ते चित्रमिहास्ति नैव ।
अतो यदि स्यात् स्खलनं ममात्र
दयाङ्कुरैराश्ववलम्बनं स्यात् ।

**Colophon.** इति श्रीनरहरिकृतस्वरोदयटीका समाप्ता । शाके १६६२ ।

**विषयः ।** नरपतिजयचर्य्यापरनामधेयज्योतिःस्वरोदयस्य व्याख्यानम् ।

**No. 2382.** मधुमती । Substance, country-made paper, 18 × 4 inches. Folia, 374. Lines, 6 on a page. Extent, 8,672 ślokas. Character, Bengali. Date, ? Place of deposit, Púrṇiyá town, Paṇḍit Rámacharaṇa Kavirája. Appearance, old. Prose and verse. Correct.

**Madhumati.** An elaborate treatise on materia medica and practice of medicine. By Narasiṅha Kavirája, a pupil of Rámakṛishṇa Bhaṭṭa, son of Nilakaṇṭha Bhaṭṭa.

**Beginning.** ईशमनीशं कारणमकारणं व्यक्तमव्यक्तं ।
आदिमनादिं शाश्वतमशाश्वतं गोपमच्युतं वन्दे ॥
आराधिता द्विजवरैः फलदा + रेखा
संपूजिता + + सदा + भियो ।
निःशेषदुःखशमनाय शिवा सुवर्णा
सा सर्व्वदा मधुमती विबुधैरुपास्या ॥
— — — — — — — — — — ।
हिताहितं सुखं दुःखमायुस्तस्य हिताहितं ।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते ॥
ब्रह्मा स्मृत्वायुषोवेदं प्रजापतिमजीग्रहत् ।
सोऽश्विनौ तौ सहस्राचं सोऽत्रिपुत्रादिकान् मुनीन् ॥ इत्यादि ।

**End.** समङ्ग्राणि (?) तन्त्राणि सुविचार्य्य स्वशक्तितः ।
सद्भिः समं समालोच्य रामकृष्णप्रसादतः ॥
वैद्यश्रीनरसिंहेन मया मधुमती कृता ।
सत्मादियं सुमतयः सततं समुपास्यतां ॥
लौहमहौषधयोगैर्विहितेयं मधुमतीतरणिः ।
घनरससङ्गसमाचा (?) व्याधिपयोधेर्द्रुतं नयेत्पारं ॥
यदियं कुमतिव्याख्या दोषाच्छन्नगुणा भवेत् ।
पण्डितैर्मार्ज्जना कार्य्या तदेतिप्रार्थना मम ॥
यद्यपीयं न हि भवेत् पुराणभिषजः प्रिया ।
तथापि नव्यवैद्यानामानुकूल्यं करिष्यति ॥

**Colophon.** इति दाक्षिणात्यवैदिकमहोपाध्यायनीलकण्ठभट्टात्मजरामकृष्णभट्टचरण-परिचारकश्रीनरसिंहकविराजविरचिता मधुमती समाप्ता ।

षियवः। सर्व्वेषां रोगाणां पूर्व्वरूप-रूप-उपशमसंप्राप्ति-निदाननिरूपणपूर्व्वकं सर्व्वेष वस्तरेण चिकित्साप्रक्रियाकथनं। तत्र तत्र औषधकरणयोग्यमन्त्रादिनिरूपणं। औषधपाकप्रक्रियाकथनञ्च। तत्र विविधज्वरचिकित्सा। ज्वरातीसारचिकित्सा। अतीसारचिकित्सा। ग्रहणीरोगचिकित्सा। अर्शोरोगचिकित्सा। अग्निमान्द्यचिकित्सा। क्रिमिरोगचिकित्सा। पाण्डुरोगचकित्सा। रक्तपित्तचिकित्सा। राजयक्ष्मचिकित्सा। कासरोगचिकित्सा। हिक्काश्वासचिकित्सा। स्वरभेदचिकित्सा। अरोचकचिकित्सा। छर्द्दिरोगचिकित्सा। तृष्णारोगचिकित्सा। मूर्च्छारोगचिकित्सा। मदात्ययचिकित्सा। दाहरोगचिकित्सा। उन्मादादिरोगचिकित्सा। अपस्माररोगचिकित्सा। वातरोगचिकित्सा। वातरक्तचिकित्सा। जरुस्तम्भचिकित्सा। आमवातचिकित्सा। शूलरोगचिकित्सा। उदावर्त्तरोगचिकित्सा। गुल्मरोगचिकित्सा। हृद्रोगचिकित्सा। मूत्रकृच्छ्रचिकित्सा। मूत्राघातचिकित्सा। अश्मरीचिकित्सा। प्रमेहमधुमेहादिचिकित्सा। मेदोरोगचिकित्सा। उदररोगचिकित्सा। प्लीहचिकित्सा। शोथचिकित्सा। वृद्धिचिकित्सा। गलगण्डादिचिकित्सा। श्लीपदचिकित्सा। विद्रधिचिकित्सा। व्रणशोथादिचिकित्सा। भग्नचिकित्सा। नाड़ीव्रणचिकित्सा। भगन्दरचिकित्सा। उपदंशचिकित्सा। शूकदोषचिकित्सा। कुष्ठचिकित्सा। शीतपित्तचिकित्सा। अम्लपित्तचिकित्सा। विसर्परोगचिकित्सा। मसूरिकाचिकित्सा। मुखरोगचिकित्सा। कर्णरोगचिकित्सा। नासारोगचिकित्सा। नेत्ररोगचिकित्सा। शिरोरोगचिकित्सा। स्त्रीरोगचिकित्सा। बालरोगचिकित्सा। विषरोगचिकित्सा। पञ्चकर्म्मविधिकथनं। अथ मानाध्यायकथनं। गणाध्यायकथनं। ऋतुचर्य्याकथनं। वाजीकरणकथनं। रसायनविधिकथनं। रसशोधनविधिकथनं। रसमूर्च्छनविधिकथनं। रसबन्धनविधिकथनं। रसमारणविधिकथनं। उपरसादिविधिकथनं। विषादिविधिकथनं। मारणादिविधिकथनं। लौहसंस्कारविधिः। विशेषेण लौहमारणविधिकथनं। सर्व्वत्र पथ्यापथ्यविधिकथनं। प्रसिद्धद्रव्याणां गुणादिकथनं। अनुपानविधिकथनं। स्वस्थवृत्तनिरूपणं। सङ्ग्रहेऽस्मिन् रत्नमालाभैषज्यरत्नावलीप्रभृतिभ्योग्रन्थेभ्यः अधिकानि औषधानि लिखितानीति ज्ञेयम्।

---

**No. 2383.** मालती। Substance, country-made yellow paper, 13 × 11 inches. Folia, 58. Lines, 14 on a page. Extent, 1,394 ślokas. Character, Maithili. Date, ? Place of deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh. Prose. Correct.

**Málatí.** A commentary on the Meghadúta of Kálidása. By Kalyána Malla.

**Beginning.** प्राज्ञाः ज्वलद्दावानलतापशान्त्यै

यत्पादमम्भोजवरं शरणं प्रयान्ति।

तं सर्व्वभयविघ्नभरनाशनमम्बुजाक्षं
विष्णुं नमामि सहसा किल विश्वनाथं ॥
पद्मबन्धकुलाम्भोधिशीतांशुर्लोकविश्रुतः ।
त्रैलोक्यचन्द्र इत्या + + + + + + + श्वरः ॥
तत्पुत्रोऽस्ति पराभूतवैरस्तोमण्डनस्पृहः ।
सर्व्वलक्षणसंयुक्तोगजमल्लोमहायशाः ।
तस्य कल्याणमल्लोऽस्ति नन्दनोबुद्धिसागरः ।
तेनेयं मेघदूतस्य टीका नाम्नैव मालती ॥
क्रियते चित्रभावार्थरचनावलिशालिनी ।
विद्वज्जनमनोभृङ्गवृन्दानन्दविवर्द्धिनी ॥
— — — — — — — — कश्चिदिति ।

कश्चिद्यक्षः वसतिं चक्रे निवासं कृतवान् । स्वामिवञ्चकत्वाद्यक्षनामाकीर्त्तनं । इत्यादि ।

**End.** अभिमतानि सुखानि येषु तथा तानभिलषितसुखसंयुक्तानित्यर्थः ।

**Colophon.** इति श्रीराजर्षिश्रीकल्याणमल्लविरचिता रुचिभावार्थपरिमललिता विदग्धबुधमनस्तुष्टीकरणयोग्या कविपुङ्गवश्रीकालिदासप्रणीतस्य मेघदूताभिधानमहाकाव्यस्य मालतीतियथार्थनाम्नी टीका समाप्ता ।

विषयः । कालिदासकृतमेघदूतस्य व्याख्यानम् ।

---

**No. 2384.** शुद्धिरत्नाकरः । Substance, country-made paper, 14 × 4 inches. Folia, 102. Lines, 6 on a page. Extent, 8,331 ślokas. Character, Nágara. Date, ? Place of deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, old. Prose and verse. Correct.

**S'uddhi-ratnákara.** A digest of the Smṛiti rules regarding the impurity of the person which results from birth or death in one's family or from other causes. By Chaṇḍes'vara, who describes himself as the foreign minister or minister for war and peace to a king of Mithilá, but his name is not given.

**Beginning.** चन्द्रे कौटिल्यभावस्थगितरुचिशिरःशेखरीभूतखेलद्-
गङ्गाकल्लोलपातान्नयनकृतभुजि प्राप्तधूमायमाने ।
आलिङ्गान्निर्ज्जराणामपि सदसि गतव्रीडभावं भवानीं
कण्ठच्छायान्धकारे जगदवतु जगन्नायकोनीलकण्ठः ॥

सिद्धिं शुद्धेरवाप्तः श्रुतिविधिविहितैः कर्म्मभिर्न्नित्यरूपै
काम्यैर्नैमित्तिकैरप्युचितशुचिधनैर्यज्ञसम्पादकोयः ।
मन्त्रीन्द्रो मैथिलोर्व्वीवलयपरिवृढस्याखिलकानां धुरीणः
श्रीमान् चण्डेश्वरोऽयं रचयति रुचिरं शुद्धिरत्नाकरं सः ।
नानानिबन्धसम्बन्धिव्यवस्थादुःस्थचेतसां ।
निर्णीतिरूपकाराय रत्नाकरकृता कृता ॥
प्रायणे जनने शुद्धिरशुद्धिर्नियताङ्क + ।
वर्णानां सङ्करे शुद्धिर्य्येवस्थावर्णसङ्करे ॥ इत्यादि ।

**End.** ब्रह्मपुराणे + + + + जलं गावीमहिषास्छागयोनयः । शुद्ध्यन्ति-
द्दिवसैरेव दशभिर्न्नात्र संशयः ।

यन्नामश्रवणं शुभाय जगतां यत्पादचिन्ता महासिद्ध्यै यत् ।

**Colophon.** इति महासान्धिविग्रहिकश्रीचण्डेश्वरविरचितः शुद्धिरत्नाकरः सम्पूर्णः ॥

**विषयः ।** शुद्धिस्वरूपकथनं । प्रायणशुद्धिकथनं । जननाशौचादिकथनं । जननमरणा-
शौचनियमकथनं । वर्णसन्निपाताशौचनिरूपणं । अशौचसङ्करकथनं । विदेशस्थाशौचं । बाला-
द्यशौचं । स्त्र्यशौचं । गर्भस्रावाद्यशौचं । मृत्युविशेषाशौचं । असपिण्डाद्यशौचं । निर्हरणाद्यशौ-
चं । अनशौचिनः । सपिण्डलक्षणं । निर्हरणादिसंस्कारविधिः । उदकादिदानविधिः । शोका-
पनोदनादिविधिः । प्रवेशनादिविधिः । पिण्डोदकदानविधिः । अस्थिसञ्चयनादिविधिः । अशौ-
चान्तदिनकृत्यं । नारायणबलिविधिः । अधिकारिनिरूपणं । स्वभावशुचयः । तैजसद्रव्यशुद्धि-
कथनं । भूमिशुद्धिः । देहशुद्धिः । प्रक्षालनादिशुद्धिः । उपहतादिशुद्धिः । पक्वान्नशुद्धिः । स्नान-
शुद्धिः । उदकशुद्धिः । पश्वादिशुद्धिकथनञ्च ।

---

**No. 2385.** तत्त्वालोकः । Substance, country-made paper, 14 × 4 inches. Folia, 34. Lines, 9 on a page. Extent, 841 ślokas. Character, Nágara. Date, ? Place of deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, old. Prose. Incorrect.

**Tattváloka.** On the nature and use of the Sañskṛit cases. By Vis'vanátha S'armá, Kavirája. There is a work of this name by Janárdana on the Vedánta. Hall's 'Contributions,' p. 157.

**Beginning.** सायं गोपवधूटीवक्त्रदृगन्तेन दत्तसङ्केतः ।
शरणं चक्रधरो मे कारकचक्रं निरूपयतः ॥

अथ सुबर्थो निरूप्यते । तत्र प्रथमाषष्ठीवर्ज्जं प्रायः सर्व्वाः विभक्तयः कारकाभिधायिन्यः ।
इत्यादि ।

**End.** शाब्दसाम्यं तदाश्रयत्वपरम्परया बोध्यमित्याहुः ।
विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य ।
विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भविता ॥

**Colophon.** इति श्रीविश्वनाथशर्म्मकृततत्त्वालोकः समाप्तः ।

विषयः । विभक्त्यर्थनिरूपणमुखेन कारकस्वरूपादिविवेचनं ।

---

**No. 2386.** आख्यातवादटिप्पनी । Substance, country-made paper, 15 × 3½ inches. Folia, 50. Lines, 10 on a page. Extent, 1,225 ślokas. Character, Nágara. Date, ? Place of deposit, Bahorá-grám, Post Champánagara, Zillá Púrṇiyá, Paṇḍit Lála Jhá. Appearance, fresh. Prose. Incorrect.

**A'khyátaváda-ṭippaní.** A gloss on the A'khyátaváda, a Nyáya treatise on A'khyáta, or conjugational affixes. By Rámakṛishṇa. (*Cf.* Hall's 'Contributions,' p. 59).

**Beginning.** मुकुन्दचरणद्वन्द्वमाधाय हृदयाम्बुजे ।
आख्यातवादसद्व्याख्या रामकृष्णेन तन्यते ॥

आख्यातस्येत्यादि । यत्त्वमाख्यातवाच्यतावच्छेदकमित्यर्थः । इत्यादि ।

**End.** मानसत्वव्याप्यत्वं प्रत्याख्यातमिति समाप्तमनुमितित्वशाब्दवादे मानसत्व-खण्डनं । समाप्तोऽयं ग्रन्थः ।

विषयः । आख्यातवादस्य व्याख्यानम ।

---

**No. 2387.** गुणकिरणावलीप्रकाशव्याख्या । Substance, palm-leaf, 14 × 2 inches. Folia, 137. Lines, 6 on a page. Extent, 3,596 ślokas. Character, Maithili. Date, ? Place of deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, decayed. Prose. Generally correct.

**Guṇakiraṇávalí-prakáśa-vyákhyá.** A gloss on Vardhamána's *Guṇakiraṇávalí-prakáśa,* which is a commentary on Udayana A'chárya's *Guṇakiraṇávalí,* an exegesis on Prasastapáda's exposition of the Vais'eshika doctrine. By Bhagiratha Ṭhakkura.

**Beginning.** जगदवलम्ब + + श्रीम + + महादेवं सोदरं नत्वा ।
विषमाशयप्रकाशं गुणप्रकाशे भगीरथस्तनुते ॥

एकचेति। हृदयकल्पिताञ्जलेर्मूलभागस्य + + सन्निधानात् तत्र च चिकुरादिप्रतिघाताग्रभागस्य शिरोवर्त्तिचन्द्रकिरणसम्बन्धादिदमुपपादनीयमिति।

**End.** गवयपदं गवयत्वप्रवृत्तिनिमित्तकमितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिजनकत्वादित्यनुमानेन व्यतिरेकिणा समीहितः सं क्षेपः।

**Colophon.** इति महामहोपाध्यायसङ्कुरश्रीभगीरथकृता गुणकिरणावलीप्रकाशव्याख्या समाप्ता।

विषयः। वर्द्धमानकृतगुणकिरणावलीप्रकाशस्य व्याख्यानम्।

---

**No. 2388.** महिम्नःस्तवटीका। Substance, country-made paper, 13 × 4 inches. Folia, 17. Lines, 13 on a page. Extent, 884 ślokas. Character, Maithili. Date, ? Place of deposit, Dhamdaha-grám, Post Dhamdaha, Zillá Púrṇiyá, Paṇḍit Vachharaṇ Ṭhákur. Appearance, old. Prose. Correct.

**Mahimnastava-ṭíká.** A commentary on the well-known hymn of Pushpadanta who addressed it to Mahádeva, but which the commentary applies equally to Hari. By S'rídhara Svámí, a renowned Vaishṇava and commentator on the Bhágavata.

**Beginning.** नत्वा हरिहरं भक्त्या लिख्यते बुद्ध्यपेक्षया।
महिमाख्यस्तुतेर्व्याख्योभयपक्षावलम्बिनी॥

कश्चिद्गन्धर्व्वराजः कस्यचिद्राज्ञः पुरोपवने कुसुमानि प्रत्यहं हरन्नासीत्। राज्ञा तज्ज्ञात्वा शिवनिर्म्माल्येन——————परमकारुणिकं सर्व्वकामदं भगवन्तं स्तौति। महिम्न इत्यादि। हे हर सर्व्वाणि दुःखानि हरतीति हरः। तथा च सर्व्वदुःखहरत्वे प्रसिद्धोऽस्य। इत्यादि।

**End.** हरिशङ्करयोरभेदबोधोभवतु क्षुद्रधियामनल्पयत्नात्।
उभयार्थतया ममेदमुक्तं सुधियः साधुतयैव शोधयन्तु॥
यत्नतोवक्रया रीत्या कर्त्तुं शक्यं विधान्तरं (?)।
यद्यपीह तथाप्येषा ऋजुबुद्ध्या प्रदर्शिता॥
— — — — — — —।
महिमाख्यस्तुतेर्व्याख्या प्रतिवाक्यमनोहरा।
इयं श्रीमद्गुरोः पादपद्मयोरर्पिता मया॥

**Colophon.** इति श्रीश्रीधरस्वामिकृता महिम्नःस्तवटीका समाप्ता।

विषयः। पुष्पदन्तकृतमहिमाख्यशिवस्तोत्रस्य हरिपक्षेऽपि व्याख्यानम्।

---

**No. 2389.** राक्षसकाव्यटीका । Substance, country-made paper, 14 × 4 inches. Folia, 5. Lines, 9 on a page. Extent, 172 ślokas. Character, Maithili. Date, ? Place of deposit, Dhamdaha-grám, Post Dhamdaha, Zillá Púrṇiyá, Paṇḍit Vachharaṇ Ṭhákur. Appearance, old. Prose. Incorrect.

**Rákshasa-kávya-ṭíká.** A commentary on the poem called *Rákshasa-kávya.* By Vidyákara Mis'ra, of Mithilá. The poem is limited to 20 stanzas, in course of which a person, roaming about in a forest, discribes for the entertainment of his wife the sylvan scenery around him. It is attributed to Kálidása. A lithographed edition of the text with an anonymous gloss was published at Benares in Samvat 1931.

**Beginning.** प्रणम्य जानकीजानिं श्रीविद्याकरमैथिलः ।
राक्षसाख्यस्य काव्यस्य कुरुते विवृतिः शुभा ॥
कश्चित् पुरुषोवर्षर्त्तौ प्रियया सह वनं विहरन् + + + + परिमलोद्गारीणि पुष्पाणि प्रदर्शयन् सुरते मनः सम्बोधयन्नाह,—कश्चिदिति । कश्चिदनिर्द्दिष्टोना पुरुषपद्वाच्य इमां वक्ष्यमाणां मां वाचं वनितां बभाषे—इत्यादि ।

**End.** अदीनं वहन्तीति अदीनवाहः तैरदीनवाङ्भिर्बलिभिरित्यर्थः ॥ २१ ॥

**Colophon.** इति मैथिलमहोपाध्यायश्रीविद्याकरमिश्रकृता राक्षसकाव्यटीका परिपूर्णा ।

विषयः । राक्षसकाव्यस्य व्याख्यानम् ॥

---

**No. 2390.** धातुप्रत्ययपञ्जिका । Substance, palm-leaf, 16 × 2 inches. Folia, 166. Lines, 5 on a page. Extent, 3,093 ślakas. Character, Maithili. Date, L. E. 424. Place of deposit, Dhamdaha-grám, Post Dhamdaha, Zillá Púrṇiyá, Paṇḍit Vachharaṇ Ṭhákur. Appearance, old. Prose. Correct.

**Dhátupratyaya-paṇjíká.** Conjugations of all the verbal roots given in the *Dhátupáṭha* of Páṇini. By Dharmakírti Achárya. The codex is incomplete.

**Beginning.** प्रणम्य शिरसा देवीं बालानां हितकारिणीं ।
यथासारं प्रवक्ष्यामि धातुप्रत्ययपञ्जिकाम् ॥

. अथ तिङ्विभक्तिर्यथासम्भवं क्रियावाचिभ्यो धातुभ्यः परस्य लकारस्थाने संक्षेपेणोपदिश्यते इत्यादि ।

**End.** अजन्भनगमां सनीतिदीर्घः । अधिजिगांसते इत्यादि सर्व्वासु उन्नेयं ॥

**Colophon.** इत्याचार्य्यश्रीधर्म्मकीर्त्तिविरचिते तिङन्तखण्डे सप्तमः परिच्छेदः समाप्तः । लसं ४२४ ।

विषयः । पाणिनीयधातुपाठोक्तानां प्रसिद्धानां धातूनामदादिदिवाद्यादिक्रमेण तिङादिषु रूपभेदादिप्रदर्शनं ।

---

**No. 2391. Devípújana-bháskara.** The MS. noticed under this name on page 43 appears to be incomplete. From transcripts of the beginning and of the end of the MS. since communicated to me by Government I find the following to be its concluding lines, which bring up the ceremony to the last day of its celebration.

**End.** तथा दशमीमतिवाह्य याचायां दोषमाह भविष्यपुराणे ।

दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः ।

तस्य संवत्सरं राज्ये न क्वापि विजयोभवेत् ।

अशक्तौ राजमार्त्तण्डः कार्य्यवशात् स्वयमगमे भूभर्त्तुः केचिदाक्षराद्याः । छत्री युधाद्यमिष्टं वैजयिकं विनिर्गमे कुर्य्यादिति । आयुधं खड्गं । इति दशमीनिरूपणकिरणः । खयुगाभ्रिशिवे शाके निशाचरतिथौ शुभे । चक्रे श्रीशम्भुनाथेन देवीपूजनभास्करः ।

**Colophon.** इति श्रीसिद्धान्तवागीशमिश्रकृतो देवीपूजनभास्करः सम्पूर्णः । १२ न० ना० ७ई आषाढ ।

---

**No. 2392.** स्मार्त्तानुष्ठानपद्धतिः वा प्रयोगरत्नम् । Substance, country-made paper, 12 × 5 inches. Folia, 142. Lines, 12 on a page. Extent, 3,384 ślokas. Character, Nágara. Date, Sk. 1650. Place of deposit, Sántipura, Rámanátha Tarkaratna; another copy at Phaḍkiyá-grám, Post Chámpá-nagara, Zillá Púrṇiyá, Jayapati Jhá. Appearance, old. Prose and verse. Generally correct.

**Prayogaratna** *alias* **Smártánushṭhána-paddhati.** An elaborate digest of the domestic Sañskára rites, giving at length the rituals of all the rites described. By Ananta Díkshita, son of Viśvanátha. The author follows the school of Áśvaláyana. The subjects, rites and ceremonies described are the following: Rules for Svastiváchana. Intercalary months. Kalaśárchana. Auspicious days. The rite of Abhissheka. S'ráddha performed before marriage and other auspicious occasions, (Nándimukha.) S'thálipáka or cooking of rice for a rite. Ishṭipráyas'chitta. Anugatágni práyaschitta. Naimittaka práyaschitta. Rites for conception. Expiation for first menstruation on an inauspicious day. The establishment of a household fire on the first fire being defiled or blown out. Rite on the first perception of the quickening of an embryo. Símantonnayana rite on the 4th, 6th or 8th month of pregnancy. Expiatory rite for delivery taking place before the performance of the last named rite. (*Vishṇubali*). Rite immediately after birth (*Játakarma* ) Worship of Shashṭhí on the 1st, 2nd or 3rd day after birth. The naming of the child on the 6th or the 7th or the 8th month. Ceremony of placing the child on a bedstead on the 10th, 12th or the 16th day after birth. Rules for nursing. The rite of boring the ears. The ceremony of looking at the sun. The ceremony of taking a child out of the house on the 4th month (*Nishkramaṇa*). The ceremony of weaning, (*Annáprásána*). Ditto of cutting off the umbilical cord (*Vardhápana.*) The ceremony of tonsure on the 3rd month (*Chaulakarma.*) Investiture of the sacred cord. (*Upanayana.*) The rite for strengthening the intellect of a boy, (*Medhájanana*) First worship of sylvan gods (*Devakasthápana*). Invocation of the Mátrikás at the ceremony of the sacred cord, (*Upákarmotsarjana.*) Pupilage. The rites of Mahánámni and Mahávrata. Study of the Upanishads. The rite of *Godána*. Expiation for breach of continence during pupilage. Return home after pupilage, (*Samávartana*). Marriage. Characteristics of brides. Do. of the parents of the bride. Oral contract. Altar for the marriage rite. Duties on the day before that of marriage. The rules for giving

away the bride. The Homa rite at marriage. Homa for entering her new home by the bride. The fourth day homa rite. The gift of salt (*Airiṇidána.*) Entry of the bride into her new home. Second marriage during the lifetime of the first wife. Marriage with an Ákanda tree before contracting a third marriage (*Arkavivâha*). The establishment of a second household-fire on contracting a second marriage during the lifetime of the first wife, (*Agnidvaya-sansarga*). Morning and evening homas. How to perform the daily homas when the person is polluted. Homa rite in a summary way, (*Samasyahoma.*) Fortnightly homas. Travelling with one's wife. Entry into the bride's chamber. Expiatory rites for evil dreams and other causes.

**Beginning** नमामि पार्व्वतीसूनुं भक्तानां सिद्धिदायकं।
क्रियते ह्युपकाराय स्मार्त्तानुष्ठानपद्धतिः।
दीक्षितानन्तविज्ञेन विश्वनाथस्य सूनुना।
प्रयोग उच्यते सम्यङ्मन्त्रविस्तारपूर्व्वकं॥
आश्वलायनशाखेऽस्मिन् सन्ति पद्धतयः शतं।
विना पुस्तकमार्गेण कर्म्म कर्त्तुं न शक्यते॥
तदर्थं क्रियते यत्नः पाठबोधहिताय च।
सुलभोपायसिद्ध्यर्थं वैदिकानां तदुच्यते॥
पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः।
ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुमन्त्रिताः॥ इत्यादि।

**End.** नमः पृथिव्यै स्वाहा। वाचस्पतये ब्रह्मण इदं नमः।
सीमन्तव्रतचौलनामकरणान्नप्राशनोपायन-
स्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च।
पुंसूयावसथप्रवेशनसुताद्यास्यावलोकाश्रम-
स्वीकारक्षितिपाभिषेकदयितायुग्मे च नान्दीमुखं॥

**Colophon.** इति श्रीमदनन्तदीक्षितविरचितं प्रयोगरत्नं प्रायश्चित्तान्तं समाप्तं। शकाब्दाः १६५०।

विषयः। बह्वृचां संस्कारादिषु सप्रमाणप्रयोगकथनं। तत्र स्वस्तिवाचनविधिः। अधिवासविधिः। कलशार्च्चनविधिः। पुण्याहवाचनविधिः। अभिषेकविधिः। नान्दीमुखश्राद्धविधिः। स्थालीपाकविधिः। इष्टिप्रायश्चित्तविधिः। अनुगताग्निप्रायश्चित्तविधिः। नैमित्तिकप्रायश्चित्तविधिः। अथ गर्भाधानादिसंस्कारविधिः। दुष्टरजोदर्शनशान्तिविधिः। विच्छिन्नस्य गृह्याग्नेः पुनः सन्धा-

नविधिः। गर्भाधानपुंसवनसीमन्तोन्नयनविधिः। अकृतसीमन्तायाः प्रसवे विशेषविधिकथनं। विष्णुबलिविधिः। जातकर्म्मविधिः। षष्ठीपूजाविधिः। नामकरणविधिः। पर्य्यङ्कारोहणविधिः। दुग्धपानविधिः। कर्णवेधविधिः। सूर्य्यावलोकनविधिः। निष्क्रमणविधिः। उपवेशनान्नप्राशनविधिः। वर्द्धापनविधिः। चौलकर्म्मविधिः। उपनयनविधिः। मेधाजननविधिः। देवकोत्थापनविधिः। उपाकर्म्मोत्सर्ज्जनविधिः। अध्ययनविधिः। महानाम्नयादिव्रतविधिः। महाव्रतविधिः। उपनिषद्व्रतविधिः। गोदानव्रतविधिः। ब्रह्मचारिव्रतलोपे प्रायश्चित्तविधिः। समावर्त्तनविधिः। विवाहविधिः। कन्यादिलक्षणकथनं। कन्यादातारः। वाग्दानविधिः। विवाहवेदिनिर्म्माणविधिः। विवाहपूर्व्वदिनकृत्यनिरूपणं। कन्यादानविधिः। विवाहहोमविधिः। प्रवेशनीयहोमविधिः। चतुर्थीहोमविधिः। ऐरिणीदानविधिः। वधूगृहगमनविधिः। अधिवेदनविधिः। अर्कविवाहविधिः। अग्निद्वयसंसर्गविधिः। उपासनाख्यसायंप्रातर्हीमविधिः। अशौचे होमविधिः। समस्य होमविधिः। पचहोमविधिः। सभार्य्यस्य प्रवासविधिः। दम्पत्योर्गृहप्रवेशविधिः। अशुभस्वप्नदर्शनादौ प्रायश्चित्तविधिकथनञ्च।

---

**No. 2393.** अमरुशतकटीका। Substance, country-made paper, 16 × 3½ inches. Folia, 34. Lines, 7 on a page. Extent, 889 ślokas. Character, Maithili. Date, ? Place of deposit, Vahorá-grám, Post Chámpánagara, Zillá Púrṇiyá, Lála Jhá. Appearance, old. Prose. Correct.

**Amaruśataka-ṭíká.** A commentary on a century of miscellaneous verses by Amaru, a poet of great renown. By Jnánánanda Kaládhara.

**Beginning.** विद्या वितरति मुक्तिं भक्तिमविद्या च तां भजिष्यामः।
या चरमा चरमायाः शक्तिः सा नः शिवं दिशतु॥
तदुभयरसपरिपाटीपरिष्कृतवाटीमिमां रम्यां।
कुरुतेऽमरुशतटीकां ज्ञानानन्दः कलाधरः श्रीमान्॥
यः सौभाग्यवता विभक्तिकलितज्ञानामृतानन्दयुग्वात्स्यायनकामतन्त्रविलसत्केलिक्रियाकौशलः।
व्याचष्टेऽत्र रसद्वयं कविकुलालङ्कारचूडामणिः
श्रीलश्रीरविचन्द्र एष पिशुनां मात्सर्य्यतामत्सृजन्॥
यदि स्यात् परमानन्दे कामानन्दे च वासना।
तदा संसेव्यतां धीराष्टीकेयं कामदा सदा॥
क्व चातिकर्कशः शान्तः क्व चातिललितः शुचिः।
एकत्र वाक्ये व्याख्यातुस्तावहो कोशलं महत्॥

निर्व्विघ्नप्रारिप्सितशतकसमाप्तिकामोऽयन्यद्दिष्टदेवतां कौशेयमाह,—व्याहुष्टीति । अम्बि- कायाः पार्व्वत्याः कटाक्षः अपाङ्गदर्शनं । इत्यादि ।

**End.** नानाविधान् भागवतधर्म्मान् निरूप्य रामस्मरणमेव सर्व्वगरिष्ठमिति सूचितं ॥

**Colophon.** इति श्रीमदमरुशतकटीका समाप्ता ।

विषयः । अमरुशतकस्य शृङ्गारपक्षे शान्तिपक्षेऽपि व्याख्यानम् ।

---

**No. 2394.** दण्ड्यर्थमुक्तावली । Substance, country-made paper, 16 × 3½ inches. Folia, 58, Lines, 8 on a page. Extent, 2,280 slokas. Character, Maithili. Date, ? Place of deposit, Vahorá-grám, Post Champánagara, Zillá Púrṇiyá, Lála Jhá. Appearance, decayed. Prose. Correct.

**Daṇḍyartha-muktávalí.** A commentary on the *Kávyádars'a* of Daṇḍi. By Narasiñha Suri.

**Beginning.** यद्यापि योऽहरजटावनवासखिन्नो-
गुर्व्वङ्गमागमनपापमपाकरोति ।
गङ्गातटे नयनवह्निसमीपवर्त्ती
चन्द्रोयतिव्रतवरः स शिवं तनोतु ॥
नारदादिमुनिवृन्दवन्दितं गोपिकानयननीरजार्च्चितं ।
सान्द्रवारिधरकान्तिकोमलं नन्दपुण्यपरिणाममाश्रये ॥
दोषान् परस्य परिभूषयति प्रयत्ना-
द्बालस्य वा वङ्कवयःक्रमगर्व्वितस्य ।
गृह्णाति यः परगुणस्य कणानपीह
तस्मै नमोधरणीमण्डलमण्डनाय ॥
आसीत् कीर्त्तिकरात् सुधीहरिहरस्तस्मादभूत् सत्कविः
श्रीमत्पण्डितपुङ्गवोरुचिकरः श्रीकृष्णशर्म्मा ततः ।
तस्मादेष गदाधरः समभवत्तन्नन्दनः सम्प्रतां
सूरिः श्रीनरसिंह एष तनुते दण्ड्यर्थमुक्तावलीं ॥
अशक्तिरस्माकमिहास्ति यद्यपि
प्रकृष्ट + + + विवेचने बुधाः ।
तथापि गोविन्दपदारविन्द-
भक्त्या न शक्यं किमिहास्ति लोके ॥

मत्र प्रत्यूहव्यूहतिमिरतरणिभूतां विशिष्टदेवतां भगवतीं भारतीं भावयन्नाह चतुर्मुखेति चतुर्मुखमुखमेवाम्भोजवनं तस्य हंसवधूर्हंसरमणी। इत्यादि।

**End.** कृतमभिसरणं यस्य तादृशः सन् रमते कीर्त्तिञ्च लभते।

**Colophon.** इति श्रीनरसिंहसूरिविरचिता दृष्टार्थमुक्तावली समाप्ता।

विषयः। दण्डिकृतकाव्यादर्शाभिधानालङ्कारग्रन्थस्य व्याख्यानम्।

---

**No. 2395.** प्रभावतीपरिणयम्। Substance, palm-leaf, 15 × 2 inches. Folia, 78. Lines, 5 on a page. Extent 1,647 ślokas. Character, Maithli. Date, ? Place of deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, decayed. Prose and verse. Generally correct.

**Prabhávatí-pariṇaya.** The marriage of Prabhávatí, a drama in 7 acts. By Harihara.

**Beginning.** देव्या मानापनोदप्रणतशिवशिरःशीतधाम्ना नखेन्दोः

सम्पूर्णे सैंहिकेयाकृतिकुटिलजटामण्डलाङ्कावकृष्टे।

गीर्व्वाणाः सान्द्रपर्व्वभ्रमचकितहृदोऽन्यश्च देतत्किरीटात्-

सङ्गाद्गङ्गाप्रवाहे प्रवहति विहितस्नानपुण्याः पुनन्तु॥

ध्यानावधानपरिलङ्घनजागरूक-

रोषानलोन्मथितमन्मथविग्रहस्य।

सद्यः प्रबुद्धकरुणापरिणाहदीर्घ्य-

द्देवस्य पातु परिदेवितमिन्दुमौलेः॥

नान्द्यन्ते सूत्रधारः। अलमतिविस्तरेण। पुरोऽवलोक्य। कथमयमशेषभुवनवनिताविधीयमानसायन्तनमङ्गलदीपिकासहस्रसमकालमेव पूर्व्वाचलशिखरसौधपरिसरे। ———

यः किल श्रीवासुदेवात्मजन्मनः कुमारः प्रद्युम्नस्य।

सच्चरितसन्दर्भगर्भितं प्रभावतीपरिणयं नाम नाटकं।

परन्तु कृतस्त्यमेतदिति स्मारयितुमवशिष्यते। सूत्रः। मारिष मैथिल एवायं प्रबन्धः नटः। सवितर्कं। भाव — — — — — — — — — — — — — — ।

प्रादुर्भूय परोगिरेरिव हृषीकेशाकृतौ राघवो-

यत्सोमद्युतिवद्दिवाकरमहावंशे दिदीपे द्विजः।

या लक्ष्मीरथ मैथिलादुद्भवद्विद्यावदातात्मन-

स्ताभ्यामुद्भवमापतुः कुशलवप्रख्यातगोत्रौ सुतौ॥

एषा तयोः प्रथमजेन निजानजात-
श्रीनीलकण्ठकविकण्ठविभूषणाय ।
गोविन्दसूनगुणगुम्फनिपन्नसूक्ति-
मुक्तावली हरिहरेण चिरेण चीर्णा ॥

अभिनयाय चास्मासु समर्पिता । इत्यादि ।

तथापीदमस्तु ।

**End.** प्राक् प्राप्नोतु चिराद्गिरासहचरी मुद्रां समुद्रात्मजा
नोचेन्मुह्यतु वैरमित्यपि नचेन्मूढेषु मा मज्जतु ।
येषां दुर्मदमोहदुर्दिनदशां दोषस्पृशामग्रतः
कामग्रस्त इवावसीदति सतामन्तर्निगूढो गुणः ॥

अपि च ।

पुरस्तात् पैशुन्यं परिहरतु गोष्ठीं गुणजुषा-
मथैषामौन्नत्यैर्मुदितमिदमास्तात् जगदपि ।
कवेरेतत् कल्पावधि मधुरगम्भीरगुरुभि-
र्गिरां गुम्फैः स्यूतं सुकृतमनुगटल्लन्तु सुहृदः ॥

इति निष्क्रान्ताः सर्व्वे ।

नाट्योपमहरोनाम सप्तमोऽङ्कः ।

विषयः । वज्रनाभसुतया प्रभावत्या सह प्रद्युम्नस्य परिणयवृत्तान्तमवलम्ब्य विरचितमिदं नाटकम् । तत्र प्रथमाङ्के,—सारणभद्रयोरभिनयेन सुकुमारे कैशोरे वयसि वर्त्तमाना प्रभावती सह सहचरीभिः भवनदीर्घिकायां विलाससुखमनुभवन्ती कथाप्रसङ्गेन प्रद्युम्नस्य रूपगुणादिकं श्रुत्वा तस्मिन् नितरां प्रीतिमुवाहेति सूचनं । अथ प्रद्युम्नोऽपि चित्रफलके प्रभावतीप्रतिबिम्ब-दर्शनेन समुद्भिन्नानुरागकुसुमः सह वयस्येन प्रमदवनं प्रविश्य रहसि तामनुध्यायन्नात्मभूशरेणैव निरतिशयं तापमाप । द्वितीयाङ्के,—विशेषेण प्रभावत्याः पूर्व्वरागवर्णनं । तत्र माधवीमण्डपमण्डनायमानायास्तस्याश्चित्तविनोदनाय तरलिकाप्रमुखैः सखीगणैरालेख्यसमर्पितसङ्कल्प-जन्मानं प्रदर्श्य सा कथञ्चित् समाश्वासितेति वर्णनं । तृतीयाङ्के,—शाम्बादिभिः सह नटवेशेन प्रद्युम्नस्य वज्रनाभपुरप्रयानवर्णनं । चतुर्थाङ्के,—तत्र तयोरन्योन्यदर्शनं मदनलेखप्रस्थापनञ्च । अथैकदा समुज्जृम्भिते कुसुमसमये कुसुमवाटिकां सह सखीसमूहेन सनाथयन्त्याः प्रभावत्या भ्रमरबाधनां सूचयन्त्याः पुरतः भ्रमररूपं विहाय स्वरूपेण प्रकाशमानस्य मानसभवस्य तया सार्द्धमङ्गुलीयकविनिमयादिवर्णनं । पञ्चमाङ्के,—तरलिकया सह शाम्बगदयोरन्तःपुरोद्यानं प्रविष्टयोरुद्यानसौन्दर्य्यवर्णनं । सन्ध्यावर्णनं । चन्द्रवतीगुणवतीभ्यां सह शाम्बगदयोः परिणय-

कथनञ्च। षष्ठाङ्के,—सुप्तोत्थितस्य प्रद्युम्नस्य प्रभातरमणीयकतावर्णनं। अथाम्बरतले सहसा घनघटाच्छन्ने तरलिकासनाथया प्रियया सह मनसिजस्य केलिशैलतटङ्गतस्य विलासवर्णनं। नायिकायाः प्रणयमानवर्णनञ्च। सप्तमाङ्के,—राजपुरोहितेन सह कञ्चुकिकुब्जयोः संवादेन अन्तःपुरहृत्तान्तोऽयं वज्रनाभेन परिज्ञातः समुद्युक्तश्च स कन्यान्तःपुरपाटच्चराणां समुचित-शासनायेति सूचितं। अथान्तरे विमानमार्गेण नारदस्य वज्रनाभेन सह यादवकुमाराणां समरसंरम्भसन्दर्शनं। प्रद्युम्नसमाश्वासनञ्चेति शम्।

---

**No. 2396.** मिताक्षरा। Substance, country-made paper, 14 × 10 inches. Folia, 205.Lines, 26—27 on a page. Extent, 4,054 ślokas. Character, Nágara. Date, Sм. 1862. Place of deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh. Prose. Generally correct.

**Mitákshará.** A commentary on the Gautama Sañhitá—a text-book on law. By Haradatta.

**Beginning.** प्रथमतश्चोपि पचापि न विद्यन्ते।——प्रक्षाल्य पादौ चेति वसिष्ठः। वाग्यतः शब्दमकुर्वन्। हृदयस्पर्शः परिमानार्थमिदं। इत्यादि।

**End.** धर्मः सोऽयमादितोवेदोधर्ममूलमित्यारभ्य एवमन्तोधर्म्म उक्तः। द्विरुक्तिः धर्म-शास्त्रपरिसमाप्त्यर्था।

**Colophon.** इति गौतमीयहृत्तौ हरदत्तविरचितायां मिताक्षरायामष्टाविंशोऽध्यायः। शुभं भूयात्। संवत्। १८६२।

विषयः। गौतमधर्म्मसंहिताया व्याख्यानम्।

---

**No. 2397.** आलोकदर्पणः। प्रत्यक्षखण्डः। Substance, country-made paper, 16 × 2 inches. Folia, 97. Lines, 5 on a page. Extent, 2,774 ślokas. Character, Maithili. Date ? Place deposit, Dhamdaha-grám, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, decayed. Prose. Correct.

**Aloka-darpaṇa.** A gloss on Jayadeva's commentary on the *Pratyaksha-chintámaṇí* of Gañges'a. By Maheśa Mahámahopádhyáya.

**Beginning.** चतुर्व्विधमितिमूलं यद्यपि प्रत्यक्षकरणत्वादिना शरीरादिकमपि संगृह्यते तथापि चतुर्व्विधत्वमचतमेवेति भावः।

**End.** विधाय विदुषां प्रीत्यै प्रत्यक्षालोकदर्पणं।

श्रीगोपाले महेशेन तच्चाकारि समर्पणम् ॥

**Colophon.** इति श्रीमहामहोपाध्यायसर्व्वकुरश्रीमन्महेशविरचिते आलोकदर्पणे प्रत्यक्षखण्डः सम्पूर्णः ।

विषयः । जयदेवमिश्रकृतचिन्तामणिप्रत्यक्षटीकाया व्याख्यानम् ।

---

**No. 2398.** पूजारत्नाकरः । Substance, country-made paper, 12 × 5 inches. Folia, 142. Lines, 10 on a page. Extent, 2,732 ślokas. Character, Nágara. Date, ? Place of deposit, Dhamdaha, Zillá Púrṇiyá, Bhaiyálála Jhá. Appearance, fresh. Prose and verse. Generally correct.

**Púj́á-ratnákara.** Rituals for worshipping various gods and goddesses according to Tántric rules. By Chaṇḍes'vara. He was minister for Peace and War to a king of Mithilá.

**Beginning.** प्रातः स्वर्गतरङ्गिणीजलभरैर्नैचोत्पलेनार्च्चितः
पार्व्वत्या सितभूतिचन्दनचयैरालिप्तगात्रोज्ज्वलः ।
देवश्चन्द्रकलाविलासितिलकोगौरीविवाहोत्सवा-
रम्भे शैलसुतार्पितस्वजगतामर्घ्योहरः पातु वः ॥
यत्पूजाकुसुमैः शुभैः सुमनसोनेच्छन्ति कल्पद्रुमान्
यन्नैवेद्यनिवेदनैरपि सुधां भोक्तुं यतन्ते+तं ।
स श्रीमान् मिथिलावनीन्द्रमहितो मन्त्रीन्द्रचण्डेश्वरः
सन्न्यायैः परिमार्ज्जितं वितनुते पूजासु रत्नाकरं ॥
साधारणविधेयाद्यस्तरङ्गः परिकीर्त्तितः ।
सूर्य्यपूजातरङ्गोऽत्र द्वितीयोऽथ सुविस्तरः॥
— — — — — — — क्षिप्रं हि
मानुषे लोके सिद्धिर्भवति कर्म्मणां ॥
कर्म्मणां सिद्धिं कांक्षन्तोदेवतानां पूजां कुर्य्युरित्यर्थः । इत्यादि ।

**End.** गिरिपृष्ठे जपेन्मन्त्री मातरोलोकमातरः ।
कौलिकेन विधानेन राज्यायुःसुखदायिकाः ॥

**Colophon.** इति महासान्धिविग्रहिकसर्व्वकुरश्रीचण्डेश्वरविरचितः पूजारत्नाकरः समाप्तः शुभमस्तु ।

विषयः। साधारणतोदेवपूजाविधिकथनं। तत्र कालदेशस्थानादिविवेचनं। मण्डलवलिहरणादिविधिकथनं। पुष्पचयनादिविधिः। वेदिवितानादिविधिः। नैवेद्यप्रतिपत्तिविधिः। अथ सूर्य्यपूजाया आवश्यकताकथनं। तत्फलादिकथनं। पूजाधिकारिनियमादिकथनं। सूर्य्यमन्दिरमार्ज्जनादिफलकथनं। ब्रह्मस्नानविधिः। पञ्चगव्यविधिः। स्नपनपूजनयोःफलकथनं। सूर्य्यावेदानविधिः। पञ्चोपचारविधिः। गन्धपुष्पविवेचनं। धूपदीपनैवेद्यादिप्रतिपत्तिकथनं। वासोऽलङ्करणादिदानविधिः। अथ सूर्य्यनित्यपूजाविधानं। चक्रादिनिर्म्माणविधिकथनपूर्व्वकं तत्पूजादिविधिकथनं। स्थण्डिलपूजादिविधिः। सूर्य्यमूर्त्तिपूजाविधिः। सौरस्नानादिविधिः। सूर्य्यस्य रथयात्राविधिः। सौरधर्म्मकथनं। अथ शिवपूजाविधिकथनं। तत्र पार्थिवादिलिङ्गपूजाविधिः। रुद्राक्षधारणादिविधिः। पञ्चोपचारदानादिविधिः। घृताभिषेकमहास्नानादिविधिः। पुष्पादिविवेचनं। शिवप्रीतये दानादिविधिः। घृतकम्बलविधिः। प्रतिष्ठतिनिवेदनविधिः। महास्नानविधिः। शिवपूजावारादिविधानं। शिवस्य रथयात्राविधिः। एवं ब्रह्मणः पूजाविधिः। तत्र रथयात्रादिविधानञ्च। विष्णुपूजाविधिः। तद्गृहमार्ज्जनादिविधिः। तदुपचारादिविधिः। तत्र पुष्पधूपदीपनैवेद्यादिविधानं। शिलापरीक्षादिविधिः। भगवद्दीक्षादीक्षितानामपराधादिकथनं। दुर्गापूजादिविधिः। कुमारीपूजादिविधिः। मातृपूजनादिविधिः। देवीयागविधिः। मूर्त्तिनिर्म्माणादिविधिः। देव्याः पवित्रारोपणविधिः। कालभेदे तस्याः पूजनादिकथनञ्च।

---

**No. 2399.** पुरश्चरणचन्द्रिका। Substance, palm-leaf, 16 × 1½ inches Folia, 52. Lines, 5 on a page. Extent, 1,466 ślokas. Character, Maithili Date, L. E. 538. Place of deposit, Guṇamantí-grám, Post Káṇígañja, Zilla Púrṇiyá, Bábu S'rípati Jhá. Appearance, old. Verse. Correct.

**Puraścharaṇa-chandriká.** On Kaula Rites for special sanctification or purification. By Devendra A'śrama, disciple of Vibudhendra A'śrama. CONTENTS: Faith defined. Praise of spiritual guides. Duties of Kaulas. Rules for postures and seats. Rosaries. Gesticulations. Fixing of the pivot. Modes of showing respect to spiritual guides and revered persons. Purification of the elements. Fixation of the soul or spirit in images. Práṇáyáma. Fixation of the mind on particular objects. Intellectual sacrifice. Worship of the soul. Rules for placing the conch-shell in its proper place. Manifest or material worship. Means of making Mantras efficient. Altars. Homas and spoons and other implements for them. Rules for sanctifying the five members of the body.

**Beginning.** प्रणम्य जानकीनाथं देवेन्द्राश्रमधीमता ।
क्रियते मन्त्रचन्द्राणां पुरश्चरणचन्द्रिका ॥
अशेषशास्त्राम्बुधिपारदृश्वा विशेषतो मान्त्रिकचक्रवर्त्ती ।
उपासकानां हितहेतुभूतां पुरश्क्रियां शेविशदीकरोति ॥ इत्यादि ।

**End.** तन्त्राणि जैमिनिकणादपतञ्जलीनां
श्रीव्यासगोतमसदाशिवपाणिनीनां ।
सांख्यस्य चामरगुरोः कवितां स्मृतिभ्यो-
वेदञ्च वेद कृपया रघुनन्दनस्य ॥
तेनेयं प्रथिता माला वाक्पुष्पैरर्थतन्तुना ।
कण्ठे विभूषणं भूयाद्रघुनाथार्पिता सती ॥
इति सकलमन्त्राणां पुरश्चरणचन्द्रिकां ।
सर्व्वागमानुसारेण श्रीदेवेन्द्राश्रमोऽकरोत् ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमद्विबुधेन्द्राश्रमपूज्यपादशिष्यश्रीदेवेन्द्राश्रमविरचितायां पुरश्चरणचन्द्रिकायां जपहोमतर्पणाभिषेकब्राह्मणभोजनविधिः सम्पूर्णः । लसं ५३८ ।

विषयः । भक्तिनिरूपणं । गुरुभक्तिप्रशंसा । कौलिकाचारनिरूपणं । आसनविधिः । जपमालाविधिः । मुद्राविधिः । कौलारोपादिविधिः । गुर्व्वादिवन्दनविधिः । भूतशुद्धिविधिः । प्राणप्रतिष्ठादिविधिः । प्राणायामादिविधिः । पीठन्यासादिविधिः । अन्तर्यागविधिः । आत्मपूजनविधिः । शङ्खस्थापनविधिः । बाह्यपूजाविधिः । मन्त्रसिद्ध्युपायकथनं । कुण्डविधिः । होमविधिः । स्रुक्स्रुवादिलक्षणकथनं । पञ्चाङ्गपुरश्चरणप्रक्रियाकथनं ।

---

**No. 2400.** दुर्गाटीका । Substance, foolscap paper, 14 × 4 inches. Folia, 56. Lines, 8 on a page. Extent, 1,485 ślokas. Character, Maithilí. Date, ? Place of deposit, Guṇamantí-grám, Post Ráṇíganja, Zillá Púrṇiyá, Paṇḍit Sadánanda Miśra. Appearance, new. Prose. Correct.

**Durgá-ṭíká.** A commentary on the Chaṇḍi section of the Márkaṇḍeya Puráṇa. By Jagaddhara.

**Beginning.** प्रचण्डचण्डमुण्डादिमुखखण्डनपण्डिता ।
चण्डिका पातु पाषाण + + कोदण्डमण्डिता ॥
उपभेदादिकान् कोषान् वीक्ष्य पाणिनिसम्मता ।
श्रीजगद्धरधीरेण दुर्गाटीका विधीयते ॥

पुराणवाणी समभाणि पुण्या
धन्येन मान्येन मुनीश्वरेण ।
ममापकस्याच परिश्रमेण
वर्णव्यवस्था कियती यदि स्यात् ॥

इह किल चतुर्द्दशमन्वन्तराणि । स्वायम्भुवोमनुः पूर्व्वं मनुः स्वारोचिषस्तथा । चौत्तमिस्ता-मसिश्चैव रैवतश्चाक्षुषस्तथा । षड़ेते मनवोऽतीता अद्य वैवस्वतोमनुः । मार्कण्डेयः स्वशिष्याय क्रोष्ठुकिने प्राहस्म, सावर्णिरित्यादि ।

**End.** भगवत्याः प्रपन्नाय ज्ञानसामर्थ्यमाविष्कृतमिति सर्व्वं रमणीयं ।
विद्याच्छत्रं कुलच्छत्रं धारितं येन धीमता ।
मीमांसकः + + गणे सोऽभूच्चण्डेश्वरः कविः ॥
तद्वंशजेन महनीयनयेन नाना-
विद्याविनोददयितेन जगद्धरेण ।
टीकेयमादरवता व्यरचि प्रयत्ना-
दालोकयन्तु कृपया गुणिनोममैनाम् ॥
रत्नं रत्नधरोपमाय गुणिना + + नवद्यः सतां
+ + + मदयन्तिकापि सुषुवे नैयायिकं यं सुतं ॥
तस्या + + + + जगद्धरेण कविना टीकेयमुज्जृम्भताम्
तत्तद्वर्णविवर्णनैककुशला स्वल्पाक्षरार्थाधिका ॥
अष्टादशव्याकरणप्रवीणमुनीन्द्रपाराशरि-निर्म्मितस्य ।
ग्रन्थस्य काचिद्विहतिर्ममाच स्वल्पस्य हास्यस्य कदापि मास्तु ॥

**Colophon** इति महोपाध्यायश्रीजगद्धरकृतदुर्गाटीकायां त्रयोदशमाहात्म्यं समाप्तं । समाप्तोऽयं ग्रन्थः ।

विषयः । विविधव्याख्यानकौशलप्रदर्शनेन मार्कण्डेयपुराणीयदेवीमाहात्म्यस्य विशदीकरणं ।

---

**No. 2401.** दीपिकाप्रकाशः । Substance, palm-leaf, 16 × 2 inches. Folia, 107. Lines, 5 on a page. Extent, 2,728 ślokas. Character, Maithilí. Date, ? Place of deposit. Guṇamantí-grám, Post Ráṇiganja, Zillá Púrniyá, Bábu S'rípati Jhá.

**Dípikáprakáśa.** A commentary on an astronomical work entitled *S'uddhidípiká*. By Rághava Ácharya.

Beginning. नत्वा गौरीदयितं दृष्ट्वा मिहिरादिशास्त्राणि ।
श्रीराघवेण विदुषा वितन्यते दीपिकाज्योतिः ॥

शास्त्रारम्भे अभिमतसिद्ध्यर्थं कृतमिष्टदेवतानमस्काररूपं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति । दृष्टेति । तरणिः सूर्यः वो युष्मान् पातु । इत्यादि ।

End. कीदृशीं सुविस्तरे ज्योतिःशास्त्रे समस्तव्यवहारजनिकां ।

Colophon. इति राघवाचार्य्यविरचिते दीपिकाप्रकाशे यात्रानिर्णयो नामाष्टमोऽध्यायः ।

विषयः । शुद्धिदीपिकेतिसमाख्यानस्य ज्योतिर्ग्रन्थस्य व्याख्यानम् ।

---

No. 2402. ललितावृत्ति । Substance, country-made paper, 12 × 4 inches. Folia, 30. Lines, 14 on a page. Extent, 1,308 ślokas. Character, Maithilí. Date, Sk. 1682. Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose. Correct.

**Lalitávṛitti.** An exegesis on the Paribháshá sútras of Páṇini. By Purushottama.

Beginning. अथातः परिभाषाणां वचनानाञ्च तादृशीं ।
वृत्तिं श्रीललितां नाम करोति पुरुषोत्तमः ॥

परितोव्याप्तता भाषा परिभाषा सा हि एकदेशस्था सकलं शास्त्रमभिज्वलयति, यथा वेश्मप्रदीप इति । सैव द्विविधा लिङ्गवती विध्यङ्गशेषभूता च इत्यादि ।

End. अन्यान्यपि शब्दक्रियोपयोगन्यायवाक्यानि लिङ्गोदाहरणाख्याया:मवगन्तव्यानीति ।

Colophon. इति श्रीपुरुषोत्तमविरचिता परिभाषाटीका ललितावृत्तिः सम्पूर्णा । शकाब्दाः । १६८२ ।

विषयः । पाणिनिपरिभाषासूत्राणां व्याख्यानं ।

---

No. 2403. अन्वयलापिका । Substance, country-made paper, 13 × 5 inches. Folia, 36. Lines, 12 on a page. Extent, 1,680 ślokas. Character, Nágara. Date. ? Place of deposit, Dhamdaha-grám, Post Dhamdaha, Zillá Púrṇiyá, Paṇḍit Bachharaṇa Ṭhákura. Appearance, old. Prose. Incorrect.

**Anvayalápiká**. A commentary on the *Kumárasambhava* of Kálidása. By Krishṇapati S'armá, of the family of Sañkaradhara of Mithilá. The author names Jagaddhara and Divákara as voluminous commentators on the work; the works of both these are unknown.

**Beginning**. चित्रं यस्य चरित्रमाङ्करमरा भिचुर्महादानवान
नग्नोद्दिगवसनोमहाधनपतिर्विश्वम्भरः क्ष्वेड़भुक् ।
वेदान्तागमवेदकारणगुरुर्देवोजगत्कारणं ।
सोऽव्याद्ग्रन्थविशुद्धये लघुधियं मां + सर्व्वदः शङ्करः ॥
यद्यपि सन्ति प्रचुराष्टीकाः कुमारसम्भवस्य काव्यस्य ।
— — — — — — — — ॥
सङ्कराढ़ीकुलोद्भूतश्रीकृष्णपतिशर्म्मणा ।
टीका कुमारकाव्यस्य क्रियतेऽन्वयलापिका ॥
अस्तीत्यादि । हिमालयोनाम हिमालयाख्योनगाधिराजः नगेष्वधिराज इत्यादि ।

**End**. गूढ़ं रहसि गुह्ये च न द्वयोः संहते त्रिषु-
इति कोषः । विकारोविकृतौ रुजि इति च ।

**Colophon**. इति कुमारसम्भवटीकायामन्वयलापिकायां सप्तमसर्गविवरणं समाप्तं ।
श्रीमज्जगद्धरदिवाकरपण्डितादे-
रत्यन्तविस्तरतरा हि कुमारटीका ।
स्वल्पावबोधविषया रचिता मयापि
धीरेण कृष्णपतिनान्वयलापिकेयं ॥

विषयः । कालिदासविरचितकुमारसम्भवकाव्यस्य सप्तमसर्गान्तं व्याख्यानम् ।

---

**No. 2404**. अन्वयलापिका । Substance, country-made paper, 13 × 5 inches. Folia, 109. Lines, 12 on a page. Extent, 5,559 ślokas. Character, Nágara. Date, ? Place of deposit, Dhamdaha-grám, Post Dhamdaha, Zillá Púrṇiyá, Paṇḍit Bachharaṇa Ṭhákúra. Appearance, old. Prose. Incorrect.

**Anvayalápiká**. A commentary on the *Raghuvañs'a* of Kálidása. By Krishṇapati, the same who wrote the exegisis noticed under the next preceding No.

**Beginning**. येोद्दवः कारणं चक्षात्रिजगतां + + + + भूरिवशा-

यः संह + + दधाति नितरां तेषां पुनः प्राप्तये ।
यः सद्वृत्तिधरान् नरानवति योदुर्वृत्तवृत्तिं + +
तं वन्दे पुरुषोत्तमं रघुपतिं सीतापतिं श्रीपतिं ॥
यन्नीह यद्यपि विशिष्टजनप्रणीत-
टीका रघुप्रभवकाव्यभवास्तथापि ।
स्वान्तमोदनकरान्वयलापिकेयं
स्वल्पाति कृष्णपतिना कृतिना प्रचक्रे ॥

विघ्नविघाताय शिष्यशिक्षायै चादौ मङ्गलमाचरति । वागर्थेति । पार्व्वतीपरमेश्वरौ यन्द पितुः शब्दगुणा मातेतिनिर्द्देशादभ्यर्हितत्वञ्चेति पार्व्वत्या—इत्यादि ।

**End.** किम्भूतां + + + हरिगजेन्द्रैः समेतां ।

**Colophon.** इति मैथिलसङ्कराढीवंशोद्भवश्रीकृष्णपतिविरचितायां रघुवंशटीकायामन्वयलापिकायामूनविंशतितमः सर्गः समाप्त इति ।

**विषयः ।** कालिदासविरचितरघुवंशकाव्यस्य व्याख्यानम् ।

---

**No. 2405.** तत्त्वकौमुदी । Substance, palm-leaf, 17 × 2 inches. Folia, 184. Lines, 6 on a page. Extent, 6,999 ślokas. Character, Maithilí. Date, Sk. 1552 L. E. 512. Place of deposit, Phaḍkiyá-grám, Post Champánagara, Jayapati Jhá. Appearance, old. Prose. Correct.

**Tattvakaumudí** A commentary on the epic poem called *Sisu pála badha.* By Bhavadadatta. The codex ends with the 10th cauto.

**Beginning.** करतलधृतशैलं प्रौढ़िविध्वंसि + +
समर + मितकंसं योगिहृत्पद्महंसं ।
मुकुलितनयनायाः सादरं राधिकाया
हृदयमधिवसन्तं नौमि कृष्णं हसन्तं ॥
वामार्द्धे मातृबुद्धा तदनु पितृधिया दक्षिणार्द्धे पुरस्ता-
न्नैषा नासौ किमेतद्द्विविधमतिमता कार्त्तिकेयेन दृष्टा ।
वक्षःक्षिप्ताहिहाराभिरुचिरवसनासक्तशार्दूलकृत्तिः
पायादर्द्धेन्दुचूड़ामणिमिलिततनुर्वाञ्छितं नोभवानी ॥
— — — — — — — — ।
नोवक्ष्भागुणचयोपचितापि माघे

जायापत्त्यापि तनुते मनसः प्रमोदं ।
तावत् प्रकाशयति नोविषयान् विविच्य
चेत् कौमुदी दुरवबोधपदार्थसार्थान् ॥

आदौ मङ्गलार्थं विघ्नोत्सारणकारणभूतं वक्ष्यमाणकथानायकं भगवन्तं नारायणं वस्तुनिर्देशद्वारेण कीर्त्तयन् श्रीशब्दञ्च प्रतिसर्गान्ते चिह्नितया प्रयुञ्जान आह श्रिय इति । इत्यादि ।

**End.** माघे श्रीभवदत्तेन टीका या क्रियते शुभा ।
सर्गः सम्भोगनामासौ तत्रागाद्दशमोऽसमः ॥

**Colophon.** इति श्रीभवदत्तकृतायां तत्त्वकौमुद्यां दशमः सर्गः । लसं ५९१ । शकाब्दाः १५५९ ।

विषयः । माघकृतशिशुपालवधाभिधानकाव्यस्य दशमसर्गान्तं व्याख्यानम् ।

---

**No. 2406.** योगरूढ़िविचारः । Substance, country-made paper, 14 × 4 inches. Folia, 6. Lines, 12 on a page. Extent, 183 ślokas. Character, Maithilí. Date, ? Place of deposit, Phaḍkiyágrám, Post Champánagara, Zillá Púrṇiyá. Jayapati Jhá. Appearance, old. Prose. Correct.

**Yogarúḍhi-vichára.** An enquiry into the meaning of words which, primarily expressive compounds, have subsequently become crude or specific. By Vaṅśadhara Miśra.

**Beginning.** योगार्थमात्रावगमे रूढ़िधीः प्रतिबन्धिका ।
अर्थतोभाति रूढ्यर्थांनियमेनेति नूतनाः ॥

पङ्कजं शुष्यतीत्यादौ पङ्कपदार्थान्वितजनिधात्वर्थान्वितडप्रत्ययार्थविशेष्यकशुष्यर्थविशेषणकवाक्यार्थबुद्धिसमर्थमिदं वाक्यमित्यादि ।

**End.** पदार्थान्वितद्रव्यार्थबोधकत्वं तदा लक्षणां विनैव योगार्थावगम इति ।

**Colophon.** इति श्रीवंशधरमिश्रकृतयोगरूढ़िविचारः समाप्तः ।

विषयः । प्राचीनार्व्वाचीनमतसंवादेन योगरूढ़िशब्दशक्तिनिरूपणं ।

---

**No. 2407.** विजया । Substance, country-made paper, 14 × 3¼ inches. Folia, 26. Lines, 11 on a page. Extent, 842 ślokas Character, Maithili. Date, ? Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose. Correct.

**Vijayá.** A commentary on the Chaṇḍí section of the Márkaṇḍeya Purána. By Bhagiratha, of the family of Pítamuṇḍí.

**Beginning.** यतो + क्रमतोनं यत्रग्रपारि यद्गीहितं ।
कारणं सर्व्वकार्य्याणां प्रणमामि तमीश्वरं ॥
यः पीतमुण्डीकुलभूषणमग्रजन्मा
माघादिकाव्यस्य चकार टीकां ।
स श्रीभगीरथकविर्विजयाभिधाना-
मेताञ्च मन्दमतिबोधकरीं करोति ॥

पुरा हि क्रोष्टुकिसंज्ञकेन मुनिना पृष्टः — — — — — — इत्यत आह, मार्कण्डेय उवाच इति ।

**End.** तत्र राज्यं तज्जन्मनि चविर्मसि अस्खलितं भविष्यति । इति त्रयोदशीमाहात्म्यं ।

**Colophon.** इति पीतमुण्डीश्रीभगीरथविरचिता चण्डीटीका विजयाभिधाना सम्पूर्णतामगात् ।

विषयः । मार्कण्डेयपुराणोक्तदेवीमाहात्म्यस्य व्याख्यानं ।

---

**No. 2408. श्राद्धनिर्णयः ।** Substance, palm-leaf, 10 × 2 inches. Folia, 98. Lines, 4 on a page. Extent, 2,328 ślokas. Character, Maithilí. Date, ? Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose and verse. Correct.

**S'ráddha-nirṇaya.** A summary of the various S'ráddha rites and of directions for performing them. By Sudars'ana.

**Beginning.** नत्वा सीतापतिं रामं सच्चिदानन्दविग्रहं ।
बालानां बोधसिद्ध्यर्थं क्रियते श्राद्धनिर्णयः ॥

अथ श्राद्धस्वरूपं निरूप्यते, तत्र सम्बन्धपदोपनीतान् पितॄनुद्दिश्य हविस्त्यागः श्राद्धं । इत्यादि ।

**End.** अत एव तत्र रात्रौ पर्य्युदस्तकालेऽपि श्राद्धं कर्त्तव्यमिति ।

**Colophon.** इति सुदर्शनकृतौ श्राद्धनिर्णयः समाप्तः ।

विषयः । तत्र श्राद्धस्वरूपविवेचनं । श्राद्धाधिकारिनिरूपणं । श्राद्धकालनिरूपणं । श्राद्धदेशादिनिरूपणं । श्राद्धविधिकथनं । श्राद्धद्रव्यनिरूपणं । पार्व्वणश्राद्धविधिः । एकोद्दिष्टादिविधिः । सपिण्डनविधिः । अष्टकाविधिः ।

---

**No. 2409.** विदग्धतोषिणी । Substance, country-made paper, 14 × 4½ inches. Folia, 8. Lines, 10 on a page. Extent, 160 ślokas. Character, Maithilí. Date, Sk. 1674. Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Verse. Correct.

**Vidagdha-toshiṇí.** An astrological treatise on the motions of the planets and on their effect on human destiny. By Rághavánanda.

**Beginning.** नत्वा सरस्वतीं देवीं राघवानन्दशर्म्मणा ।
चक्रे विदग्धतोषाय स्पष्टा जातकपद्धतिः ॥
आदौ च्छायादिकैर्ज्ञेयो जन्मकालः सुनिश्चितं ।
तत्कालप्रभवाः कार्य्याः सिद्धान्तोक्तैर्ग्रहस्फुटाः ॥ इत्यादि ।

**End.** विज्ञाय राजमान्यः स्याद्धीरः कीर्त्तिञ्च विन्दति ॥

**Colophon.** इति राघवानन्दकृतौ विदग्धतोषिण्यां दशान्तर्दशाध्यायः समाप्तः ।

विषयः । अयनांशादिनिरूपणपूर्व्वकं ग्रहाणां भावादिनिरूपणं । इष्टानयनविधिकथनं । ग्रहाणां बलाबलादिनिरूपणं । इष्टकष्टनिरूपणं । आयुर्द्दायनिरूपणं । अरिष्टभङ्गविवेचनं । अन्तर्दशानिरूपणञ्च ।

---

**No. 2410.** अनुमितिविचारः । Substance, country-made paper, 11 × 3 inches. Folia, 16. Lines, 9 on a page. Extent, 522 ślokas. Character, Maithilí. Date, ? Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose. Correct.

**Anumiti-vichára.** An essay on inference, a Nyáya treatise founded on the great work of Gaṅges'a. By Harirámа.

**Beginning.** अनुमितिस्तु द्विधा पक्षतावच्छेदके साध्यसमानाधिकरणमात्रावगाहिणी पक्षतावच्छेदके साध्यतावच्छेदकावगाहिनी च । इत्यादि ।

**End.** अनुमितेरनरोधेन तादृशपरामर्षस्य हेतुताकल्पनमावश्यकमिति गौरवं ।

**Colophon.** इति श्रीहरिरामविरचितोऽनुमितिविचारः समाप्तिमगात् ।

विषयः । अवच्छेदकावच्छेदेन अनुमितिविवेचनम् ।

---

**No. 2411.** नित्यकर्म्मलता । Substance, country-made paper, 13 × 3½ inches. Folia, 119. Lines, 10 on a page. Extent, 3,861 ślokas. Character, Maithilí. Date, ? Place of deposit, Rasáḍ-grám, Post

Dahmdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose and verse. Incorrect.

**Nityakarmalatá** A summary of the diurnal duties of a religious householder. By Dhírendra Panchíbhushaṇa, son of Dharmes'vara Panchípanchánana.

**Beginning.** वन्देऽहं पार्व्वतीनाथं संसारार्णवतारकं।
प्रवक्ष्यामि प्रयत्नेन नित्यकर्म्म यथाविधि॥
रघुनाथसुतासूनु रमाकान्तसुतात्मजः।
विमाता सुमतीनाम्नी प्रे + व मम पालने॥
अपि च।
पञ्चीपञ्चाननश्रीमद्धर्म्मेश्वरतनूद्भवः।
धीरेन्द्र इति विख्यातः सानन्दश्चित्तनन्दनः॥
— — — — — — — —।
ऋग्यजुःसामच्छन्दांसि इति वेदास्त्रयस्त्रयी॥
ऋग्ब्रह्मा हि यजूरुद्रः साम विष्णुः प्रकीर्त्तितः।
— — — — — — —।
सामवेदाधिपोऽग्निर्मो यजुर्व्वेदाधिपोरविः॥ इत्यादि।

**End.** कृष्णा कृष्णस्वराखण्डाः क्रव्यादाश्च विगर्हिताः।
अप्रशस्तास्तथाज्ञेयः परिवेश + + र्पणे॥

**Colophon.** इति पञ्चीपञ्चाननश्रीमद्धर्म्मेश्वरात्मजपञ्चीभूषणश्रीधीरेन्द्रविरचिते नित्यकर्म्मलतायां चतुर्थकाण्डे नानाप्रकरणसङ्ग्रहस्तरङ्गः समाप्तः।

विषयः। प्रातरुत्थानादिविधिः। मूत्रपुरीषोत्सर्गविधिः। शौचविधिः। आचमनविधिः। दन्तधावनादिविधिः। तदुत्तरकर्म्मविधिः। पुष्पचयनादिविधिः। तत्र स्तेयापवादकथनं। पर्व्वव्रात्यादिनिरूपणं। स्नानादिविधिः। तदुत्तरकर्म्मविधिः। सन्ध्याविधिः। जपविधिः। मालाविधिः। तर्पणविधिः। तदुत्तरकर्म्मविधिः। अध्यापनादिविधिः। पूजादिविधिः। तत्र प्रयोगकथनञ्च। विष्णुपूजादिविधिः विशेषेण दुर्गाशिवपूजादिविधिकथनं। शालग्रामशिलानिरूपणं। पञ्चयज्ञादिविधिः। तत्र नित्यहोमविधिः। बलिविश्वदेवविधिः। नित्यश्राद्धविधिः। तदुत्तरकर्म्मविधिः। अतिथिपूजादिविधिः। दानप्रतिग्रहयोर्विधिः। भोजनादिविधिः। तदुत्तरकर्म्मविधिः। भक्ष्याभक्ष्यनिरूपणं। ब्रह्मचर्य्यनिरूपणं। उपोष्यव्रतस्नातकव्रतादिविधिः। पुराणश्रवणादिविधिः। शयनविधिः। खट्वादिविधिः। सङ्ग्रहणविधिः। वर्णाश्रमधर्म्मविधिकथनञ्च।

———

**No 2412.** कारकोल्लासः। MS. reported upon by the Political Agent at Maṇipur.

**Kárakollása.** A primer on the use of the Sañskṛit case affixes. By Bharata Sena Mallika, son of Gauráñga, of the family of Harihara Sena. The author lived about three hundred years ago, and wrote commentaries on several mediæval poems. He was a Vaidya by caste.

**Beginning.** ॐ नमो गणेशाय। त्रैलोक्यत्राणकर्त्तारौ नत्वा गौरीमहेश्वरौ।
करोति कारकोल्लासं पद्येन भरतो भिषक्॥
कारकं स्यात् क्रियामूलं क्रियाधात्वर्थ उच्यते।
धातवस्त्रिविधा धीरैरुक्ताः केचिदकर्म्मकाः॥

**End.** कारकोक्तविधिः स्वल्पं मयात्र परिकीर्त्तितः।
विस्तारेणैव विज्ञेयस्तत्रान्तरविलोकनात्।

**Colophon.** इति वैद्यहरिहरसेनवंशप्रभवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतः कारकोल्लासः समाप्तः।

---

**No. 2413.** रामसूक्तम्। MS. reported upon by the Political Agent at Maṇipur.

**Rámaśukta.** A hymn in praise of Ráma as the supreme divinity. It appears to be an extract from a large work entitled *Sárvabhauma-sarvasva.* The author's name is not apparent, but his literary title was Sárvabhauma.

**Beginning** ॐ नमः परमदेवतायै। नवार्ककोटिमण्डलां चिदिन्दुषोडशीकलां।
नमामि सर्व्वमङ्गलामभङ्गलप्रणाशिनीं।
सूक्तं जयति रामस्य पूर्णब्रह्ममहात्मनः॥
सर्व्वस्वं सार्व्वभौमानां स्वर्गे मर्त्ये रसातले।

**End.** एवं यत्र यदायासे कूटदुर्घट एव हि।
शिष्टाचारविचारेण न राजा किल्विषी भवेत्॥

**Colophon.** इति श्रीरामसूक्ते सार्व्वभौमसर्व्वस्वेऽलिङ्गव्यवहारसाधनं नाम द्वादशोऽध्यायः॥

---

**No. 2414.** कारकानन्दः। MS. reported upon by the Political Agent at Maṇipur.

**Kárakánanda.** A primer on the use of the Sañskrit case affixes. Author's name is not given.

**Beginning.** श्रीकृष्णचैतन्यचन्द्राय नमः। प्रणम्य परमात्मानं सर्व्वान्तं जगदीश्वरं।
कारकानन्दतां दृत्तिमानन्दोविहरणोम्यहं।

करोतीति कारकः कृञधातोर्व्वुन् इत्यर्थे कादेशः कारकः करोतीति सर्व्वेषामन्त-र्भूतमित्यर्थः।

**End.** तेषामुदाहरणं सारस्वत्यादित्वात् सर्व्वव्याकरणात् ज्ञातव्यं पण्डितैर्मुख्याल-स्वत्वादस्माभिर्लिख्यते।

**Colophon.** इति कारकानन्दः समाप्तः।

---

**No. 2415.** मञ्जुभाषिणी। Substance, country-made paper, 13 × 4 inches. Folia, 22. Lines, 14 on a page. Extent, 1,674 śloka. Character, Maithilí, Date, ? Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose. Correct.

**Manjubháshiṇí.** A commentary on S'añkara A'chárya's *Ánandalaharí,* a hymn in praise of S'iva. By S'ríkṛishṇa A'chárya, son of Vallabha A'chárya.

**Beginning.** जगदण्डपरम्परां प्रसूते विसतन्तुप्रतिमापि याविरामं।
चितिमूलनिषेदुषीं नुमस्तामनिशं कुण्डलिनीं समीहिताय॥
अविकल्पविकल्पानामेकगोचरतां गतं।
मिथस्तदविनाभूतं शिवयोर्म्मिथुनं भजे॥
श्रीवल्लभाचार्य्यपुत्रेण श्रीलश्रीकृष्णशर्म्मणा।
आनन्दलहरीव्याख्या यथाशक्ति वितन्यते॥
सञ्चरन्ति सुखं सन्तः स्वाधीनविभवे पथि।
पराभिप्रायगमने प्रवेशसाहसं महत्॥

पुरा किल वाराणस्यां ब्रह्मसूत्रभाष्यकारः — — — — — तत्रैव ब्रह्मशक्तिं स्तौति स्म। शिव इत्यादि।

**End.** प्रकाशात्मकब्रह्मणा दीप्तमभिव्यक्तमिति शम्।

**Colophon.** इति श्रीश्रीकृष्णाचार्य्यविरचिता मञ्जभाषिणी सम्पूर्णा।

विषयः। शङ्कराचार्य्यकृतानन्दलहर्य्यां व्याख्यानम्।

---

**No. 2416.** श्रीपतिपद्धतिटिप्पनी । Substance, country-made paper, 16 × 4 inches. Folia, 19. Lines, 11 on a page. Extent, 627 s'lokas. Date, ? Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose. Correct.

**S'rípatipaddhati-ṭippaní.** A gloss on the *S'rípatipaddhati*, a treatise on horoscopy. By Bhaveśa.

**Beginning.** श्रीपतिजातकपद्धतिगणितमशेषं करोमि बालहितं ।

नत्वा गुरुचरणयुगं भवेशनामा गुरोः कथितं ॥

विघ्नविघाताय मङ्गलं प्रदर्शयति, नत्वेत्यादिना । अहं श्रीपतिनामाचार्य्यः जातकपद्धतिं वच्चे । इत्यादि ।

**End.** अस्मात्सर्व्वं पूर्व्ववद्दानेयं विचारस्तु पूर्व्ववत्कार्य्यः ।

**Colophon.** इति श्रीभवेशविरचिता श्रीपतिपद्धतिटिप्पनी समाप्ता ।

विषयः । श्रीपतिपद्धतिनामकस्य ज्योतिर्ग्रन्थस्य व्याख्यानम् ।

---

**No. 2417.** समरसारटीका । Substance, country-made paper, 16 × 5 inches. Folia, 25. Lines, 8 on a page. Extent, 442 ślokas. Character, Maithilí. Date, ? Place of deposit, Rasáḍ-grám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose. Incorrect.

**Samarasára-ṭíká.** A commentary on Rámachandra Somayájí's *Samarasára* ; a treatise on divination. By Bharata.

**Beginning.** अभिवन्द्य रामचन्द्रं गुरुं तदुक्तं स्वरग्रन्थं ।

विद्दणोमि यथाप्रज्ञं तदभिहितार्थानुसारेण ॥

तत्र श्रीरामचन्द्रनामा ग्रन्थकृत् प्रारिप्सितग्रन्थपरिसमाप्त्यादिपरिपन्थिप्रत्यूहापोहाय शिष्टाचारपरिपालनाय च गुरुप्रणामं प्रचिकीर्षितं प्रतिजानीते, नत्वा गुरुनिति ।

**End.** अकरोत् तद्ग्रन्थार्थप्रकाशिनीं सरलाञ्च ।

**Colophon.** इति श्रीरामचन्द्रसोमयाजिविरचितसमरसारटीका भरतकृता समाप्ता ।

विषयः । रामचन्द्रसोमयाजिकृतसमरसाराभिधानज्योतिर्ग्रन्थस्य व्याख्यानं ।

---

**No. 2418.** शुद्धिनिर्णयः । Substance, country-made paper, 12 × 3½ inches. Folia, 8. Lines, 10 on a page. Extent, 170 ślokas. Character, Maithilí. Date, ? Place of deposit, Rasáḍgrám, Post Dhamdaha, Zillá Púrṇiyá, Maheśa Jhá. Appearance, old. Prose and verse. Incorrect.

**S'uddhinirṇaya.** On impurities of the person resulting from death in a family and duties during mourning. By Umápati.

**Beginning.** आविर्भावतिरोभावौ जन्मप्रलयसंज्ञकौ ।
यदीयौ भवतोनित्यं वन्दे तद्ब्रह्म शाश्वतं ॥
+ + + + + + + + प्रतिपत्तये ।
नानानिबन्धसिद्धोऽसौ लिख्यते शुद्धिनिर्णयः ।
सपिण्डे मृते ब्राह्मणोदशरात्रेण शुद्ध्यति ॥ इत्यादि ।

**End.** तेन पतिते श्राद्धवर्ज्जिते च जीवत्येव पितरि पार्व्वणविधायक + + + + + + + + ।

**Colophon.** इति श्रीमदुमापतिविरचितः शुद्धिनिर्णयः ॥

विषयः । सपिण्डाद्यशौचनिरूपणं ।

---

**No. 2419. परीक्षामुखसूत्रम् ।** Substance, country-made paper, 16 × 4 inches. Folia, 20. Lines, 5 on a page. Extent, 103 ślokas. Character, Nágara. Date, ? Place of deposit, Mahájanṭolá, city Árá, Zillá Árá, Bábu Bulákchand. Appearance, new. Prose. Incorrect.

**Parikshámukha-sútra.** A treatise on logical proofs resulting from perception, inference, memory, analogy and trustworthy speech—their various sub-divisions and fallacies discussed from a Jaina standpoint. Author's name not given.

**Beginning.** प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्य्ययः ।
इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः ॥

स्वापूर्व्वार्थव्यवसायात्मकं ज्ञानं प्रमाणं । १ । हिताहितप्राप्तिपरिहारासमर्थं हि प्रमाणं ततोज्ञानमेव तत् । २ । इत्यादि ।

**End.** सम्भवदन्यद्विचारणीयं । ७४ ।
परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः ।
संविदे मादृशोबालः परीक्षादक्षव + + ॥

विषयः । प्रथमे सन्देशे,—प्रमाणस्वरूपविवेचनं । स्वतः परतश्च तत्प्रामाण्यमिति निरूपणं । द्वितीये सन्देशे,—प्रत्यक्षपरोक्षभेदेन प्रामाण्यद्वैविध्यनिरूपणं । प्रत्यक्षलक्षणादिकथनं । तृतीये सन्देशे,—स्मृति—प्रत्यभिज्ञान—तर्क—अनुमानभेदात् परोक्षस्य चतुर्व्विधत्वनिरूपणं । स्मृत्यादीनां लक्षणादिविवेचनं । स्वार्थपरार्थभेदेन अनुमानस्य द्वैविध्यादिकथनं । व्याप्तिलक्षणादिविवेचनं । चतुर्थे सन्देशे,— प्रमाणविषयस्य सामान्यविशेषात्मेति सप्रपञ्चप्रपञ्चनं । पञ्चमे

सन्दर्भे,—अज्ञाननिवृत्त्यादिरूपप्रमाणफलनिरूपणं। षष्ठे सन्दर्भे,—प्रमाणाभासादिविवेचनं। तत्र प्रत्यक्षाभासनिरूपणं। स्मृत्याभासनिरूपणं। प्रत्यभिज्ञानाभासनिरूपणं। तर्काभासनिरूपणं। अनुमानाभासनिरूपणं। तत्र हेत्वाभासादिनिरूपणं। आगमाभासादिनिरूपणञ्च।

---

**No. 2420.** सूक्तिमुक्तावली। Substance, country-made paper, 14 × 5 inches. Folia, 20. Lines, 8 on a page. Extent, 332 ślokas. Character, Nágara. Date, SM. 1852. Place of deposit, Mahájantolá, city Ǻrá, Zillá Ǻrá, Bábu Bulákchand. Appearance, old. Verse. Generally correct.

**Súktimuktávalí.** Moral duties appropriate for Jainas and praise of Jinas. By Somaprabha Súri.

**Beginning** सिन्दूरप्रकरस्तपः करिशिरः क्रोडे कषायाटवी
दावार्चिर्निचयः प्रबोधदिवसप्रारम्भसूर्योदयः।
मुक्तिस्त्रीकुचकुम्भकुङ्कुमरसः श्रेयस्तरोः पल्लव-
प्रोल्लासः क्रम + नवद्युतिभरः पार्श्वः प्रभोः पातु वः॥
सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यताः
सूतेऽम्भः कमलानि तत्परिमलं वाता वितन्वन्ति यत्।
किं वाभ्यर्थनयानया यदि गुणोऽस्त्यासां ततस्ते स्वयं
कर्त्तारः प्रथनं न चेदथ यशःप्रत्यर्थिना तेन किं॥ इत्यादि।

**End.** अभवदजददेवाचार्य्यपट्टोदयाद्रि-
द्युमणिविजयसिंहाचार्य्यपादारविन्दे।
मधुकरसमतां यस्तेन सोमप्रभेण
व्यरचि मुनिपरा + सूक्तिमुक्तावलीयं॥

**Colophon.** इति श्रीसोमप्रभसूरिविरचिता सूक्तिमुक्तावली सम्पूर्णा।

विषयः। वैराग्यजननजिनमाहात्म्यकीर्त्तनं। जिनार्चनमाहात्म्यकीर्त्तनं। गुरूपपत्तिविधि-कथनं। जैनमतप्रशंसाकीर्त्तनं। संघसेवनस्य आवश्यकतादिकथनं। अहिंसामाहात्म्यादिकथनं। सत्यमाहात्म्यकीर्त्तनं। मिथ्यावचननिन्दनञ्च। स्तेयनिन्दा। सुशीलताप्रशंसाकीर्त्तनं। परिग्रह-निन्दनं। क्रोधनिन्दनं। अभिमानमदमोहादिनिन्दनं। मायालोभादितिरस्कृतिः। दौर्जन्य-निन्दनं। सौजन्यप्रशंसाकीर्त्तनं। सत्सङ्गमाहात्म्यकथनं। जितेन्द्रियतामाहात्म्यकथनं। लक्ष्मी-स्वभावनिन्दनं। दानप्रशंसाकीर्त्तनं। तपोमाहात्म्यकथनं। हृदयशुद्धेरुत्कर्षकीर्त्तनं। वैराग्यप्र-शंसा। जैनधर्म्मप्रशंसनं। महतां चारित्रप्रशंसनं। संसारस्य अनित्यत्वादिकीर्त्तनञ्च।

---

**No. 2421.** सहस्रनामस्तोत्रम्, सटीकम्। Substance, foolscap paper, bound in a volume. Folia, 91. Lines, 14 on a page. Extent, 2,586 ślokas. Character, Nágara. Date, ? Place of deposit, Maháјanṭolá, city Ará, Zillá Ará, Bábu Bulákchand. Appearance, new. Text, verse., Commentary, prose. Incorrect.

**Sahasranáma-stotra.** A hymn in which a thousand epithets are strung together in praise of Jina. Attached to the text is a commentary explaining the purport and doctrinal value of the epithets. Anonymous. This is obviously an imitation of Hindu works of this kind, of which several have been noticed in the preceding pages (*cf.* III, 16, 20.) Both the Vaishṇavas and the S'áktas have written such hymns to extol the glory of their respective gods and goddesses. The name used is generally the same.

**Beginning.** स्वयम्भुवे नमस्तुभ्यमुत्पाद्यात्मानमात्मनि।
स्वात्मनैव तथोद्भूतवृत्तयेऽचिन्त्यवृत्तये॥
कामशत्रुहनं देवमामनन्ति मनीषिणः।
त्वामानुमः स्फुरन्मौलिस्रङ्मणौ(?)भ्यर्च्चितक्रमं॥

टीकायाः,—तुभ्यं नमः। श्रीमते नमः। प्रणामोऽस्तु। कथम्भूताय—स्वयम्भुवे। स्वयं परोपदेशमन्तरेण जगत्स्वरूपं जानातीति स्वयम्भूः। इत्यादि।

मूलस्य,——

**End.** स्तुत्वेति मघवा देवं चराचरजगद्गुरुं।
ततस्तीर्थविहारस्य व्यधात् प्रस्तावनामिमां॥ इति।

टीकायाः, — — — — — — चराचराः एव स्थावराः विद्यन्ते यस्मिन् तत् चराचरं जगत्। तस्य गुरुः। चराचरजगद्गुरुः तं तथोक्तम्।

**Colophon.** इति सहस्रनामस्तोत्रटीका समाप्ता।

विषयः। गुणमाहात्म्यावलम्बनेन भगवतोजिनस्य नामसहस्रकथनं।

---

**No. 2422.** ज्ञानार्णवः। भाषाटीकासहितः। Substance, foolscap paper, 14 × 9 inches. Folia, 276. Lines, 15 on a page. Extent, 10,394 ślokas. Character, Nágara. Date, ? Place of deposit, Maháјanṭolá, city Ará, Zillá Ará, Bábu Bulákchand. Appearance, old. Prose and verse. Generally correct.

**Jnárárṇava** in Sanskrit with a commentary in the Hindi dialect. An essay on Jaina doctrine and the circle of duties appropriate for the followers of that doctrine.

The text is claimed by Subháchandra Achârya. Its primary object is to extol the merits of meditation and Yoga observances, the duties of householders being expounded in a subsidiary way. The author says the substance of his treatise has been taken from a work called Jinapati Sútra.

*Contents.* Twelve kinds of contemplation. Meditation or *Dhiyána* is defined to be the confinement of the naturally unsteady fickle mind within by the contemplation of one object. Two varieties of thinking, one relating to externals and the other to internals. Fixation of the mind by the exercise of Yoga. Its reward or emancipation. Fruits of good and evil works. All things divisible into two classes, sentient and inert. The inert are of five kinds, such as, earth, air and the four elements. The sentient are twofold, worldly and emancipated. These two described in detail, particularly showing how the worldly pass on to the emancipated state. Another classification. Eternity of the universe proved. Soul's bondage and emancipation. Character of the elements. Benevolence, truthfulness, non-theft, continence, and freedom from delusion are the duties of householders. Emancipation results from assiduous application to these duties. Twelve means of learning. The eight members of Yoga, (details the same as given in Patanjalí's Yoga Sútra). Respect for elders. Purification of desires. Marriage. Desires, anger, &c. condemned. The necessity of objects for the senses. The eight expedients of Yoga useful in overcoming worldliness. The vital airs &c. defined. Virtue and vice-defined. Flesh meat condemned. Regions in hell and heaven described. Yogis to meditate on the soul located in the lotus of the heart. A special meditation. The dissolution of Yogís in the great soul is emancipation.

**Beginning.** ज्ञानलक्ष्मीघनाश्लेष प्रभवानन्दनन्दितं ।
निष्ठितार्थमजं नौमि परमात्मानमव्ययं ॥
भुवनाम्भोजमार्त्तण्डं धर्म्मामृतपयोधरं ।
योगिकल्पतरुं नौमि देवदेवं वृषध्वजं ॥
भवज्वलनसंभ्रान्तसत्त्वशान्तिसुधार्णवः ।
देवश्चन्द्रप्रभः पुष्याज्ज्ञानरत्नाकरश्रियं ॥
सत्संयमपयःपूरपवित्रितजगत्त्रयं ।
शान्तिनाथं नमस्यामि विश्वविघ्नौघशान्तये ॥
— — — — — — — ।

अविद्याप्रसराद्भूतग्रहनिग्रहकोविदं।
ज्ञानार्णवमिमं वक्ष्ये सतामानन्दमन्दिरं॥
— — — — — — —।
भवप्रभवदुर्व्वारक्लेशसन्तापपीड़ितं।
योजयाम्यहमात्मानं पथि योगीन्द्रसेविते॥ इत्यादि।

**End.** इति कतिपयवर्णैर्ध्यानफलं कीर्त्तितं समासेन।
निःशेषं यदि वक्तुं प्रभवति देवः + + स्वयं॥
इति जिनपतिसूत्रात् सारमुद्धृत्य किञ्चित्
स्वमतिविभवयोग्यं ध्यानशास्त्रं प्रणीतं।
विबुधमुनिमनीषाम्भोधिचन्द्रायमानं
चरतु भुवि विभूत्यै यावदद्रीन्द्रचन्द्रौ॥
ज्ञानार्णवस्य माहात्म्यं चित्ते कोवेत्ति तत्त्वतः।
यज्ज्ञानात्तीर्य्यते भव्यैर्दुस्तरोऽपि भवार्णवः।

**Colophon.** इति श्रीशुभचन्द्राचार्य्यविरचितोज्ञानार्णवोनाम ग्रन्थः समाप्तः।

विषयः। द्वादशविधभावनाकथनमुखेन ध्यानस्वरूपकथनं। तत्र अस्थिरस्य मनसोध्यनसंहननतया एकाग्रचिन्ताया अन्तर्निरोधोध्यानमितिनिरूपणं। तच्च आर्त्तं रौद्रञ्चेति द्विविधं। सर्व्वस्यास्य अमनोज्ञस्य उत्पत्तिर्माभूदिति चिन्ताप्रबन्ध आर्त्तध्यानमिति। अथ हिंसादिषु यथायथमभिरुचिः रौद्रध्यानमिति ज्ञेयं। अथ मुमुक्षवः परिहृत्य आर्त्तरौद्रे द्वे पापध्याने भावशुद्धिसाधनेन योगमभ्यस्य धर्म्मध्यानं कुर्य्यादिति। धर्म्मस्य वाह्याध्यात्मिकभावानां याथात्म्येन अध्यवसाय इति। तथा धर्म्मादनपेतं ध्यानं धर्म्मध्यानमिति च ज्ञेयं। तदनेन योगी सम्यग्दर्शनज्ञानचारित्ररूपरत्नत्रयाधिगमात् विघ्नोत्पादनेन स्वकर्म्मक्षयात् अनन्तसुखावहं मोक्षं प्राप्नोतीतिनिरूपणं। तत्र येन रूपेण जीवाद्यर्थोऽव्यवस्थितस्तेन रूपेण अर्हज्जिनप्रतिपादितेऽर्थे श्रद्धानं सम्यग्दर्शनं। जीवादीनां यथावस्थं मोहसंशयादिराहित्येन अवगमनं सम्यग्ज्ञानं। अथ संसरणकर्म्मोच्छित्तावुद्यतस्य ज्ञानवतः पापागमनकारणनिवृत्तिः सम्यक्चारित्रमिति विभावनीयं। अथ क्रमेण शुभाशुभकर्म्मफलकीर्त्तनं। अथ जीव-अजीव-आश्रव-बन्ध-सम्बर-निर्ज्जर-मोक्षरूपेषु सप्तसु पदार्थेषु संक्षेपतोजीवाजीवाख्ये द्वे तत्त्वे। तत्र बोधात्मकोजीवः। अबोधात्मकस्त्वजीवः। अथाजीवस्य आकाशधर्म्माधर्म्मपुद्गलकालास्तिकायभेदेन पञ्चविधत्वं। अथ जीवा द्विविधाः संसारिणोमुक्ताश्च। संसारिणोऽपि द्विविधाः समनस्का अमनस्काश्चेति। तत्र शिक्षाक्रियालापग्रहणरूपा संज्ञा येषामस्ति ते संज्ञिनः समनस्काः। तद्विधुरास्त्वमनस्काः। अथ सिद्धासिद्धभेदेन प्रथमस्य द्वैविध्यकथनं तत्र पञ्चविधस्य ज्ञानावरणस्य क्षयेण, नवभेदस्य दर्शनावरणस्य भेदेन, अष्टाविंशतिविधस्य मोहनीयस्य हानात्, चतुर्व्विधस्य आयुषः शेषशोषणेन,

चत्वारिंशद्विधस्य नामधेयस्य निधनात्, द्विविधस्य गोत्रस्य च नाशात् पञ्चविधस्य अन्तरायकर्म्मणः प्रध्वंसेन जीवस्य सिद्धत्वं भवति। अथ भव्याभव्यभेदेन जीवस्य पुनर्द्वैविध्यमितिविवेकः। संसारस्य अनादित्वमितिनिरूपणं। अथात्मनः अविद्यया संसारबन्धः, विद्यया च तद्विमुक्तिरितिकथनं। अथ पूरयन्ति गलन्तीति पुद्गलाः, ते च द्विविधाः, अणवः स्कन्धाश्चेतिनिरूपणं। अथ दया, सत्यं अस्तेयं ब्रह्मचर्य्यं, अमोहता चेति पञ्चैतानि सूक्ष्मतया यतिधर्म्म इति स्थूलतया गृहस्थधर्म्म इति निरूपणं। उक्तविधधर्म्मानुष्ठानेन मोक्षोभवितुमर्हतीतिकथनं। एतल्लक्षणोधर्म्मः श्रुतज्ञानात् जायते। श्रुतज्ञानस्य च द्वादश अङ्गानि, यथा —पर्य्याय-अक्षरपद-संघात-प्रतिपत्ति-अनुयोग-प्राभृताप्राभृत-वस्तुपूर्व्वाणि। अथ पर्य्यायाङ्गरूपक्रियादृष्टिवादविनयदृष्टिवादकथनं। यमनियमादीनां योगाङ्गतया संसारसागरतरणोपायत्वकथनं। विश्वतत्त्वप्रकाशने ज्ञानमेव तृतीयं नेत्रमितिनिरूपणं। अथ अहिंसा, सत्यभाषणं, अस्तेयं, ब्रह्मचर्य्यं, निर्म्मुक्तिश्चेति पञ्चधा साधूनां महाव्रतानि। तत्र हिंसादीनां स्वरूपादिनिरूपणं। वृद्धसेवाया आवश्यकत्वकथनं। भावशुद्धेरभ्यर्थनीयत्वनिरूपणं। परिग्रहनिन्दनं। आशायाः पिशाचरूपत्वनिरूपणं। क्रोधाभिमानादिनिन्दनं। इन्द्रियादिविषयजयावश्यकताकथनं। विशेषेण अष्टाङ्गयोगनिरूपणमुखेन मनसोदुश्चेष्टितादिकथनपूर्व्वकं तज्जये रागद्वेषमोहादीनां नाश इति निरूपणं। शारीर-पवन-नाडीप्रभृतिनिरूपणं। धर्म्माधर्म्मापारध्यानादिनिरूपणं। मांसभक्षणादिनिन्दनं। विशेषेण नरकवर्णनं देवपुरवर्णनञ्च। योगिभिर्हृदयकमलकर्णिकान्तर्ज्योतिःस्वरूप एव परमात्मा ध्येय इतिकथनं। सार्व्वज्ञध्यानकथनं। योगिनां परमात्मन्येव लय इति निरूपणञ्च।

---

**No. 2423.** सिद्धिप्रियस्तोत्रम्, टीकासहितम्। Substance, foolscap paper, bound in a volume. Folia, 13. Lines, 20 on a page. Extent, 260 ślokas. Character, Nágara. Date, ? Place of deposit, Mahájanṭolá, city Árá. Zillá, Árá, Bábu Bulákchand. Appearance, new. Text in verse; Commentary in prose. Incorrrect.

**Siddhipríya-stotra.** With a commentary. A hymn in course of which the merits of the 24 Jinas are extolled.

मूलस्य,—

**Beginning.** सिद्धिप्रियैः प्रतिदिनं प्रतिभासमानै-
र्जन्मप्रबन्धमथनैः प्रतिभासमानैः।
श्रीनाभिराजतनुभूपदवी क्षणेन
प्रायोजनैर्वितनुभूपदवी क्षणेन॥

टीका,—जनैर्लोकैः कर्त्तृभूतैर्वितनुभूपद्वी कर्म्मतापन्ना। विगता तनुर्येषां ते विततवः। अर्थात् सिद्धाः। तेषां भूः पृथ्वी मुक्तिरित्यर्थः। इत्यादि।

मूलस्य,—

**End.** श्रीवर्द्धमानवचसा परमाकरेण
रत्नत्रयोत्तमनिधेः परमाकरेण।
कुर्व्वन्ति यानि मुनयोजनताहितानि
वृत्तानि सन्तु सततं जनताहितानि॥

टीकायाः — — — — — रत्नत्रयमेव उत्तमनिधिः। तस्य। किं कुर्व्वता वचसा।ज नताहितानि। जनता उत्पाद्यता सता।

तुष्टिं देशनया जनस्य मनसि येन स्थितं दित्सता
सर्व्वं वस्तु विजानता शमवता येन कृताकृता।
भवानन्दकरेण येन महतां तत्त्वप्रणीतिः कृता
तापं हन्ति जिनः स मे शुभधिया + + सतामीश्वितं॥

**Colophon.** इति श्रीसिद्धिप्रियस्तोत्रटीका सम्पूर्णा।

विषयः। स्तोत्रव्याजेन चतुर्व्विंशतिजिनानां माहात्म्यकीर्त्तनं।

---

**No. 2424.** शान्ताष्टकस्तोत्रम्। Substance, country-made paper, bound in a volume. Folia, 2. Lines, 13 on a page. Extent, 19 ślokas. Character, Nágara. Date, ? Place of deposit, Mahájanaṭolá, city Árá, Zillá Árá, Bábu Bulákchand. Appearance, new. Verse. Incorrect.

**S'ántáshṭaka-stotra.** A hymn in praise of Jina and prayer for emancipation. Anonymous.

**Beginning.** न स्नेहाच्छरणं प्रयान्ति भगवन् पादद्वयं ते प्रजा-
हेतुस्तत्र विचित्रदुःखनिचयः संसारघोरार्णवः।
अत्यन्तस्फुरदुग्ररश्मिनिकरव्याकीर्णभूमण्डलो-
ग्रैष्मः कारयतीन्दुपादसलिलच्छायानुरागं रविः॥ इत्यादि।

**End** शान्तिं शान्तिजिनेन्द्र शान्तमनसस्त्वत्पादपद्माश्रयात्
संप्राप्ताः पृथिवीतलेषु बहवः शान्त्यर्थिनः प्राणिनः।
कारुण्यान्मम भाक्तिकस्य च विभो दृष्टिं प्रसन्नां कुरु
त्वत्पादद्वयदैवतस्य गदतः शान्त्यष्टकं भक्तितः॥

**Colophon.** इति शान्त्यष्टकस्तोत्रं सम्पूर्णं।

विषयः। शान्तिप्रार्थनव्याजेन भगवतोजिनेन्द्रस्य माहात्म्यादिवर्णनं।

**No. 2425.** समयसारः, आत्मख्यात्याख्यवृत्तिसहितः। Substance, country-made paper, 18 × 4½ inches. Folia, 165. Lines, 10 on a page. Extent, 3,729 ślokas. Character, Nágara. Date, ? Place of deposit, Mahájanaṭolá, city Ára, Zillá Ára, Bábu Bulákchand. Appearance, new. Text in verse; Commentary in prose and verse. Generally correct.

**Samayasára.** With a commentary entitled *Átma-khyáti.* An elaborate treatise on Jain metaphysics and psychology. The text is in Mágadhí and the commentary in Sanskrit. The contents are described at length in the following abstract in Sanskrit. The subjects are too abstruse to be intelligible and useful in a brief English abstract.

वृत्तेः,—

**Beginning.** नमः समयसाराय स्वानुभूत्या चकासते।
चित्स्वभावाय भावाय सर्व्वभावान्तरच्छिदे॥
अनन्तधर्म्मणस्तत्त्वं पश्यन्ती प्रत्यगात्मनः।
अनेकान्तमयी मूर्त्तिर्नित्यमेव प्रकाशतां॥
परपरणतिहेतोर्मोहनाम्नोऽनुभावा-
द्विरतमनुभाव्यव्याप्तिकल्माषितायाः।
मम परमविशुद्धिः शुद्धचिन्मात्रमूर्त्ते-
र्भवतु समयसारव्याख्ययैवानुभूतेः॥
अथ सूत्रावतारः।
मूलस्य —
वन्दित्तु सव्वसिद्धे धुवमचलमणोवमं गइं पत्ते।
वोच्छामि समयपाहुडमिणमा सुयकेवलि भणियं॥ इत्यादि।

मूलस्य,—

**End.** जो समयपाहुडमिदं पढिऊणं अच्छतच्च जाणाउं।
अच्छे ठाहीचेया सो होहि उत्तमं सोक्खं॥
वृत्तेः—
यस्माद्द्वैतमभूत्पुरा स्वपरयोर्भूतं यतोऽत्रान्तरं
रागद्वेषपरिग्रहे सति यतो जातं क्रियाकारकैः।
भुञ्जाना च यतोऽनुभूतिरखिलं खिन्नं क्रियायाः फलं
तद्विज्ञानघनौघमग्नमधुना किञ्चिन्न किञ्चित् किल॥
स्वशक्तिसंसूचितवस्तुतत्त्वैर्व्याख्या कृतेयं समयस्य शब्दैः।
स्वरूपगुप्तस्य न किञ्चिदस्ति कर्त्तव्यमेवामृतचन्द्रसूरेः॥

**Colophon.** इति समयसारव्याख्यायामात्मख्यातिनाम्नी वृत्तिः समाप्ता।

विषयः। आत्मनोज्ञानस्वरूपत्वकथनमुखेन तस्य ध्रुवत्वं निश्चलत्वं एकत्वञ्चेतिनिरूपणं। सोऽयं नित्यमेव परिणामात्म निस्वभावे अवतिष्ठमानत्वादुत्पादव्ययध्रौव्यैक्यानुभूतिलक्षणया सत्तया अनुस्यूतश्चैतन्यस्वरूपत्वान्नित्योदितविशददृशिज्ञप्तिज्योतिः, अनन्तधर्माधिरूढैकधर्मित्वादुद्योतमानद्रव्यत्वं, क्रमाक्रमप्रवृत्तविचित्रभावस्वभावत्वादुत्सङ्गितगुणपर्यायः, अनन्तद्रव्यसङ्करेऽपि स्वरूपादप्रच्यवनात् टङ्कोत्कीर्ण इव चित्स्वभावोजीवोनाम पदार्थ इति निरूपणं। पुण्य-पाप-आस्रवादिनवतत्त्वनिरूपणं। अथ अनुभूतिरेवात्मख्यातिः सा च सम्यग्दर्शनमेवेतिनिरूपणं। परोक्षप्रत्यक्षभेदेन द्विविधप्रमाणनिरूपणं। तत्र उपात्तानुपात्तपरद्वारेण प्रवर्त्तमानं परोक्षं। केवलात्मप्रतिनियतत्वेन प्रवर्त्तमानं प्रत्यक्षमिति तद्विमर्शनं। आत्मानुभूतिप्रकारकथनं। ज्ञेयज्ञापकसङ्करदोषपरिहारेण तीर्थङ्करादीनांस्तवनादिविवेचनं। अप्रतिबुद्धोक्तिनिरूपणं। प्रत्याख्यानज्ञानावश्यकतानिरूपणं। परमार्थत एक एव जीव इति निरूपणं। सर्व्वस्य जगतः पुद्गलपरिनामत्वकथनं। जीवस्य व्यवहारिकसुखदुःखादिमत्त्वनिरूपणं। अजीवपदार्थविवेचनं। कर्त्तृकर्म्मप्रवृत्तेरनादित्वाज्ञानजन्यत्वनिरूपणमुखेनात्मनः स्वयमज्ञानात् कर्त्तृकर्म्मभावेन क्रोधादिषु वर्त्तमानस्य तमेव क्रोधादिवृत्तिरूपं परिणामं निमित्तीकृत्य स्वयमेव परिणममानपौद्गलिककर्म्मसञ्चयात् जीवपुद्गलयोः परस्परावगाहलक्षणसम्बन्धात्मा बन्ध इति निरूपणं। अथ यदा जीवः आत्मास्रवयोर्विशेषदर्शनेन भेदं जानाति तदास्यानादिरप्यज्ञानजा कर्म्मकर्त्तृप्रवृत्तिर्निवर्त्तते, तन्निवृत्तौ च अज्ञाननिमित्तकपुद्गलद्रव्यकर्म्मबन्धोऽपि अपगच्छतीतिनिरूपणं। यथा लोकस्य व्याप्यव्यापकभावेन स्वभावत एव उत्पद्यमानेषु गुणदोषेषु व्याप्यव्यापकभावाभावेऽपि तदुत्पादकोराजेति भवत्युपचारस्तथा पुद्गलद्रव्यस्य व्याप्यव्यापकभावेन स्वभावत एव उत्पद्यमानेषु गुणदोषेषु व्याप्यव्यापकभावाभावेऽपि तदुत्पादकोजीव इत्युपचार इति निरूपणं। जीवस्य परिणामस्वभावत्वनिरूपणं। मिथ्यात्वासंयमकषाययोगोदयानां कर्म्महेतुत्वनिरूपणं। अथ शुभमशुभञ्च कर्म्म अविशेषेनैव पुरुषं बध्नाति बन्धत्वाविशेषादिति कर्म्मण एव बन्धहेतुत्वनिरूपणं। तच्च कर्म्म अज्ञानरूपमेवेतिकथनञ्च। सम्यग्दर्शनज्ञानचारित्राणां मोक्षहेतुत्वकथनं। तत्र जीवादिसम्यग्दर्शनस्वभावेन ज्ञानस्य भवनं सम्यग्दर्शनं, जीवादिज्ञानस्वभावेन ज्ञानस्य भवनं ज्ञानं, रागादिपरिहरणस्वभावेन ज्ञानस्य भवनं चारित्रं। तदेवं सम्यग्दर्शनादिभ्य एकमेव ज्ञानस्य भवनमायातं ततोज्ञानमेव परमार्थतोमोक्षहेतुरिति निष्कर्षकथनञ्च। अथ पुद्गलकर्म्मास्रवणनिमित्तत्वाद्रागद्वेषमोहा एव आस्रवास्ते च अज्ञानिन एव भवन्तीतिनिरूपणं। अथ यदा खलु ज्ञानस्य रागादीनाञ्च भेदविज्ञानं ज्ञानस्य वैपरीत्यकणिकामप्यनासदयदविचलितमवतिष्ठते तदा शुद्धोपयोगमयात्मत्वेन शुद्धात्मोपलम्भाद् रागद्वेषमोहाभावलक्षणः सम्वरः प्रादुर्भवतीति सम्वरस्वरूपादिविवेचनं। द्रव्यनिर्ज्जरा भावनिर्ज्जरेतिद्विविधनिर्ज्जराप्रक्रियाकथनं। ज्ञानवैराग्ययोः सामर्थ्यनिरूपणं। विशेषेण वाह्याभ्यन्तरभेदेन बन्धहेतुविवेचनं। अथ स एव निर्व्विका-

रचैतन्यचमत्कारमात्रमात्मस्वभावं तद्विकारकारकं बन्धानाञ्च स्वभावं विज्ञाय बन्धेभ्योविरमति स एव साधकः कर्म्ममोचं कुर्य्यादितिनिरूपणं। अथ येहि परात्मनोनियतस्वलचणविभागपातिन्या प्रज्ञया ज्ञानी स्यात् स खल्वेकं चिन्मात्रं भावमात्मीयं जानाति शेषांश्च सर्व्वानेव भावान् परकीयानित्येवं जानतोजीवस्य परात्मनिश्चयेन स्वस्वामिसम्बन्धस्याभावात् सर्व्वथाचिद्भाव एव ग्रहीतव्यः शेषाः सर्व्वे एव भावाः प्रहातव्या इति मुमुक्षा समुद्देतीतिनिरूपणं। आत्मनोज्ञानचारित्रपर्य्यायाणां निश्चयव्यवहारप्रक्रियाकथनं। स्वभावेनैव द्रव्यपरिणामोत्पाद इति निरूपणं। मुमुक्षुकृत्यनिरूपणं। मोक्षमार्गस्वरूपादिनिरूपणं। स्याद्वादस्य समस्तवस्तुतत्त्वसाधकत्वकथनं। आत्मनोज्ञानमात्रैकभावान्तःपातिन्योऽनन्ताः शक्तयः। तास्च कतिचिद् यथा—जीवत्वशक्तिः, चितिशक्तिः, दृशिशक्तिः, सुखशक्तिः, वीर्य्यशक्तिः, प्रभुत्वशक्तिः, विभुत्वशक्तिः, दर्शित्वशक्तिः, स्वच्छत्वशक्तिः, प्रकाशशक्तिः, सङ्कोचविकाशशक्तिः, कार्य्यकारणशक्तिः, परिणम्यपरिणामकत्वशक्तिः त्यागोपादनशून्यत्वशक्तिः, अगुरुलघुत्वशक्तिः, उत्पादव्ययध्रुवत्वशक्तिः, निष्क्रियत्वशक्तिप्रभृतयश्च।



**No. 2426.** जैनेन्द्रव्याकरणमहावृत्तिः, सूत्रसहिता। Substance, country-made paper, 14 × 6 inches, Folia, 477. Lines, 12 on a page. Extent, 14.948 ślokas. Character, Nágara Date, ? Place of deposit, Mahájantolá, city Árá, Zillá Árá, Bábu Bulákchand. Appearance, fresh. Prose. Incorrect.

**Jáinendra-vyákarana mahávritti.** A commentary on the Jainendra-vyákarana. By Abhayanandí. The text is given at length in the body of the commentary. The work is exceedingly rare; the codex extends to the end of the fifth book.

**Beginning.** देवदेवं जिनं नत्वा सर्व्वसत्त्वाभयप्रदं।
शब्दशास्त्रस्य सूत्राणां महावृत्तिर्विरच्यते॥
यच्छब्दलचणमसुव्रजपारमन्यैरव्यक्तमुक्तमभिधानविधौ दरिद्रैः।
तत्सर्व्वलोकहृदयप्रियचारुवाक्यैर्व्यक्तीकरोत्यभयनन्दिमुनिः समस्तं॥
शिष्टाचारपरिपालनार्थमादौ इष्टदेवतानमस्कारलचणं मङ्गलमिदमाहाचार्य्यः।
लक्ष्मीरात्यन्तिकी यस्य निरवद्या च भासते।
देवनन्दितपूजे + नमस्तस्मै स्वयम्भुवे॥
लक्ष्मीः श्रीः सैव विशिष्य — — — — — — — — — शब्दार्थसम्बन्धसिद्धिश्च अनेकान्ताधीनेत्यत आह। सिद्धिरनेकान्तात्।१। — — — — सख्यानक्रियं स्वं।२। — — —· — — — हलोनन्तराः स्युः। इत्यादि।

**End.** भरोभरिखे १२३। — — — खे इति किं तर्गा। यथा संख्यसिद्धमिति चेत् — — — — — चतुष्टयं समन्तभद्रस्य (१२४)। कृयोश्च इत्यादि चतुष्टयं समन्तभद्राचार्य्यस्य मनेन भवति नान्येषां तथाचैवोदाहृतं।

**Colophon.** इत्यभयनन्दिविरचितायां जैनेन्द्रव्याकरणमहावृत्तौ पञ्चमाध्यायस्य चतुर्थपादः समाप्तः। समाप्तश्चायं पञ्चमोऽध्यायः। मङ्गलमस्तु।

विषयः। प्रकृतिप्रत्यायादिविभागेन वैयाकरणप्रक्रियाकथनं।

---

**No. 2427.** प्रमेयकमलमार्त्तण्डः, वा परीक्षामुखालङ्कारः। Substance, country-made paper, 15 × 9 inches. Folia, 430. Lines, 11 on a page. Extent, 14,746 ślokas. Character, Nágara. Date, Sm. 1896. Place of deposit, Mahájan-ṭolá, city Ará, Zillá Ará, Bábu Bulákchand. Appearance, new. Prose. Incorrect.

**Prameyakamala-mártaṇḍa** ALIAS **Parikshá-mukhálaṅkára.** Commentary on a treatise on Jaina dialectics, entitled *Parikshá-mukha*. The text is by Viránanda Achárya and the commentary by Prabháchandra. The logic of the Jains is closely allied to the Nyáya of the Hindus.

**Beginning.** सिद्धेर्धाम महारिमोहहननं कीर्त्तेः परं मन्दिरं
मिथ्यात्वप्रतिपक्षमक्षयसुखं संशीतिविध्वंसनं॥
सर्व्वप्राणिहितं प्रभेन्दुवदनं सिद्धं प्रमालक्षणं
सन्तश्चेतसि चिन्तन्तु सततं श्रीवर्द्धमानं जिनं॥
शास्त्रं करोमि वरमल्पतरावबोधो-
माणिक्यनन्दिपदपङ्कजसत्प्रसादात्।
अर्थं न किं स्फुटयति प्रकृतं लघीयान्-
लोकस्य भानुकरविस्फुरितोगवाक्षः॥
ये नूनं प्रथयन्ति नोऽसमगुणा मोहादवज्ञां जना-
स्ते तिष्ठन्तु न तान् प्रति प्रयतितः प्रारभ्यते प्रक्रमः।
सन्तः सन्ति गुणानुरागमनसोये धीधनास्तान् प्रति
प्रायः शास्त्रकृतोयदत्र हृदय वृत्तं तदाख्यायते॥
त्यजति न विदधानः कार्य्यमुद्दिश्य धीमान्
खलु जनपरिवृत्तेः स्पर्द्धते किन्तु तेन।
किमु न वितनुतेऽर्कः पद्मबोधं प्रबुद्ध

स्वदपह्नुतिविधायी शीतरश्मिर्यदीह ॥
अज + मदोषं दृष्टामिचं सुश्रीकमूचत + यत् ।
विपरीतबन्धसङ्गतिमुद्रिरति हि कुवलयं किं न ॥

श्रीमदकलङ्कार्थोऽव्युत्पन्नप्रज्ञैरवमन्तुं न शक्यते—इति तद्व्युत्पादनाय करतलामलकवदर्थमुद्धृत्य प्रतिपादयितुकामस्तत्परिज्ञानानुग्रहेच्छाप्रेरितस्तदर्थप्रतिपादनप्रवणं प्रकरणमिदमाचार्य्यः प्राह — — — — — — स्वापूर्व्वार्थव्यवसायात्मकं ज्ञानं प्रमाणं । इत्यादि ।

**End.** यत्तु शास्त्रान्तरद्वारेणावगतहेयोपादेयस्वरूपेण तं प्रतीत्यर्थ इति ।

इति प्रभाचन्द्रविरचिते प्रमेयकमलमार्त्तण्डे परीक्षामुखालङ्कारे षष्ठः परिच्छेदः सम्पूर्णः ।

गम्भीरं निखिलार्थगोचरमलं शिष्यप्रबोधप्रदं
यद्व्यक्तं पदमद्वितीयमखिलं माणिक्यनन्दिप्रभोः ।
तद्व्याख्यातमदोयथावगमतः किञ्चिन्मया लेशतः
स्थेयाद्बुद्धधियां मनोरतिगृहे चन्द्रार्कतारावधि ॥
मोहध्वान्तविनाशनोनिखिलतोविज्ञानशुद्धिप्रदो-
मेयानन्तनभोविसर्पणपटुर्वस्तूक्तिभाभासुरः ।
शिष्याब्जप्रतिबोधने समुदितोयोऽद्रेः परीक्षामुखा-
ज्जीयात् सोऽत्र निबन्ध एव सुचिरं मार्त्तण्डतुल्योऽमलः ॥
गुरुः श्रीनन्दिमाणिक्योनन्दिताशेषसज्जनः ।
नन्दताद्दुरितैकान्तर + जैनम + र्णवः ॥
श्रीपद्मनन्दिसिद्धान्तिशिष्योऽनेकगुणालयः ।
प्रभाचन्द्रश्चिरं जीयाद्रत्ननन्दिपदे रतः ॥

**Colophon.** इति श्रीप्रमेयकमलमार्त्तण्डः सम्पूर्णतामगमत् । संवत् । १८९१ ।

विषयः । वीरानन्दाचार्य्यकृतपरीक्षामुखाभिधानजैनन्यायसूत्रस्य व्याख्यानम् ।

---

**No. 2428.** तत्त्वार्थसूत्रम्, श्रुतसागरीटीकासहितम् । Substance, country-made paper, 14 × 7 inches. Folia, 206. Lines, 15—17 on a page. Extent, 7,790 ślokas. Character, Nágara. Date, Sм. 1770. Place of deposit, Mahájana-ṭolá, city Árá, Zillá Árá, Babu Bulákchand. Appearance, fresh. Prose. Incorrect.

**Tattvártha-sútra** with a commentary entitled *S'ruta-ságari.* A treatise on Jaina metaphysics, cosmogony and emancipation. By Umáśámi Bhaṭṭáraka. The commentery is by Vidyánanda. The work is divided into ten chapters, and discusses at great length the different topics of Jaina religion.

टीकायाः —

**Beginning** सिद्धोमास्वामिपूज्यं जिनवरवृषभं वीरमर्हन्तमाप्तं

श्रीमन्तं पूज्यपादं गुणनिधि + पन् मतप्रभाचन्द्रमिन्द्रं।

श्रीविद्यानन्द + शं गतमलममकलङ्कायमानम्यरम्यं

वक्ष्ये तत्त्वार्थवृत्तिं निजनिजविभवा + श्रुतोऽन्वदाद्यः॥

अथ श्रीमदुमास्वामिभट्टारकः कलिकालगणधरदेवोमहामुनिमण्डलीसंसेवितपादपद्म कस्मिंश्चिदाश्रमपदे सुस्थितः — — — प्रतिपादयितुकाम इष्टदेवताविशेषं नमस्करोति।

मूलस्य,—

मोक्षमार्गस्य नेतारं भेत्तारं कर्म्मभूभृतां।

ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये॥

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः। १। तत्त्वार्थश्रद्धानं सम्यग्दर्शनं। २। इत्यादि।

मूलस्य,—

**End.** क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितानन्तरसंख्याल्पबहुत्वतः साध्याः। ८।

टीकाया,—

श्रीवर्द्धमानमकलङ्कसमन्तभद्र-

श्रीपूज्यपादसदुमापतिपूज्यपादं।

विद्यादिनन्दिगुणरत्नमुनीन्द्रसेव्यं

भक्त्या नमामि परितः श्रुतसागराप्त्यै॥

इत्यनवद्यगद्यपद्यविद्याविनोदनोदितप्रमोदे पीयूषरसपानपावनमतिममाजरत्नराजमति-सागर + तिराजराजितार्थनसमर्थेन तर्कव्याकरणच्छन्दालङ्कारसाहित्यादिशास्त्रनिशितमति-ना श्रीमद्देवेन्द्रकीर्त्तिभट्टारकप्रशिष्येण शिष्येण च सकलविद्वज्जनविहितचरणसेवस्य श्रीविद्या-नन्दिदेवस्य संछर्दितमिथ्यामतदु+रेण श्रुतसागरेण सूरिणा विरचितायां श्लोकवार्त्तिकराजवा-र्त्तिकसर्व्वार्थसिद्धिन्यां कुमुदचन्द्रोदयप्रमेयकमलमार्त्तण्डप्रचण्डाष्टसहस्रीप्रमुखग्रन्थसन्दर्भनिर्भराव-लोकनबुद्धिविराजितायां तत्त्वार्थसूत्रटीकायां दशमोऽध्यायः समाप्तः।

**Colophon.** इति तत्त्वार्थस्य श्रुतसागरीटीका समाप्ता। संवत् १७७०।

विषयः। तत्र प्रथमेऽध्याये,—सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्राणां मोक्षहेतुत्वकथनं जीवादिपदार्थानां यथावत्प्रतिपत्तिविषयिणी रुचिरेव सम्यग्दर्शनमिति तल्लक्षणादिकथनं। जीव-अजीव-आस्रव-बन्ध-सम्वर-निर्ज्जर-मोक्षभेदात् पदार्थानां सप्तविधत्वनिरूपणं। अथ सम्यग्दर्शनस्य साधनं द्विविधं। आन्तरं वाह्यञ्च। तत्र प्रथमं तावत् दर्शनमोहोपशमः क्षयोपश-मश्चेति द्विविधं। वाह्यन्तु नारकाणां प्रथमद्वितीयतृतीयनरकभूमिषु केषाञ्चिज्जातिस्मरणं

केषाञ्चिद्धर्म्मश्रवणं केषाञ्चिद्वेदनानुभवनमित्यादिबहुविधं। जीवानां चतुर्दशस्थानानि यथा,—मिथ्यादृष्टिः सासादनसम्यग्दृष्टिः, सम्यङ्मिथ्यादृष्टिः, असंयतसम्यङ्मिथ्यादृष्टिः, देशसंयतः, प्रमत्तसंयतः, अप्रमत्तसंयतः, अपूर्व्वकरणगुणस्थानोपशमकक्षपकः, अनिवृत्तिवादरसाम्परायगुणस्थानोपशमकक्षपकः, सूक्ष्मसाम्परायगुणस्थानोपशमकक्षपकः, उपशान्तकषायवीतरागच्छद्मस्थः, क्षीणकषायवीतरागच्छद्मस्थः, सयोगकेवली, अयोगकेवली चेति। सामान्येन विशेषेण च जीवानां संख्यादिकथनं। सम्यग्ज्ञानविमर्षणं। मतिज्ञानस्य आत्मलाभोपायत्वकथनञ्च। द्वितीये अध्याये,—जीवतत्त्वस्वरूपकथनं तत्र यथा कतकादिरेणुसम्बन्धादपगतपङ्कादिमालिन्यस्य सलिलस्य स्वच्छता समुदेति तथा कर्म्मणः सत्यनुदये जीवस्य स्वाभाविकस्वच्छता भवतीतिनिरूपणं। ज्ञान-दर्शनदान-लाभादिरूपनवविधक्षायिकभावनिरूपणं। द्रव्य-क्षेत्र काल भव भावभेदेन परिवर्त्तनस्य पञ्चविधत्वनिरूपणं। जीवस्य क्षेत्रादिपरिवर्त्तननिरूपणं। समनस्कामनस्कभेदात् तस्य द्वैविध्यविवेचनं। द्वीन्द्रियादिपञ्चेन्द्रियपर्य्यन्तजीवनिरूपणं। द्रव्येन्द्रियभावेन्द्रिययोर्लक्षणादिकथनं। जीवपुद्गलानां गतिनिरूपणं। चित्तस्य जीवचैतन्यपरिणामत्वकथनं। जन्मभेदकारणकथनं। तैजस-कार्म्मणयोः शरीरयोर्विशेषनिरूपणं।

तृतीये अध्याये,—अथ नारकजीवानां सप्तस्थानानि यथा,—रत्नप्रभाभूमिः, शर्करप्रभाभूमिः, वालुकाप्रभाभूमिः, पङ्कप्रभाभूमिः, धूमप्रभाभूमिः, तमः प्रभाभूमिः, महातमःप्रभाभूमिश्चेति। तत्र तत्र प्रस्तारविलादिसंख्याकथनञ्च। नरकदुःखवर्णनं। अथ तिर्य्यक्लोकस्वरूपकथनं। जम्बूद्वीपसमुद्रादीनां विस्तारसंस्थानादिकथनं। भारत-हैमवत-हरि-विदेह-रम्यक-हैरण्य-ऐरावतरूपसप्तक्षेत्रनिरूपणं। एवं गिरि-वन-नगरादिनिरूपणञ्च। अथ तीर्थकरगर्भकल्याणक-जन्मकल्याणक तपःकल्याणक-ज्ञानकल्याणक-निर्व्वाणकल्याणकरूपपञ्चकल्याणनिरूपणं। सुखमा-सुखमा-सुखमादुःखमादिषड्विधकालनिरूपणं। तत्र तत्र त्रयोविंशतितीर्थङ्कर-नववासुदेव-नवप्रतिवासुदेव-नवनारदादीनां जन्मादिकथणं। अथ आर्य्यम्लेच्छयोर्लक्षणकथनं। तत्रार्य्या द्विविधाः, ऋद्धिप्राप्ताः ऋद्धिरहिताश्च। अत्राद्याः अष्टादशभेदा यथा,—अवधिज्ञानिनः, मनःपर्य्यायज्ञानिनः केवलज्ञानिनः, बीजबुद्धयः, कोष्ठबुद्धयः, सम्भिन्नश्रोत्रिणः, पदानुसारिणः, दूरस्पर्शनसमर्थाः, दूररसनसमर्थाः दूरघ्राणसमर्थाः दूरश्रवणसमर्थाः, दूरावलोकनसमर्थाः, अभिन्नदशपूर्व्विणः, चतुर्दशपूर्व्विणः, अष्टाङ्गमहानिमित्ताः, प्रत्येकबुद्धाः, वादिनः प्रज्ञाश्रवणाश्चेति अथैषामवान्तरभेदादिकथनपूर्व्वकं लक्षणादिकथनं। भरतैरावतविदेहक्षेत्राणां कर्म्मभूमित्वकथनं।

चतुर्थे अध्याये,—चतुर्निकायानां देवानां स्वरूपादिनिरूपणं। तत्र भवनवासिनामिन्द्रादीनां लोकपालादीनां वयस्यपीठमर्दादिकथनं। व्यन्तराणां किन्नरादीनां स्वरूपादिकथनं। ज्योतिष्काणां ग्रहनक्षत्रादीनां स्थानादिकथनं। कल्पोपपन्नाः कल्पातीताश्चेति वैमानिकानां द्विविधभेदनिरूपणं। स्वर्गभेदनिरूपणं। कल्पभेदनिरूपणं। तत्तल्लोकानां परिमाणादिकथनञ्च।

पञ्चमे अध्याये,—अजीवपदार्थनिरूपणं। तत्र द्रव्यपदार्थलक्षणतद्भेदादिकथनं। पुद्गला-दिलक्षणकथनं। धर्म्माधर्म्मयोर्विशेषशक्तिनिरूपणं। अथ प्रायोगिक-वैश्रसिकभेदात् द्विविधबन्धनिरूपणं। द्रव्यादिपदार्थपरीक्षाकीर्त्तनञ्च।

षष्ठे अध्याये,—आस्रवपदार्थविवेचनं। जीवकर्म्मणोरास्रवविशेषनिरूपणं। सम्यक्क्रिया-मिथ्यात्वक्रिया-प्रयोगक्रिया-समादानक्रिया-ईर्य्यापथक्रिया प्रादोषिकीक्रियाप्रभृतिपञ्चविंशतिक्रियाकथनं। जीवाजीवाधिकरणविवेचनं। ज्ञानावरणदर्शनावरणयोः स्वरूपादिकथनं। दुःखतापादिवर्गनिरूपणं। अनुकम्पादान-संयमादिरूपसद्वेद्यनिरूपणं। चारित्रमोहादिनिरूपणं। तीर्थङ्करकर्म्मादिनिरूपणं। तत्र दर्शनशुद्धि विनय-वात्सल्ययोगादिनिर्णयश्च।

सप्तमे अध्याये,—शुभयोगः पुण्याय, अशुभयोगश्च पापायेति प्रपञ्चकथनं। तत्र हिंसास्तेयानृतादिनिरूपणं। अहिंसादिपञ्चव्रतकथनं। अथ अहिंसासत्यव्रतादिषु प्रत्येकं पञ्चविधभावनाकथनं। तत्र व्रतपञ्चकदृढीकरणाय मैत्रीकरणाद्युपायकथनं। हिंसास्तेयासत्यादिपञ्चपातकलक्षणादिकथनं। अहिंसादिव्रतसम्पन्नस्य पुरुषस्य लक्षणादिकथनं। गार्हस्थ्यधर्म्मनिरूपणं। तत्र यानवाहनभूषणाद्युपभोगविवेचनं। श्रावकधर्म्मनिरूपणं। अथ व्रतविशेषे बन्ध वध च्छेद अतिभारारोपण-अन्नपाननिरोध-मिथ्योपदेशादिरूपाभिचारनिरूपणं। दानलक्षणतत्पात्रादिनिरूपणं।

अष्टमे अध्याये,—अथ मिथ्यादर्शनाविरतिप्रमादकषाययोगानां बन्धहेतुत्वकथनं। जीवस्य कर्म्मणैव बन्ध इति निरूपणं। ज्ञानावरणीयवेदनीयाद्युत्तरप्रकृतिनिरूपणं। विशेषेण प्रकृतिबन्धस्वरूपनिरूपणं। स्थितिबन्धस्वरूपकथनं। प्रदेशबन्धस्वरूपकथनं। पापपदार्थनिरूपणं।

नवमे अध्याये,—भाव भव्यभेदेन द्विविधसंवरनिरूपणं। तत्र गुप्ति-समिति-धर्म्म-अनुप्रेक्षा-परीषह-जय-पराजय-चारित्ररूपसंवरकारणनिरूपणं। बाह्याभ्यान्तरभेदेन द्विविधतपोनिरूपणं। प्रायश्चित्तभेदकथनं। विनयभेदकथनं। वैयावृत्त्यभेदकथनं। स्वाध्यायभेदकथनं। व्युत्सर्गस्वरूपादिकथनं। एकाग्रचिन्तानिरोधरूपध्यानलक्षणादिकथनं। विविधध्यानस्वरूपकथनपूर्व्वकं-मोक्षकारणधर्म्मध्यानलक्षणादिकथनं। निर्ज्जरापुलाकादिनिरूपणं।

दशमे अध्याये,—मोक्षस्वरूपनिरूपणं। तत्र केवलज्ञानोदयात् ज्ञानावरणदर्शनावरणयोर्विलयेन मोहनाशात् कृत्स्नकर्म्मविप्रमोक्षोमोक्ष इतिनिर्णयः। मुक्तस्य गत्यादिनिरूपणं। सिद्ध्युपायकथनञ्च। (तत्त्वार्थसूत्रस्य विवरणम्।)

---

**No. 2429. विवादवारिधिः।** Substance, country-made paper, 16 × 4 inches. Folia, 128. Lines, 6 on a page. Extent, 2,333 ślokas. Character, Maithilí. Date, ? Place of deposit, Mujoná, Zillá Darbháñga, Paṇḍit Bábulál Páṭhak. Appearance, old. Prose and verse. Correct.

**Viváda-váridhi.** A digest of Hindu law on contracts, interest, wages, boundary disputes, marriage obligations, penal laws, felony, inheritance, &c., &c. By Ramápati Sanmis'ra.

**Beginning.** नत्वा श्रीकण्ठवैकुण्ठावकुण्ठौ भक्तनन्दने ।
क्रियते ऋजुबोधाय विवादस्य च वारिधिः ॥

तत्रादावृणादानं । मया व्यवस्थया अयमृणमधमर्णोऽष्टकाति । इत्यादि ।

**End.** नानासन्निपातं अभिगमः । नाना भिन्नभिन्नेत्यर्थः ।

**Colophon.** इत्युपाध्यायसन्मिश्रश्रीरमापतिविरचितोविवादवारिधिः परिपूर्णः ।

विषयः । ऋणादानव्यवस्थाकथनं । अक्रतवृद्धिकथनं । परमवृद्धिः । वृद्धिनिषेधः । आधिनिरूपणं । प्रतिभूविधिः । उद्ग्राहणविधिः । निक्षेपविधिः । अस्वामिविक्रयः । सम्भूयसमुत्थानं । दत्ताप्रापनिकं । दास्यमोचनविधिः । दास्याधिकारिनिरूपणं । वेतनस्यानपाक्रिया । पण्यस्त्रीविधिः । स्वामिपालविवादः । संविद्व्यतिक्रमः । विक्रीयासम्प्रदानं । क्रीत्वानुशयः । सीमाविवादः । सेतुविधिः । क्षेत्रास्वविधिः । शस्यरक्षाविधिः । अदण्ड्यकथनं । वाक्पारुष्यविधिः । दण्डपारुष्यविधिः । स्तेयविधिः । प्रकाशतस्करविधिः । साहसदण्डविधिः । सङ्ग्रहणविधिः । अभिगमदण्डविधिः । कन्यादूषणविधिः । स्त्रीपुंधर्म्मविधिः । स्त्रीरक्षाविधिः । दायभागकथनं । संसृष्टादिधनविभागः । अवलुप्तविभागः । प्रधानादिविधिः । विभागानर्हकथनञ्च ।

---

**No. 2430.** श्राद्धप्रदीपः । Substance, country-made paper, 16 × 4 inches. Folia, 88. Lines, 6 on a page. Extent, 1,892 s'lokas. Character, Maithilí. Date, ? Place of deposit, Mujoná, Zillá Darbháñgá, Khaḍganátha Páṭhaka. Appearance, old. Prose and verse. Correct.

**S'rádha-paddhati.** Rules regarding S'ráddha and the different occasions when it is to be performed, and the differences to be observed in the ritual to suit such occasions. By S'añkara Mis'ra, son of Bhavanáth.

**Beginning.** ऊर्द्ध्वबद्धजटाजूटक्रोड़क्रीड़त्सुरापगं ।
नमामि यामिनीकान्तकान्तभालस्थलं हरं ॥

तत्र श्राद्धत्वं नाम सम्बन्धपदोपनीतान् पितॄन् उद्दिश्य हविस्त्यागः श्राद्धमिति तत्त्वं इत्यादि ।

**End.** गयायां पिण्डदानेन पितॄणामनृणोभवेदिति ।

**Colophon.** इति महामहोपाध्यायसन्मिश्रश्रीभवनाथात्मजश्रीशङ्करमिश्रकृतः श्राद्धप्रदीपः सम्पूर्णः ।

विषयः। श्राद्धस्वरूपविवेचनं। तत्र सर्व्वत्र मुण्डनविधिकथनं। व्रणस्य स्वतोदूषकताकथनं। कुशाहरणविधिकथनं। श्राद्धकालनिरूपणं। तत्र कुतपरौहिणादिकालविवेचनं। संवत्सराभ्यन्तरे मलमासपाते श्राद्धविधिकथनं। संक्रान्तिश्राद्धविधिकथनं। रात्रिश्राद्धनिषेधः। दक्षिणाग्रपवित्रत्वविचारः। मन्त्रोहविचारः। उभयदिने चयाहलाभे विधानकथनं। दिनपदस्य तिथौ शक्तिरितिनिरूपणं। श्राद्धविधिः। श्राद्धान्नादिपरिवेशनविधिः। सौवर्णादिपात्रविधिः। दक्षिणादानविधिः। पर्व्वनरदाहविधिः। आभ्युदयिकश्राद्धकालः। तर्पणविधिः। श्राद्धाधिकारिनिरूपणं। श्राद्धदिने पुनर्भोजनादिविवेचनं। अमावास्याष्टकादिश्राद्धविधिः। वृषोत्सर्गविधिः। सपिण्डीकरणादिविधिः। अपरपक्षश्राद्धविधिः। शस्त्रादिहतश्राद्धविधिः। एकोद्दिष्टविधिः। श्राद्धे पशुघाते दोषाभावकथनं। तीर्थश्राद्धविधिकथनञ्च।

---

**No. 2431.** आचारवारिधिः। Substance, country-made paper, 16 × 4 inches. Folia, 68. Lines, 5—6 on a page. Extent, 868 ślokas. Character, Maithilí. Date, ? Place of deposit, Mujoná, Zillá Darbháñgá, Bábulála Páṭhaka. Appearance, decayed. Prose and verse. Correct.

**A'chára-váridhi.** A digest of the rules regarding A'chára or daily duties of householders. By Umápati Mis'ra, Upádhyáya.

**Beginning.** नत्वा श्रीकण्ठवैकुण्ठावकुण्ठौ भक्तनन्दने।
क्रियते सुखबोधाय आचारस्य च वारिधिः॥
तत्र मनुः। ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयन्। इत्यादि।

**End.** आचारवारिधिर्नाम निबन्धोरचितोमया।
प्रीयन्तामत्र विबुधाः गुणदोषपरीक्षकाः॥

**Colophon.** इत्युपाध्यायसन्मिश्रश्रीरमापतिविरचित आचारवारिधिः परिपूर्णः।

विषयः। प्रातःकृत्यनिरूपणं। तत मूत्रपुरीषोत्सर्गविधिः। शौचविधिः। आचमनविधिः। आचमननिमित्तकथनं। आचमनानुकल्पकथनं। दन्तधावनविधिः। प्रातःस्नानादिविधिः। केशप्रसाधनादिविधिकथनं। शुभाशुभदर्शनफलकथनं। वेदपाठादिविधिः। नदीलक्षणादिकथनं। नैमित्तिकस्नानादिविधिकथनं। अस्पृश्यस्पर्शने स्नानादिविधानं। काम्यस्नानविधिः। सन्ध्योपासनविधिः। जपादिविधिः। कुशनिरूपणं। उपवीतादिविधिकथनं। तर्पणविधिकथनं। देवतर्पणादिविधिकथनं। पूजादिप्रकारकथनं। पुष्पधूपादिनिरूपणं। वैश्वदेवविधिकथनं। पञ्चयज्ञविधिकथनं। नित्यश्राद्धविधिकथनं। भिक्षादानादिविधिकथनं। अतिथिपूजादिविधिकथनं। भोजनविधिकथनं। तदुत्तरकर्म्मविधानं। शयनविधिकथनं। दारोपगमविधिकथनञ्च।

---

**No. 2432** व्यवस्थारत्नमाला। Substance, country-made paper, 17 × 6 inches. Folia, 52. Lines, 11 on a page. Extent, 1,986 ślokas. Character, Maithilí. Date, ? Place of deposit, Mujoná, Zillá Darbháñgá, Khaḍganátha Páṭhaka. Appearance, fresh. Prose and verse. Correct.

**Vyávasthá-ratnamálá.** A digest of the Hindu law of inheritance. By Lakshmínáráyaṇa Nyáyálañkára, son of Gadádhara Tarkavágís'a.

**Beginning** प्रणम्य गोविन्दपदारविन्दं
योगीन्द्रहृत्कैरवभासचन्द्रं।
ब्रह्मेशनागेन्द्रसुरेन्द्रवन्द्यं
दीनार्त्तिशैलात्ययवज्रधुरेन्द्रं॥
भाषा-सुवर्णसूत्रेण व्यवस्थायुक्तिमौक्तिकैः।
मुनिवाङ्मणिभिर्माला कृता सर्व्वार्थसिद्धये॥
शास्त्राभ्यासपरिश्रमार्थयशसे चास्माकमेषा सदा
बालानां गलभूषणं खलन्वणां शूलं तथा वक्षसि।
दायादार्थिविवादसंशयतमश्छेदार्कवद्भूतले
भूयादङ्गकलिङ्गवङ्गप्रभृतौ राज्ञां विचारोद्यमे॥

अथ दायभागव्यवस्था संगृह्यते। तत्र यत् स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तद्दायभाग इति मिताक्षरा। — — — — — — — — — — अस्य प्रमाणं। पितृद्वारागतं
द्रव्यं मातृद्वारागतञ्च यत्। कथितं दायशब्देन तद्विभागोऽधुनोच्यते॥
इत्यादि।

**End.** दीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः।
इति विधानमालाधृतदेवलवचनानि॥

**Colophon.** इति श्रीमद्गदाधरतर्कवागीशभट्टाचार्य्यात्मजश्रीलक्ष्मीनारायणन्यायालङ्कारविरचितायां व्यवस्थारत्नमालायां दत्तकव्यवस्थानिर्णयस्यन्दकमणिर्नाम दशमोगुच्छः॥

विषयः। दायशब्दार्थनिरूपणं। विभागनिरूपणं। स्वत्वनिरूपनं। बहुस्वामिकैकद्रव्यविभागरीतिः। स्वत्वनाशकारणकथनं। पित्रनुज्ञया स्वोपार्ज्जितस्यापि विभागदानादिकथनं। पैतामहधनविभागकालादिकथनं। पितृकृतविषमविभागनिरूपणं। कारणविरहे तदसिद्धिनिरूपणं। जीवत्पितृकविभागः। पुत्रार्ज्जिते पितुरंशद्वयकथनं। अनेकपितृकाणां पितृतोविभागकथनं। बालधनस्य मित्रादौ स्थापनविधिः। नष्टोद्धृतविभागकथनं। पोष्यवर्गनिरूपणं। विभागानन्तरोत्पन्नविभागः। अनधिकारिणः। तत्र क्लीवादिलक्षणं। विभाज्याविभाज्यधननिरू-

पर्णं। देवप्रतिमादिविभागप्रकारः। स्त्रीधनादिनिरूपणं। संसृष्टधननिरूपणादिकं। अपुत्त्रध-नाधिकारकथनं। पत्न्या दानाद्यनधिकारकथनं। मिताक्षरे अपुत्त्रधनाधिकारनिरूपणं। यौतु-कधनादिनिरूपणं। शङ्कितव्यभिचाराया स्त्रीधनोच्छेदनविधिकथनं। ब्राह्मदैवादिविवाह-लक्षणं। तत्र तत्र स्त्रीधनाधिकारविशेषकथनञ्च। अप्रजस्त्रीधनाधिकारिणः। विभागकाले निह्नुतस्य विभागकथनं। विभागपत्त्रलेखनप्रकारकथनं। विभक्तकृत्यनिरूपणं। विदेशागतस्य विभागकथनं। दत्तकनिरूपणं। दत्तकग्रहणविधिकथनं। दत्तकधनाधिकारनिरूपणञ्च।

---

**No. 2433.** शिवतत्त्वार्णवः। Substance, country-made paper, 17 × 6 inches. Folia, 96. Lines, 8 on a page. Extent, 1,900 ślokas. Character, Maithilí. Date, ? Place of deposit, Mujoná, Zillá Darbháñgá, Khadga-nátha Páṭhaka. Appearance, old. Verse. Incorrect.

**S'iva-tattvárṇava.** A poem in praise of the worship of Gaurí and I's'a together, interspersed with many Puráṇic and Tántric legends. Anonymous.

**Beginning.** ज्योतिर्मात्रस्वरूपोगुणगणसहितोनिर्म्मलज्ञानरूपो-
राकेशोयत्र मौलौ गरलमपि गले नागयज्ञोपवीतः।
यस्याङ्के चार्द्धभागे हिमगिरितनया राजते या प्रभेव
गौरीशोवै सदा वोदुरितमपनयन् पातु नित्यं सदैव॥
गौरीशस्य कथा यत्र धर्म्मज्ञानानुवर्णनं।
सा यज्ञभूमी परमा वसेद्देवः सवासवः॥
स्वैः स्वैरंशैः शौनकाद्यैः पौलस्त्या + + राः सुराः।
निवासं तत्र तुर्व्वन्तो मङ्गलं कुर्व्वतेऽधुना॥
मण्डनं मज्जनञ्चैव स्वस्तिकादिनिवेदनम्।
गन्धं दीपं चरेद्यस्तु धर्म्मकामानवाप्नुयात्॥ इत्यादि।

**End.** ये शृण्वन्ति नरा भक्त्या न तेषामतिदुर्गतिः।
इति सूतमुखाच्छ्रुत्वा वचः परममपावनम्॥
ऋषयोहर्षमापन्ना जयजयेत्यभ्यकी र्त्तयन्॥

**Colophon.** इति श्रीशिवतत्त्वार्णवे ब्रह्मनारदसंवादे गौरीशमाहात्म्यं। शुभमस्तु श्रीरस्तु।

**विषयः।** गौरीशस्य माहात्म्यकीर्त्तनमुखेन मगधाधिपतेः बृहद्रथस्य जरासन्धाभिधानपुत्र-जन्मवृत्तान्तकीर्त्तनं। जरासन्धस्य राज्याभिषेकवृत्तान्तकथनं। गौरीशव्रतलोचकथनं। आराधने-न सन्तुष्टस्य गौरीशस्य जरासन्धाय वरदानादिवृत्तान्तकथनं। गौरीशलिङ्गस्य जरासन्धपुरे

स्थवस्थितिकथनं। कृष्णावतारकाले ब्रह्मादिकृतगौरीशस्तोत्रादिकथनं। चित्रगङ्गावैकुण्ठवनवृत्तान्तकथनं। श्रीकृष्णेन निहते कंसे तत्पत्न्या जरासन्धतनयायाः पितुः समीपगमनपूर्व्वकं कृष्णविचेष्टितकथनं। श्रीकृष्णजरासन्धयोर्युद्धादिवर्णनं। मथुरापरित्यागपूर्व्वकं श्रीकृष्णस्य द्वारकापुरीनिर्म्माणकथनञ्च। भीमकृतजरासन्धनिधनवृत्तान्तकथनं। जरासन्धसुतस्य सहदेवस्य श्रीकृष्णकृतराज्याभिषेकवर्णनं। गौरीशचैत्रमाहात्म्यकीर्त्तनं। शिवपूजामाहात्म्यादिवर्णनं। शिवचैत्रविशेषमाहात्म्यवर्णनं। गौरीशस्य षोडशोपचारेण पूजाविधिकथनं। उमामहेश्वरव्रतविधिकथनं। प्रदोषकाले शिवपूजनमाहात्म्यादिकथनं। प्रदोषकालमहिमादिवर्णनं। कार्त्तिकमासे प्रदोषकाले कमलादिना शिवपूजनमाहात्म्यकथनं। माघमासे गौरीशलिङ्गपूजामाहात्म्यकीर्त्तनं। रुद्राध्यायपाठादिमाहात्म्यकथनञ्च।

---

**No. 2434.** तत्त्वकौमुदी। Substance, country-made paper, 17 × 4 inches. Folia, 48. Lines, 7—8 on a page. Extent, 1,584 ślokas. Character, Maithili. Date, L. E. 352. Place of deposit, Mujoná, Zillá Darbhâṅga, Babulála Páṭhaka. Appearance, decayed. Prose. Incorrect.

**Tattva-kaumudí.** A commentary on Subandhu's Vásavadattá. By Rámadeva Mis'ra. The Vásavadattá has been published in the 'Bibliotheca Indica' along with S'ivaráma Tripáṭhí's commentary. Mr. Hall does not name the work now under notice. He cites, however, a commentary by Jagaddhara.

**Beginning.** सजलजलदश्यामं पीतवाससमच्युतं।
नन्दसूनुं नमस्कृत्य तन्यते तत्त्वकौमुदी॥

इह खलु प्रारिप्सितपरिसमाप्तिकामयमानः कविकुलकुमुदबन्धुः वागधिदेवताकीर्त्तनरूपं मङ्गलमादौ निबध्नाति करवदरेति। सा सरस्वती वागधिष्ठात्री जयति सर्व्वोत्कर्षेण वर्त्तते। इत्यादि।

**End.** सुखानि सम्भोगशृङ्गारसम्बन्धीनि अनुभवन् कालं निनाय।

**Colophon.** इति श्रीरामदेवमिश्रविरचिता वासवदत्ताटीका तत्त्वकौमुदी समाप्ता। लसं ३५२।

विषयः। सुबन्धुकृतवासवदत्ताया व्याख्यानम्।

---

**No. 2435.** तत्त्वबोधः। Substance, country-made paper, 14 × 4 inches. Folia, 8. Lines, 6—7 on a page. Extent, 91 ślokas. Character, Maithili. Date, ? Place of deposit, Mujoná-grám, Zillá Darbhâṅgá, Yogeśvara Miśra. Appearance, old. Prose and verse. Correct.

**Tattvabodha.** A short summary of the Vedánta doctrine. Anonymous. CONTENTS: Persons qualified to obtain the knowledge of Brahma. The four kinds of exercise for the purpose. The characteristics of such knowledge. Soul defined. Peculiarities of the gross body, of the rudimentary body, of the subtile body, and of the three conditions of existence. The five envelopes of the body. The definition of the Supreme Soul. Rules for the purification of the constituents of the body. Characteristics of individual souls. Identity of the individual and the Supreme souls. Characteristics of the emancipated while living in a carnal body. Duty. Printed at Mirzapur, Hall's 'Contributions,' p. 112.

**Beginning.** वासुदेवेन्द्रयोगीन्द्रं नत्वा ज्ञानप्रदं गुरुं ।
मुमुक्षूणां हिताथाय तत्त्वबोधोविधीयते ॥
साधनचतुष्टयसम्पन्नाधिकारिणां मोक्षसाधनाङ्गभूतं तत्त्वविवेकप्रकारं वक्ष्यामः । इत्यादि ।

**End.** ज्ञानसम्प्राप्तिसमये मुक्तोऽसौ विगताश्रयः । इति स्मृतेश्च ।

**Colophon.** इति श्रीतत्त्वबोधाख्यः ग्रन्थः समाप्तः ।

विषयः । ब्रह्मज्ञानाधिकारिनिरूपणं । साधनचतुष्टयनिरूपणं । तत्त्वविवेकस्वरूपकथनं । आत्मनिरूपणं । स्थूलशरीरसूक्ष्मशरीरकारणशरीरादिनिरूपणं । अवस्थात्रयनिरूपणं । पञ्चकोषनिरूपणं । सच्चिदानन्दस्वरूपकथनं । पञ्चीकरणनिरूपणं । जीवादिलक्षणं । जीवेश्वरयोरभेदनिरूपणं । जीवन्मुक्तलक्षणं । कर्म्मनिरूपणञ्च ।

---

**No 2436.** मोक्षसिद्धिः । Substance, country-made paper, 14 × 4 inches. Folia, 12. Lines, 6 on a page. Extent, 58 ślokas. Character, Nágara. Date, ? Place of deposit, Mujoná, Zillá Darbháñgá, Yogeśvara Miśra. Appearance, new. Prose and verse. Correct.

**Moksha-siddhí.** A summary account of the three means by which emancipation from transmigration may be acquired. The three means are duty, knowledge and devotion, respectively called Karmayoga, Jnánayoga, and Bhaktíyoga. By Krishṇa Giri, disciple of Kailásáchala. The work was compiled for the king Raṇodippa Siñha in the year, 1015. The era is not named; it is the Newári era.

**Beginning** नमस्कृत्य परं ब्रह्म मोक्षसिद्धिं करोम्यहं ।
श्रीरणोद्दीपसिंहेन राज्ञा सम्प्रार्थितोऽधुना ।

इह खलु धर्म्मार्थकाममोक्षेषु चतुर्व्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः। तदुपायास्त्रयः इत्यादि।

**End.** क्रमेणानुष्ठानान्मोक्ष इति सिद्धं।
वाणेन्दुरन्ध्रेन्दुमिते सुवत्सरे
मार्गे त्वमायां रविवासरे यतिः।
कृष्णोरणोद्दीपन्दपेण प्रार्थितो-
मोक्षस्य सिद्धिं रचयाम्बभूव ह॥

**Colophon** इति श्रीमत्कैलासाचलशिष्येण श्रीमत्कृष्णगिरिणा विरचिता मोक्षसिद्धिः समाप्ता।

विषयः। कर्म्मयोगोभक्तियोगोज्ञानयोग इति त्रिविधमोक्षोपायनिरूपणं। क्रमेण तत्तदधिकारिनिरूपणं। तत्र कर्म्मनिरूपणानन्तरं तेन मुक्तिप्राप्तिविवेचनं। एवं भक्त्या ज्ञानेन च मोक्षसिद्धिनिरूपणञ्च।

---

**No. 2437.** स्वर्णाद्रिमहोदयः। Substance, palm-leaf, $11\frac{1}{4} \times 1$ inches. Folia, 103. Lines, 4 on a page. Extent, 1,287 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Dr. Rájendralála Mitra. Appearance, old. Prose. Incorrect.

**Svarṇádrimahodaya.** A short account of the temples and sacred places of Svarṇádri hill or Bhuvanes vara. It professes to be a part of the *Ekámrachandriká,* a work on the same subject; but the MSS. I possess do not correspond.

**Beginning** नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीं व्यासं ततोजयमुदीरयेत्॥
कीर्त्तिर्यस्य सुरासुरैर्मुनिवरैः संगीयते नित्यशो-
नाकक्ष्मातलवासिभिः सुरनरैर्विद्याधरैः किन्नरैः।
पातालेषु च कन्दरेष्वपि महीध्राणां गतैः पन्नगैः
ब्रह्मोपेन्द्रसवासवान्वितजगत्कर्त्रे नमः शम्भवे॥
वेदव्यास श्रियावास सर्व्वज्ञ अपराजित।
एकाम्रकस्य माहात्म्यं वक्तुमर्हस्यशेषतः॥
व्यास उवाच।
शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः।

सर्व्वपापहरं पुण्यं क्षेत्र परमदुर्लभं ॥
विघ्नेश्वरं नमस्कृत्य ततस्त्रिभुवनेश्वरं ।
अष्टादशपुराणाश्रैव्वेद्याम्येकाम्रचन्द्रिकां ॥
असौ महोदयश्चन्द्रः स्वर्णाद्राबुदितोर्द्विजाः ।
प्रकाशयति लोकानामेकाम्रकवनोत्तमं ॥
लिङ्गकोटिसमायुक्तं वाराणस्याः समं शुभं ।
एकाम्रकेति विख्यातं तीर्थाष्टकविभूषितं ॥
एकाम्रवृक्षस्तत्रासीत् पुण्यकल्पे तपोधनाः ।
तस्यैव नाम्ना तत् क्षेत्रमेकाम्रकमिति स्मृतं ॥
ब्रह्मोवाच ।
शृणु देवि प्रवक्ष्यामि याथातथ्यं वदामि ते ।
इत्युक्ता भगवान् ब्रह्मा शिवायै कथितं पुरा ॥
सनत्कुमारस्तु तं (?) विप्रा अशितादीन् प्रभाषितां (?) ।
तामहं संप्रवक्ष्यामि भवद्भिः प्रतिबुध्यतां ॥

**End.** उदयति यदि चन्द्रश्चोदयाद्रेश्च शृङ्गे
वितरहि मनुजानां लोचनानां विनोदं ।
अयमुदयितग्रन्थश्चन्द्रमाः स्वर्णकूटे—
वितरति पुरुषाणां ज्ञानचक्षुर्विशालं ॥

**Colophon.** इति श्रीमत्येकाम्रचन्द्रिकायां चतुःप्रकाशसमाप्तौ स्वर्णाद्रिमहोदयोनाम पञ्चदशोऽध्यायः ॥

विषयः । एकाम्रक्षेत्रस्थितविविधतीर्थस्थानमाहात्म्यादिवर्णनं ।

---

**No. 2438.** अभिधावृत्तमातृका । Substance, Káśmíri paper, 11 × 7 inches. Folia, 11. Lines, 15 on a page. Extent, 325 ślokas. Character, Nágara. Date ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

**Abhidhávṛitta-mátṛiká.** Considerations regarding the radical and derivative or metaphorical or secondary meanings of words. By Bhaṭṭa Mukula.

**Beginning.** ॐ नमोनारायणाय । ॐ श्रीशङ्करोजयति । ॐ इह खलु भोगापवर्ग-साधनभूतानां तद्विपर्य्ययपरिवर्ज्जनप्रयोजनानां च पदार्थानां निश्चयमन्तरेण व्यवहारोपारोहिता नोपपद्यते तथाहि सर्व्वाणि प्रमाणानि प्रमेयावगतिनिबन्धभूतानि निश्चयपर्य्यवसायि-

तया प्राधान्यं भजन्ते प्रमाणनिबन्धना च भोगापवर्गसाधनभूतानां तद्विपर्य्ययपरिवर्ज्जनप्रयोजनानां च पदार्थानामवगतिः। अतो निश्चय एव तेषां पदार्थानां व्यवहारोपारोहे निबन्धनं निश्चयः शब्दसम्बन्धेनार्थगोचरीकरोति शब्दस्य च मुख्येन लाक्षणिकेन चाभिधाव्यापारेणार्थावगतिहेतुत्वमिति मुख्यलाक्षणिकयोरभिधाव्यापारयोरत्र विवेकः क्रियते।

**End.** अनेन व्याकरणमीमांसातर्कसाहित्यात्मकेषु चतुर्षु उपयोगात्तद्द्वारेण च सर्व्वासु विद्यासु च सकलव्यवहारभूतासु प्रसरणादस्य दशविधस्याभिधावृत्तस्य सकलव्यवहारव्यापित्वमाख्यातमिति शुभं।

भट्टकल्लटपुत्रेण मुकुलेन निरूपिता।
सूरिप्रबोधनायैवमभिधावृत्तमातृका॥

**Colophon.** इति श्रीभट्टमुकुलविरचिता अभिधावृत्तमातृका सम्पूर्णा सम्पन्नेति शुभं।

विषयः। मुख्यलाक्षणिकयोर्भेदनिरूपणं तयोरवान्तरभेदनिरूपणञ्च।

---

**No. 2439.** ग्रहभावफलम्। Substance, country-made paper, 11 × 4½ inches. Folia, 7. Lines, 8 on a page. Extent, 246 ślokas. Character, Nágara. Date, Sm. 1910. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Graha-bhávaphala.** On the influence of the 12 signs of the Zodiac on human destiny. Anonymons.

**Beginning.** श्रीगणेशाय नमः। अथ ग्रहाणां प्रत्येकं भावफलानि लिख्यन्ते। तत्र सूर्य्यस्य, लग्नेऽर्केऽल्पकचः क्रियालसतमः क्रोधी प्रचण्डोनतो प्रचण्डाननो)
मानी लोचनरुक् सुकर्कशतनुः शूरः क्षमानिर्घृणः (निर्घृणः)।
फुल्लाक्षः शशिभे क्रिये स्थितिहरः सिंहे निशान्धः पुमान्
दारिद्र्योपहतोविनष्टतनयः संस्थे तुलासंज्ञके। १।
धनसुतोत्तमवाहनवर्ज्जितोहतमतिः सुजनस्थितसौहृदः।
परगृहोपगतोहि नरोभवेद्दिनमणेर्द्रविणे यदि संस्थितिः। २।
प्रियंवदः स्याद्धनवाहनाढ्यः सुकर्म्मयुक्तोऽनुचरान्वितश्च।
मितानुजः स्यान्मनुजोबलीयान् दिनाधिराजे सहजेऽधिसंस्थे। ३।

**End.** दयाविहीनोनिधनोन्ययार्त्तः (व्ययार्त्तः) सदालसोनीचजनानुयातः।
न रोगमङ्गो(?) जितसर्व्वसौख्योव्यये स्थिते भानुसुते प्रसूतः। १२। इति भावफलानि।
तन्वादिस्थशनेः प्रोक्तं यच्च भावोद्भवं फलं। राहोस्तदेव विज्ञेयं मुनीनामपि सम्मतं॥ १२॥

खोञ्चस्थितः पूर्णफलं विधत्ते स्वर्च्चे त्रितर्च्चे च फलार्द्धमेव ।
फलाङ्घ्रिमात्रं रिपुमन्दिरस्थस्वास्तं प्रयातः खचरोन किञ्चित् ॥ १४ ॥

**Colophon.** इति ग्रहभावफलं ॥

विषयः । तन्वादिद्वादशराशिस्थग्रहाणां फलकीर्त्तनं ।

---

**No. 2440.** चारुचर्य्या । Substance, country-made paper, 12½ × 10 inches. Folia, 4. Lines 26 on a page. Extent, 123 ślokas. Character, Nágara Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Generally correct.

**Chárucharyá**. Moral duties described in verse and illustrated with examples. By Vyásadása Kshemendra.

**Beginning.** श्रीलाभसुभगः सत्यनिष्ठः स्वर्गापवर्गदः ।
जयति त्रिजगत्पूज्यः सदाचार इवाच्युतः ॥
ब्राह्मे मुहूर्त्ते पुरुषस्त्यजेन्निद्रामतन्द्रितः ।
पद्मं प्रातः प्रबुद्धं हि श्रयति श्रीर्गुणाश्रया ॥ इत्यादि ।

**End.** अन्ते सन्तोषदं विष्णुं स्मरेदन्तारमापदां ।
शरतल्पगतोभीष्मः सस्मार गरुड़ध्वजं ॥
श्रव्या श्रीव्यासदासेन समासेन सतां मता ।
चेमेन्द्रेण विचार्य्येयं चारुचर्य्या प्रकाशिता ॥

**Colophon.** इति श्रीचारुचर्य्या समाप्ता ।

विषयः । संचेपेण सदाचारकथनमुखेन सदृष्टान्तधर्म्मनीतिकीर्त्तनं ॥

---

**No. 2441.** युधिष्ठिरविजयः सटीकः । Subsance, Káśmíri paper, 10 × 7 inches. Folia, 231. Lines, 19 on a page. Extent, 5,189 ślokas. Character, Nágara. Date, Sm. 1937. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

**Yudhishṭhira-vijaya**. A poem on the history of Yudhishṭhira, the Páṇḍava king. By Ratnakalpa. Annexed to the text is a commentary entitled *S'ishyahitá*. It is apparently the work of the author of the text. The date of composition is S'aka 1562.

**Beginning.** (मू॰) प्रदिशतु गिरिशश्लिमितां ज्ञानदृशं वः श्रियञ्च गिरिशश्लिमितां ।
प्रशमित परमदमायं सन्तः सञ्चिन्तयन्ति परमदमायं ॥ १ ॥

येवा मन्दरवपुषं ममर्द मातङ्गवरममन्दरवपुषं ।
कान्तां चापधराद्यः च्चपितोयेनाङ्गजोपि चापधराद्यः ॥ २ ॥
शिरसां सकले सवलिता सरितांवरा च सकलेशकले ।
यस्य च कोटीरमिता स्फुटविवभाम वर्षकोटीरमिताः ॥ ३ ॥
अस्ति स गजराजगतीराजवरोयेन गतप्रगजराजगती ।
भीषणमधिकं कवयः स्तुवन्ति जन्यं यदीयमधिकं कवयः ॥ ४ ॥

(टी०) ॐ नमः सरस्वत्यै । नमोविघ्नजिते । ॐ सेवकजनसिद्धरमां तां देवीं नमत सिद्धरमां । या वन्द्या विबुधगणैः स्तुत्या या भूतले विबुधगणैः ॥ रचत कलहेरम्बविजगद्वन्द्यः सहेरम्बः । बहुविधशृङ्गारचितं यद्वदनं शम्भुना रचितं ॥ रामाङ्केषु शशाङ्कैः १५९३ प्रमिते वर्षे शकेन्द्राणां । अवरङ्गशाहिभूपे शासति सति मेदिनीचक्रं ॥ धर्म्मात्मजविजयाख्ये सगभीरे निबन्धे ऽस्मिन् टीका। शिष्यहितैषा विधीयते रत्नकण्ठेन ॥ अथ प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं व्याख्यातृ-श्रोतॄणामाशीर्वचनपुरःसरमभीष्टदेवतास्मरणरूपं मङ्गलाचरणमार्य्याष्टत्तत्रयेण प्रदिशत्वित्यादिना प्रस्तौति ग्रन्थकारः ।

End. (मू०) सुखेन नागसाह्वये पुरे वसत्य भारतः । ररच गां पुरूरवाः पुरेवसत्सभा-रतः ॥ १०५ ॥

Colophon इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये अष्टम आश्वासः समाप्तः ।

(टी०) नागसाह्वये पुरे हस्तिनापुरे वसत् तथा सत् स भारतः सज्जनानां या सभा गोष्ठी तत्र रतः सभारतः स युधिष्ठिरः गां भूमिं ररच्च अशिषत् क इव पुरूरवा इव यथा पुरूरवाः राजप्रवरः गां महीं ररक्षेति । शिवमोम् ॥ १०५ ॥

समाप्तश्चैष सटीकः युधिष्ठिरविजयाख्योग्रन्थः । इति शिवम् । स्वस्त्यस्तु ।

विषयः । १मे आश्वासे द्रौपदीस्वयम्बरवर्णनं । २ये आश्वासे सुभद्राहरणवनविहार-षड्-तुवर्णनं जलक्रीड़ा-स्तव-चन्द्रोदय-आपानगोष्ठी-सुरतलीला-सूर्य्योदयवर्णनञ्च। ३ये आश्वासे-खाण्डवदाहहत्तान्तादिवर्णनं । ४र्थ आश्वासे धृतराष्ट्रनिर्वेद-दुर्य्योधनकर्णसंवादवर्णनं व्यासा-गमन-तदनुशासनकीर्त्तनं मैत्रेयागमनवर्णनं दुर्य्योधनानुशासन-तत्क्षोभ-मैत्रेयदत्तशापकथनं द्वैतवनप्रस्थान-द्रौपदी-भीमसेन कथोपकथन युधिष्ठिरानुशासनकीर्त्तनं किराताज्जुनयुद्धवर्णनं स्वर्गेऽर्ज्जुनस्य प्रस्थानवर्णनं इन्द्रदत्तास्त्रप्राप्ति-निवातकवचबधवर्णनञ्च । ५मे आश्वासे तीर्थयात्रान-न्तरं महेन्द्र-विन्ध्य-हिमवद्दर्शनपूर्व्वकं अर्ज्जुनस्य गन्धमादनप्रवेशवर्णनं द्रौपद्या दिव्यप्रसूनलाभ-हनूमद्भीमसेनसमागमादिकथनं अजगरकृतभीमसेनग्रहण-तन्मोचन द्वैतवनप्राप्ति-घोषयात्रा-दुर्य्योधनबन्धन-अर्ज्जुनकृतदुर्य्योधनमोचनादिवर्णनं युधिष्ठिरादीनां विराटनगरप्राप्ति-कीच-कबधवर्णनञ्च । षष्ठसप्तमाष्टमेषु युद्धादिवर्णनपूर्व्वकं युधिष्ठिरविजयलाभादिकीर्त्तनञ्च ।

**No. 2442.** अलङ्कारोदाहरणम् । Substance, Káśmíri paper, 10 × 7 inches. Folia, 43. Lines, 27—28 on a page. Extent, 1,396 ślokas. Character, Nágara. Date ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and Verse. Generally correct.

**Alaṅkárodáharaṇa.** Rhetorical ornaments explained and illustrated with examples. By Jayaratha.

**Beginning.** नमस्कृत्य परां वाचमखिलद्वालसम्मतं ।
कोऽप्यलङ्कारसूत्राणामुदाहरणमाचकं ॥

इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यञ्चेति चयः पौनरुक्त्यप्रकाराः । तचार्थपौनरुक्त्यं प्ररूढं दोषः । यथा हरिनयनां सारङ्गाक्षीं कुरङ्गविलोचनां कमलवदनां राजीवास्यां सरोजसमाननां । विलुलितकचां चञ्चत्केशीं चलच्चिकुरोत्करां सुरतविरतौ सम्भोगान्ते विलोकय कामिनीं ॥ इत्यादि ।

**End.** प्रतिज्ञामाचमेवैतदित्युपेक्ष्यं विचक्षणैः ।
अलङ्कारविमर्शिन्यां युक्तिरुक्तचरात्र यत् ॥
सद्म + कमुद्दिश्य निजं सत्यपि बाल्ये श्रुतार्थिनं पौत्रं ।
अखिलं निखिलालङ्कृतिसिद्धान्तं जयरथः स्फुट+पदं ॥

परिपूर्णमिदमलङ्कारोदाहरणं कृतिर्विपश्चिद्वरश्रीजयरथस्य ।

**Colophon.** इत्यलङ्कारोदाहरणं समाप्तं ॥

विषयः । सन्दर्भेऽस्मिन् केवलमलङ्कारसूत्राणामेव व्याख्यानमुखेन उदाहरणनिरूपणं । तत्र शब्दालङ्कारप्रकरणे पौनरुक्त्यभेदकथनपूर्व्वकं पुनरुक्तवदाभासालङ्कारनिरूपणं । अनुप्रासनिरूपणं । यमकादिनिरूपणं । पद्मबन्धगोमूत्रिकादिनिरूपणं । अर्थालङ्कारप्रकरणे उपमानिरूपणं । अनन्वयनिरूपणं । उपमेयोपमानिरूपणं । समनिरूपणं । स्मरणालङ्कारः । विनोदालङ्कारः । संस्कारालङ्कारः । क्रियातिपत्त्यलङ्कारः । रूपकालङ्कारः । परिणामालङ्कारः । सन्देहालङ्कारः । वितर्कालङ्कारः । तात्पर्य्यालङ्कारः । भ्रान्तिमदलङ्कारः । विपर्य्ययालङ्कारः । उल्लेखालङ्कारः । अपह्नुत्यलङ्कारः । उत्प्रेक्षालङ्कारः । अतिशयोक्त्यलङ्कारः । तुल्ययोगितालङ्कारः । दीपकालङ्कारः । दृष्टान्तालङ्कारः । निदर्शनालङ्कारः । व्यतिरेकालङ्कारः । सहोक्त्यलङ्कारः । विनोक्त्यलङ्कारः । समासोक्त्यलङ्कार । परिकरालङ्कारः । अप्रस्तुतप्रशंसालङ्कारः । अर्थान्तरन्यासालङ्कारः । उदाहरणालङ्कारः । पर्य्यायोक्तालङ्कारः । व्याजस्तुत्यलङ्कारः । आक्षेपालङ्कारः । निश्चयालङ्कारः । विरोधालङ्कारः । विभावनालङ्कारः । विशेषोक्त्यलङ्कारः । असङ्गत्यलङ्कारः । विषमालङ्कारः । समालङ्कारः । विचित्रालङ्कारः । अनादरालङ्कारः । आदरालङ्कारः । अन्योन्यालङ्कारः । विशेषालङ्कारः । व्याघातालङ्कारः । शृङ्खलालङ्कारः । अनुमाना-

लङ्कारः। व्याघ्रालङ्कारः। प्रसङ्गालङ्कारः। पर्य्यायालङ्कारः। परिवृत्त्यलङ्कारः। समतालङ्कारः। तुल्यालङ्कारः। वैधर्म्म्यालङ्कारः। परभागालङ्कारः। उद्रेकालङ्कारः। परिसंख्यालङ्कारः। प्रतिप्रसवालङ्कारः। तन्त्रालङ्कारः। अङ्गालङ्कारः। अनङ्गालङ्कारः। अर्थापत्त्यलङ्कारः। सम्भवालङ्कारः। विकल्पालङ्कारः। समुच्चयालङ्कारः। अभ्यासालङ्कारः। अभीष्टालङ्कारः। समाध्यलङ्कारः। प्रत्यूहालङ्कारः। प्रत्यनीकालङ्कारः। अप्रत्यनीकालङ्कारः। प्रतीपालङ्कारः। मीलितालङ्कारः। सामान्यालङ्कारः। विवेकालङ्कारः। तद्गुणालङ्कारः। उत्तरालङ्कारः। सूक्ष्मालङ्कारः। व्याजोक्त्यलङ्कारः। वक्रोक्त्यलङ्कारः। स्वभावोक्त्यलङ्कारः। भाविकालङ्कारः। उदात्तालङ्कारः। रसवदलङ्कारः। प्रेयोऽलङ्कारः। ऊर्ज्जस्व्यलङ्कारः। संसृष्टिः। सङ्करादिनिरूपणञ्च।

---

**No. 2443** जातकालङ्कारः। Substance, country-made paper, 11½ × 4½ inches. Folia, 21. Lines, 9 on a page. Extent, 467 ślokas. Character, Nágara. Date, Sm. 1872. Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Incorrect.

**Játakálankára.** On horoscopy. By Gaṇes'a Daivajṇa, son of Gopála.

**Beginning.** सानन्दं प्रणिपत्य सिद्धिसदनं लम्बोदरं भारतीं
सूर्य्यादिग्रहमण्डलं निजगुरुं भक्त्या हृदब्जे स्थितं।
येषामङ्घ्रिसरोरुहस्मरणतोनानाविधाः सिद्धयः
सिद्धिं यान्ति लघु प्रयान्ति विलयं प्रत्यूहशैलव्रजाः॥
यत्पूर्व्वं परमं पुराकृतगलितं सज्जातकं फक्किका
+ + गूढतमं तदेव विशदं कुर्व्वे गणेशोऽस्म्यहं।
दैवज्ञः सुतरां यशःसुखमतिः श्रीहर्षदं स्रग्धरा-
वृत्तैश्चारु नृणां शुभाय नयदं श्रीमच्छिवानुज्ञया॥ इत्यादि।

**End.** अभूदवनिमण्डले गणकमण्डलीमण्डनं
श्रुतिस्मृतिविहारभूर्विबुधमण्डलीमण्डनं।
प्रचण्डतरगुर्ज्जराधिपसभाप्रधानप्रभा
कवीन्द्रकुलभूषणं जयति कावजीकोविदः॥
भारद्वाजकुले बभूव परमं तस्मात् सुतानां त्रयं
ज्यायांस्तत्र भवेद् (?) ग्रहस्तुतिलकः श्रीसूर्य्यसूरिः कविः।
श्रीमान् सर्व्वकलानिधिस्तदनुजोगोपालनामाभव-
च्छ्रीमद्दैवविदां वरस्तदनुजः श्रीरामकृष्णोऽभवत्॥

शाके मार्गणरामसायकधरा (१५३५) संख्ये नभस्ये तथा।
मासे ब्रह्मपुरे सुजातकमिदं चक्रे गणेशः सुधीः॥
छन्दोऽलङ्कृतिकाव्यनाटककलाभिज्ञः शिवाध्यायकं
तत्र श्रीशिवविष्णुदे गणितभूगोपालसूनुः स्वयं॥
ये पाठयन्ति दैवज्ञास्तेषामायुः सुखं शिवं।
भूयात् कैरवकुन्दाभा सुकीर्त्तिः सर्व्वतोदिशि॥
छन्दैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन्।
वंशाध्यायः श्रीगणेशेन दृष्टैर्युक्तोविदैः शैलसंख्यः प्रणीतः॥

**Colophon.** इति गोपालात्मजगणेशदैवज्ञकृतौ जातकालङ्काराभिधं जातकं सम्पूर्णं।

विषयः। तत्र प्रथमाध्याये, जातकसंज्ञादिनिरूपणं। द्वितीयाध्याये, भावादिनिरूपणं। तृतीयाध्याये योगादिनिरूपणं। चतुर्थाध्याये, विषकन्यानिरूपणं। पञ्चमाध्याये, आयुर्दायनिरूपणं। षष्ठाध्याये, लग्नांशभावनिरूपणं। सप्तमाध्याये, ग्रन्थकर्त्तुर्वंशवर्णनं।

---

**No. 2444.** ज्योतिःसागरः। Substance, country-made paper, 9 × 4 inches. Folia, 112. Lines, 8 on a page. Extent, 1,288 ślokas. Character, Nágara. Date, Sm. 1876. Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Generally correct.

**Jyotihságara.** On the leading topics of Hindu astronomy and astrology. Anonymous.

**Beginning.** विघ्नराजं प्रणम्यादौ शारदां शास्त्रदेवतां।
दक्षिणामूर्त्तिमीशानं गर्गलल्लादिकान् मुनीन्॥
नानाग्रन्थान् समालोक्य गणकानां प्रसिद्धये।
करिष्ये बालबोधाय ज्योतिःसागरसंज्ञकं॥ इत्यादि।

**End.** आकाशे च भवेन्मृत्युः पाताले सुखसम्पदः।
एवं भासयते क्रिङ्का कथ्यते अशुभाशुभं॥

**Colophon.** इति ज्योतिःसागरग्रन्थः समाप्तः। सवत् १८७६।

विषयः। षष्टिसंवत्सरनामादिकथनं। तिथिदैवतकथनं। नक्षत्रयोगादिकथनं। अवकहडाचक्रकथनं। नष्टराशिकथनं। ग्रहाणां भावादिनि पणं। दिनरात्रिमुहूर्त्तादिनिरूपणं। ग्रहभोगकथनं। नित्यदशादिनिरूपणं। अङ्गग्रहफलादिकथनं। चन्द्रताराबलादिनिरूपणं। यमघण्टयोग मृत्युयोग-क्रकचयोगादिकथनं। पञ्चकरौद्रगृधादिनिरूपणं। घातचन्द्रादिनिरूपणं। लग्नो-

दयभोगादिनिरूपणं। साधारणलग्नबलादिकथनं। ग्रामचक्रादिनिरूपणं। कूर्म्मवास्तु-वास्तुचक्रादिनिरूपणं। वृषभवास्तु-कलसवास्तु-द्वारचक्रादिकथनं। अश्वचक्रादिकथनं। प्रयाणनक्षत्रादिकथनं। नामराशिविचारः। दिक्शूल विदिक्शूल कालराहुप्रभृतिनिरूपणं। घवाड़निरूपणं। योगिनीविचारः। ज्वालामुख्यादियोगकथनं। ललाटग्रहकथनं। पन्थाराहुचक्रकथनं। शुभाशुभशकुननिरूपणं। जातकप्रकरणं। तत्र मूलहृत्तमूलपुरुषादिकथनं। वस्त्रधारणादिदिनकथनं। रोगमुक्तस्नानप्रकरणम्। पादप्रमाणेन दिनमानज्ञानकथनं। नष्टवस्तुविचारप्रकरणम्। कृषिमुहूर्त्तप्रकरणम्। प्रथमरजोदर्शनसमये मासादिफलकथनं। गर्भाधानपुंसवनादिकालनिरूपणं। तत्र पयःप्राशनादिकालनिरूपणञ्च। विवाहप्रकरणे वरलक्षणकन्यालक्षणादिकथनं। विवाहवेदिनिर्म्माणादिविधिकथनं। अग्न्याधानविधिकथनं। अग्निचक्रकथनं। देवस्थापनविधिकथनं। संक्रान्तिप्रकरणं। तैलाभ्यङ्गप्रकरणं। चन्द्रग्रहणादिकथनं। पल्लीपतनविचारः। छिक्काप्रश्नकथनञ्च।

---

**No. 2445.** जातकालङ्कारटीका। Substance, country-made paper, 11½ × 4½ inches. Folia, 28. Lines, 9 on a page. Extent, 525 ślokas. Character, Nágara. Date, Sm. 1866. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Incorrect.

**Játakálaṅkára-tíká.** A commentary on the work described under the next preceding No. Anonymous.

**Beginning.** (अथ जातकालङ्कारस्य टीका लिख्यते।) सानन्दमिति। गणेशकविर्न्नाम्नाहं इदं जातकं कुर्व्वे—इति तृतीयश्लोकेनान्वयः। किं कृत्वा सानन्दं यथा भवति तथा लब्धोदरं गणेशं—इत्यादि।

**End.** कीदृशोऽध्यायः, दशसंख्यैः वर्य्यैः श्रेष्ठैः वृत्तैः प्रणीतः कृतः।

**Colophon** इति श्रीजातकालङ्कारटीकायां वंशाध्यायः समाप्तः।

विषयः। गणेशदैवज्ञकृतजातकालङ्कारस्य व्याख्यानं।

---

**No. 2446.** जातकालङ्कृतिश्रीः (जातकालङ्कारटीका, ।) Substance, country-made paper, 12 × 4½ inches. Folia, 52. Lines, 7—8 on a page. Extent, 647 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Incorrect.

**Játakálaṅkṛiti-śrí.** An exposition and elaboration of the Játakálaṅkára, by the author himself. The codex is incomplete.

Beginning + + णं ब्रह्मविद्यापरिचयचतुरं श्रीगुरुं व्यासपुत्रं
नत्वाचार्य्यं मुनीनां हरिपदकमले प्रेमविश्रामभाजं।
शिष्टेष्टं खेष्टदेवं श्रुतिसमधिगतं माधवं भावयित्वा
भावैरुद्भाव्यतेऽसौ प्रवरमतिमुदे जातकालङ्कृतिश्रीः॥

अथ ज्योतिर्व्विल्तिलकस्कन्दोऽलङ्कृतिकाव्यरचनानिपुणः श्रीगणेशकविः श्रीशुकजातकानुरोधिजातकालङ्कृतिनामग्रन्थं चिकीर्षुस्तदादौ निर्व्विघ्नपरिसमाप्त्यर्थं शिष्टाचारक्रमागतं भगवद्विभूतिभूतगुरु + + + + + + + + + + गणेशनाम्ना ग्रन्थकरणकुशलेन मया इत्यादि।

End. सर्व्वकलानिधिः सर्व्वकलाकुशलोगोपालनामाभवत् तदनुजः श्रीमद्वेदविदां वरः—इति।

Colophon. (इत्यतोलिखिताभावात् परिसमाप्तिसूचकवाक्यं नास्ति।)

विषयः। गणेशदैवज्ञकृतजातकालङ्कारस्य व्याख्यानं।

---

**No. 2447.** पद्मकोषः। Substance, country-made paper, 12 × 4¾ inches. Folia, 10. Lines, 9 on a page. Extent, 487 ślokas. Character, Nágara. Date, Sm. 1863. Place of deposit, Calcutta, Government of India; another copy at Rasádha-grám, Post Dhamdaha, Zilla Purṇiyá, Paṇḍit Maheśa Jhá. Appearance, fresh. Prose. Generally correct.

**Padmakosha.** A brief treatise on horoscopy showing the influence of the planets, &c., on human destiny. Anonymous. The codex is incomplete.

Beginning. गणेशं हरिं पद्मयोनिञ्च नत्वा
हरं भारतीं खेचरान् सूर्य्यपूर्वान्।
विलोक्याखिलं ताजिकं पद्मकोषं
प्रवक्ष्ये फलं वर्षलग्ने ग्रहाणां॥
अतः प्रवक्ष्ये यवनादिसम्मतं
तन्वादिकानां रविपूर्व्वकानां।
सामान्यतोभावफलं खगानां
कौतूहलात् खेठविदां हिताय॥ इत्यादि।

End. स्थानभ्रंशोभवति पव + स्रोदर + द्यपस्थः

सिंहीपुत्रोरिपुभयमथवा मर्त्यमृत्युं विधत्ते।
+ + शीर्षं व्यथनमुदरेनेत्ररोगं नराणां
लक्ष्मीहानिं स्वजनकलहं कामिनीनाञ्च पीड़ां॥
इति राहुभावफलं।

**Colophon.** इति पद्मकोशे भावाध्यायः। श्लोकसंख्या १६०। श्रीः। संवत् १८६२।

**विषयः।** जन्मलग्नस्थग्रहाणां भावफलकथनं।

---

**No. 2448.** केशवपद्धतिः, उदाहरणाख्यटीकासहिता। Substance, country-made paper, 10 × 3½ inches. Folia, 52. Lines, 11 × 12 on a page, Extract, 1,599 ślokas. Character, Nágara. Date ? Place of deposit, Calcutta, Government of India. Appearance, old. Text, verse. Commentary, prose. Correct.

**Keśava-paddhati.** A treatise on horoscopy, with a commentary entitled Udáharaṇa. The text by Kes'ava, the comment by Visvanátha, son of Divákára.

**Beginning.** टीकायाः,—श्रीगणेशं नमस्कृत्य केशवीनामपद्धतेः।
गणितं विश्वनाथेन क्रियते बालबुद्धये॥
मूलस्य,—
नत्वा विघ्नपशारदाच्युतशिवब्रह्मार्कमुख्यग्रहान्
कुर्व्वे जातकपद्धतिं स्फुटतरां होराविदां प्रीतये॥
यत्नैः स्पष्टतरोऽत्र जन्मसमयोवेद्योऽत्र खेटाः स्फुटाः।
यत्पत्रे हि घटन्त उद्गम इहासत्तं षड़ङ्गः स च॥ इत्यादि।

**End.** मूलस्य,—नन्दीग्रामे केशवोविप्रवर्य्यो-
योऽभूद्धोराशास्त्रसङ्घं विलोक्य।
तेनोक्तेयं पद्धतिर्जातकीया
चत्वारिंशद्वृत्तबद्धा सुबोधा॥
ये सुबोधां पठन्तीमामग्र्यां जातकपद्धतिं।
होरावित्पदवीं याति लोके मानं यशः सुखं॥

इति केशवपद्धतौ अन्तर्दशाध्यायः।

टीकायाः,—इयमिह लोके आचन्द्रार्कं तिष्ठतु। अस्य + कृणाञ्च शुभं भवतु। ये सुबोधमित्यस्य स्पष्टार्थः।

**Colophon** इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथविरचिते श्रीकेशवदैवज्ञविरचित-पद्धत्युदाहरणे अन्तईशाध्यायोदाहरणं समाप्तं ॥

विषयः। प्रथमाध्याये,—मध्यमग्रहसाधनार्थमहर्गणकथनं। दशमलग्नादिसाधनं। नतो-न्नतसाधनं। भावसाधनं। आरोहावरोहफलकथनं' भावकुण्डलीनिर्णयः। तत्र केन्द्रादिविवे-चनं। द्वितीयाध्याये —इष्टानयनविधिकथनं। ३ये ग्रहाणां बलाबलनिरूपणं। अधिमित्रादि-कथनं। सप्तवर्गबलादिसाधनं। भावबलादिकथनं। ४र्थे,—रश्मीटकष्टसाधनं। ५मे — आयर्गणनविधिकथनं। ६ष्ठे —ग्रहाणां समस्तशुभाशुभज्ञानोपायकथनं। ७मे,—दशाप्रवेशादि कथनं।

---

**No. 2449.** सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तिः, (अष्टमाध्यायः।)

Substance, foolscap paper, 12 × 10 inches. Folia, 121. Lines, 9 on a page. Extent, 2,518 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Siddha-hemachandra.** A grammar of the Sañskṛit language. By Hemachandra Súri. The codex contains only the eighth book which treats of the grammar of the Prákrit language. This work has been twice printed.

**Beginning.** अथ प्राकृतं॥ अथ शब्द आनन्तर्य्यार्थोऽधिकारार्थस्व। प्रकृतं संस्कृतं। तत्र भवं तत आगतं वा प्राकृतं। संस्कृतानन्तरं प्राकृतमधिक्रियते। संस्कृतानन्तरञ्च प्राकृतस्यानुशा-सनं। इत्यादि।

**End.** एवं सिरे सिरस्मि सिरसि, सरे सरस्मि सरसि। सिद्धग्रहणं मङ्गलार्थं। ततो युष्मच्छ्रोत्वकथा + + + अभ्युदयाय।

**Colophon.** इत्याचार्य्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानु-शासनवृत्तौ अष्टमस्याध्यायस्य चतुर्थः पादः समाप्तः।

समाप्ता चेयं सिद्धहेमचन्द्रशब्दानुशासनवृत्तिः प्रकाशिका नामेति।

आसीद्विशाम्पतिरमुद्रचतुःसमुद्र-
मुद्रा + + चितिभरचमबाऽदण्डः।
श्रीमूलराज इति दुर्द्धर + + + त्ति + श्री-
+ + + + शुचिचुलुक्यकुलावतंसः॥

तस्यान्वये समजनि प्रबलप्रताप-

तिग्मद्युति क्षितिपतिर्जयसिंहदेवः ।

तेन स्ववंशसवितर्य्यपरं सुधांशौ (?)

श्रीसिद्धराज इति नाम निजं व्यलेखि ॥

सम्यङ्निषेव्य चतुरश्चतुरोऽप्युपायान्

जित्वोप × + + + + + + + + + + + ।

विद्याचतुष्टय + + + + मतिर्जितात्मा

काष्ठा + + + + । पुरुषार्थचतुष्टये यः ॥

तेनातिविस्तृतदुरागमविप्रकीर्ण-

शब्दानुशासनसमस्त + दर्थितेन ।

अभ्यर्थितोनिरवमं विधिवद्व्यधत्त

शब्दानुशासनमिदं मुनिहेमचन्द्रः ॥ श्रीरस्तु ।

विषयः । अध्यायेऽस्मिन् केवलं प्राकृतभाषायाः प्रकृतिप्रत्ययादिभेदप्रदर्शनमुखेन व्याकरण-प्रक्रियाकथनं ।

---

**No. 2450.** जातकसुधाकरः । Substance, country-made paper, 9 × 4 inches. Folia, 6. Lines, 17—18 on a page. Extent, 277 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

**Játaka-sudhákara.** On palmistry. Anonymous. The codex extends to eight chapters, but it seems to be incomplete.

**Beginning.** श्रीगणेशाय नमः । यन्नामधेयं सकलार्त्तिभञ्जनं यत्कीर्त्तिसंघः कलिकल्मषघ्नः । योवै रमानां यशसा (?) स्वकरोद्देवः स पायात् करुणानिधिर्नः । १ । यं देवदेवं मुनिसिद्धसंघाः स्तुवन्ति गायन्ति च सामगीतैः । तं वन्द आद्यं शशिचूडाविराजितं शम्भुमुमार्द्धदेहं । २ । यज्जातकं व्यासपराशराद्यैर्गौतम्यकात्यायनकागर्गैर्ये । कृत तदेवाद्यमहं ब्रवीमि युक्तं सुसामुद्रिकयुक्तिभेदैः । ३ । रेखावशात् कुच च जन्मकालज्ञानं तथा तत्पलसाधनञ्च । वन्दे शिवं भूमिधरेन्द्रकन्याप्रियं नमस्कृत्य गुरुं स्वकञ्च । ४ ।

**End.** सङ्कीर्णा च यदा सा स्याद्रेखा वै नदनामभाक् । तदा सा कुरुते नृणां महाराज्यपदं शुभा । ६७ । नदरेखा महाभाग्यं कुरुते सर्व्वसम्पदं । महानदी च रेखा सा कुर्य्याद्वै क्षितिपं नरं । ६८ । सङ्कीर्णा नररेखा वै साधाज्यं कुरुते चनुः (?) । यदा वै तिलसंयुक्ता जायते

नदरेखिका । ६९ । स्वाराज्यभाजं कुरुते नरं भाग्याधिकं सदा । नद्राख्या रेखिका पुंभिः सुलभा पूर्व्वसञ्चितैः । ७० ।

Colophon. इति श्रीसामुद्रिकोदिते जातसुधाकरे प्रथमावर्त्तसे नदरेखाप्रणयनं नामाष्टमोऽध्यायः ।

विषयः । १मे अध्याये करचरणादिगतरेखाणां नामकीर्त्तनं तासां फलकीर्त्तनञ्च । २ये ऽध्याये रेखाज्ञानतोजन्मकालीनशकनिर्णयः । ३ये अध्याये रेखाज्ञानतोजन्मकालीनमास-निर्णयः । ४र्थे अध्याये उक्तरीत्या पक्षनिर्णयः । ५मे अध्याये जन्मतिथिनिर्णयः । ६ष्ठे अध्याये इष्टकालनिर्णयः । ७मे अध्याये आयुषोनिरूपणं । ८मे अध्याये नदरेखादितत्फलकीर्त्तनं ।

---

**No. 2451.** नीलकण्ठीसंज्ञातन्त्रम् । Substance, country-made paper, 12 × 5 inches. Folia, 6. Lines, 14–15–16 on a page. Extent, 398 ślokas. Character, Nágara. Date, Sm. 1721. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

**Nílakaṇṭha-saṇjṇá-tantra.** On the astrological influences of the twelve signs of the Zodiac. By Nílakaṇṭha.

**Beginning** श्रीवरदमूर्त्तिर्जयति । प्रणम्य हेरम्बमथो दिवाकरं गुरोरनन्तस्य तथा पदाम्बुजं । श्रीनीलकण्ठोविविनक्ति सूक्तिभिस्तत्ताजिकं सूरिमनःप्रसादकृत् । १ । पुमांश्चरोऽग्निः सुहृदश्चतुष्पाद्रक्तोष्णपित्तातिरवोद्रिरुग्नः । पीतोदिनं प्रागविषमोदयोल्पसङ्गप्रजोरुक्षनृपः समोजः । २ । वृषः स्थिरः स्त्री क्षितिशीतरुक्षोयाम्येट्सुभूवायुनिशाचतुष्पात् । श्वेतोतिशब्दोविषयोदयश्च मध्यप्रजासङ्गशुभोहि वैश्यः । ३ ।

**End.** प्रश्नकालेपि सद्दमं (?) विचार्य्य प्रष्टुरिच्छया ।
सर्व्वषामुपयोगोऽत्र चित्रं पृच्छन्ति प+नाः ।

Colophon. इति नीलकण्ठ्यां संज्ञातन्त्रं पूर्णतामगात् ।

विषयः । मेषादिराशीनां चरपुरुषादिसंज्ञाकथनं ।

---

**No. 2452.** यवनजातकम् । Substance, country-made paper, 9 × 4 inches. Folia, 8. Lines, 11—12—13—14 on a page. Extent, 292 ślokas. Character, Nágara. Date, Sm. 1809. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Yavana-játaka**. The name shows that it is a summary of astrological knowledge compiled from some Yavana work, but the codex is imperfect, and contains only three chapters on astrological marks on the persons of females. The work is inscribed to one Vṛiddha-yavana.

**Beginning**. श्रीगणेशाय नमः। अथ स्त्रीनक्षत्रफलं लिख्यते। जातास्विनीषु प्रमदा विनीता प्रभूतकेशा प्रियदर्शना च। प्रियम्वदा सर्व्वसहातिरामा बुध्यान्विता देवगुरुप्रसक्ता। १।

**End**. घ्नन्ति क्रूरा स्त्रियोधारिर्जहि भवान्तथा मृत्युपारं विनिघ्नतः सूर्य्यभौमाः सौम्याः पुण्यान्त्येवा हित्वारिभावान् शुक्रस्थास्तं मूर्त्तिस्थेन्दुः (?)। १०।

**Colophon**. इति श्रीवृद्धयवनाचार्य्यकृते यवनजातके स्त्रीराजयोगाध्यायः समाप्तः।

विषयः। १मे अध्याये एकैकस्मिन् लग्ने स्त्रीणां जन्मनः फलं। २ये अध्याये स्त्रीणां रक्षादिग्रहभावफलं। ३ये अध्याये स्त्रीणां राजयोगकथनं।

---

**No. 2453**. वृहज्जातकं वा जातकविवरणं टीकासहितम्। Substance, country-made paper, 12 × 5 inches. Folia, 82. Lines, 11 on a page. Extent, 3,174 ślokas. Character, Nágara. Date, Sm. 1872. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Vṛihajjátaka.** ALIAS **Játaka-vivaraṇa**. An elaborate treatise on horoscopy, with a commentary. The text by Varáhamihira, the comment by Mahidhara. The codex is imperfect.

**Beginning**. (मू) श्रीगणेशाय नमः। मूर्त्तित्वे परिकल्पितः शशभृतोवर्त्माऽपुनर्ज्जन्मनामात्मेत्यात्मविदां क्रतुश्च यजतां भर्त्तामरज्योतिषां लोकानां प्रलयोद्यस्थितिविभुश्चानेकधा यः श्रुतौ वाचीनेः स ददात्वनेककिरणस्त्रैलोक्यदीपोरविः। १। भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये शब्दन्यायसमन्वितेषु वहुशः शास्त्रेषु दृष्टेष्वपि होरान्तच महार्णवप्रतरणेभग्नोद्यमानामहं स्वल्पं वृत्तविचित्रमर्थवहुलं शास्त्रप्लवं प्रारभे। २।

(टी) श्रीगणेशाय नमः श्रीसरस्वत्यै नमः श्रीगुरुभ्योनमः। श्रीगणेशं नृसिंहञ्च शारदां गुरुपङ्कजं (शारदापदपङ्कजं) नत्वा संक्षेपतोवच्मि वृहज्जातकटिप्पणीं। शिष्टाचारपालनायेष्टमन्यस-

माप्त्र चावन्तिकाचार्य्यौवराहमिहिरोऽर्कलब्धवरो गणितस्कन्धानन्तरं होराग्रन्थं चिकीर्षु-रङ्गाद्द्वाविंशति शार्दूलविक्रीडितेनाह । मूर्त्तिले इति ।

**End.** (मू) खश्रान्तिके सर्पविवेष्टिताङ्गोवल्लैर्विहीनः पुरुषस्त्वदृश्यां । चौरानलव्याकुलितान्तरात्मा विक्रोशतेऽन्त्योपगतो मृषधः । २९ ।

(टी) चादित्यदासतनयस्तदवाप्तबोधः काम्पिल्लके सवितृलब्धवरप्रसादः । चावन्तिकोमुनिमतान्यवलोक्य सम्यग्घोरां वराहमिहिरोरुचिरां चकार ।

**Colophon.** इति श्रीवराहमिहिरकृते वृहज्जातके उपसंग्रहाध्यायः । वृहज्जातकटीका समाप्ता ।

---

**No. 2454.** विवाहवृन्दावनम् । Substance, country-made paper, 9 × 4 inches. Folia, 16. Lines, 14-15-16 on a page. Extent, 494 ślokas. Character, Nágara. Date, Sm. 1689, Sk. 1553. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Viváha-vṛindávana.** Astrological calculations for ascertaining proper auspicious times for marriages, &c. By Kes'avárka.

**Beginning.** श्रीगणेशाय नमः । श्रीजगच्चक्षुषे नमः । श्रीशार्ङ्गिणोः सृजतु वोनवसन्निवेशः श्रेयस्यं च कवलं नयनाचलश्रीः । यत्राचलप्रथनमङ्गलमाचचार शृङ्गारहारमणिकौस्तुभरश्मिगुम्फः ॥१॥ सवर्ग्यगर्गभृगुभागुरिरेभ्य गौर्भ्यः सारं वराहमिहिरादिमतानुसारं । स्फारस्फुरत्परिमलाद्यमतं विवाहवृन्दावनं विरचयामि विचाररम्यं ॥ २ ॥ ध्रुवानुराधामृगमूलरेवतीकरमघास्वातिरदूषणोगणः । रवेरमीनामकरादिषड्गृहो करग्रहे मङ्गलकन्यगोदर्शां ॥ ३ ॥

**End.** प्रायोविवाहपटलं इत (?) लभ्यमानं स्वल्पोपमं न सहते नयचालनानि वृन्दावने परमतातपपीड्यमानवृन्दावनेनुरमतामिह सत्कृतिश्रीः ॥ १ ॥

**Colophon.** इति श्रीकेशवार्कविरचिते विवाहवृन्दावने वधूवरप्रश्नाध्यायः ।

विषयः । १मेऽध्याये विवाहविषयकनक्षत्रशुद्धिकथनं । २येऽध्याये विवाहे कालमीमांसा । ३येऽध्याये मेलकनिर्द्देशः । ४र्थाध्याये नवांशविवेचनं । ५मेऽध्याये तन्वादिस्थग्रहविशेषगुणकीर्त्तनं । ६ष्ठेऽध्याये विहितचन्द्रताराफलकथनं । ७मेऽध्याये राहोश्छायया चन्द्रसूर्य्यग्रहणनिर्द्देशः । ८मेऽध्याये षड्वर्गसाधनकथनं । ९मेऽध्याये गोधूलिनिरूपणं । विवाहे तत्प्रशंसा च । १०मेऽध्याये गोचरफलकथनं । ११शेऽध्याये शुभाशुभयोगकथनं । १२शेऽध्याये तन्वादिस्थरव्यादीनां फलं निर्द्दिष्टं । १३शेऽध्याये निधनाद्यशुभस्थानस्थितस्य शुभग्रहस्य तन्वादिशुभस्थानस्थि-

शशुभग्रहस्य च स्थित्या शुभफलकीर्त्तनं। १४शेऽध्याये ग्रहयोगबलकथनं। १५शेऽध्याये शुभाशुभशारीरलक्षणनिरूपणं। १६शेऽध्याये वरवध्वोलग्नादिस्थग्रहवशात् सुखदुःखफलकीर्त्तनं।

**No. 2455.** जातकमञ्जरी। Substance, country-made paper, 9 × 4 inches. Folia, 44. Lines, 7 on a page. Extent, 616 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

**Játaka-manjarí.** A treatise on horoscopy. By Nrisiñha, son of Nágauátha, of the Maudgalya gotra.

**Beginning.** श्रीगणेशाय नमः। महामेरुप्रान्तप्रवहदुरुजाम्बूनदसरित्तटाघातक्रीड़ापरिमिलितजाम्बूनदरजः। मुखं यस्या धत्ते धवलरदकान्त्या सचपलां वकाल्यभ्रभान्तिं स दिशतु ममेष्टं गणपतिः॥ १॥ लब्धा धातुर्वराणि त्रिभुवनमहितं देवराज्यं पुरस्तात् पश्चादेनं निजेष्टप्रदमपि सकलान् द्रुह्यतोविष्णुभक्तान् प्रह्लादचाणकर्मप्रतिहतिसुहतो दैत्यनाथस्य वक्षश्छित्वा लक्ष्मीसमेतोनिजजनहितहृत् पातु देवोनृसिंहः॥ २॥ स्फटिकधवलच्छाया माया नवेन्दुमरीचिभिः मतिकुवलयं मूढं रूढं प्रबोध्य जलाशये। शरदिव गिरो भङ्गी रङ्गीकृतागमषट्पदा रमयतु मुदं दद्यादाद्या गिरामधिदेवता॥ ३॥ स्वाङ्गं द्वादशधा विभज्य तपनोयोयाति सर्व्वं जगत् यश्चेन्दोर्द्विपधा कुजस्तु नवधा सौम्यश्चतुःषड्विधा। जीवः षोड़शधा भृगुर्वसुविधं चेधा शनिः सप्तभानुपतिः (?) (सप्तधा स्वभोगः) क्षितिकारणान् चिरमहं नत्वार्थये वाञ्छितं॥ ४॥ अद्वेषी नित्यतुष्टोगणितनयपटुः सत्यवादी मनस्वी अच्छिद्रस्थायिबुद्धिः कलुषजनतिरस्कारहृत् सन्निवेषी। सन्मानः स्थानवासी सततमृदुवचाः शास्त्रतत्त्वोपदेष्टा जेता वाद्यान्तराले स भवति गुणवान् दैशिकानां वरिष्ठः॥ ५॥ श्रीमन्मौद्गल्यगोत्रोबुधिलसनशश्री विट्ठलेन्द्रस्य शिष्यः दैवज्ञानां वरिष्ठः सकलगुणनिधेर्नागनाथस्य सूनुः। सूर्य्याल्लब्ध्वा वराणि त्रिभुवनहितकृत् सूर्य्यसिद्धान्तसारं संग्रह्यासौ नृसिंहः सरणिमतितरां जातकाख्यं प्रचख्यौ॥ ६॥ तान् नत्वा द्वादशाचार्य्यान् वक्ष्यते सर्व्वसम्मता। संग्रह्य सूर्य्यसिद्धान्तं मया जातकमञ्जरी॥ ७॥

**End.** यथेज्ययोगस्तपनादियोगात् तथा विचार्य्यैव वदेत् फलानि विन्द्यात् पुनः खेचरतामवस्थाभेदेन तीर्थस्थलदिग्विशेषान्॥ १०॥ यस्त्वेत्यं जातकं योविलिखति विबुधः प्रीणयेत्तं स मर्त्यः विश्वस्तं शम्भदिष्टे र्वै ऽङ्कनकधराभूषणैर्वाहनैश्च। त्रिंशत्तत्सामिनिष्कसहस्रमपि वा प्रीणयेद्यस्तु नेवं तस्याशस्य प्रहृत्या कलुषमतिजुषोलोभिनोमा लिखेत्तत्॥ ११॥

**Colophon.** इति जातकमञ्जर्य्यां निर्याणयोगोनाम अष्टादशोऽध्यायः।

विषयः। १मे अध्याये आयुरादिगणनायां त्रिविधसिद्धान्तकीर्त्तनं। २ये अध्याये राशिनक्षत्रादीनां नामभेदकथनं। ३ये अध्याये ग्रहाणां राश्यधिष्ठाद्यलादिभावकथनञ्च। ४र्थे अध्याये मावचिन्तनं। ५मे अध्याये करणतन्वादिभावफलं। ६ठे अध्याये ग्रहाणां दृष्टेर्बलकीर्त्तनं।

७मे अध्याये ग्रहाणां बलनिरूपणं । ८मे अध्याये आयुर्दायकीर्त्तनं । ९मे अध्याये इष्टकष्टादिफलकीर्त्तनं । १०मे अध्याये ग्रहाणां शीघ्रोच्चादिगतिषु फलकीर्त्तनं । ११शे अध्याये लग्नस्थरव्यादिग्रहफलं । १२शे अध्याये राजयोगकथनं । १३शे अध्याये गोचरफलकथनं । १४शे अध्याये केन्द्रादिस्थग्रहाणां फलं । १५शे अध्याये एकैकस्य राशेरंशभेदेन पुस्त्रीनपुंसकलक्षणादिकथनं । १६शे अध्याये सुतादिस्थानभेदेन ग्रहाणांस्थितिवशात् पुत्रोत्पत्तिः पुत्रस्य शुभाशुभलक्षणञ्च ।

---

**No. 2456.** सिद्धान्तरहस्यम् । Substance, country-made paper, 10 × 5 inches. Folia, 41. Lines, 19 on a page. Extent, 1,507 ślokas. Character, Nágara. Date, Sm. 1846. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Siddhánta-rahasya.** A commentary on the Grahalághava, a work on astrology. By Vis'vanátha Daivajna, son of Divákara Daivjna.

**Beginning.** श्रीगणेशायनमः । ज्योतिर्विद्गुरुणा गणेशगुरुणा निर्मथ्य शास्त्राम्बुधिं
यच्चक्रे ग्रहलाघवं विवरणं कुर्व्वेऽस्य सत्प्रीतये ।
नत्वा शम्भुसुतं दिवाकरसुतं स्याद्विश्वनाथः कृती
नाम्प्रज्ज्योतिषवर्गगोकुलपरित्राणाय नारायणः ॥ १ ॥

श्रीमद्गुरुणा गणेशदैवज्ञेन ये ग्रन्थाः कृतास्ते तद्भ्रातृपुत्रेण नृसिंहेन ज्योतिर्विदा स्वकृतग्रहलाघवटीकायां श्लोकद्वयेन निबद्धाः । तद्यथा,

कृत्वादौ ग्रहलाघवं लघुबृहत्तिथ्यादिचिन्तामणिं
सत्सिद्धान्तशिरोमणेश्च विवृतिं लीलावतीव्याकृतिं ।
श्रीवृन्दावनटीकिकाञ्च विवृतिं मौहूर्त्ततत्त्वस्य वै
सच्छ्राद्धादिविनिर्णयं + + + + छन्दोर्णवाख्यस्य वै ॥ १ ॥
सुधीरञ्जनं तर्ज्जनीयन्त्रकञ्च सुकृष्णाष्टमीनिर्णयं होलिकायाः ।
लघूपाययन्त्रन्तथान्यानपूर्व्वान् गणेशोगुरुब्रह्मनिर्व्वाणमायात् ॥ २ ॥

श्रीमत्कौशिकमुनिश्रेष्ठवंशोद्भवोजलधितीरनिकटवर्त्तिनन्दिग्रामनिवासी सकलभूमण्डलपतिपूजितचरणयुगलाम्भोरुहनिखिलशास्त्रार्थप्रवीणाष्टादशसिद्धान्तोक्तोपपत्तिकोविदसमस्तवैयाकरणाग्रणीरगणितशास्त्रविचारचतुरोज्योतिर्वित्कुलावतंसः श्रीमत्केशवदैवज्ञात्मजश्रीमद्गणेशदैवज्ञवर्य्यः ग्रहलाघवाख्यं करणं चिकीर्षुः तत्रादौ निर्विघ्नेन ग्रन्थसमाप्त्यर्थं तत्प्रचयार्थं चाशीर्नमस्क्रियावस्तुनिर्देशात्मकानां मङ्गलानां श्रुतिदेवतागुरुवाङ्निर्देशात्मकं मङ्गलं वसन्ततिलकया प्रतिबध्नाति ज्योतिरिति ।

**End.** स्वमतं । गोलग्रामनिवासिनोगुरुपदद्वन्द्वाब्जभक्तो रतस्यासीच्च दिवाकरस्य

तनयः श्रीविश्वनाथाह्वयः । तेनेदं ग्रहलाघवस्य गणितं स्पष्टीकृतं सद्बुधैः शोध्यं शुद्धमिदं सदा तु गणकैः स्वान्ते सदा धार्य्यतां ॥ १ ॥

**Colophon.** इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचिते सिद्धान्तरहस्ये ग्रहलाघवस्योदाहरणं समाप्तं ।

विषयः । ग्रहलाघवाख्यज्योतिषग्रन्थस्य व्याख्यानं ।

---

**No. 2457.** प्रभा । Substance, country-made paper, 14 × 5 inches. Folia, 236. Lines, 9 on a page. Extent, 7,138 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Prabhá.** A commentary or Párthasírathi Mís'ra's Mímáñsá-s'ástra-dípiká, an exposition of the Mímáñsá doctrine. By Sad-vaidyanátha, son of Sadrámachandra Súrí.

**Beginning.** सौन्दर्य्यसीमाद्भुतराम + +
+ + + गाम्भीर्य्यनमत्समुद्रम् ।
सदा सदाचारनिरस्ततन्द्रं
श्रीरामचन्द्रं पितरं नमामि ॥
श्रीमन्महागणपतेश्चरणारविन्द-
मानम्य भक्तजनसिद्धिदमादरेण ।
श्रीवैद्यनाथकविरङ्कुतभाट्टतन्त्र-
सिद्धान्ततत्त्वममलं विशदीकरोति ॥
अधीत्य सकलं शास्त्रं परिशील्य यथामति ।
सद्गुरूणां प्रसादेन व्याख्यास्ये शास्त्रदीपिकां ॥

आम्नायस्येति । तत्र तावद्विषयोविशयश्चैव पुर्व्वपक्षस्तथोत्तरः । प्रयोजनञ्च पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् । इत्युक्तलक्षणोदाहरणसंशयपूर्व्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गविचारात्मकाधिकरणघटिताध्यायस्तोमरूपेऽस्मिन् शास्त्रे प्रत्यधिकरणं चतुर्द्धा सङ्गतिमाहुः । इत्यादि ।

**End.** समासस्यवनीयानामङ्गं चोदनाया अविशेषात् परोडाशत्वेन उद्देश्यसवनीयविशेषणायोगादिति सूत्रार्थः ।

**Colophon.** इति श्रीमत्पदवाक्यप्रमाणज्ञसद्रामचन्द्रसूरिवरात्मजसद्वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां तृतीयोऽध्यायः सम्पूर्णः ॥

विषयः। पार्थसारथिमिश्रकृतमीमांसाशास्त्रदीपिकायाः प्रथमाध्यायद्वितीयपादादारभ्य तृतीयाध्यायान्तं व्याख्यानम् ॥

---

**No. 2458.** रत्नपरीक्षा। (गरुड़पुराणीयम्) Substance, country-made yellow paper, 16 × 5 inches. Folia, 12. Lines, 9 on a page. Extent, 324 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranárayaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Ratna-paríkshá.** A treatise on precious stones, their descriptions, qualities and uses. The work professes to be an extract from the Garuḍa Puráṇa. The bulk of this work has been published along with English, Bengali and Hindi translations by Rájá Saurindramohan Tagore, in 2 vols. 8vo.

सूत उवाच।

**Beginning.** वक्ष्मि परीक्षां रत्नानां बलोनामासुरोऽभवत्।
इन्द्राद्या निर्ज्जितास्तेन निर्ज्जेतुं तैर्न शक्यते ॥
वरव्याजेन पशुतां याचितः स सुरैर्मखे।
बलोददौ स्वपशुतामतिसत्त्वसुखे रतः ॥ इत्यादि

**End.** प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत्।
धनधान्यकरं लोके विषार्त्तिभयनाशनम् ॥
परीक्षा पुलकस्योक्ता रुधिराक्षस्य वै मणेः।
स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनकः ॥

**Colophon.** इत्यादिमहापुराणे गारुड़े रत्नपरीक्षा समाप्ता।

विषयः। देवानां प्रार्थनाय बलासुरस्य सर्व्वैरवयवैः रत्नवीजत्वस्वीकारविवरणकथनं। अथ वज्रमणीनामुत्पत्तिस्थानकथनं। तत्र स्थानविशेषसम्भवत्वेन तेषां वर्णादिभेदनिरूपणं। वज्रप्रकारभेदकथनं। तेषां प्रत्येकं परीक्षाविधिकथनं। शुभाशुभलक्षणकथनं। अथ मुक्तापरीक्षाविधिकथनं। तत्र गज-वराह-शङ्खादिभ्यस्तासामुत्पत्तिकथनं। तासां प्रत्येकं लक्षणादिकथनं। सिंहलादिषु तासामुत्पत्तिकथनञ्च। पद्मरागपरीक्षानिरूपणं। तत्र सिंहलस्थरावणगङ्गेत्यभिधानह्रदे तेषां प्राधान्येन उत्पत्तिकथनं। तेषां प्रकारभेदादिकथनञ्च। अथ मरकतपरीक्षाविधिकथनं। तेषां लक्षणादिभेदकथनं। इन्द्रनीलपरीक्षादिविधिकथनं। वैदूर्य्यपरीक्षादिविधिकथनं। पुष्परागपरीक्षादिकथनं। कर्क्केतनपरीक्षादिविधिकथनं। भीष्मकपरीक्षादिविधिकथनं। पुलकपरीक्षादिकथनं। रुधिराक्षपरीक्षादिकथनं। स्फटिकपरीक्षादिकथनं। विद्रुमपरीक्षादिकथनञ्च।

**No. 2459.** निदानम् । (गरुड़पुराणीयम् ।) Substance, country-made yellow paper, 18 × 6 inches. Folia, 78, Lines, 9 on a page. Extent, 2,193 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Nidána.** On the origin, symptoms, and classification of diseases. An extract from the Garuḍa Puráṇa. This is distinct from a work of this name compiled by Mádhava Kara.

धन्वन्तरिरुवाच ।

**Beginning.** सर्व्वरोगनिदानञ्च वच्ये सुश्रुततत्त्वतः ।
आत्रेयाद्यैर्मुनिवरैर्यथा पूर्व्वमुदीरितम् ॥
रोगः पाप्मा ज्वरोव्याधिर्विपाकोदुष्टमामयः ।
यक्ष्मा तङ्कः गदा बाधाः शब्दाः पर्य्यायवाचिनः ॥
निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतं ॥ इत्यादि ।

**End.** वंशादन्यमृता चेति गुडूचीनामसङ्ग्रहः ।
किराततिक्तक्लैव भूनिम्बः काण्डतिक्तकः ॥
सूत उवाच ।
नामान्येतानि हरिरन्यानि च भिषग्वरः ।
रोगहन्ता रोगिरोगी विष्णुर्व्याकरणादिकं ॥
गरुड़ागारुड़ीविष्णु र्गारुड़ी तरुड़ध्वजः ।
अतोव्याकरणं वच्ये कुमारोक्तञ्च शौनक ॥

**Colophon.** इत्यादिमहापुराणे गारुड़े निदानं समाप्तं । (औषधनामानि ।)

विषयः । सुश्रुतेन सह धन्वन्तरेः संवादेन रोगाणां पर्य्यायकथनं । पूर्व्वरूपादिकथनं । संक्षेपेण सर्व्वरोगनिदानकथनं । ज्वरनिदानं पित्तनिदानं । कासनिदानं । श्वासनिदानं । हिक्कानिदानं । यक्ष्मनिदानं । अरोदकनिदानं । हृद्रोगनिदानं । मदात्ययनिदानं । अर्शो-निदानं । अतीसारनिदानं । मूत्राघातनिदानं । प्रमेहनिदानं । विद्रधिनिदानं । उदर-निदानं । पाण्डुशोथनिदानं । विसर्पादिनिदानं । मिथ्याहारनिदानं । कृमिनिदानं । वातव्याधिनिदानं । वातरक्तनिदानं । योगसारकथनं । अनुपानविधिकथनं । अथ चिकित्सा-कथनं । तत्र ज्वरचिकित्सा । नाड़ीव्रणचिकित्सा । स्त्रीरोगचिकित्सा । सिद्धयोगसारकथनं । घृततैलादिविधिः । विविधरोगकथनं । तत्र तत्र रोगविशेषे योगविशेषविधिकथनञ्च । पूर्व्वोक्तेषु सर्व्वेषु रोगेषु प्रत्यकं चिकित्साकथनं । मणिमन्त्रादिविधानञ्च । औषधानां नामकथनपूर्व्वकं पर्य्यायकीर्त्तनञ्च । इति शम् ।

**No. 2460.** चरणव्यूहभाष्यम् । Substance, country-made yellow paper, 18 × 5½ inches. Folia, 22. Lines, 8 on a page. Extent, 572 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva Bahádur. Appearance, new. Prose and Verse. Incorrect.

**Charaṇa-vyúha-bháshya.** A commentary on the Charaṇa-vyúha, a summary of the contents of the four Vedas and their classification. Anonymous.

**Beginning.** अथातश्चरणव्यूहं व्याख्यास्यामस्तत्र यदुक्तं चातुर्व्वैद्यं चत्वारोवेदा व्याख्याता भवन्ति । तत्र ऋग्वेदोयजुर्व्वेदः सामवेदोऽथर्व्ववेदश्चेति। तत्र ऋग्वेदस्याष्ट भेदा भवन्ति । चर्चा श्रावकश्चर्व्वकः श्रवणीयपारः क्रमपारः क्रमपदः क्रमजटः क्रमदण्डश्चेति चतुष्पारायणमेतेषां शाखाश्चतुर्व्विधा भवन्त्याश्वलायनी सांख्यायनी शाकला वाकला माण्डूकाश्चेति तेषामध्ययनमध्यायाश्चतुःषष्ठिः । मण्डलानि दशैव तु । वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे । इत्यादि ।

**End.** कर्म्मणि चेति चतुर्थी ब्रह्मभावमाप्नोतीत्यर्थः ।

**Colophon.** इति चरणव्यूहभाष्ये चतुर्थः खण्डः ।

— — — — — — — — — — ।

विद्वद्भिः प्रार्थितेनेयं महीदासद्विजन्मना ॥

चरणव्यूहवृत्तिश्च विहिता यत्नतोमया ॥

विषयः । चतुर्व्वेदीयचरणव्यूहस्य व्याख्यानम् ।

---

**No. 2461.** भागवततत्त्वदीपनिबन्धः । Substance, country-made paper, 13 × 7 inches. Folia, 182. Lines, 6 on a page. Extent, 3,184 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Generally correct.

**Bhágavata-tattvadípa-nibandha.** An enquiry into the philosophy of the Bhágavata Puráṇa, showing that the Bhágavata inculcates the S'uddhádvaita doctrine. By Vallabha Díkshita.

**Beginning.** नमोभगवते तस्मै कृष्णायाद्भुतकर्म्मणे ।

रूपनामविभेदेन जगत्क्रीड़ति योयतः ॥

सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः ।

भवान्तसम्भवा दैवात्तेषामर्थोनिरूप्यते ॥

भगवच्छास्त्रमाश्राय विचार्य्य च पुनः पुनः ।
यदुक्तं हरिणा पश्चात्सन्देहविनिवृत्तये ॥
एकं शास्त्रं देवकीपुत्रगीत-
मेकोदेवोदेवकीपुत्र एव ।
मन्त्रोऽप्येकस्तस्य नामानि यानि
कर्म्माप्येकं तस्य देवस्य सेवा ॥
इत्याकलय्य सततं शास्त्रार्थः सर्व्वनिर्णयः ।
श्रीभागवतरूपश्च चयं वच्मि यथामति ॥
वेदान्ते च स्मृतौ ब्रह्मलिङ्गं भागवते तथा ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ इत्यादि ।

**End.** यथा भागवतस्यार्थाद्दिशाच्युतनोदनात् ।
तथा निरूपितः सद्भिः क्षमा कार्य्या ममोपरि ॥
युक्तं वा यदि वायुक्तं मया यद्यन्निरूपितं ।
तत्सर्व्वं कृष्णचरणे वाक्पुष्पं वि+रुधितं (?) ॥

**Colophon.** इति श्रीवल्लभदीक्षितविरचिते श्रीभागवततत्त्वदीपनिबन्धे द्वादशस्कन्ध-प्रकरणं सम्पूर्णं ।

श्रीमद्भागवते दीपः कृतोवल्लभदीक्षितैः ।
व्यासवैष्णवदासेन लिखितोदीपते + + ॥

विषयः । श्रीमद्भागवतस्य प्रत्येकं द्वादशस्कन्धीयतात्पर्य्यार्थकथनमुखेन शुद्धाद्वैतवाद-निरूपणं ।

---

**No. 2462.** मङ्गलाष्टकम् । Substance, country-made paper, 12 × 4 inches. Folium, 1. Lines, 20. Extent, 29 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Verse. Correct.

**Mañgaláshṭaka.** A hymn in eight stanzas in praise of the leading Hindu gods and goddesses. By Kálidása.

**Beginning.** श्रीमत्पङ्कजविष्टरो(?)हरिहरोवायुर्महेन्द्रोनल-
श्चन्द्रोभास्करवित्तपालवरुणाः प्रेताश्च दिक्पालकाः ।
प्रद्युम्नोनलकूवरः सुरगवश्चिन्तामणिः कौस्तुभः
स्वामी शक्तिधरश्च लाङ्गलधरः कुर्व्वन्तु नोमङ्गलम् ।

**End.** इत्येतद्दरमङ्गलाष्टकमिदं पापौघविध्वंसनं
पुण्यं श्रीकविकालिदासरचितं हृष्टं प्रबन्धस्तुतम् । (?)
यः प्रातर्भवमानसस्य पठते कार्य्याणि सिद्ध्यन्ति वै
गङ्गासागरसङ्गमं प्रतिदिनं प्राप्नोति पुण्यं महत् ॥

**Colophon.** इति श्रीकालिदासकृतं मङ्गलाष्टकं सम्पूर्णं ।

विषयः । प्रधानतया प्रसिद्धानां देवतादीनां समीपे आत्मनोमङ्गलप्रार्थनम् ।

---

**No. 2463.** भगवन्नाममाहात्म्यसङ्ग्रहः । Substance, country-made paper, 12 × 4 inches. Folia, 15. Lines, 5 on a page. Extent, 154 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Bhagavannáma-máhátmya.** The merit of reciting or of hearing the recitation of the name of Hari proved by a series of extracts from various Purāṇas and other mediæval works. By Niranjana Yati.

**Beginning.** प्रणम्य जानकीनाथं सच्चिदानन्दविग्रहं ।
नाममाहात्म्यबोधाय सङ्ग्रहोलिख्यते मया ॥
नारायण हरे राम कृष्ण गोविन्द माधव ।
पाहि मां न्हरे विष्णो शिव दीनार्त्तिनाशन ॥ इत्यादि ।

**End.** कृतोनाममाहात्म्यस्य पुराणादेस्तु सङ्ग्रहः ।
अनेन प्रीयतां रामः सीताजानिः सलक्ष्मणः ॥

**Colophon.** इति श्रीनिरञ्जनयतिना कृतोभगवन्नाममाहात्म्यसङ्ग्रहः समाप्तः ।
शुभमस्तु मङ्गलमस्तु ।

विषयः । निखिलपुराणधर्म्मशास्त्रादिभ्योभगवन्नामकीर्त्तनश्रवणादीनां माहात्म्यवचनान्युद्धृत्य प्रदर्शनम् ।

---

**No. 2464.** पिङ्गलप्रकाशः । Substance, country-made paper, 17 × 4 inches. Folia, 51. Lines, 8 on a page. Extent, 2,664 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Piñgala-prakáśa.** A commentary on Piñgala's treatise on the metres in common use in Prákṛit poetry. By Vis'vanátha Panchánana son of Vidyánivása Mahámahopádhyáya.

**Beginning** अथशन्दः शास्त्रकर्त्तुः पिङ्गलाचार्य्यस्य स्तुतिरूपं मङ्गलं निर्व्विघ्नग्रन्थपरिसमाप्तये ग्रन्थादौ करोति ; विविधेति विविधा नानाप्रकारविन्यासविशिष्टा माचा यच तद्विविधमात्रच्छन्दःकदम्बं तदेव सागरः अतिदुर्गमत्वात्—इत्यादि ।

**End.** उल्लसितरभसमनःसरसनलिनीदलकृतशयनपर्य्यन्तः शिशिररिपुर्द्दिवसोद्दीर्घोऽभवत् सुकुसुमसमयावतीर्णोरणे ॥

**Colophon.** इति महामहोपाध्यायश्रीविद्यानिवासात्मजविश्वनाथपञ्चाननकृते पिङ्गलप्रकाशे वर्णार्थः ॥ श्रीगुरवे नमः ॥

विषयः । पिङ्गलाचार्य्यकृतप्राकृतच्छन्दोग्रन्थस्य व्याख्यानम् ।

---

**No. 2465.** सारसुन्दरी । Substance, country-made paper, 18 × 3 inches Folia, 275. Lines, 10 on a page. Extent, 11,645 ślokas. Character, Bengali. Date, Sk. 1602. Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, old. Prose. Correct.

**Sára-sundarí.** A commentary on the Námaliñgánusásana of Amara Siñha. By Mathuresá Vidyálañkára, of the sept of Napádhiya Bandyaghaṭa.

**Beginning.** ब्रह्मोपेन्द्रमहेशशक्रवरुणादित्येशपादद्वयां
देवर्द्धिपिपिशाचदानवचमूरुन्मूलयन्तीं परां ।
वन्देऽहं परमेश्वरीं प्रभजतां संसारपीड़ाहरा-
मुग्रां सूर्य्यशतप्रभां त्रिनयनां भत्यात्रिहामम्बिकां ॥
यः सर्व्वानन्दवन्द्यः क्षितितलविदितः सत्कुलीमेलवीजी
स्तनुस्तस्याथ जज्ञे कृतविविधकुलोमाधवोमाधवाभः ।
काशीनाथोऽपि तस्मात्समजनि कुलवांश्चन्द्रवन्द्यास्ततोवै
तस्मात्सुख्यातनामा समजनि शिवरामोऽर्थविच्चक्रवर्त्ती ॥
शिवरामतनूद्भूतविद्यालङ्कारधीमता ।
क्रियते मन्दबोधाय टीकेयं सारसुन्दरी ॥
टीका यद्यपि भूयस्योविद्यन्तेऽच मनीषिणां ।
तथापि सर्व्वसारार्थज्ञानाय क्रियते मया ॥
रायमुकुटटीकादेः कलापादिक्रिया यतः ।
सुपद्मप्रक्रिया तस्मान्मधुरेशेन तन्यते ॥

श्रीरान् प्रणम्य वङ्गेशोविनिवेदयामि ।
बद्धाञ्जलिः सकलशास्त्रविचारदक्षान् ।

**End.** एवमन्यत् सुधीभिर्भाव्यमिति शिवम् ।
गजाष्टतिथियुक् शाके विद्यालङ्कारधीमता ।
लिङ्गादिसङ्ग्रहे टीका निर्म्ममे सारसुन्दरी ॥
शिवरामचक्रवर्त्ती जनकः पार्व्वती प्रसूः ।
यस्य श्रीमथुरेशेऽसौ चकार सारसुन्दरीं ॥

**Colophon.** इति नपाड़ीयवन्द्यघटीयश्रीमथुरेशविद्यालङ्कारविरचितायां नामलिङ्गानुशासनटीकायां सारसुन्दर्य्यां लिङ्गादिसङ्ग्रहवर्गः । समाप्तेयं टीका ।
पञ्चाभ्ररसचन्द्राब्दे टीकेयं सारसुन्दरी ।
लिखिता वङ्गेशोयलाङ्गमनारायणधीमता ॥

विषयः । अमरकोषस्य व्याख्यानम् ।

---

**No. 2466.** श्रुत्यध्यायव्याख्याव्याख्यानम् । Substance, country-made yellow paper, 20 × 4 inches. Folia, 29. Lines, 6 on a page. Extent, 492 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranaráyaṇa Deva, Bahádur. Appearance, new. Prose. Generally correct.

**S'rutyadhyáya-vyákhyá-vyákhyá.** A gloss on a commentary by S'rídhara Svámí on the S'rutyadhyáya section of the 10th book of the Bhágavata Puráṇa. Anonymous.

**Beginning.** श्रूयत एव श्रुतिः । तथा च अदृष्टार्थश्रवणकेश्वरवाक्यत्वं श्रुतित्वं । लौकिकेश्वरवाक्यवारणाय अदृष्टार्थेकेति । पुराणादिवारणाय ईश्वरेति । इत्यादि ।

**End.** ज्ञानस्य ब्रह्मसम्बन्धित्वेऽपि न विषयत्वं तस्य प्रकारव्याप्यत्वात् श्रुतिर्मोलय उपनिषदः । किन्तु यानियन्त्रिताः । इति ।

**Colophon.** इति श्रुत्यध्यायव्याख्याव्याख्यानम् ।

विषयः । श्रीधरस्वामिकृतश्रीमद्भागवतदशमस्कन्धीयश्रुत्यध्यायव्याख्यायाः व्याख्यानम् ।

---

**No. 2467.** चित्रगुप्तकथा । Substance, country-made yellow paper, 18 × 4 inches. Folia, 4. Lines, 9 on a page. Extent, 100 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Chitragupta-kathá**. Origin and history of the Káyasthas. Chitragupta was born out of the entire body (*káyá*) of Brahmá, and hence the name Káyastha. This personage had nine sons, namely, Gauḍa, Máthura, Bhaṭṭa, Nágara, Sena, Adhishṭhána, S'rivástavya, Ambashṭha, and Karaṇa, and these represent the nine septs of the Káyastha clan. At the end there is an account of an annual fast in honor of Chitragupta. The work professes to be an episode of the Uttarakhaṇḍa of the Padma Puráṇa.

**Beginning.** अम्ब ऋषिरुवाच । मुने कथय धर्म्मज्ञ कायस्थानाञ्च सम्भवं ।
कायस्थानां कुतोजन्म तेषां कथय सुव्रत ॥
एतत्सर्व्वं समासेन धर्म्मज्ञोऽसि मतोमम ।
दत्तात्रेय उवाच ।
त्रिकालज्ञं महाप्राज्ञं पौलस्त्यं मुनिपुङ्गवं ।
पप्रच्छ उपसङ्गम्य भीष्मोधर्म्मभृतां वरं ॥ इत्यादि ।

**End.** ब्राह्मणान् भोजयेत् प्राज्ञस्तेभ्योदद्याद्धनानि च ।
वस्त्रान्नं दानपानानि चित्रगुप्तस्य प्रीतये ।

**Colophon.** इति श्रीपद्मपुराणे उत्तरखण्डे चित्रगुप्तकथा समाप्ता ।

विषयः । दत्तात्रेयेण सार्द्धं अम्बर्षेः संवादेन चित्रगुप्तस्य जन्मादिकथनं । तत्र ब्रह्मकाय-जातत्वात् कायस्थेतिसंज्ञाकथनञ्च । तस्य गौड़-माथुर-भट्ट-नागर-सेन-अधिष्ठान श्रीवास्तव्य-अम्बष्ठ-करणनामकनवपुत्रकथनं । सूर्य्यवंशीयसौदासाभिधानन्वपतिकृतचित्रगुप्तपूजाकथनं । कार्त्तिकशुक्लद्वितीयायां तत्पूजनमाहात्म्यादिकथनञ्च ।

---

**No. 2468.** सहानुमरणविवेकः । Substance, country-made yellow paper, 18 × 5 inches. Folia, 16. Lines, 8-9 on a page. Extent, 713 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendra-náráyaṇa Deva Bahádur. Appearance, new. Prose and verse. Incorrect.

**Sahánumaraṇa-viveka** A digest of the rules regarding concremation, discussing all details and supplying the rituals. By Anantaráma Vidyávágís'a, son of Rámacharaṇa Nyáyálaṅkára.

**Beginning** श्रीपूर्व्वानन्तरामः श्रीगुरुं नत्वा विधानतः ।
सहानुगमनादीनि स्त्रीणां वक्ति सतां मुदे ॥

श्रुतिस्मृतिपुराणादीनशेषान् सङ्ग्रहानपि ।
समालोच्य यथान्यायं विचारः क्रियतेऽधुना ॥

तत्रादौ सहानुमरणं निरूप्यते । मिताक्षराविवादरत्नाकरविवादचिन्तामणिशुद्धितत्त्व-विवादभङ्गार्णवसेतुप्रभृतिषु ऋषिवेदवाक्यानि यथा । तत्राङ्गिराः । मृते भर्त्तरि या नारी समारोहेद्धुताशनं । इत्यादि ।

**End.** सहानुमरणादीनां विचारे स्खलनं मम ।
धीरैस्तत्कृपया पूर्य्यमित्यनन्तनिवेदनं ॥

**Colophon.** (?) महामहोपाध्यायरामचरणन्यायालङ्कारभट्टाचार्य्यात्मजश्रीमदनन्तराम-विद्यावागीशविरचितः सहानुमरणविवेकः समाप्तः ॥

विषयः । स्त्रीणां भर्तृसहगमनविधिनिरूपणं । साध्वीलक्षणादिकथनं । असतीनामपि सहगमनेन पातित्यनाशमात्रकथनं । साध्वीनां पूज्यताकथनं । अनुमरणविधिकथनं । क्वचिद् बालापत्यादौ सहगमनादिनिषेधकथनं । मुक्तिविवेचनं । स्वर्गादिकामनारहितत्वेन सहगमनाद्यनुष्ठानान्मोक्षसिद्धिर्भवतीतिनिरूपणं । वैधमरणे नात्मघातदोष इति निरूपणं । देशाचारस्य प्रामाण्यनिरूपणं । जातिभेदेन सहमरणानुमरणयोरधिकारभेदकथनं । सहमरणादौ चिताभ्रष्टायाः प्रायश्चित्तादिनिरूपणं । तत्र तत्र श्राद्धविधिकथनं । अशौचादिनिरूपणं ।

---

**No. 2469** प्रायश्चित्तसङ्ग्रहः । Substance, country-made paper, 11 × 4 inches. Folia, 26. Lines, 6—7 on a page. Extent, 318 ślokas. Character, Nágara. Date, Sm. 1837. Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Prose and verse. Generally correct.

**Práyaśchitta-sañgraha.** A digest of the rules regarding expiations. By Devarája. The work is in Hindi and all the Smṛiti excerptas have been translated into that language. The work was prepared under the orders of Mahárájá Chet Siñha, of Benares.

**Beginning** काशीवासिजनस्य दस्युयवनप्रत्यूहविच्छित्तये
ख्यातः श्रीबलिवन्द्यसिंहनृपतिर्भर्गस्य भागोभवत् ।
भारेणातिविसंष्ठुला क्षितिभृतामाक्रम्यमाणा बला-
द्व्यग्रं पृथुनेव येन पृथिवी साम्यं समासादिता ॥
अस्तैः कज्जलपङ्क्तिलेखंगदृशां सिन्दूरसंचालनै-
र्दन्तैरञ्जलिभिश्च वैरिनगरे यस्य त्रिवणी सदा ।

सिन्धोरस्य कृपारसेन किमपि प्राप्तो + + स्थानतां
यस्य क्रोधकृशानुना कवलितेनाद्यापि धत्तेऽङ्कुरं ॥
सूनुस्तस्य सुयज्वनः कृतमहादानस्य तेजोनिधेः
चौणीं रक्षति चेतसिंहनृपतिः षाड्गुण्यविद्यागुरुः ।
श्रीनारायणपादपद्मयुगलं यः केवलं वन्दते
चूडारत्नमरीचिमञ्जु पृथिवीनाथैः परैर्वन्द्यते ॥
सैन्यानि द्विषतामपास्य सहसा दैन्यानि विद्यावतां
कीर्त्तिर्येन नियोजिता स्थगयितुं नूनं दिशो धावति ।
प्रायश्चित्तविधिं विबोद्धुमनसस्तस्यानुरागोदयाद्-
देशैरर्थमुदीर्य्य बोधनधिया सङ्कल्प्यते किञ्चन ॥
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्वर्त्ताः कात्यायनबृहस्पती । इत्यादि ।

**End.** पराके धेनुद्वयं । गां व्रते पञ्चधेनवः । इति व्रतानां प्रत्याम्नायाः ।

**Colophon.** इति श्रीमहाराजचेतसिंहनियुक्तदेवराजकृतः प्रायश्चित्तसङ्ग्रहः ॥ संवत् १८३७ ॥

विषयः । ग्रन्थेऽस्मिन् हिन्दीभाषया प्रायश्चित्तविधिनिरूपणं । तत्र तत्तत्प्रमाणानि यथाश्रुतान्येव हिन्दीभाषया अनूद्य प्रदर्शितानीति ज्ञेयम् ।

---

**No. 2470. तत्त्वसन्दर्भटिप्पनी** । Substance, country-made paper, 13 × 6 inches. Folia, 26. Lines, 10 on a page. Extent, 666 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Prose. Correct.

**Tattva-sandarbha-ṭippaní.** Exegetical notes on the "Tattva-sandarbha,' a treatise by Jíva Gos'vámí on the metaphysics of the Vaishṇavas of Bengal. By Vidyábhúshaṇa.

**Beginning.** भक्त्याभासेनापि तोषं दधाने
धर्म्माध्यक्षे विश्वनिस्तारिनाम्नि ।
नित्यानन्दाद्वैतचैतन्यरूपे
तत्त्वे तस्मिन् नित्यमास्तां रतिर्नः ॥
मायावादं यस्तमःस्तोममुच्चै-
र्नाशं निन्ये वेदवागंशुजालैः ।

भक्तिर्विष्णोर्दर्शिता येन लोके
जीयात् सोऽयं भानुरानन्दतीर्थः ॥
— — — — — —।
आलस्याद्प्रवृत्तिस्तु पुंसां यद्ग्रन्थविस्तरे ।
अतोऽत्र गूढे सन्दर्भे टिप्पन्यल्पा प्रकाश्यते ॥
श्रीमज्जीवेन ये पाठाः सन्दर्भेऽस्मिन् परिष्कृताः ।
व्याख्यायन्ते त एवामी नान्ये ये तेन हेलिताः ॥

श्रीबादरायणोभगवान् व्यासोब्रह्मसूत्राणि प्रकाश्य तद्भाष्यभूतं श्रीभागवतमाविर्भाव्य शुकं तदध्यापितवान्। तदर्थं निर्णेतुकामः श्रीजीवः प्रत्यहकुलाचलकुलिशं वाञ्छितपीयुषबलाहक — — — — छायवर्णमिति । सुमेधसोजनाः कलावपि हरिं यजन्ति ।

**End.** उपदेशवाक्यानि गर्भे मध्ये यस्य तस्मिन् ।
टिप्पनी तत्त्वसन्दर्भे विद्याभूषणनिर्म्मिता ।
श्रीजीवपाठसंयुक्ता सद्भिरेषा विशोध्यतां ॥

**विषयः ।** जीवगोस्वामिसङ्कलिततत्त्वसन्दर्भनामकनिबन्धस्य व्याख्यानम् ।

---

**No. 2471.** **साराम्सारसङ्ग्रहः ।** Substance, country-made paper, 18 × 4 inches. Folia, 684. Lines, 8—9 on a page. Extent, 19,977 ślokas. Character, Bengali. Date, Sk. 1697. Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, old. Prose and verse. Incorrect.

**Sárátsára-sañgraha.** A Tántric miscellany, containing accounts and rituals of a great number of Tántric feasts, fasts, and observances, each illustrated by ancient legends. A detailed table of its contents is given below in Sanskrit. Compiled by Rámasañkara.

**Beginning.** आद्या या तारतारा सृजति गुणधारा गुणगणा-
दद्रधारा यस्याः स्रवन्ति गुणधारा गुणधरा ।
महामाया माया लसति हरजायादनसुधा(?)
स्वयं या श्रीः श्रेयस्करणवरदा दुःखितजने ॥
स्वयं वाणी बाला मुखरयति बालानपि जड़ा-
नमा धूमा वायोः प्रलयलयदा भीञ्जवपुषा ।

मातङ्गी तालङ्गी वररिपुभयदा भैरवी सौम्यमुखी या
नमस्येऽहं शाश्वत्यतिगतगतिर्मन्त्रमाला स्वयं या ॥
शक्तिः साक्षान्महादेवी महादेवः स शक्तिमान् ।
तयोर्विभूतिरेषा वै सर्व्वमेतच्चराचरं ॥
वस्तु किञ्चित् क्वचिद्रूपं किञ्चिद्वस्तु चिदात्मकं ।
स्वयं शुद्धमशुद्धञ्च परञ्चापरमेव च ॥ इत्यादि ।

**End.** एवमुच्चार्य्य दातव्योवलिः कुलजनप्रियः ।
यदि न भुच्यते वत्स तदा नैव शुभं भवेत् ॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेवि शान्तिस्वस्त्ययनं चरेत् ॥

**Colophon.** इति श्रीयुक्तरायरामशङ्करविरचिते सारात्सारसङ्ग्रहे भवादिनिर्णयो नाम द्वादशपरिच्छेदः । समाप्तोऽयं ग्रन्थः । शकाब्दाः १६६० ॥

विषयः । शिवाशिवयोर्विभूतिकथनं । अर्द्धनारीश्वरमूर्त्तिकथनं । अर्द्धनारीश्वरस्तोत्रकथनं । इन्द्रादीनामभिमानभङ्गकथनं । असुरीनामपि निर्व्वाणप्राप्तिकथनं । तन्त्राणामसंख्येयत्वकथनं । इन्द्रादीनां ब्रह्मतत्त्वविषये संशयच्छेदकथनं । संक्षेपेण दुर्गायाः माहात्म्यकथनं । प्रसिद्धानां तन्त्राणां नामकथनं । पीठनिर्णयः । महाविद्यानिरूपणं । कुण्डलिन्यङ्गमातृकानामादिकथनं । महाकामिनीध्यानादिककथनं । पञ्चवाणनिर्णयः । वेदोत्पत्तिकथनादिकं । वर्णमालाकथनं । आद्यायाः एकाक्षरमन्त्रार्थादिकथनं । एवं महादुर्गा-तारा-श्रीविद्या-भुवनेश्वरी-वाग्भवी-धूमावती-वगलामुखी कमला-मातङ्गीप्रभृतीनामेकाक्षरमन्त्रार्थादिकथनं । विद्यानां विशेषनामकथनं । कालीतारादुर्गाणामेकतया अविशेषकथनं । देवतानां विशेषरूपकल्पनाकथनं । तान्त्रिकप्रातःकृत्यादिनिरूपणं । गुरुलक्षणादिकथनं । शिष्यलक्षणादिकं । शिक्षानिषेधादिकथनं । राशिचक्रनक्षत्रचक्रसिद्धारिचक्रादिकथनं । दीक्षाकालादिनिरूपणं । तत्र वार-तिथि-नक्षत्र-योग-करण लग्नादिनिरूपणं । निषिद्धकालेऽपि दीक्षाकथनं । दीक्षास्थानादिनिरूपणं । उपदेशविधिकथनं । मन्त्राणां दशविधसंस्कारविधिकथनं । मन्त्राणां नित्यत्वादिकथनं । सग-चक्र-वर्गचक्रादिकथनं । मन्त्राणां गुणदोषादिविवेकः । परिधेयवस्त्रप्रमाणादिकथनं त्रिपुण्ड्रप्रमाणादिकथनं । आराधनविधिकथनं । तत्र पूजाधारार्घ्यपात्रादिनिरूपणं । सन्ध्याविधिकथनं । स्नानविधिकथनं । गायत्रीविधिकथनं । भूतशुद्धिकथनं । प्राणायामविधिकथनं । मातृकान्यासपीठन्यासादिकथनं । प्राणप्रतिष्ठादिविधिः । पूजायां पञ्चशुद्धिविधिः । उपचारप्रमाणादिकथनं । छागादिबलिविधिः । कुमारीपूजनविधिः मन्त्रसंस्कारादिविधिः । निर्माल्यनिरूपणं । पूजायां दिङ्नियमकथनं । विहिताविहितद्रव्यादिनिरूपणं । रुद्राक्षादिमालानिरूपणं । जपविधिः । कुल्लुकासेतुप्रभृतिनिरूपणं । मुखशोधनादिविधिकथनं । पुरश्चरणविधि-

कथनं। भूतलिप्यादिकथनं। मन्त्रसिद्धिलक्षणादिकथनं। शान्तिघटस्थानादिविधिकथनं। कुण्ड-विधिकथनं। होमद्रव्यादिनिरूपणं। महादुर्गापूजादिविधिकथनं। कामिन्याः ध्यानपूजादि-कथनं। हरिद्रागणेशविधिकथनं। दुर्गासहस्रनामादिकथनं। जयाविजयापूजादिविधिकथनं। शिवमाहात्म्यादिकथनं। पञ्चाक्षरादिमाहात्म्यकथनं। लिङ्गार्चनविधिकथनं। अष्टमूर्त्तिप्रमाणा-दिकथनं। शिवमन्त्रादिकथनं। सहस्रनामकवचादिकथनञ्च। गणेशमन्त्रादिकथनं। वटुक-भैरवमन्त्रादिकथनं। एवं क्षेत्रपालमन्त्र-गौरीमन्त्र-महिषमर्द्दिनीमन्त्रस्तोत्रादिकथनं। तथा— उग्रदुर्गामन्त्र-नवदुर्गामन्त्र-रणदुर्गामन्त्र-शूलिनीमन्त्र-कालीमन्त्र भद्रकाल्यादिमन्त्रस्तोत्रादिक-थनं। तारामन्त्रादिकथनं। तस्याः शतनामस्तोत्रकवचसहस्रनामादिकथनं। तारिणीकल्पक-थनं। श्रीविद्याविधिकथनं तत्र कामकलानिरूपणं। तन्मन्त्रस्तोत्रादिकथनञ्च। महाषोड़शी-विधिकथनं। भुवनेश्वर्य्याः विधिकथनं। मधुमतीविधिकथनं। श्रीचक्रादिनाशप्रायश्चित्तकथनं। योगिनीन्यासादिकथनं। कामेश्वरीविधिकथनं। आनन्दभैरवीविधिकथनं। त्रिपुराविधिक-थनं। क्लिन्नीस्तोत्रादिकथनं। महात्रिपुरसुन्दरीशतनामस्तोत्रादिकथनं। एवं सहस्रनामा-दिस्तोत्रकथनञ्च। बालाविद्याविधिकथनं। त्रिपुरभैरवीविधिकथनं। वागीश्वरीविधिकथनं। छिन्नमस्ताविधिकथनं। प्रचण्डचण्डिकाविधिकथनं। धूमावतीविद्याविधिकथनं। वगलामुखी-विद्याविधिकथनं। मातङ्गीविद्याविधिकथनं। लक्ष्मीविद्याविधिकथनं। अन्नपूर्णाविद्याकथनं। तस्या अकारादिसहस्रनामादिस्तोत्रकथनं। त्रिपुटाविधिकथनं। त्वरिताविधिकथनं। नित्या-विधिकथनं। वज्रप्रस्तारिणीविधिकथनं। अथ दिव्यवीरपशुभावविवेचनं। षट्चक्रनिरूपणं। योगप्रक्रियाकथनं। तत्र यमनियमासनादिलक्षणतद्भेदादिनिरूपणं। ध्येयस्वरूपादिनिरूपणञ्च। षट्कर्म्मविधिकथनं। कौलिकानां प्रातःकृत्यादिनिरूपणं। मांसादिशोधनविधिकथनं। शिवा-बलिदानविधिकथनञ्च। (अत्र प्रायः सर्व्वत्र प्रयोगकथनमिति ज्ञेयम्।)

---

**No. 2472. स्मृतिरत्नावली।** Substance, country-made paper, 12 × 5 inches. Folia, 68. Lines, 10—11 on a page. Extent, 1,688 ślokas. Character, Nágara. Date, Sm. 1821. Place of deposit, Calcutta, Rájá Rájendranaráyaṇa Deva, Bahádur. Appearance, old. Prose and verse. Incorrect.

**Smṛiti-ratnávalí** A digest of the Smṛitis relating principally to domestic rites and ceremonies. By Bechuráma.

**Beginning.** नत्वा विश्वेश्वरं विष्णुं पार्व्वतीञ्च हरिप्रियां।
क्रियते वेचुरामेण स्मृतिरत्नावलीमिमां॥ (?)
नत्वा भवानीचरणारविन्दं
श्रीमान् वेचुराम इति प्रसिद्धः।

+ + + यतेग्रन्थ + + खल्पं

परोपकाराय भवतीह भूमौ ॥

अथ श्राद्धनिर्णयोलिख्यते। तत्र श्राद्धधर्म्मव्यवस्था। हारीतः। आयुः प्रजां धनं विद्यां स्वर्गं मोक्षसुखानि च। प्रयच्छति तथा राज्यं पितरः श्राद्धतर्पिताः। इत्यादि।

**End.** गृहे दशगुणं दानं गोष्ठे चैव शताधिकं।

पुण्यतीर्थेषु साहस्रमनन्तं शिवसन्निधौ ॥

**Colophon.** इति स्मृतिरत्नावली समाप्ता। संवत् १८२१।

विषयः। श्राद्धमाहात्म्यकथनं। संक्रान्त्यादौ त्रिपिण्डश्राद्धविधिकथनं। प्रेतकर्म्मकथनं। विघ्नादिपतितश्राद्धकालादिनिरूपणं। सपिण्डनादिविधिः। आमश्राद्धादिविधिः। मघाश्राद्धादिविधिः। बालादिमरणादिनिरूपणं। अशौचनिरूपणं। महापातकादिप्रायश्चित्तकथनं। गोवधादिप्रायश्चित्तकथनं। उच्छिष्टभोजनादिप्रायश्चित्तकथनं। कन्यादानादिविधिकथनं। अथात्मघातिनां शुद्ध्यर्थं नारायणबलिविधिकथनं। अशौचादौ चौरविधिकथनं। नक्तव्रतादिविधिकथनं। प्रतिपदादिपञ्चदशतिथिकृत्यनिरूपणं। अथ चैत्रादिद्वादशमासकृत्यनिरूपणं। विशेषेण एकादशीनिरूपणं। सङ्क्रान्तिनिरूपणं। व्रतबन्धादिनिरूपणं। अकालवृद्ध्यादिनिरूपणं। पञ्चामृतादिनिरूपणं। मण्डपादिनिरूपणं। वेदिविधिकथनं। ग्रहणनिरूपणं। अश्वत्थवृक्षसेचनादिविधिकथनं। व्रतादिनियमकथनं। तत्र दन्तधावनादिविधिकथनं। अशौचमध्ये नैमित्तिकव्रतनिषेधकथनं। स्नानकालादिनिरूपणं। प्रातःसन्ध्यादिविधिकथनं। तुलस्यादिचयनविधिकथनं। पूजाविधिकथनं। शालग्राममाहात्म्यकीर्त्तनं। भोजनादिविधिकथनं। दानविधिकथनं। दानपात्रादिनिरूपणञ्च।

---

**No. 2473** राजनीतिः। Substance, country-made yellow paper, 20 × 5 inches. Folia, 15. Lines, 8 on a page. Extent, 375 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Rájaníti** A treatise on government and the duties of kings, compiled principally from the Mahábhárata and the Kámandakíya Níti. Anonymous.

**Beginning.** तस्मामाद्यः सदा श्रेयान् यः काकिन्या च बर्द्धते।

कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः।

गणाद्गृहीला वर्द्धेत गणस्य तु न किञ्चन।

गणस्य दाता क्षीयेत गणस्य तु न किञ्चन ॥

अलब्धञ्चैव लिप्सेत लब्धं रक्षेदवेक्षणैः।

रक्षितं बर्द्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ इत्यादि।

**End.** अप्रियाण्यपि कुर्व्वाणोयः प्रियः प्रिय एव सः ।
अशेषदोषदुष्टोऽपि कायः कस्य न वा प्रियः ॥

**Colophon.** इति षड्द्वन्द्वप्रकरणं सम्पूर्णं । (इति राजनीतिः ।)

विषयः । कोषरक्षादिविधिकथनं । राष्ट्ररक्षादिविधिकथनं दुर्गादिनिर्म्माणकथनं । बलनिरूपणं । युद्धभूमौ प्राणत्यागादिमाहात्म्यकथनं । सन्धिविधिकथनं । बलवत्सदृशक्षुद्रभेदेन त्रिविधसन्धिनिरूपणं । विग्रहविधिकथनं । यानविधिकथनं । आसनविधिकथनं । द्वैधविधिकथनं । आश्रयविधिकथनं । प्रभावोत्साहमन्त्रजभेदेन त्रिविधप्रतापनिरूपणं । इन्द्र-सूर्य्य-वायु-यम-वरुण चन्द्र वह्नि-पृथिवीहत्या राज्ञः सदा अवस्थानव.मैव्यतानिरूपणं । तत्र प्रत्येकं तद्वृत्तिनिरूपणञ्च । त्रिविधशक्तिनिरूपणं । आयव्ययस्थितिविधिनिरूपणं । उपायचतुष्टयकथनं तत्र प्रत्येकं तद्विधाननिरूपणं । दण्डप्रशंसादिकथनं । अमात्यविधिनिरूपणं । अमात्यलक्षणादिकथनं । अमात्यनीतिकथनं । प्रसङ्गात् साधारणनीतिकथनञ्च ।

---

**No. 2474.** महाभारततात्पर्य्यनिर्णयः । Substance, country-made yellow paper, 12 × 6 inches. Folia, 186. Lines, 13 on a page. Extent, 9,067 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Very incorrect.

**Mahábhárata-tátparyanirṇaya.** On the philosophy of the Mahábhárata. By Ánanda Tírtha.

**Beginning.** नारायणाय परिपूर्णगुणार्णवाय
विश्वोदयस्थितिलयोन्नियतिप्रदाय ।
ज्ञानप्रदाय विबुधासुरसौख्यदुःख-
सत्कारणाय वितताय नमोनमस्ते ॥
आसीदुदारगुणवार्निधिरप्रमेयो-
नारायणः परतमः परमात्म + कः ।
सर्व्वज्ञसंविदखिलं + + ने निधाय
लक्ष्मीभुजान्तरगतः स्वरतोऽपि चाग्रे ॥
— — — — — — — ।
जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ।
संक्षेपात् सर्व्वशास्त्रार्थं भारतार्थानुसारतः ॥
निर्णयः सर्व्वशास्त्राणां भारतं परिकीर्त्तितं ।
भारतं सर्व्ववेदाश्च तुलामारोपिताः पुरा ॥ इत्यादि ।

**End.** तस्मादयं ग्रन्थवरोऽखिलास्व
धर्म्मा + + र्चां तु पुमर्थहेतुः ॥
किं वेदितैरनगुणै + + तथान्यै
नारायणः प्रीतिमुपैति + + ॥
यस्य चोण्ुदितानि वेदवचनैरूपाणि दिव्यान्यलं
— — — — — — —।
— — — — — — — ।
— — मेव निहितं देवस्य भर्गोमहान् ॥

**Colophon.** इति श्रीमदानन्दतीर्थभगवदाचार्य्यविरचिते श्रीमन्महाभारततात्पर्य्यनिर्णये द्वात्रिंशोऽध्यायः समाप्तः। सम्पूर्णोऽयं ग्रन्थः।

विषयः। १मे अध्याये.—भगवान् नारायण एव सर्व्वशास्त्रप्रतिपाद्य इति निरूपणं। वासुदेवादिचतुर्व्यूहनिरूपणं। द्वैतवादनिरूपणं। भक्तिनिरूपणादिकथनञ्च। २ये,—महाभारतागमादिकथनं। पाण्डवेषु भीमस्य प्राधान्यकथनं। मत्स्यकूर्म्माद्यवतारानां केवलविष्णुत्वकथनं। ब्रह्मरुद्रादीनां वैष्णवविशेषावेशित्वकथनं। शाम्बादीनां वैष्णवावेशित्वनिर्णयः। एवं पाण्डवादिषु वैष्णवावेशित्वादिनिरूपणं। भगवन्माहात्म्यवर्णनं। पाण्डवादीनां क्रमेण धर्म्मज्ञानवैराग्यादिरूपत्वकथनं। धार्त्तराष्ट्रशकुनिप्रभृतीनां क्रमेण अज्ञानकलिनास्तिक्यादिरूपत्वकथनञ्च। ३—९मे नारायणं नमस्कृत्येत्यत्र तात्पर्य्यकथनं जयशब्दप्रतिपाद्यनिरूपणञ्च। सृष्टिप्रक्रियावर्णनं। संक्षेपेण रामावतारकथानिरूपणं। अथ विस्तरेण रामचरित्रवर्णनं। १०—११शे,—समुद्रमन्थनवर्णनं। वेदव्यासस्य जन्मादिकथनं। व्यासपुत्रस्य शुकस्य उत्पत्तिकथनं। व्यासस्य वेदविभागपूर्व्वकं शिष्येभ्योदानविवरणकथनं। १२—१५शे —चन्द्रवंशोत्पत्तिकथनं। श्रीकृष्णबलभद्रादीनां जन्मकथनं। विस्तरेण श्रीकृष्णचरित्रवर्णनं। पाण्डवानां जन्मादिकथनं। तेषां बाल्यक्रीड़ादिवर्णनं। धार्त्तराष्ट्रानीनां जन्मकथनं। बाल्यलीलादिवर्णनञ्च। तेषामस्त्रशिक्षादिवृत्तान्तवर्णनं। १६—१७शे,—पाण्डवानां मृगयाकरणकथनं। यादवैः सार्द्धं जरासन्धस्य युद्धादिवर्णनं। रुक्मिणीहरणवृत्तान्तवर्णनमुखेन हंसडिम्भकवधविवरणवर्णनं। १८—२१शे —भीमार्ज्जुनयोर्दिग्विजयवर्णनं। पुरोचनहिड़िम्बादिवधवर्णनं। द्रौपदीस्वयम्बरवर्णनं। पाण्डवानां राज्यलाभादिवर्णनं। सुभद्राहरणवृत्तान्तवर्णनं। खाण्डवदाहवर्णनं। द्यूतक्रीड़ावर्णनं। दुःशासनकृतद्रौपदीवस्त्रहरणवर्णनं। पाण्डवानां वनप्रवेशवर्णनञ्च। २२—२४शे.—पाण्डवानां वनवासवर्णनं। अरणिप्राप्तिवर्णनं। गन्धर्व्वहृतानां कौरवस्त्रीणामुद्धारादिवर्णनं अर्ज्जुनस्य अस्त्रलाभादिवर्णनं। विराटराज्ये पाण्डवानामज्ञातवासवर्णनं। कीचकादिवधवर्णनं। उत्तरगोष्ठयुद्धवर्णनं। सन्धिकरणार्थं कृष्णस्य दुर्य्योधनसमीपगमनादिवर्णनं। समरोद्योगवर्णनञ्च। २५—२९शे,—संक्षेपेण भीष्मपर्व्वकथावर्णनं। द्रोणपर्व्वकथावर्णनं।

कर्णपर्व्वकथावर्णनं। शाल्यपर्व्वकथावर्णनं। दुर्य्योधनोरुभङ्गवृत्तान्तवर्णनं। द्रौणिकृतपाण्डवशि-शुनिधनादिवृत्तान्तवर्णनं। युद्धभूमौ स्त्रीणां विलापादिवर्णनञ्च। २०—२१शे, अध्याये,—युधिष्ठिरस्य राज्याभिषेकवर्णनं। भीमादीनां यौवराज्याभिषेकादिवर्णनं। युधिष्ठिरेण सह चार्व्वाकस्य संवादादिवर्णनं। शरशय्याशयानं भीष्मं द्रष्टुमनोभिः सार्द्धं पाण्डवैः श्रीकृष्णस्य तत्समीपगमनादिवर्णनं। तदनुरोधेन भगवता संक्षेपेण राजधर्म्मकथनं। मोक्षधर्म्मकथनञ्च। युधिष्ठिरकृताश्वमेधवर्णनं। २२शे, अध्याये—युधिष्ठिराय विदुरस्य उपदेशदानवर्णनं। तेषां कुरुक्षेत्रगमनादिवर्णनं। कृष्णस्य कुरुक्षेत्रे यज्ञानुष्ठानकथनं। कृष्णस्य उद्धवाय धर्म्मोपदेशदानं। अथ सर्व्वेषां वदरिकाश्रमगमनादिकथनं। प्रभासतीर्थे यादवानां मैरेयमत्तानामन्योन्यं संप्रहा-रेण निधनादिकथनं। वलदेवकृष्णयोः स्वधामगमनकथनं। श्रीकृष्णमाहात्म्यवर्णनं। म्लेच्छक-र्त्तृककृष्णकामिनीसमूहहरणकथनं। युधिष्ठिरादीनां स्वर्गादिगमनकथनं। बुद्धावतारकथाक-थनं। कल्क्यवतारकथाकीर्त्तनञ्च।

---

**No. 2475. काव्यरसावली।** Substance, country-made yellow paper, 18 × 4 inches. Folia, 7. Lines, 7 on a page. Extent, 208 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Generally correct.

**Kávya-rasávalí.** A commentary on a poem by Ghaṭakarpara describing the rainy season. By Vaidyanátha Deva S'armá, son of Sarveśvara Tarkasiddhánta, and grandson of Sambharáma Nyáyapanchánana.

**Beginning** गुरुं प्रणम्य शिरसा त्रैलोक्यत्राणकारकं।
घटकर्परकाव्यस्य टीका काव्यरसावली॥
कवीनां काव्यशीलानां सम्मुदे क्रियते मया।
द्विजश्रीवैद्यनाथेन तर्कसिद्धान्तसूनुना॥
संक्षेपं पुस्तकं दृष्ट्वा टीकाविरहितं तथा।
यथेष्टकाव्यं काव्यानां प्रकाशनसमीहया॥

घटकर्परनामा महाकविरेकस्मिन् दिवसे वर्षाकाले काव्यप्रकाशाय स्त्रीपुंसावुपलक्ष्य यमकेन तत्कालं वर्णितवान् निचितमिति। अर्थात् हे प्रिये नीरदैर्मेघैः खमाकाशं। इत्यादि।

**End.** इति टीका कृता धीराः प्रतिपत्तीयता मया।
द्विजश्रीवैद्यनाथेन शाके सप्तमसप्तमे॥

**Colophon.** इति महोपाध्यायश्रीशम्भुरामन्यायपञ्चाननभट्टाचार्य्यात्मजश्रीसर्व्वेश्वरतर्क-सिद्धान्तभट्टाचार्य्यात्मजश्रीवैद्यनाथदेवशर्म्मविरचिता घटकर्परटीका काव्यरसावली समाप्ता।

विषयः। घटकर्परकृतवर्षावर्णनकाव्यस्य व्याख्यानम्।

**No. 2476.** सारावली। Substance, country-made yellow paper, 14 × 4 inches. Folia, 98. Lines, 9 on a page. Extent, 2,756 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Generally correct.

**Sárávalí.** A commentary on the Kumára-sambhava of Kálidása. By Gopálananda Váṇivilása, son of Bhagiratha Mis'ra.

**Beginning.** परमानन्दसन्दोहकन्दं वन्दे+ +प्रभं ।
गोविन्दमग्रभक्तन्द + + + लिन्दवन्ददं ॥
श्रीभगीरथमिश्रस्य स्तनु + + तयासुधीः ।
वाणीविलासः कुरुते टीकां सारावलीमिमां ॥

महाकाव्यसमारम्भे सत्सम्प्रदायाधिगतमहाकाव्यलक्षणं वस्तुनिर्देशं निर्दिशन् महाकविः श्रीकालिदासः पर्व्वतेशं हिमालयं वर्णयन्नाह ॥ अस्त्युत्तरस्यामिति ।

**End.** प्रथममुखविकारैरिति प्रथमं ये मुखविकाराः वदनविकृतयः तैः । अतएव गूढं संस्मृतं यथा स्यात् तथा हासयामास ॥

**Colophon.** इति सन्मिश्रश्रीभगीरथसूनुवाणीविलासश्रीगोपालनन्दविरचितायां सारावल्यां कुमारसम्भवटीकायां सप्तमः सर्गः ।

विषयः । महाकविकालिदासकृतकुमारसम्भवस्य सप्तमसर्गान्तं व्याख्यानम् ॥

---

**No. 2477.** शान्तितत्त्वामृतम् । Substance, country-made, yellow paper, 17 × 4 inches Folia, 61. Lines, 9 on a page. Extent, 1612 ślokas. Character, Bengali. Date, Sm. 1217. Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Verse. Incorrect.

**Sánti-tattvámṛita.** On rites appropriate for overcoming the evil effects of accidents, extraordinary phenomena, adverse astral conjunctions, &c., &c. By Náráyaṇa Chakravartí.

**Beginning.** नत्वा गोपीकान्तं मत्वा च विविधमुनिवाक्यानि ।
श्रीनारायणशर्म्मा शान्तिकतत्त्वामृतं तनुते ॥
अद्भुतसिन्धुप्रमुखे तत्तत् स्थाने पुराणादौ ।
नानास्थाने येऽर्थास्तेऽस्मिन् ग्रन्थे समासेन ॥

तत्र शान्तिलक्षणमाह स्मृतिः । यथा शस्त्रोपघातानां कवचं विनिवारणं । तथा दैवोपघातानां शान्तिर्भवति वारणं । एतेन अदृष्टद्वारा ऐहिकमात्रानिष्टनिवारणं शान्तिः । इत्यादि ।

**End.** चिन्तामण्युक्तप्रकारेण चन्द्रपूजां कांस्यपात्रदानानि च कृत्वा धेनुं सुवर्णञ्च दक्षिणां दद्यादित्यर्थः।

**Colophon.** इति श्रीनारायणचक्रवर्त्तिकृतं शान्तितत्त्वामृतं समाप्तं। सन१२१७।

विषयः। शान्तिलक्षणकीर्त्तनं। ऐहिकानिष्टनिवारणाय शान्तिरेवानुष्ठेयेतिनिरूपणं। उत्पातलक्षणकथनपूर्व्वकं विविधोत्पातकथनं। तत्र साधारणासाधारणभेदनिरूपणञ्च। देशभेदेन उत्पातविशेषे दोषभेदकथनं। अथ भौमोत्पातकथनपूर्व्वकं तत्र तत्र शान्तिकथनं। अथ आग्नेयाद्भुतकथनं। जलजाद्भुतकथनं। वृक्षाद्भुतकथनं। देवप्रतिमाद्भुतकथनं। गृहाद्भुतकथनं। अस्त्राद्भुतकथनं। मृगपक्षिविकारकथनं। अथ अन्तरीक्षोत्पातनिरूपणं। तत्र उल्कादिस्वरूपकथनं। सन्ध्याद्भुतकथनं। निर्घातनिरूपणं। मेघाद्भुतकथनं। मेघवृक्षनिरूपणं। परिघकथनं। विद्युत्कथनं। इन्द्रधनुःकथनं। दण्डाद्भुतनिरूपणं। वृष्ट्याद्भुतकथनं। परिवेशाद्भुतकथनं। प्रतिसूर्य्यकाद्भुतकथनं। गन्धर्व्वनगराद्भुतकथनं। कबन्धाद्भुतकथनं। अथ दिव्योत्पातनिरूपणं। तत्र सूर्य्याद्भुतकथनं। चन्द्राद्भुतकथनं। मङ्गलाद्भुतकथनं। बुधाद्भुतकथनं। वृहस्पत्यद्भुतकथनं। शुक्राद्भुतकथनं। शनैश्चराद्भुतकथनं। ग्रहणाद्भुतकथनं। अपर्व्वग्रहणाद्भुतकथनं। वायव्यमण्डलाद्भुतकथनं। केत्वद्भुतकथनं। नक्षत्रपातोत्पातकथनं। अत्र सर्व्वत्र प्रत्येकं शान्तिकथनं। विशेषेण ग्रहपूजादिनिरूपणं। अथ संक्रान्त्याद्युत्पातशान्तिकथनञ्च।

---

**No. 2478.** बालबोधिका। Substance, country-made yellow paper, 20 × 5 inches. Folia, 45. Lines, 10 on a page. Extent 1,567 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Bálabodhiká.** A commentary on Deveśvara's *Kavikalpalatá,* a guide to the art of composing poetry. By Súrya Kavirája.

**Beginning.** इदानीं वृद्धजनवर्त्मानुसरणेन निजग्रन्थस्य प्रामाण्यं निदर्शयति। कविशिक्षेत्यादि। भो धीराः पण्डिता इयं कविकल्पलता मया निबद्धा। किमर्थं त्वरितं शीघ्रं श्लोकानां सिद्धये इत्यादि।

**End.** प्रत्यक् पयोनिधिः अस्ताचलसन्निहितसमुद्रः।

**Colophon.** इति श्रीसूर्य्यकविराजकृता बालबोधिका कविकल्पलताटीका समाप्ता।

विषयः। देवेश्वरकृतकविकल्पलताभिधानकविशिक्षानिबन्धस्य व्याख्यानम्।

---

**No. 2479.** अपेक्षितव्याख्यानम्। Substance, country-made yellow paper, 20 × 5 inches. Folia, 20. Lines, 10 on a page. Extent, 707 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Apekshita-vyákhyána.** A commentary on Bhavabhúti's Uttara-rámacharita. By Bhaṭṭa Náráyaṇa, son of Raṅganátha Díkshita.

**Beginning.** अपारभवसागरोत्तरणसेतुभूतं सकृत्
प्रलापविषयीकृतं जयति यस्य नामाक्षरं ।
दशास्यकुलकाननज्वलनतीव्रदावानलः
स कोऽपि रघुनाथकोमम भवत्वभीष्टप्रदः ॥
स्वहृद्गतं वा विनिवेशयन्ति ये
भवन्ति ते सभ्यतमा विपश्चितां ।
परस्य हृत्स्थं गहनार्थजातं
यद्वाचि कुर्व्वे स गुरोः प्रसादः ॥ (?)
ये तु शास्त्रविचयेषु कोविदाः
संस्कृतेषु भुजगेशजित्वराः ।
प्राकृतेषु परिनिष्ठिता न ते
तन्मुदे मम भवत्वयं श्रमः ॥
उत्तरे रामचरिते भवभूतिमहाकवेः ।
अप्रसिद्धं पदं यत् तद्यथामति विविच्यते ॥
प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं
कृतं नान्दीरूपं पूर्व्वगुरुनमस्कारात्मकं
मङ्गलं सूत्रधारमुखेनावतारयति,—इदं गुरुभ्य इति ।

**End.** यो मौनभट्टबुध + + वधीतविद्यः
श्रीतान + + सुकृती + कृष्णसूनुः ।
श्रीरङ्गनाथतनयेन तदीयपौत्र-
नारायणेन सुधिया रचितेति टीका ॥
वाराणसीनियतवासपवित्रमूर्त्तेः
श्रीरङ्गनाथविदुषो विहिताध्वरस्य ।
श्रीबालकृष्ण इति यः प्रथितस्तनूज-
स्तस्याग्रजेन रुचिरा समकारि वृत्तिः ॥
ऋतुगजरसचन्द्रैर्विक्रमार्कस्य शाके
+ + नति शुभमासे कार्त्तिके शुक्लपक्षे ।
प्रतिपदि परिपूर्णाकारि जिज्ञासुतुष्ट्यै
विवृतिरियममेशाधिष्ठितायां नगर्य्यां ॥

**Colophon**. इति श्रीरङ्गनाथदीक्षितस्य श्रीभट्टनारायणस्य कृतावपेक्षितव्याख्याने सप्तमोऽङ्कः ।

विषयः । महाकविभवभूतिकृतस्य उत्तररामचरितस्य व्याख्यानम् ।

---

**No. 2480.** विष्णुनामसहस्रभाष्यविवृतिः । Substance, country-made paper, 17 × 5 inches. Folia, 226. Lines, 9 on a page Extent, 6,581 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose and verse. Generally correct.

**Vishṇunáma-sahasra-bháshya-vivṛiti**. Glossarial notes on S'aṅkara's commentary on a section of the Mahábhárata, in which a thousand epithets in praise of Vishṇu have been strung into a hymn. Each epithet is described as a name. By Tárakabrahma Sarasvatí, disciple of Gopála Surasvatí Yati.

**Beginning**. श्रीमाधवोमाधवविघ्नराजान्
वाग्देवतां व्यासमुनिं महान्तं ।
श्रीशङ्करं भाष्यकृतञ्च भक्त्या
नमाम्यहं लोकहितावतारं ॥
श्रीगोपालानन्दयतीन् गुरून् विद्यागुरूनपि ।
प्रणम्य श्रीमदद्वैतानन्दान् शमदमालयान् ॥
भाष्यं तैरुपदिष्टार्थं भगवत्पादनिर्म्मितं ।
विष्णोर्नामसहस्रस्य यथामति विविच्यते ॥
क्व सर्व्वविद्भाषितभाष्यमेत-
द्व्याख्याप्रयत्नः क्व च मेऽल्पबुद्धेः ।
तथापि वैगुण्यमिह क्षमन्तां
सन्तो यतेर्यन्मननं स्वधर्म्मः ॥

इह खलु युधिष्ठिरः परमकारुणिकः शान्तनवाद् भीष्माद्धर्म्मप्रवक्तुः श्रुतिस्मृत्याचारप्रमाणकान सर्व्वान् धर्म्मान् — — — — — — — हरिवंशे कैलासयात्रायां विष्णुं प्रति शिववचनं पठति । आदिस्त्वं सर्व्वभूतानामित्यादि ।

**End**. व्याख्यानान्तरेष्वपि यथासम्भवं श्रुत्यादिमूलत्वं बोध्यम्।
प्रक्षेपकाल्पत्व (?) निरासहेतो-
र्य्याख्या हरेर्नामसहस्रभाष्ये ।

या नारकब्रह्मयतिप्रणीता
समर्पिता सा हरिपादयुग्मे ॥

Colophon. इति श्रीगोपालसरस्वतीयतिवरान्तेवासिना नारकब्रह्मानन्दसरस्वतीयतिना भक्त्यानुरूप्यात् कृता विष्णुनामसहस्रभाष्यविवृतिः ।

विषय । महाभारतीयानुशासनपर्व्वोक्तविष्णुनामसहस्रस्य शङ्कराचार्य्यकृतं यद्भाष्यं तस्य व्याख्यानम् ॥

---

**No. 2481.** वाराहीतन्त्रम् । Substance, country-made yellow paper, 20 × 5 inches. Folia, 93. Lines, 10 on a page. Extent, 2,545 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyana Deva, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Váráhí-tantra.** One of the original Tantras, treating of the worship of S'ákta goddesses; and of the various rites, fasts and observances relating to them. The contents of the different chapters (50 in all) are given below in Sanskrit. The work noticed under No. 287 (I, p. 157), is defective.

**Beginning.** प्रपद्ये देववाराहं सर्व्वज्ञमपराजितं ।
वाराहीं सर्व्वभूतानामीश्वरीं सर्व्वतोमुखीं ।
नानाक्रीड़नकैर्द्देवः क्रीड़ते योगमायया ।
दयितार्द्धवपुर्हित्वा ह्यत्यारम्भे जगत्प्रभुः ॥
जगत्स्थितिञ्च कुरुते लोकस्यानुग्रहं हरः ।
तस्य चिन्ताप्रभावेण न स्याद्विदितं जगत् ॥
तद्भक्त्या संप्रवक्ष्यामि वाराहीनामतन्त्रकं ।
सहस्रकन्यासहितं मन्त्रयन्त्रपुरःसरं ॥
पीठोपपीठमाहात्म्यं राजवंशानुकीर्त्तनं ।
संस्थानं कालसंस्थानं ग्रहाणां स्थितिरेव च ॥ इत्यादि ।

**End.** ततोऽन्यत् किं फलं भद्रे इति पादव्यवस्थितिः ।
गीतस्य पदनृत्यस्य नटीवेशधरस्य च ॥

**Colophon.** इति वाराहीये महातन्त्रोत्तमे पञ्चाशत् पटलः । समाप्तश्चायं ग्रन्थः ॥

विषयः । तत्र प्रथमपटले,—आगमजामलकल्पतन्त्राणां संख्याकथनं । अवान्तरभेदकथनं । प्रत्येकं स्लोकसंख्याकथनं । आगमलक्षणकथनं । जामललक्षणकथनं । कल्पलक्षणकथनं । तन्त्रलक्षणकथनञ्च । २ये, पटले,—दीक्षाविधिकथनं । तत्र अकडमहरचक्र-कोलचक्रादिक-

थनं। अथ कामनाभेदेन भिन्नभिन्नदैवतमन्त्रकथनं कलौ शक्तिमन्त्रप्राधान्यकथनं। मन्त्रोद्धार-विधिकथनं। वैष्णवशैवादिभेदेन मन्त्रेषु प्रणवादियोगनियमकथनं। मन्त्रेषु बाल्ययौवनाव-स्थानिरूपणं। ष्टहस्थयत्यादीनां मन्त्रेषु विशेषकथनं। उपांशुमानसभेदेन द्विविधजपकथनं। जपविधिकथनं। स्तोत्रादिवाचनविधिकथनं। तत्र विविधपुराणनामाद्युल्लेखेन विष्णु-नृसिंह-राम-दुर्गादिस्तवकीर्त्तनमाहात्म्यकथनं। ३-८,—पटले,—भगवद्गीतापाठक्रमकथनं। चण्डी-पाठक्रमकथनं। एवं नीलकण्ठ श्रीरामादिक्रमकथनं। वाराहीमन्त्रविधिकथनं। षट्कूटाम-न्त्रोद्धारविधिकथनं। तत्पूजाविधिकथनं। तत्र स्तवकवचहोमादिविधिकथनञ्च। सुन्दरीमन्त्र-तत्पूजादिक्रमकथनं। स्वाङ्गे विविधचक्रयन्त्रादिधारणमाहात्म्यकीर्त्तनं। महालक्ष्म्याः पूजादि-विधिकथनं। ९,—पटले,—दुर्गापूजाविधिकथनं। तत्र पुष्पधूपदीपादिविधिकथनं। बलि-दानादिविधिकथनं। तत्र छागलादिलक्षणतच्छेदकथनादिकञ्च। बलिच्छेदनकर्त्तृलक्षणादिक-थनं। दिग्विशेषे छागादीनां शिरःपाते फलविशेषकथनं। शोणितदानविधिकथनं। सदीप-च्छागमस्तकदानादिविधिकथनं। ब्राह्मणस्य पञ्चमकारनिषेधकथनं। १०-१८,—पटले,—भैरव्याः पूजादिविधिकथनं। चण्डी पूजादिविधिकथनं। सामान्यतः सर्व्वमन्त्राणां पुरश्चरण-विधिकथनं। तत्र स्नानादिनिरूपणञ्च। वामशिवापूजाविधिकथनं। छिन्नमस्तापूजाविधिकथनं। तत्र विविधयन्त्रमन्त्रादिनिरूपणं। १९ २४,-पटले,—एकाक्षरविष्णुमन्त्रविधिकथनं। कलौ कामनाविशेषेण देवताविशेषार्चनविधिकथनं। कालीमन्त्रादिनिरूपणं। तत्र विशेषेण होम-बलिदानादिविधिकथनं। कालरात्रिव्रतविधिकथनं। कालीस्तवकथनं। व्रीहिधान्यादीनां ग्राह्याग्राह्यत्वकथनं। तद्भोज्याभोज्यत्वकथनञ्च। तथा फलविशेषभक्षणादिविधिकथनं। पर-मान्नमोदकादिभोजनविधिकथनं। २५-२९ पटले.—सारस्वतवीजादिनिरूपणं। तत्पूजादि विधिकथनञ्च। इन्द्राचीमन्त्र तत्पूजादिविधिकथनं। महाविद्यापूजादिविधिकथनं।तत्र कुमा-रीपूजादिविधिकथनञ्च। अपराजितामन्त्र तत्पूजादिविधिकथनं। ३०-३१ पटले,—तीर्थ-विधिकथनं। तत्र नारायणक्षेत्रविधिकथनं। सामान्यतः तीर्थयात्राविधिकथनं। तत्कालादि-निरूपणं। तीर्थे मुण्डनादिविधिकथनं। अथ वैद्यनाथहिङ्गुलादिविविधतीर्थमाहात्म्यकीर्त्तनं। गयायां पिण्डदानाविधिकथनं। लोहितसागरादितीर्थमाहात्म्यकथनं। विशेषेण कामाख्यापू-जाविधिकथनं। ३२-४०, पटले,—कामेश्वरीस्तवराजकथनं। तत्र संवत्सरं यावद् यात्रावि-धिकथनं। वज्रबलि-शक्रबलि-चेटकबलिप्रभृतिबलिविधिकथनं। मासविशेषे नियमविशेषवि-धानञ्च। अथ मणिकूटतीर्थविधिकथनं। कौनक्षेत्रतीर्थविधिकथनं। एवं नन्दनक्षेत्रादिविधि-कथनं। तीर्थापि नष्पीर्त्तनं। ४१-४९ पटले,—शाक्तशैववैष्णवादीनां उपासनादिभेदकथनं। पूजाकाल द्रव्यादिविशेषकथनञ्च। तत्पूजादिप्रकारभेदकथनं। सद्गुरुमाहात्म्यकीर्त्तनं। विशे-षेण शिवपूजादिविधिकथनं। तत्परतोहत्याद्युत्सवविधिकथनञ्च।

---

**No 2482.** दुर्गाभक्तिलहरी । Substance, country-made yellow paper, 17 × 5 inches. Folia, 62. Lines, 8 on a page. Extent, 1,769 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyana Deva, Bahádur. Appearance, new. Prose and verse. Generally correct.

**Durgá-bhakti-laharí.** On the supreme divinity of the goddess Durgá and her worship—a compilation from the Tantras. By Raghúttama.

**Beginning.** निःशरीरोऽपि भगवान् शरीरिष्वभिजायते ।
यो भक्तकृपया देवस्तं नमामि सनातनं ॥
स्त्रीहंसादिवपुर्धत्ते देवदिर्य्यङ्नराकृतिः ।
निराकृतिरपीशानो नटवद्यः स नोऽवतु ॥
सन्तप्तनिर्वृतिकरीमिव द्वैतानन्दसागरे ।
श्रीदुर्गाभक्तिलहरीं विनिर्म्माति रघूत्तमः ॥
ननु केयं भवानी या जगज्जन्मादिहेतुतया परमोपास्यतया अभिप्रेयते—इत्यादि ।

**End.** इति सकल + + यासामधु ×
प्रमोदकरी+ दिवास्वरूपा ।
रमयति च हरं शिवास्वरूपा
वितरतु वो विभवं शुभानि माया ॥

**Colophon.** इति श्रीदुर्गाभक्तिलहरी समाप्ता ।

विषयः । परस्य ब्रह्मण एव भक्तानुग्रहाय दुर्गादिरूपतया शरीरकल्पनमितिनिरूपणं । ज्ञानिभिरपि दुर्गैव सेवणीयेतिकथनं । देवीकीर्त्तनमाहात्म्यादिकथनं । देव्यास्तुर्द्दशनामादिकथनं । देव्या मायासंज्ञानिरूपणं । महामायाशब्दार्थनिरूपणं । दुर्गादर्शनफलकथनं । दुर्गाप्रणामफलकथनं । दुर्गास्मरणादिमाहात्म्यकथनं । दुर्गाभक्तमाहात्म्यकथनं । नवाङ्गभक्तिलक्षणं । शारदीयापूजाया अकरणे प्रत्यवायादिकथनं । दुर्गापूजाफलादिकथनं । प्रतिमाविशेषे पूजाफलविशेषकथनं । देव्याः कामाख्यादिविविधमूर्त्तिनिरूपणं । लक्ष्मीगङ्गागौर्य्यादीनां भिन्नत्वज्ञाने प्रत्यवायकथनं । शक्तिशक्तिमतोरभेदकथनं । दुर्गायाः नित्यत्वकथनमुखेन औपाधिकजन्मादिग्रहणकथनं । तस्याः मुक्तिहेतुत्वकथनं । हरिहरादीनां भेदज्ञाननिन्दाकथनं । परापरभेदेन द्विविधविद्यानिरूपणं । अविद्यया संसारबन्धकथनं । ब्रह्मस्वरूपनिरूपणादिकं । अविद्ययैव अखिलस्य जगतो भेदज्ञानमितिनिरूपणं । ब्रह्मणः अवतारस्वरूपादिनिरूपणं । जगत्कारणनिरूपण । ब्रह्मजीवयोर्लक्षणादिकथनं । ब्रह्मैव शिवविष्णुदुर्गादिशब्दैरभिधीयते—इति—निरूपणं ।

**No. 2483.** परिभाषादर्पणम् । Substance, country-made yellow paper, 12 × 6 inches. Folia, 55. Lines, 13—14 on a page. Extent, 2,100 ślokas. Character, Nágara. Date, Sm. 1886. Place of deposit, Calcutta, Rájá Rájendranáráyana Deva, Bahádur. Appearance, new. Prose. Correct.

**Paribháshá-darpaṇa.** A commentary on Kes'ava Mis'ra's Tarkabháshá, a glossary of the technical terms of the Nyáya. By Bháskkara Bhaṭṭa.

(प्रथमपत्रं नास्ति ।)

**Beginning.** सत्त्वादिति । विनश्यन्तोऽवतिष्ठन्त इति । तथा चानन्वयव्याप्त्याविनश्यन्तोऽवतिष्ठन्त इत्युक्तं । तथाहि केयं विनश्यता नाम विनाशाधिकरणतेति चेन्न इत्यादि ।

**End.** सामान्यविशेषव्याहत्यर्थं हेतुरसाधारणकारणमित्यर्थः ॥

**Colophon.** इति भास्करभट्टविरचितं परिभाषादर्पणं समाप्तम् । संवत् १८८६ ।

**विषयः ।** केशवमिश्रकृततर्कभाषाभिधानन्यायनिबन्धस्य व्याख्यानम् ।

---

**No. 2484.** मुद्राप्रकाशः । Substance, country-made yellow paper, 18 × 6 inches. Folia, 10. Lines, 10 on a page. Extent, 1,725 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyana Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Mudrá-prakáśa.** A commentary on the *Mudrárákshasa* of Visákhadaṭṭa. By Vaṭes'vara Misra, son of Gaurís'vara Mis'ra. A good edition of the play has just been published by Mr. Kás'inátha Trimbak Telang, of Bombay.

**Beginning.** कल्याणं कल्पवृक्षः परिचरणपरस्यापि भिक्षोः कथं स्या-
द्योगी वा तत्किमङ्गे तनुमतनगणामेष रामां विभर्त्ति ।
कण्ठहालाहलश्चेत् किममृतकिरणं वेति तर्कं जनानां
शृण्वन् स्मेराननश्रीगिरिपतितनयावल्लभो वो विधत्तां ॥
— — — — — — — — ।
श्रीमानधीत्य नयनाटककोषशब्दान्
तत्राप्युपास्य च गुरुनयमातनोति ।
मुद्राविमुद्रितनयांशुकरत्नसिन्धु-
र्गौरीपतेस्तनयमिश्रवटेश्वराख्यः ॥

प्रारिप्सितपरिसमाप्ति + + + प्रादुर्भूतं समयेष्टदेवतास्मरणात्मकं मङ्गलमाचरति स्म कविः । धन्येति । विभोर्महादेवस्य शावं वोयुष्मानव्यादितिसम्बन्धः । इत्यादि ।

**End.** मिथं चन्द्रगुप्तं प्राप्तः पुत्रकलत्रविभवैः सम मद्दद्भूतं जातं साम्प्रतं। — — — — — — — — — — — — परगुणोद्भवसुधांशुक्रमात्तेषां सम्भु पदारविन्दयुगलेऽस्माकं प्रणामाः शतं।

**Colophon.** इति महोपाध्यायगौरीश्वरात्मजमिश्रश्रीवटेश्वरविरचिते मुद्राप्रकाशे सप्तमोऽङ्कः॥ समाप्तोऽयं ग्रन्थः।

विषयः। विशाखदत्तकृतमुद्राराक्षसनाटकस्य व्याख्यानम्।

---

**No. 2485.** द्रव्यभाष्यटीका। Substance, country-made paper, 16 × 3 inches. Folia, 20. Lines, 10 on a page. Extent, 1,212 ślokhas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranaráyana Deva, Bahádur. Appearance, fresh. Prose. Correct.

**Dravya-bháshya-ṭíká.** A gloss on Prasastapáda's essay on matter viewed from a Vais'eshíka standpoint. By Bhaṭṭácharya Tarkálaṅkára.

**Beginning.** कणभक्षमुनेः पदरत्नाविन्यस्तवासनाः।
स्फूर्त्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः॥

ग्रन्थारम्भे विघ्नविघाताय कृतस्येश्वरप्रणामस्य शिष्याणां शिक्षार्थमादौ निबन्धपूर्व्वकं प्रष्टव्यक्रमभिधेयं दर्शयति प्रशस्तपादाचार्य्यः प्रणम्येति। ईश्वरं प्रणम्य अतः ईश्वरप्रणामादनु पश्चात् कणादं प्रणम्येत्यर्थः।

**End.** क्वचिददृष्टेन परिगृहीतत्वाच्च। नियतत्वादाशु सञ्चारितेत्यर्थः।

**Colophon.** इति महामहोपाध्यायभट्टाचार्य्यतर्कालङ्कारकृतद्रव्यभाष्यटीका समाप्ता।

विषयः। प्रशस्तपादाचार्य्यकृतवैशेषिकद्रव्यलक्षणभाष्यस्य व्याख्यानं।

---

**No. 2486.** प्रत्यक्षचिन्तामणिदीधितिव्याख्या। Substance, country-made paper, 15 × 3 inches. Folia, 20. Lines, 8 on a page. Extent, 760 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranaráyana Deva, Bahádur. Appearance, fresh. Prose. Correct.

**Pratyaksha-chintámaṇi-didhiti-vyákhyá.** A gloss on Raghunátha's commentary on the Pratyaksha-chintámaṇi of Gaṅgas'a. By Gadádhara (*Cf.* I., pp. 283, 293 and 298).

**Beginning.** नत्वा नन्दतनूजसुन्दरपदद्वन्द्वं गुरोरादरा-
दुर्व्वीमण्डलमण्डनायितजगत्कीर्त्तिर्विदित्वा गिरं।

संचिन्नोक्तयतिदचदीधितिकृतः प्रत्यक्षचिन्तामणे-

र्याख्यां व्याकुरुते गदाधरबुधोमोदाय विद्यावतां ॥

गुरुकीर्त्तनमङ्गलं कुर्व्वाण एव स्वीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थमुत्कर्षं दर्शयति गिरमिति। हृदये मानसे निधानं सम्बन्धसम्पादनं । इत्यादि ।

**End.** एकस्य गुणविशेषत्वे व्योमसंयोगादौ व्यभिचारतादवस्थ्यादिति । (अतः खण्डितं ।)

विषयः । गङ्गेशोपाध्यायकृततत्त्वचिन्तामणीयप्रत्यक्षखण्डस्य रघुनाथशिरोमणिकृतदीधिति-नामटीकाया व्याख्यानम् ।

---

**No. 2487 त्रिपुरार्चनरहस्यम् ।** Substance, country-made yellow paper, 19 × 5 inches. Folia, 29. Lines, 10 on a page. Extent, 1,050 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyana Deva, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Tripurárchana-rahasya.** A manual for the worship of Tripurá. By Brahmánanda. The goddess is looked upon as a form of Durgá and sovereign of the three regions of the universe. The ritual is simple, and not tainted by any of the orgies of Kaula worship.

**Beginning.** सहस्रारस्थितं शुक्लं ब्रह्मानन्दं निजं गुरुं ।

रक्तम्बया युतं वन्दे भोगमोक्षप्रदं शिवं ॥

माया श्रीः कामयोनिश्च शक्तिः षट्कूटमेव च ।

शक्त्यादि + वराद्येन मायाबीजादिषोड़शीं ॥

— — — = — — — ।

ब्राह्मे मुहूर्त्ते शय्यायामेवोपविश्य शिरसि सहस्रदलकमले वराभयोपेतं द्विभुजं धवलं—इत्यादि ।

**End.** इति गुरुं संप्रार्थ्य स्तोत्रकवचसहस्रनामादिकं पठित्वा यथासुखं विहरेदिति ।

**Colophon.** इति ज्ञानार्णवे दक्षिणामूर्त्तिसंहितासम्प्रदायानुसारतो ब्रह्मानन्दविरचिते श्रीत्रिपुरार्चनरहस्ये वाह्यार्चनानुत्तरतरङ्गः समाप्तः ।

विषयः । तत्रादौ देशिकानां ब्राह्ममुहूर्त्ते कर्त्तव्यविधानं । गुरुपूजाविधिः । अजपाजप-विधिः । स्नानविधिः । तर्पणविधिः । त्रिपुरायागविधिः । त्रिपुरायाः पूजापद्धतिकथनं । तत्र गणेशन्यास-योगिनीन्यासादिविविधन्यासनिरूपणं । चक्रसिंहासनोपरिस्थितायास्त्रिपुरसुन्दर्य्याः पूजायां प्रयोजनादिकथनं । कुलदीपविधिकथनं । शान्त्यष्टककथनञ्च ।

---

**No. 2488.** कात्यायनीतन्त्रम् । Substance, country-made yellow paper, 19 × 5 inches. Folia, 4. Lines, 8 on a page. Extent, 104 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Kátyáyaní-tantra.** An original Tantra on the worship of Kátyáyaní, a form of Durgá.

श्रीपार्व्वत्युवाच ।

**Beginning** श्रुता कात्यायनीविद्यासमुत्पत्तिस्त्रिलोचन ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः ।
तत्सर्व्वं ब्रूहि भगवन् कृपया परमेश्वर ॥ इत्यादि ।

**End.** इति ते कथितं देवि संक्षेपेण तवाग्रतः ।
महादुर्गाजगद्धात्रीविद्योत्पत्तिः सुदुर्लभा ॥

**Colophon.** इति कात्यायनीतन्त्रे तृतीयः पटलः ।

विषयः । जगद्धात्रीदुर्गाया आविर्भावविवरणकथनं । तत्र धर्म्मसेतूनां रक्षणाय प्रादुर्भूतायास्तस्याः पुरतोऽनिलानलयोस्तृणमात्रपरिचालनदाहनसामर्थ्याभावकथनं । जगद्धात्र्याः स्वरूपवर्णनं । तस्य मन्त्रध्यानादिनिरूपणं । तिथ्यादिविशेषे तस्याः पूजने फलविशेषकथनञ्च ।

---

**No. 2489.** कालादर्श, वा कालनिर्णयः । Substance, country-made paper, 14 × 5 inches. Folia, 23. Lines, 90 on a page. Extent, 437 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Verse. Incorrect.

**Káládarśa** ALIAS **Kála-nirṇaya.** On times meet for religious observances,—a digest of the rules of the Smṛiti on the subject. By Kavivallabha *alias* Áditya Súri, of the Garga race, and disciple of Vis'-ves'vara Áchárya.

**Beginning.** ब्रह्मादयोयद्दशमा युगादि-
कालप्रभेदाश्च यदीयभेदाः ।
कालात्मकं साम्बकमूर्त्तयेऽहं
नित्याय तस्मै नियतं नतोऽस्मि ॥
वाणीगणेशावमरेन्द्रमौलि-
माणिक्यनीराजितपादपद्मौ ।

अविघ्नमाविष्कृतभक्तलोक-
मनोरथावन्वहमानमामि ॥
विश्वेश्वराचार्य्यपदारविन्द-
प्रणामविस्तारितवाग्विलासः ।
आदित्यसूरिः स्मृतितत्त्वदर्शी
कालं विनिर्णेष्यति मन्दबुद्धेः ॥
कालो विधिबलाद्दर्शपूर्णमासादिकर्म्मसु ।
अङ्गत्वेनेष्यते तस्मादसौ निर्णीयते मया ॥
उपाधिभेदादेकोऽपि भवेत्कालो ह्यनेकधा । इत्यादि ।

**End.** दृष्ट्वा पुरातनपुराणवचांसि विशेष-
मन्वादिकस्मृतिवचांसि विविच्य तत्त्वं ।
संवत्सरागमवचांसि च कालतत्त्वं
निर्णीयतेऽस्य कृतिना कविवल्लभेन ।
इति यज्ञकालनिर्णयः ।

**Colophon.** इति श्रीमहामहोपाध्यायविश्वेश्वराचार्य्यशिष्यस्य गर्गकुलतिलकस्य कविवल्लभापरनाम्नः आदित्यसूरेः कृतिः कालादर्शो नाम कालनिर्णयः समाप्तः ।

विषयः । एकोऽपि काल उपाधिभेदादनेकविध इति निरूपणं । कर्म्मविशेषे सावनसौर-चान्द्रादिमासविशेषविधानकथनं । क्षयादितिथिव्यवस्थाकथनं । कर्म्मविशेषे परपूर्व्वान्वितानां तिथीनां पूज्यकालविशेषनिरूपणं । तथा विशेषेण शिवरात्रिजन्माष्टमीप्रभृतिषु व्यवस्था-कथनं । उपवासविधिकथनं । विस्तरत एकादशीव्रतोपवासविधिनिरूपणं । पारणविधिकथ-नञ्च । अन्वाधानयागारम्भादौ पर्व्वद्वयनिरूपणं । अमानिर्णयः । मन्वन्तरादिनिरूपणं । युगादि-निरूपणं । महालयानिरूपणं । गजच्छायानिरूपणं । तत्र तत्र श्राद्धविधानञ्च । अष्टकानिर्णयः । प्रत्याब्दिककालादिनिरूपणं । मासिकनिर्णयः । आद्यश्राद्धकालनिरूपणं । एवं सपिण्डीकरण-निर्णयः । एकोद्दिष्टनिर्णयः । नैमित्तिकश्राद्धनिर्णयः । काम्यश्राद्धनिर्णयः । प्रकीर्णश्राद्धविशेषका-लादिनिर्णयः । नक्षत्रयोगविशेषे श्राद्धनिर्णयः । (अतः पत्रमेकं खण्डितं) । उपाकर्म्मादिकाल-निर्णयः । नागपूजादिकालनिरूपणं । दुर्गायाः रथारोहणकालकथनं । प्रातःस्नानादिकाल-निरूपणं । ग्रहणे स्नानादिकालनिर्णयः । संक्रान्तिनिर्णयः । मलमासकर्त्तव्यकर्म्मकालनिरूपणं । अकालनिरूपणं । नदीरजोदोषनिर्णयः । अनध्यायकालनिरूपणं । गर्भाधानादिकालनिरूपणं । वेदव्रतकालादिनिरूपणं । गृहारम्भप्रवेशादिकालनिरूपणं । देवारामतडागादिप्रतिष्ठाकाल-निरूपणं । यज्ञकालनिरूपणञ्च ।

---

**No 2490.** आनन्दलहरीटीका। Substance, country-made paper, 12 × 5½ inches. Folia, 95. Lines, 5—6—8—9 on a page. Extent, 1,309 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Prose. Incorrect.

**A'nandalaharí-ṭíká.** A commentary on S'aṅkara's well-known S'ivite hymn entitled 'A'nandalaharí.' By Gaurikánta Sárvabhauma, Bhaṭṭácharya, a S'rotriya Bráhmaṇ of the Rádha sept of Gauḍa.

**Beginning.** ओङ्कारोत्तमरम्यहर्म्यनिलयां प्रासादमध्यस्थितां
मायाख्यां भुवनेश्वरीं निरुपमां ब्रह्मादिभिर्वन्दितां
योगीन्द्रैकनिषेवितां त्रिजगतां + + तिनाशस्थलीं
ज्ञानानन्दमयीं महोदयकरीं काञ्चिद्भजे देवतां ॥
— — — — — — — —।
गौरीकान्तसार्व्वभौमभट्टाचार्य्यस्सुधीरिमां।
आनन्दलहरीटीकां तनुते विदुषां मुदे॥

शिष्टाचारपरिप्राप्तं प्रारिप्सितविघ्नविघातप्रयोजनकं शिवशक्तिस्मरणरूपं मङ्गलं कृत्वा शिष्यान् शिचयित्वा — — — स्तुतिकरणे सत्त्वासम्भावनां प्रकाशयति॥ शिव इति। शिवश-ब्दस्यार्थस्मरणद्वारा—इत्यादि।

**End.** यो नानाविधशास्त्रतर्कनिपुणश्चक्रे निबन्धान् बहून्
पूजां भूरि महीभुजां सदसि यो लेभेऽति धीमान् कविः।
यो गौड़ोत्तरदेशदिग्गज इह श्रीसार्व्वभौमो महान्
भट्टाचार्य्य इमां स एष विदधे टीकां मुदे वाग्विदां॥

**Colophon.** इति गौड़ीयराढ़ान्वयसच्छ्रोत्रियवंशजगौरीकान्तसार्व्वभौमभट्टाचार्य्यवि-रचिता आनन्दलहरीटीका समाप्ता।

विषयः। शङ्कराचार्य्यविरचितानन्दलहर्य्या व्याख्यानम्।

---

**No. 2491.** आनन्दलहरीटीका। Substance, country-made paper, 16 × 6 inches. Folia, 32. Lines, 10 on a page. Extent, 1,400 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Correct.

**A'nandalaharí-ṭíká.** Another commentary on the A'nandalaharí. By Gopíramaṇa Tarkapanchánana.

**Beginning.** श्रीमत्त्रिपुरसुन्दरीं पद्यनिबन्धेन स्तुवन्नाचार्य्यः प्रत्यूहव्यूहनिरासाय मङ्गलार्थकशब्दस्यापि मङ्गलत्वेन ग्रन्थारम्भे शिवपदोपादानेन मङ्गलमाविष्कुर्व्वन् आह । शिवः शक्त्येति । अस्यार्थः । त्वामिति द्वितीयान्तपदप्रतिपाद्यस्य सम्बोध्यस्य सम्बोधनान्तपदव्यतिरेकेण उपस्थित्यसम्भवात् शिवपदश्रवणाच्च हे शिवे इति सम्बोधनपदमूह्यं ॥

**End.** यत्परं ग्रन्थनिर्म्माणकौशलेनार्ज्जितं मया ।
तेनार्पितेन पद्योः प्रीयतां परमेश्वरी ॥

**Colophon.** इति माहामहोपाध्यायश्रीगोपीरमणतर्कपञ्चाननभट्टाचार्य्यकृतानन्दलहरीटीका समाप्ता ।

विषयः । शङ्कराचार्य्यविरचितानन्दलहर्य्या व्याख्यानम् ।

---

**No 2492.** छन्दोमञ्जरीटीका । Substance, country-made yellow paper, 17 × 5 inches. Folia, 29. Lines, 10 on a page Extent, 1,067 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Chhandomanjarí-ṭiká.** A commentary on the Chandomanjarí of Gaṅgádása, a treatise on versification. By Govardhanadása, a Vaidya.

**Beginning.** गङ्गादासकवेः कवेर्मधुलिहः संकल्पकल्पद्रुमा-
न्निर्मीता सुमनोविलासजननी या छन्दसां मञ्जरी ।
सास्माकं वशगा कथं भवति भोः शिष्यानुरोधादिति
श्रीगोवर्द्धनदासनामभिषजैः प्रारम्भि तत्पञ्जिका ॥
— — — — — — — — — — ।

इह छन्दोग्रन्थारम्भे तदन्तरायनिरासाय कविर्गङ्गादासनामा भिषक् शिष्टानुशिष्टं स्वेष्टदेवताप्रणामं प्राक् प्रतिपादयन् आह देवं प्रणम्येत्यादि ।

**End.** गङ्गादासकवेरिति पूर्व्वेण सम्बन्धः । इति षष्ठः स्तवकः ।

**Colophon.** इति सद्वैद्यगोवर्द्धनदासकृता छन्दोमञ्जरीटीका समाप्ता ।

विषयः । गङ्गादासकृतच्छन्दोमञ्जरीग्रन्थस्य व्याख्यानम् ।

---

**No. 2493.** अध्यात्मप्रदीपः, वा अष्टावक्रटीका । Substance, country-made yellow paper, 18 × 5 inches. Folia, 40. Lines, 9—10 on a page. Extent, 1,404 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose. Incorrect.

**Adhyátma-pradípa** ALIAS **Ashṭávakra-ṭíká**. A commentary on the Ashṭávakra-sañhitá, a treatise, on emancipation by intellectual Yoga. The original is attributed to a saint named Ashṭávakra, the comment is by Vis'ves'vara.

**Beginning.** यदज्ञानाज्जगज्जातं यद्विज्ञानाद्विलीयते ।
तं नत्वा सच्चिदानन्दं कुर्व्वेऽध्यात्मप्रदीपकं ॥

इह तावदात्मानन्दानुभवपरिपूर्णः परिपूर्णीकृतानेकशिष्यत्वात् परमकारुणिकोऽभगवानष्टावक्रो मुनिः सकलमुमुक्षुजनमुद्दिधीर्षुः शिष्यं प्रति मोक्षोपायमादिशति मुक्तिमिच्छसिचेदित्यादिना ।

**End.** तस्य ग्रन्थस्य संख्याक्रमो विद्यते येसु
ते संख्याक्रमा ईदृशा अमी कथिता इत्यर्थः ।

**Colophon.** इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां संख्याक्रमादिकव्याख्यानं नाम एकविंशप्रकरणं । समाप्तेयं टीका ।

**विषयः ।** अष्टावक्रकृताध्यात्मयोगग्रन्थस्य व्याख्यानम् ।

---

**No. 2494.** शीघ्रबोधभूषणम्, (द्वितीयकाण्डम्) । Substance, country-made yellow paper, 18 × 5 inches. Folia, 51. Lines, 8 on a page. Extent, 1,600 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose and verse. Incorrect.

**S'íghrabodha-bhúshaṇa**. Lessons on versification, rhetoric, &c., for the benefit of persons wishing to write poetry—a vademecum for young poets. By S'ivaprasáda Upádhyáya.

अथ द्वितीयकाण्डनिरूपणं ।

**Beginning.** काव्यव्यवहारकथनं सोदाहरणं निरूप्यते । चतुर्भिश्चरणैर्बद्धं छन्दः पद्यं निगद्यते । अन्यथा गद्यते गद्यं काव्यज्ञैः काव्यवर्त्मसु ॥ इत्यादि ।

**End.** ताम्बूलं गृहाण भूदेव वस्त्राभरणमुत्तमं ।
सम्यगाद्य फ + + + ग्रन्थकृद् वशविहतौ (?)

**Colophon.** इति शीघ्रबोधभूषणे शिवप्रसादोपाध्यायकृते काव्यव्यवहारकथने द्वितीयकाण्डं समाप्तम् ॥

**विषयः ।** अत्रादौ छन्दोनिरूपणं । तत्र मर्कटीमेरुपताकादिनिरूपणञ्च । अथ अलङ्कारनिरूपणं । तत्र प्रश्नोत्तर-यमक-चित्र-गूढ़-प्रहेलिका-श्लेष-वक्रोक्ति-अनुप्रासरूपशब्दालङ्कारप्रभे-

इभिरूपणं । उपमा-रूपक-उत्प्रेक्षा-समासोक्ति-अपह्नुति-समाहित-स्वभावोक्ति विरोध-सार दीपक-सहोक्ति-अन्यदेशत्व विशेषोक्ति-विभावनारूपार्थालङ्कारकथनं। अथ अर्थदोषनिरूपणं। शब्ददोषादिनिरूपणं । त्रिविधरीतिनिरूपणं । अलङ्कारदोषनिरूपणं । कविलक्षणकथनं। अथ कविशिक्षाकथनं । पद्यरचनाविधिकथनं । तत्र तत्र वर्णनीयकथनञ्च ।

---

**No. 2495.** स्मृत्यर्थसारः। Substance, country-made paper, 15 × 4 inches. Folia, 134. Lines, 9—10 on a page. Extent, 3,475 ślokas. Character, Nágara. Date, Sm. 1834. Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Smrityarthasára.** A digest of the rules of the Smṛiti regarding domestic rites and observances. Anonymous.

**Beginning.** गणेशब्रह्मविष्ण्वीशानम्बा+लोकपान् ग्रहान्।
दुर्गां मन्वादिकान् वन्दे व्याख्यातॄंश्च सदा गुरून्॥
श्रीकण्ठश्रीकराद्यैश्च श्रुतिस्मृतिपुराणगैः।
स्मृतिशास्त्रेष्वनेकेषु विप्रकीर्णेष्वनेकधा॥
अनुष्ठानोपकारार्थं स्मृतिच्छिन्नं प्रयत्नतः॥
पुराणन्यायमीमांसासाङ्गवेदैः प्रपूरितं॥
कामधेनौ प्रदीपेऽथो कल्पवृक्षलतादिषु।
शम्भुद्रविड़केदारलोल्लटाद्यैश्च भाषितं॥
मन्वाद्यनेकस्मृतिषु व्याख्यातॄप्रतिपादितं।
स्मृत्यर्थसारं वक्ष्यामि सुखानुष्ठानसिद्धये॥
प्राची दिशामनुक्तौ स्यादुदीचीशानदिक् तथा। इत्यादि।

**End.** यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतं॥
अज्ञानादथवा लोभात् प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णमिति हि श्रुतिः॥
इति वचनात्।

**Colophon.** इत्यादि स्मृत्यर्थसारः समाप्तः। स्वस्ति। संवत्। १८३४॥

विषयः। तत्रादौ स्मार्त्तपरिभाषाकथनं। युगधर्मकथनं। तत्रादिपुराणोक्तानि कलौ निषिद्धानि। अथ गर्भाधानादिषोड़शसंस्कारकथनं। तत्र गर्भाधानविधिः। पुंसवनविधिः। अन

षलोभनविधिः। सीमन्तोन्नयनविधिः। जातकर्म्मविधि। नामकरणविधिः। निष्क्रमणविधिः। अन्नप्राशनविधिः। चौलविधिः। उपनयनविधिः। सावित्रीव्रतविधिः वेदाव्दव्रतविधिः। आरण्यकव्रतविधिः। गोदानविधिः। विवाहविधिः। अन्त्येष्टिविधिः। कस्यचिन्मतानुसारेण मूकोन्मत्तयोः संस्कारकरणाभावकथनं। क्वचित् कुण्डगोलकयोरपि संस्कार्य्यताकथनं। उपवीतनिरूपणं। अभिवादनविधिकथनं। तत्र गुरुनिरूपणं। अनध्यायकालनिरूपणं। ब्रह्मचारिकर्त्तव्यानि। अथ विशेषेण विवाहेतिकर्त्तव्यताविधिनिरूपणं। तत्र गोत्रप्रवरनिरूपणं। आह्निककार्य्यनिरूपणं। तत्र मूत्राद्युत्सर्गविधिः। शौचविधिः। आचमनविधिः। तन्निमित्तानि। दन्तधावनविधिः। स्नानविधिः। वस्त्रपरिधानविधिः। सन्ध्याविधिः। होमविधिः। दर्भविधिः। वह्निविधिः। स्रुक्स्रुवविधिः। देवतार्च्चनविधिः। माध्यन्दिनस्नानविधिः। देवयज्ञविधिः। पितृयज्ञविधिः। श्राद्धविधिः। श्राद्धकालनिरूपणं। ब्राह्मणनिरूपणं। अमावास्यापार्व्वणविधिः। तत्र पुष्पादिनिरूपणं। एकोद्दिष्टविधिः। सपिण्डीकरणविधिः। वैश्वदेवविधिः। संक्रान्तिनिरूपणं। तत्र पर्व्वनिरूपणं। एकादश्युपवासनिरूपणं। तिथ्यन्तरोपवासनिर्णयः। मलमासे कर्त्तव्यनिर्णयः। भक्ष्याभक्ष्यनिरूपणं। भोजनविधिः। शयनादिविधिकथनञ्च। अथ विस्तरेण द्रव्यशुद्धिनिरूपणं। शरीरशुद्धिविधिः। स्पृष्टास्पृष्टशुद्धिः। अथ अशौचनिरूपणं। तत्र विशेषेण जननमरणाशौचादौ व्यवस्थाकथनं। नारायणबलिविधिः। तत्र सर्पहते विशेषकथनं। आद्यश्राद्धविधिः। अथ सन्न्यासग्रहणविधिः। परिव्राजकस्य संस्कारविधिः। सन्न्यासिनां दहनविधिः। अथ प्रायश्चित्तविधिनिरूपणं। तत्र कर्म्मविपाककथनं। महापातकातिपातकानुपातकोपपातकप्रायश्चित्तकथनं। एवं सङ्करीकरणापात्रीकरणादिप्रायश्चित्तकथनं। अथ विशेषेण ब्रह्महत्याप्रायश्चित्तनिरूपणं। सुरापानप्रायश्चित्तं। मद्यपानप्रायश्चित्तं। सुवर्णस्तेयप्रायश्चित्तं। रत्नस्तेयप्रायश्चित्तं। गुरुतल्पप्रायश्चित्तं। महापातकिसंसर्गिप्रायश्चित्तं। अथ गर्भिणीवधप्रायश्चित्तं। गोवधप्रायश्चित्तं। व्रात्यप्रायश्चित्तं। सामान्यस्तेयप्रायश्चित्तं। ऋणापाकरणप्रायश्चित्तं। अपण्यानां विक्रयप्रायश्चित्तं। परिवेदनप्रायश्चित्तं। पारदार्य्यप्रायश्चित्तं। स्त्रीवधप्रायश्चित्तं। हकलासादिहिंसाप्रायश्चित्तं। वृक्षगुल्मलतादीनां फलपुष्पादिभिरुपयोगिनीनां छेदे प्रायश्चित्तं। कुक्कुरादिदंशने प्रायश्चित्तं। व्रणादौ कृमिजनने प्रायश्चित्तं। व्रतलोपप्रायश्चित्तं। अवकीर्णिप्रायश्चित्तं मिथ्याभिशंसने प्रायश्चित्तं। रजस्वलास्पर्शप्रायश्चित्तं कन्यापुत्रयोर्विक्रये प्रायश्चित्तं अयाज्ययाजनप्रायश्चित्तं। अशुच्यध्ययने प्रायश्चित्तं। अग्निहोत्रत्यागादिप्रायश्चित्तं। विरुद्धवृत्तिकरणप्रायश्चित्तं। समुद्रयानादिप्रायश्चित्तं। असत्प्रतिग्रहप्रायश्चित्तं। अभक्ष्यभक्षणप्रायश्चित्तं। भावदुष्टकालदुष्टभक्षणादिप्रायश्चित्तं। अशौचान्नभक्षणप्रायश्चित्तं। जातिभ्रंशकरप्रायश्चित्तं। प्रकीर्णकप्रायश्चित्तकथनञ्च। तत्र नीलीवस्त्रधारणशक्रचापदर्शनादिप्रायश्चित्तकथनं। रहस्यपापप्रायश्चित्तकथनं। कृच्छ्रचान्द्रायणादिलक्षणकथनं। तीर्थविधिकथनं। सर्व्वप्रायश्चित्तोपसंहारकथनञ्च।

**No. 2496.** हनूमत्संहिता । Substance, country-made yellow paper, 18 × 4 inches. Folia, 11. Lines, 8 on a page. Extent, 360 ślokas. Character, Bengali. Date, Sk. 1715. Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Verse. Generally correct.

**Hanumat-sañhitá.** A poem describing Ráma's arcadian recreations with Sítá. Among other incidents it describes a curious manifestation of eighteen thousand one hundred and eight nymphs from the person of Sítá, with all of whom Ráma engages in dalliance. By Hanumán.

**Beginning.** जयत्यनन्ताद्भुतसङ्करप्रियो-
महाबली वीरवली सखाग्रणीः ।
प्रचण्डमार्त्तण्डसहस्ररश्मिः (कान्तिः)
श्रीरामपादद्वय एकतानः ॥
कुम्भोद्भवायाम्बुधिशोषणाय
विशुद्धविज्ञानशुभप्रदाय ।
श्रीरामपादद्वयनिश्चिताय
महामुनीन्द्राय नमो नमस्ते ॥
श्रीअगस्त्य उवाच ।
श्रुतं रामस्य माहात्म्यं तव वक्त्रान्महाकपे ।
ऐश्वर्य्यमतुलं तेजः प्रभावं परमात्मनः ॥
— — — — — — ।
श्रीहनूमानुवाच ।
साधु पृष्टोऽसि ब्रह्मर्षे
मनसैवेति निश्चितं ।
गुह्याद्गुह्यतरं दिव्यं
तव प्रीत्या वदाम्यहं ॥ इत्यादि ।

**End.** श्रीहनूमद्दषेः काव्यं श्राव्यं भाव्यं सदैव हि ।
तस्मिन् ससीतो रामोऽपि तुष्टो भवति नान्यथा ॥

**Colophon.** इति श्रीहनूमत्संहितायां परमरहस्ये महारासरसोत्सवे पञ्चमोऽध्यायः ।
बाणेन्दुमुनिभूमौ हि शाके श्रीरामसुन्दरः ।
ऊर्ज्जकृष्णद्वतीयायामलेखीद्रासरासकं ॥

विषयः। एकदा समानरूपगुणाभिः सह सहचरीभिः सरयूकूलोपवनं प्रस्थितया सीतया-समं रामचन्द्रस्य रासोत्सववर्णनं। वनशोभावर्णनं। विलासिनीनां विलासकलापवर्णनं। सरयूमाहात्म्यवर्णनं। रामेण सह विलासार्थं सीताशरीरात् सार्द्ध त्रिशतशताद्यसहस्रकामिनीप्रादुर्भावकथनं। अथ रामोऽपि ताभिः सह विहर्त्तुं स्वात्मरूपान् पुरुषान् ससर्ज्जेति वर्णनञ्च। कामिनीनां विविधविलासवर्णनं। जलविहारवर्णनं। पद्मदले महारासोत्सवशोभवर्णनं। रामरासोत्सवश्रवणादिमाहात्म्यकथनञ्च।

---

**No 2497. सिद्धान्तविन्दुलघुटीका।** Substance, country-made paper, 18 × 3 inches. Folia, 61. Lines, 9—10 on a page Extent, 2,778 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Rájá Rájendranáráyaṇa Deva, Bahádur. Appearance, fresh. Prose. Correct.

**Siddhánta-vindu-laghu-ṭíká.** A short commentary on the Siddhántavindu—a dissertation on the Vedántic doctrine, written by Madhusúdana Sarasvati in the form of an exposition of Saṅkara's compendium of the Vedánta in ten stanzas called *Daśaśloki.* By Náráyaṇa Tírtha. Hall's Contributions, p. 109.

**Beginning.** श्रीशं शान्तमनन्तमद्वयसुखं स्वाध्यस्तसत्ताप्रदं
नत्वाचार्य्यवरं गुरुंश्च सततं सिद्धान्तविन्दोर्गिरः।
सत्प्रीत्यै श्रुतिमुख्यमाननिवहैः सिद्धान्तसंग्राहिका
दुर्व्वोधाः प्रकटीकरोति मतिमान् नारायणाख्यो यतिः॥
परमात्मा परं ब्रह्म निर्व्विशेषः स्वसाक्षिकः।
सच्चित् सुखघनोऽद्वैतोऽन्तताधिष्ठानकारणं॥
तद्भेदभिया स्वस्य जाग्रत्स्वप्नादिसाक्षिणः।
स्वाध्यस्तानर्थविलयान्मोक्षस्तद्रूपसंस्थितिः॥
इति वेदान्तसिद्धान्तो भगवत्पादसम्मतः।
कृष्णद्वैपायनाभीष्ट इति सन्तोऽत्र सादराः।
एको वशी सर्व्वभूतान्तरात्मा
एकं रूपं वहुधा यत्करोति।
तमात्मस्थं ये नु पश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषां॥

ब्रह्मविदाप्नोति परंब्रह्म विद्ब्रह्मैव भवतीत्यादिश्रुत्या — — — — — ग्रन्थारम्भं प्रतिजानीते, श्रीशङ्करेत्यादि।

**End.** कृत्यथतदनुकूलतर्काणां श्रीमदाचार्यपरम राप्राप्तत्वभूत्त्वादितिभावः अतोऽयं भाष्यभारतीविवरणाद्यपेक्षया कठिनरूपं तन्मन्येव न गुरोरित्यर्थः ।

**Colophon.** इति श्रीनारायणतीर्थकृता सिद्धान्तविन्दुलघुटीका समाप्ता ।

विषयः । मधुसूदनसरस्वतीकृतसिद्धान्तविन्दुनामक वेदान्तप्रकरणस्य व्याख्यानम् ।

---

**No. 2498.** शब्दप्रामाण्यखण्डनम् । Substance, country-made paper, 15 × 6 inches. Folia, 12. Lines, 6 on a page. Extent, 155 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇághát, Zillá Nadiyá. Kálidása Bhaṭṭáchárya. Appearance, fresh. Prose. Correct.

**S'abdaprámáṇya-khaṇḍana.** A refutation of the Vais'eshika doctrine of authentic speech not being a distinct class of evidence, as the Naiyáyikas believe, but only a form of inference. By Vaṅs'idhara.

**Beginning.** नमो भगवते तस्मै विष्णवे परमात्मने ।
रूपनामविभेदेन जगत् क्रीड़ति यो यतः ॥

अथ शब्दो न स्वातन्त्र्येण प्रमाणं । लिङ्गप्रमाणात् तदर्थसिद्धेर्नातिरिक्तं प्रमाणं कल्प्यते गौरवात् । इत्यादि ।

**End.** असतः शशशृङ्गवज्ज्ञानासम्भवेन तस्यासिद्धत्वादित्यर्थः । इत्यास्तां विस्तरः ।

**Colophon.** इति वंशधरीये शब्दप्रामाण्यखण्डनं ।

विषयः । वैशेषिकमतेन शब्दस्यानुमानान्तर्गतत्वनिरूपणमुखेन तस्य पृथक्प्रामाण्यखण्डनं ।

---

**No. 2499.** अद्वैतचन्द्रिका । Substance, country-made paper, 16 × 4 inches. Folia, 48. Lines, 7 on a page. Extent, 1,155 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇághâṭ, Zillá Nadiyá. Kálidása Bháṭṭáchárya. Appearance, fresh. Prose. Correct.

**Advaita-chandriká.** An essay on the adual Vedánta doctrine, and refutation of adverse theories. By Ananta Bhaṭṭa. This appears to be quite distinct from a work of this name by Brahmánanda Sarasvatí. *Cf.* Hall's Contributions, p. 157.

**Beginning.** पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययं ।
प्रणम्य परमात्मानं क्रियतेऽद्वैतचन्द्रिका ॥

अथ खल्वात्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्य इतिवाक्येन वेदान्तश्रवणं साक्षाद्विधीयते—इति चेन्न, विधित्वप्रयोजकरूपसम्पत्त्यभावात् । तथाहि वेदान्तश्रवणं नापूर्व्वविधिगोचरः प्राप्तत्वात् । इत्यादि ।

**End.** तस्माच्छ्रुत्या युक्त्या बहूनां वचनाच्च जीवस्य सच्चिदानन्दनित्यशुद्धबुद्ध-मुक्तस्वरूपता सिद्धेति भावः ।

**Colophon.** इति श्रीमदनन्तभट्टकृता अद्वैतचन्द्रिका समाप्ता ।

विषयः । विविधवादखण्डनपूर्व्वकमद्वैतवादोपपादनं ।

---

**No. 2500.** स्मृतिरत्नम् । Substance, country-made paper, 15 × 4 inches. Folia, 215. Lines, 9 on a page. Extent, 8,305 ślokas. Character, Bengali. Date, Sk. 1699. Place of deposit, Ulá, Post, Ráṇághát, Zillá Nadiyá, Kálidása Bhaṭṭáchárya. Appearance, decayed. Prose and verse. Generally correct.

**Smṛiti-ratna.** A digest of the Smṛitis regarding domestic rites, duties, and observances. By Raghunátha Bhaṭṭa.

**Beginning.** नत्वा कृष्णपदद्वन्द्वं द्वन्द्वज्ञानविनाशनं ।
क्रियते रघुनाथेन स्मृतिरत्नं प्रयत्नतः ॥

तत्रादौ स्मृतेः प्रामाण्यं विविच्यते । तत्र जैमिनिसूत्रं अपि वा कर्त्तृसामान्यात् प्रमाणमनुमानं स्यादिति । अस्यार्थोभाष्यकारमतानुसारेण प्रदर्श्यते । इत्यादि ।

**End.** सुस्थः स्वल्पोपचारेण दुःस्थः शक्त्याद्यपेक्षया ।
यत्नतः पूजनीयास्ते पूजिताश्चेत् शुभावहाः ॥
इति मत्स्यपुराणवचनात् ।

**Colophon.** इति महामहोपाध्यायश्रीरघुनाथभट्टविरचिते स्मृतिरत्ने तिथ्यादिप्रभा-समाप्ता । शकाब्दाः १६९९ ।

विषयः । स्मृतिप्रामाण्यनिरूपणं । धर्म्मस्वरूपविवेचनं । विधिस्वरूपादिनिरूपणं । नियम-परिसंख्यादिविवेचनं । अधिकरणस्वरूपादिकथनं । कालनिरूपणं । तिथ्यादिस्वरूपविवेचनं । तिथिद्वैधविवेचनं । तत्र तत्र विहितकृत्यविधानकथनञ्च । उपवासविधिकथनं । जन्माष्टमी-विधिकथनं । एकादश्यादिविधिकथनं । नवरात्रविधिकथनं । मन्वन्तरानिरूपणं । युगाद्याकथनं । संक्रान्तिनिरूपणं । मलमासक्षयमासादिविवेकः । अशौचनिरूपणं । अस्पृश्यत्वादि-निरूपणं । दत्तकाशौचादिनिरूपणं । अशौचाभावकथनं । सहमरणानुमरणविधिकथनं । देशान्तरमृतस्य प्रेतत्वाद्यवधारणविधिकथनं । पर्णनरदाहविधिः । उत्तरक्रियाधिकारिनिरू-पणं । अशौचान्तदिनकृत्यादिनिरूपणं । वृषोत्सर्गादिविधिः । चन्दनधेनुदानादिविधिः । सपि-ण्डीकरणादिकालनिरूपणं । पार्व्वणादिविधिकथनं । तीर्थश्राद्धादिकालनिरूपणं । अष्टकादि-श्राद्धकालनिरूपणादिकं । श्राद्धे विहिताविहितद्रव्यनिरूपणं । अद्भुतनिरूपणं । ग्रहयागादिवि-धिकथनञ्च ।

---

**No. 2501.** कालकौमुदी। Substance, country-made paper, 16 × 4 inches. Folia, 128. Lines, 9 on a page Extent, 5,143 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇághát, Zillá Nadiyá, Kálidása Bhaṭṭácharya. Appearance, fresh. Prose and verse. Incorrect.

**Kála-kaumudí** On times meet for religious rites and observances. By Gopála Bhaṭṭa, son of Harivaṅs'a Bhaṭṭa.

**Beginning.** वन्दे विश्वेश्वरं देवं भुक्तिमुक्तिप्रदायकं।
मातरं पितरं नत्वा निर्व्विघ्नेप्सितसिद्धये॥
श्रीमद्गोपालभट्टेन द्रविड़ान्वासुपर्व्वणा।
क्रियते विदुषां प्रीत्यै रम्या समयकौमुदी॥

अथ कालविवेचनं। तत्र कालो नित्यानित्यभेदेन द्विविधः। नित्यस्तु भगवद्रूपतया अतिरिक्तकालवादिभिः स्मर्य्यते। तथा च विष्णुपुराणं। कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तते। तथा, अनादिरेव भगवान् कालोऽनन्तोऽजरोऽमरः। इति—इत्यादि।

**End.** इति वचनाद् गुरुशिष्ययोरन्तरागमने अहोरात्रमनध्याय इति।

**Colophon.** इति हरिवंशभट्टचरणशरणगोपालभट्टकृता कालकौमुदी समाप्ता।

विषयः। नित्यानित्यभेदेन द्विविधकालनिरूपणं। प्रातःकृत्यादिकालनिरूपणं। तर्पणसन्ध्यावन्दनवलिकर्म्मभोजनादिकालनिरूपणं। शयनादिकालनिरूपणं। गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणपर्य्यङ्कारोपणदुग्धपाननिष्क्रमणरव्यवलोकनभूम्युपवेशनान्नप्राशनविद्यारम्भचूड़ोपनयनसमावर्त्तनविवाहकालनिरूपणं। समयाशुद्धिविवेचनं। मलमासादिविवेचनं। तिथिद्वैधव्यवस्थाकथनं। शुक्लप्रतिपदादिदर्शान्ततिथिविशेषे प्रत्येकं व्यवस्थानिरूपणं। हरिशयनादिकालनिरूपणं। नक्तव्रतादिकालनिरूपणं। एकभक्तादिव्रतकालनिरूपणं। उपाकर्म्मकालनिरूपणं। नवरात्रपूजाकालविवेचनं। श्राद्धकालविवेचनं। महालयापरपक्षश्राद्धादिकालनिरूपणं। एकोद्दिष्टसपिण्डीकरणादिकालनिरूपणं। जन्माष्टम्यादिकालनिरूपणं। एकादश्याद्युपवासतत्पारणादिकालनिरूपणं। द्वादशमासीयव्रतकालनिरूपणं। वापीकूपतड़ागाद्युत्सर्गकालनिरूपणं। भगवन्मूर्त्त्यादिप्रतिष्ठाकालः। संक्रान्तिनिरूपणं ग्रहणकालनिरूपणं। अर्द्धोदयादियोगकथनं। नवोदकनवान्नादिकालनिरूपणं। कृषिकर्षणवीजवपनवाणिज्यादिकालकथनं। भाविष्टसिद्धिज्ञानोपायकथनं। दीक्षाकालकथनं। अनध्यायकालकथनञ्च।

---

**No. 2502** साहित्यदर्पणविवृतिः। Substance, country-made paper, 18 × 4 inches. Folia, 225. Lines, 7—8 on a page. Extent, 8,227 ślokas. Character, Bengali. Date, ? Place of deposit, Sántipur, Rámanátha

Takkaratna; another copy at Ulá Post Ráṇághát Zillá Nadiyá, Paṇḍit Gopívallabha Bhaṭṭácharya. Appearance, fresh. Prose. Incorrect.

**Sáhitya-darpaṇa-vivṛiti.** A commentary on the Sáhitya-darpaṇa, a treatise on rhetoric. By Rámacharaṇa.

**Beginning.** वागीश्वरीसरसगीतगुणप्रवाहं
सरस्वतीसततसेवितपादपद्मं ।
हेमाद्रिमारकतशेखरकान्तिमीशं ।
वन्दे खगेन्द्रभुजमौलिगतं मुकुन्दं ॥
श्रीविश्वनाथकविराजकृतिप्रणीतं
साहित्यदर्पणमतिस्थगितप्रमेयं ।
श्रीमद्विधाय चरणं शरणं (गुरूणां) कवीनां
यत्नेन रामचरणो विवृणोति विप्रः ॥
यः परः परगुणप्रकाशने लब्धवर्णनिकरो जयत्यसौ ।
दोषगानरचिताघसञ्चयो यालघः पिशुनराजिरञ्जसा ॥

समग्रसिद्धान्तग्रहव्यग्रमनसामनभिमते प्रकटदोषप्रकरविघटितादरकाव्यादिनिरूपणे सत्यपि अलङ्कारग्रन्थनिकरे तेषामभीष्टमदुष्टकाव्यादिनिरूपणमव्याहतराद्धान्तसन्तानमलङ्कारग्रन्थमारभमाणः प्रथमकारिकायाः सरस्वत्याराधनप्रयुक्तस्वार्थनिर्व्वाहप्रयुक्तिपरतां प्रकाशयितुमवतरणिकां स्वयमेवाह,—ग्रन्थारम्भ—इत्यादि ।

**End.** यथा वा—मनोविद्धं सरोजाक्षीस्मरशक्त्या सुनिर्भरं ।
साचेद्धि+ + ते गाढं स्वाश्यमालम्ब्यते लघु ॥
इत्युदाहरणमुन्नेयमिति ।

**Colophon.** इति साहित्यदर्पणविवृतौ दशमः प्रकाशः ।
अचिपचरसचन्द्रसम्मिते
हायने शकवसुन्धरापतेः ।
श्रीलरामचरणाग्रजन्मना
दर्पणस्य विवृतिः प्रकाशिता ॥
दोषं कञ्चन वीक्ष्य सूक्ष्मतया+धाशपन्त्यत्र चेत्-
तन्मां स व्यथयेद्गुरोरपि गिरोनिर्दूषणा दुर्लभाः ।
छात्राणां मतिमादधाति यदसौ गूढार्थसन्दीपना-
दानन्दं वितनोति यद्गुणविदां तेनास्यामोघश्रमः ॥

**विषयः ।** विश्वनाथकविराजकृतसाहित्यदर्पणनामकालङ्कारशास्त्रस्य व्याख्यानम् ।

---

**No. 2503. प्रायश्चित्तचन्द्रिका।** Substance, palm-leaf, 13 × 2¼ inches. Folia, 181. Lines, 4—5 on a page. Extent, 2,075 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ránághát, Zillá Nadiyá, Gopívallabha Bhaṭṭáchárya. Appearance, decayed. Prose and verse. Incorrect.

**Práyaśchitta-chandriká.** On expiations for religious offences, accidents, or interruptions in course of religious observances. By Ramápati, of the Bhaiyála race.

**Beginning.** रघुनाथपदद्वन्द्वं निधाय हृदि मङ्गलं।
गणेशस्य प्रसादेन निर्व्विघ्नाः कार्य्यसम्पदः॥
रमापतिकृता ह्येषा प्रायश्चित्तस्य चन्द्रिका।
विमत्सराणां विदुषां मुदं वितनुतां सदा॥
तत्र प्रायश्चित्तस्वरूपमाह,—हारीतः। इत्यादि।

**End.** यथार्णवस्य रत्नानि मेरोस्तु कनकोपलाः।
संख्यातुं नैव शक्यन्ते भागीरथ्यास्तथा गुणाः॥

**Colophon.** इति भैयालकुलपङ्कजसहस्ररश्मिश्रीमद्रमापतिकृता प्रायश्चित्तचन्द्रिका परिपूर्णा।

विषयः। प्रायश्चित्तस्वरूपविवेचनं। बालवृद्धादिभेदेन प्रायश्चित्तस्य लाघवादिकथनं। तन्त्रप्रसङ्गविवेचनं। प्रायश्चित्तदिनतिथ्यादिनिरूपणं। प्रायश्चित्ताभावकथनं। यथाकालं प्रायश्चित्ताकरणे आधिक्यकथनं। ब्राह्मणादिवर्णभेदेन प्रायश्चित्ततारतम्यकथनं। महापातकातिपातकादिनिरूपणं। जन्मान्तरीयमहापातकादिचिह्नविवेककथनं। तत्र तत्र सामान्यतः प्रायश्चित्तकथनं। मुख्याशक्तौ अनुकल्पविधानं। गोमूल्यादिनिरूपणं। अतिपातकादौ अभ्यासे अनुकल्पाभावकथनं। पराकक्रच्छ्रादिलक्षणकथनं। ज्ञानाज्ञानकृतविशेषकथनं। प्रत्येकं वर्णविशेषस्य ब्रह्महत्याप्रायश्चित्तनिरूपणं। सुरापानप्रायश्चित्तकथनं। मद्यविशेषपाने क्षत्रियादीनां प्रायश्चित्ताभावकथनं। आपदि सुवर्णचौर्य्यादीनां प्रायश्चित्ताभावकथनं। गुर्व्वङ्गनानिरूपणं। अगम्यागमनादिप्रायश्चित्तकथनं। व्यभिचारप्रायश्चित्तकथनं। अभक्ष्यभक्षणप्रायश्चित्तं। अभक्ष्यनिरूपणं। दूषितान्नादिनिरूपणं। उच्छिष्टभोजनादिप्रायश्चित्तं। चण्डालादिस्पृष्टजलादिपानप्रायश्चित्तं। आपदि प्रायश्चित्ताभावकथनं। निरर्थकपशुहिंसादिप्रायश्चित्तं। वैधहिंसाविवेचनं। पलाण्डुलशुनादिभक्षणप्रायश्चित्तं। प्रकीर्णकप्रायश्चित्तकथनं। गोवधादिप्रायश्चित्तं। तदपवादकथनञ्च।

**No. 2504.** तीर्थकौमुदी । Substance, palm-leaf, 13 × 2 inches. Folia, 112. Lines, 8 on a page. Extent, 2,830 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭ, Zillá Nadiyá, Gopívallabha Bhaṭṭichárya. Appearance, decayed. Prose and verse. Correct

**Tírtha-kaumudí.** On the duties and rites to be observed during pilgrimages and notices of certain noted places of pilgrimage. By Sañkara, son of Vallála.

**Beginning.** नत्वा विश्वेश्वरं देवं शङ्करेण विनन्यते ।

मुदा पुराणविख्याता रम्येयं तीर्थकौमुदी ॥

अथ तीर्थनिरूपणं । तीर्थचिन्तामणिधृतं गरुड़पुराणं । सर्व्वतीर्थानि वक्ष्यामि इत्यादि ।

**End.** अनेन विधिना कुर्व्वन् सर्व्वं भवति चाक्षयमिति ॥

**Colophon.** इति श्रीवल्लालसूनुशङ्करविरचिता तीर्थकौमुदी समाप्ता ।

विषयः । तीर्थनिरूपणं । गङ्गामाहात्म्यकीर्त्तनं । गङ्गागर्भनिरूपणं । तीर्थयात्रायां कर्त्तव्यानि । तीर्थेषु वर्ज्जनीयकथनं । तीर्थयात्राधिकारिनिरूपणं । समयाशुद्धिविवेचनं । यात्रादिने नान्दीश्राद्धविधिकथनं । तीर्थस्नानविधिकथनं । तर्पणविधिकथनं । तत्र दानादिमाहात्म्यकथनं । प्रतिग्रहादौ दोषकथनं । तीर्थवासविधिकथनं । ग्रहणादौ गङ्गास्नानादिविधिकथनं । अर्द्धोदयादियोगकथनं । काश्यादितीर्थयात्राविधिः । उपवासविधिकथनं । मुण्डनादिविधिविवेचनञ्च । गयादितीर्थयात्राविधिकथनं । प्रयागादितीर्थयात्राविधिकथनं । काश्यादिमरणे मुक्तिलाभकथनं । साधारणतः सकलतीर्थयात्राविधिकथनं । यात्रादिप्रयोगकथनञ्च।

---

**No. 2505.** विद्वन्मोदिनी । Substance, palm-leaf, 14 × 2¼ inches. Folia, 158. Lines, 5 on a page. Extent, 4,331 ślokas. Character, Bengali. Date, ? Place of deposit, Ulá, Post Ráṇágháṭ, Zillá Nadiyá, Gopívallabha Bhaṭṭácharya. Appearance, old. Prose. Correct.

**Vidvanmodiní.** A commentary on the Raghuvañs'a of Kálidása. By Rámabhadra Nyáyálañkára, Bhaṭṭáchárya.

**Beginning.** विनायकं नमस्कृत्य सर्व्वविघ्नविनाशनं ।

रघुवंशमहाकाव्यटीकां कर्त्तुं समारभे॥

व्याख्यायते यथाशक्ति निर्म्मत्सरधिया मया ।

एतेन प्रीयतां नित्यं परात्मा रघुनन्दनः ॥

इह खलु महाकविः कालिदासः प्रारिप्सितस्य महाकाव्यस्य निर्व्विघ्नपरिसमाप्त्यर्थं आशीर्नमस्क्रियावस्तुनिर्द्देशो वापि तन्मुखमित्याद्यालङ्कारिकशिष्टाचारपरिपालनाय च देवतानति-

रूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतृणामनुषङ्गतोमङ्गलाय च निबध्नाति ।— वागर्था-विति। अहं पार्वतीपरमेश्वरौ वन्दे अभिवादये। किम्भुतौ, वागर्थाविव सम्पृक्तौ नित्यसम्बद्धौ। एतच्च मीमांसकमतेन, तथाहि,—जैमिनिसूत्रं । औत्पत्तिकस्तु शब्दार्थयोः सम्बन्ध इति। इत्यादि ।

End. रविसुतसहितेन सुग्रीवयुक्तेन सलक्ष्मणेन विभीषणेन अनुगतः सन्। प्रतस्थ इत्यत्र समवप्रविभ्यः स्थ इत्यात्मनेपदविधानं ।

Colophon. इति महामहोपाध्यायश्रीरामभद्रन्यायालङ्कारभट्टाचार्य्यविरचितायां वि-द्वन्मोदिन्यां रघुवंशटीकायां द्वादशः सर्गः ।

विषयः । कालिदासकृतरघुवंशाभिधान महाकाव्यस्य द्वादशसर्गान्तं व्याख्यानम् ।

---

**No. 2506.** द्रव्यानुयोगतर्कणाटीका । Substance, foolscap-paper, 13 × 4 inches. Folia, 88. Lines, 9—10 on a page. Extent, 2,181 ślokas. Character, Bengali. Date, Sm. 1282. Place of deposit, Varhámpur. Bábu Rámadása Sen. Appearance, new. Prose. Incorrect.

**Dravyánuyoga-tarkaṇá-ṭíká.** A commentary on a Jain metaphysical work entitled 'Dravyánuyoga-tarkaṇá.' By Bhoja. The work belongs to the Svetámbara sect of the Jains.

Beginning श्रियां निवासं निखिलार्थवेदकं
सुरेन्द्रसंसेवितमन्तरा + + ।
प्रमाणयन्त्या + नय प्रदर्शकं
नमामि जैनं जगदीश्वरं महः ॥
यदीयगोभिर्भुवनोदरस्थितं
कुवादभूच्छाय + + निवार्य्यते ।
द्रव्यादियाथार्थ्यमपि प्रकाश्यते
जयत्यधीशः स जिनस्त्रयीतनुः ।
वन्दे वीरपरम्परा+ + द्दनार्थं सनाथं श्रिया
गाम्भीर्य्यादिगुणावलीप्रविलसद्रत्नौघरत्नाकर ।
विद्यादेवपुरोहितप्रतिनिधिश्रीमत्तपागच्छपं
प्रख्यातं विजयादियागणधरं द्रव्यानुयोगेश्वरं ॥
श्रीभावसागरं नत्वा श्रीविनीतादिसागरं ।
प्रवक्ष्ये तत्प्रसादेन किञ्चिद्व्याख्या प्र+यते ॥

**End.** तेषां विनेयलेशेन भोजेन रचितोक्तिभिः ।
परस्यात्मप्रबोधार्थं द्रव्यानुयोगतर्कणा ॥

**Colophon.** इति श्रीद्रव्यानुयोगतर्कणायां पञ्चदशोऽध्यायः । १५ । ११८१ । १७ पौष ।
विषयः । द्रव्यानुयोगतर्कणाभिधानश्वेताम्बरजैनसम्प्रदायग्रन्थस्य व्याख्यानं ।

---

**No. 2507.** सङ्गीतदर्पणः । Substance, foolscap-paper, 12½ × 4 inches. Folia, 120. Lines, 5 on a page. Extent, 1,605 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Prose and verse. Generally correct.

**Sañgíta-darpaṇa.** A comprehensive treatise on music. By Dámodara, son of Lakshmídhara. The work is divided into 7 chapters, and treats successively of (1) Voice and the philosophy of music, *Gíta.* (2) Musical modes or tunes, *Rága.* (3) to (5) Variations of notes in singing with reference to the kind of feeling required to be excited by particular classes of songs, *A'lápa.* (6) Musical times or measures, and various modes of measuring or regulating them by musical instruments, *Tála.* (7) Dancing and acting.

**Beginning.** प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
सङ्गीतशास्त्रसंक्षेपसारभागो मयोच्यते ॥
भरतादिमतं सम्यगालोच्यातिप्रयत्नतः ।
श्रीमता हरिभट्टेन सज्जनानन्दहेतुना ॥
प्रचुररूपसङ्गीतिसारोद्धारो विधीयते ।
गीतं वाद्यं नर्त्तनञ्च त्रयं सङ्गीतमुच्यते ॥

**End.** गौण्डल्यामण्डलं प्रोक्तं तज्ज्ञैः कर्णाटदेशजं ॥
इति गौण्डली ॥

**Colophon.** इति श्रीमत्पण्डितलक्ष्मीधरसुतचतुरदामोदरविरचिते सङ्गीतदर्पणे नृत्याध्यायः सप्तमः सम्पूर्णः । समाप्तश्चायं सङ्गीतदर्पणः ।

विषयः । १प्रथमाध्याये,—द्विविधगीतकथनं । मार्गसङ्गीतलक्षणं । देशिलक्षणं । रागोत्पादनप्रकारः । नादमहिमा । नादकारणनिरूपणं । तत्र शारीरविवेककीर्त्तनं । अत्र हनुमद्विज्ञानेश्वरयोर्मतकीर्त्तनं । ब्रह्मग्रन्थिलक्षणं । श्रुतिलक्षणं । द्वाविंशप्रकारश्रुतिकथनं । स्वरसुस्वरादिलक्षणं । ग्रामलक्षणं । तद्भेदादिकथनं । मूर्च्छनालक्षणं । तद्भेदादिकथनं । शुद्धतानविवेकः । कूटतानविवेकः । खण्डमेरुनष्टोद्दिष्टप्रकरणं । अत्र संख्यानरूपं । साधारणस्वरनिरूपणं । स्थाय्यादिवर्णलक्षणं । ग्रहस्वरकथनं । न्यासस्वरकथनं । अलङ्कारप्रस्तारः । स्वरभेदनिरूपणञ्च ।

१ये,—रागविवेकः। रागाङ्गनिरूपणं। क्रियाङ्गनिरूपणं। उपाङ्गनिरूपणं। काण्डारण्य निरूपणं। अत्र मतङ्ग-हनूमद्-भरतमतकथनं। उपरागनिरूपणं। रागरागिण्यालापसमयकथनं। अत्र इन्द्रप्रस्थीयमतं। हनूमन्मतं। रागार्णवमतञ्च। रागादीनामुदाहरणं।

३ये, ४र्थे, ५मे, च—आलापनप्रकारकीर्त्तनं। गमकनिरूपणं। गायनदोषकीर्त्तनं। रूपककथनं। प्रबन्धादिकीर्त्तनं। मगणादीनां देवतादिनिरूपणं। ध्रुवादिलक्षणं। तालादिभेदकथनं। तेषां लक्षणञ्च। रसविशेषे तालविशेषनियमनादिकं। रासकलक्षणादिकथनं। चतुरङ्गलक्षणं। शरभलीललक्षणं। सूर्य्यप्रकाशलक्षणं। चन्द्रप्रकाशलक्षणं। रणरङ्गलक्षणं। नन्दनलक्षणं। नवरत्नप्रबन्धलक्षणं। सङ्गीतगुणदोषविवेचनञ्च। तत-सुषिर-अवनद्ध-घनभेदाद् वाद्ययन्त्रस्य चातुर्व्विध्यनिरूपणं। वीणाभेदनिरूपणं। वंशमुरलिकादिलक्षणं। पटहादिकथनं। कांस्यतालादिकथनं। वामदेवोद्भवतालवर्णकथनं। एवं अघोरोद्भवस्य ईशानोद्भवस्य च ज्ञेयं।

६ अध्याये,—तालनिष्पत्तिकथनं। तालस्य दशप्राणनिरूपणं। अत्र हनूमदादिमतकथनं। मार्गभेदकथनं। क्रियाकथनं। अङ्गनिरूपणं। ग्रहनिरूपणं। जातिकथनं। कलानिरूपणं। लयनिरूपणं। यतिनिरूपणं। प्रस्तारकथनं। चच्चत्पुटादितानलक्षणं। देशीतालनिरूपणं। चर्चर्य्यादीनां लक्षणं। मतान्तरेण चित्रतालादिकथनं। द्रुतमेरुनिरूपणं। सर्व्वमेरुसंख्यानादिकं। गुरुमेरुकथनं। लघुमेरुकथनं। संयोगमेरुकथनं। खण्डप्रस्तारकथनादिकं।

७मे अध्याये,—नृत्यनिरूपणं। तत्र छन्दादिलक्षणं। समपाद-संहतपाद लता करादिलक्षणं। नन्द्यावर्त्तलक्षणं। वर्द्धमानलक्षणं। सौष्ठव-पुष्पपुटप्रभृतिलक्षणञ्च। नर्त्तनभेदनिरूपणं। तत्र प्रसङ्गात् रसलक्षणं। स्थायिभावादिनिरूपणं। आङ्गिक-वाचिकाद्यभिनयलक्षणं। कटाक्षभेदलक्षणादिकं। लोकधर्म्मकथनं। वाद्यधर्म्मकथनं। नृत्यमुद्रादिकथनं। गमनकरविक्षेपादिप्रकारनामादिकथनं। नान्दीलक्षणं। नटनर्त्तकादीनां लक्षणं। यतिनृत्यलक्षणं। वर्णनृत्यं। शब्दनृत्यं। विवर्त्तननृत्यं। चमत्कारनृत्यं। गीतनृत्यं। रागाभिनयप्रकारकीर्त्तनं। ध्रुवगीतनृत्यं। देशीनृत्यविधिः। ऐरणीनृत्यकथनं। गौण्डलीनृत्यकथनञ्च।

---

**No. 2508.** वेदानध्यायः। Substance, country-made paper, 8 × 3 inches. Folium, 1. Lines, 14. Extent, 11 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, fresh. Prose. Incorrect.

**Vedánadhyáya.** A summary of the days when the Vedas should not be read as a scholastic duty. Anonymous.

**Beginning** वेदे अनध्यायः। + + अमावास्यायामिति सर्व्वानध्यायः, आडाशन चोल्काविद्युज्ज्झूमिचलनाग्न्युत्पाते।

**End.** इति चिराच' सहोध्य विप्रतिष्ठेरन्।

**Colophon.** इति वेदानध्यायः सम्पूर्णः।

विषयः। यस्मिन् यस्मिन्नहनि वेदाध्ययनं निषिद्ध तन्निरूपणं।

---

**No. 2509.** रागमाला। Substance, country-made paper, 7 × 4½ inches. Folia, 10. Lines, 10 on a page. Extent, 146 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Incorrect.

**Rágamálá.** A treatise on the various musical modes recognised by the Hindus and their mutual relations and alliances. By Jívarája Díkshita.

**Beginning.** आनन्दैकमयो मनःसुखकरो यो भुक्तिमुक्तिप्रदो
नादात्मा सकलेन्द्रियापहरणो दुःखस्य विध्वंसनः।
भङ्गः पञ्चशराग्रदूत उन्नतीं लक्ष्मीं दधानो यश-
स्त्वानो वलपुष्टितुष्टिकरणो रागः शिवायास्तु वः॥

**End.** ता एकैकस्यापि रागस्य पञ्चमञ्चापि योषितः।
क्रमेण कोविदैर्ज्ञेया मुनीनां वचनादिमाः॥
जीवराजमुखकारैनां राघवस्यानुशासनात्।
रागमालान्तु तस्यैव मनोरञ्जनहेतवे॥

**Colophon.** इति श्रीमज्जीवराजदीक्षितविरचिता रागमाला समाप्ता।

विषयः। रागाणां लक्षणं। तेषां पत्न्यादिनिरूपणं। तासामवान्तरभेदकथनं। आलापसमयकीर्त्तनञ्च।

---

**No. 2510.** विवेकशतकम्। Substance, country-made paper, 13 × 4 inches. Folia, 6. Lines, 13 on a page. Extent, 180 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, old. Verse. Correct.

**Viveka-śataka.** A century of verses on dispassion or indifference to worldly attractions, for the sake of devotion to Kṛishṇa. By Prabodhánanda Sarasvatí.

**Beginning.** देहः प्राप्ता विरसजरसं चीणमायुर्ममाभूत्
लुप्ता शक्तिर्विषमविषयग्राहिणी येन्द्रियाणां।

दूरे हन्दावमतटभुवः खेदभेदप्रदायाः
किं कुर्व्वेऽहं प्रतकुलशिरोरत्न + + न वेद्मि ॥

End. श्रीकुण्डलमण्डितानननिधौ दन्तप्रभाकौमुदी-
विध्वस्तव्रजवल्लभाषितमसि प्रोत्फुल्लवक्त्राम्बुजे ।
वंशीनादविमोहिताखिलजगज्जन्तौ किशोराकृतौ
श्रीकृष्णे रतिरस्तु मे प्रति + + प्रेमाब्धिसंबन्धिनी ॥

Colophon. इति श्रीप्रबोधानन्दसरस्वतीविरचितं विवेकशतकं समाप्तं ।

विषयः । निर्व्वेदोदयात् उपरतस्पृहस्य श्रीकृष्णसमीपे स्वप्रेमभक्तिप्रार्थनं ।

---

**No. 2511.** नाममाला । Substance, country-made paper, 10 × 4 inches. Folia, 155. Lines, 18 on a page. Extent, 10,081 ślokas. Character, old Nágara. Date, Sm. 1120. Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, old. Prose. Correct.

**Námamálá.** A commentary on his own Sanskrit dictionary named 'Abhidhánachintámaṇi.' By Hemachandra S'uri.

अर्हते नमः ।

Beginning. धर्म्मतीर्थकृतां वाचं नत्वा तत्त्वाभिधायिनीं ।
+ + + नाममालाख्यां विवृतिं विदधाम्यहं ॥
श्रेयोऽर्थमयमारम्भः किं तथात्मविकत्थनैः ।
परात्मनिन्दा + + हि नाद्रियन्ते मनीषिणः ॥
प्रामाण्यं वासुकेर्व्याड़ेर्व्युत्पत्तिर्धनपालतः ।
प्रपञ्चश्च वाचस्पतिप्रभृतेरिह लभ्यतां ॥
तत्रायमादिश्लोकः,—प्रणिपत्यार्हतः —इत्यादि ।

End. इयन्त—इति संख्यानं निपातानां न विद्यते ।
प्रयोजनवशादेते निपात्यन्ते पदेषु च ॥

Colophon. इत्याचार्य्यश्रीहेमचन्द्रविरचितायां + + + भिधानचिन्तामणिनाममालाटीकायां सामान्यकाण्डः षष्ठः । समाप्ता चेयमभिधानचिन्तामणेर्नाममालाख्या टीका । ११२० । संवत्सरे ।

विषयः । स्वकृतत्यभिधानचिन्तामण्यभिधानकोषस्य व्याख्यानं ।

---

**No. 2512.** लिङ्गानुशासनटिप्पनी । Substance, country-made paper, 15 × 5½ inches. Folia, 181. Lines, 10 on a page. Extent, 8,550 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, old. Prose. Correct.

**Liṅgánuśásana-ṭippaní.** Glossarial notes on Amara Siñha's Náma-liṅgánuśásana. By S'ríráma S'armá.

**Beginning.** यत्पादपद्मं प्रणिपत्य धाता
भूतानि चक्रे तमहं प्रणम्य ।
सलिङ्गनाम्नोरनुशासनस्य
टीकामिमां बालधिये तनोमि ॥

इह विघ्नविघाताय उचिते+ देवसेवां कुर्व्वन् शिष्यशिक्षायै आदौ निबध्नाति यस्येति ।

**End.** किन्तु सन्तः परोत्कर्षं प्रकाशयन्तः तद्गुणान्
काव्यग्रन्थगुणान् तन्वन्ति विस्तारयन्तीत्यर्थः ।
लिङ्गसङ्ग्रहवर्गस्य टिप्पनी बहुसम्मता ।
श्रीरामशर्म्मणाकारि सुमतिप्रतिपत्तये ॥

विषयः । अमरसिंहकृतनामलिङ्गानुशासनकोषस्य व्याख्यानं ।

---

**No. 2513.** ऐश्वर्य्यकादम्बिनी । Substance, country-made paper, 11 × 3½ inches. Folia, 15. Lines, 8 on a page. Extent, 224 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Correct.

**Aiśvarya-kádambiní.** A poem in praise of Kṛishṇa's career at Vṛindávana and Gokula. By Bidyábhúshaṇa.

**Beginning.** कृष्णाभिधायै कनकाम्बरायै
श्यामोरुतन्वै सरसीरुहाक्ष्यै ।
नित्यश्रियै नित्यगुणव्रजायै
नमोऽस्तु तस्यै परदेवतायै ॥
सनातनं रूपमिहोपदर्शय-
न्नानन्दसिन्धुं परितः प्रवर्द्धयन् ।
अनन्तसमस्तोमहरः स राजतां
चैतन्यरूपो विधरङ्गतोदयः ॥

End. विद्याभूषणभणितं हरिचरितं चित्सुखात्मकं ह्येतत् ।
परिगीतं शुकमुनिना सद्भिः सेव्यं स्वरूपमिव ॥
ऐश्वर्य्यपूर्व्वेयमपूर्व्वपर्व्वा
कादम्बिनी नन्दसुतावलम्बा ।
भूयाद्वियत्सिन्धुशशाङ्कसंख्या
सतां प्रिया तच्चरणाश्रितानां ।

Colophon. इतैश्वर्य्यकादम्बिन्यां श्रीगोकुलगमनाद्युत्तरलीलावर्णनं सप्तमी वृष्टिः ।

विषयः । श्रीकृष्णस्य त्रिपाद्विभूतिवर्णनं। एकपाद्विभूतिगतभगवत्स्वरूपाद्याविर्भावस्याविर्भावक्रमवर्णनं । वसुदेवनन्दादीनां वृष्णिवंशोद्भवत्वादिवर्णनं । राधिकाया जन्मकथनं । नन्दनृपराजधानीवर्णनं । सपरिकरश्रीकृष्णजन्मोत्सववर्णनं । कंसवधान्त श्रीकृष्णस्य बाल्यकैशोरादिलीलावर्णनं । मुनिगणकृतश्रीकृष्णस्तोत्रं । गोकुलगमनाद्युत्तरलीलावर्णनं ।

---

**No. 2514.** गोवर्द्धनभट्टाष्टकम् । Substance, country-made yellow paper, 11 × 5 inches. Folium, 1. Lines, 18. Extent, 18 ślokas Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Correct.

**Govardhana-bhaṭṭáshṭaka.** A hymn in eight stanzas, in praise of Kṛishṇa as the lifter of the Govardhana Hill. By Gavardhana Bhaṭṭa.

Beginning. व्याप्तं सर्व्वदिशासु शीतलतरं मोहाभयध्वंसनं
पीत्वा यस्य यशोऽमृतं भुवि जना मज्जन्ति शीघ्रस्पृहां ।
तं श्रीमन्तमनन्तसद्गुणयुतं भक्तिप्रभाभ्राजितं
श्रीगोवर्द्धननामधेयभगवत्प्रेष्ठं मद्विष्टं भजे ॥

End. एतत् स्तोत्रमगण्यसद्गुणमहारत्नाकरस्योल्लसन्
श्रीगोवर्द्धननामधेयमहतो भट्टस्य यो वै पठेत् ।
तं श्रीनन्दसुतो निजाङ्घ्रिकमले भक्तिं ददन्निर्मलां
प्रीत्या साधुजनं सदा सुखयताद्गोवर्द्धनैकप्रियः ॥

Colophon. इति गोवर्द्धनभट्टाष्टकं सम्पूर्णं ।

विषयः । भगवद्रूपस्य गोवर्द्धनगिरेः स्तवनं ।

---

**No. 2515.** काव्यालङ्कारसूत्रवृत्तिः । Substance, country-made paper, 13 × 5 inches. Folia, 37. Lines, 10 on a page. Extent, 900 ślokas. Character,

Nágara. Date, Sm. 1898. Place of deposit, Bahrámpur, Bábu Rámadása Sen; another copy at Bráhmanapur, Zillá Nadiyá, Rájívalochana Gañgopádhyáya. Appearance, new. Prose and verse. Generally correct.

**Kávyálañkára-sútra-vritti.** An elaborate treatise on poetry and rhetoric. By Vámana A'chárya.

**Beginning.** प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया।
काव्यालङ्कारसूत्राणां स्वेषां वृत्तिर्विधीयते॥

काव्यं ग्राह्यमलङ्कारात्। काव्यं खलु ग्राह्यमुपादेयं भवति अलङ्कारात्।

**End.** सदसन्तो मया शब्दा विविच्याल्पेन दर्शिताः।
अनयैव दिशा कार्य्यं शेषाणामप्यवेक्षणम्॥

**Colophon.** इति काव्यालङ्कारसूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे द्वितीयोऽध्यायः। समाप्तं प्रायोगिकं नाम पञ्चममधिकरणं। इति वामनाचार्य्यकृता काव्यालङ्कारसूत्रवृत्तिः समाप्ता। संवत् १८९८।

विषयः। प्रथमाधिकरणे—काव्यस्योपादेयत्वादिनिरूपणं। अधिकारिनिरूपणं। रीतेः काव्यात्मत्वकथनं। वैदर्भी। गौड़ी। पाञ्चाली। काव्यहेतुनिरूपणं। गद्यपद्यभेदेन काव्यस्य द्वैविध्यं निरूपणं। दशरूपकप्रशंसा। काव्याङ्गनिरूपणं।

२ये अधिकरणे—दोषनिरूपणं। असाधु-कष्ट-ग्राम्य-अप्रतीत-अनर्थकरूपपञ्चविधपद दोषकथनं। अन्याय-नेयार्थ-गूढ़ार्थ-अश्लील-क्लिष्टरूपपञ्चविधपदार्थदोषकथनं। भिन्नवृत्त-यति-भ्रष्ट विसन्धिरूपत्रिविधवाक्यदोषनिरूपणं। व्यर्थ-एकार्थ-सन्दिग्ध-अयुक्त-अपक्रम-लोकविरुद्ध-विद्याविरुद्धरूपसप्तविधवाक्यार्थदोषनिरूपणं।

३ये अधिकरणे,—गुणनिरूपणं। ओजः प्रसाद-श्लेष-समता-समाधि-माधुर्य्य-सौकुमार्य्य-उदारता-अर्थव्यक्ति-कान्तिरूपदशविधशब्दगुणनिरूपणं। एवमर्थगुणकथनं।

४र्थे अधिकरणे,—अलङ्कारनिरूपणं। यमकानुप्रासरूपद्विविधशब्दालङ्कारनिरूपणं। उपमानिरूपणं। तद्दोषकथनादिकं। प्रतिवस्तूपमा। समासोक्तिः। अप्रस्तुतप्रशंसा। अपह्नुतिः। रूपकं। श्लेषः। वक्रोक्ति। उत्प्रेक्षा। अतिशयोक्तिः। ससन्देहः। विरोधाभासः। विभावना। अनन्वयः। उपमेयोपमा। परिवृत्तिः। क्रमः। दीपकं। निदर्शनं। अर्थान्तरन्यासः। व्यतिरेकः। विशेषोक्तिः। व्याजस्तुतिः। व्याजोक्तिः। तुल्ययोगिता। आक्षेपः। सहोक्तिः। समाहितं। संसृष्टिः।

५मे अधिकरणे,—कविसमयः। शब्दशुद्धिः।

---

**No. 2516.** द्रव्यानुयोगतर्कणा। Substance, foolscap paper, 13 × 4 inches. Folia, 19. Lines, 7 on a page. Extent, 322 ślokas. Character,

Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Incorrect.

**Dravyanuyoga-tarkaṇá.** On the metaphysics of the 'Svetámbara Jains. Anonymous.

**Beginning.** श्रीयुगादिजिनं नत्वा कृत्वा श्रीगुरुवन्दनं।
आत्मोपकृतये कुर्व्वे द्रव्यानुयोगतर्कणां॥
विना द्रव्यानुयोगोऽहं चरणकरणाख्ययोः।
साव+ति कृतिप्रेष्ठं निर्द्दिष्टं सम्मतौ स्फुटं॥

**End.** खद्योतप्रतिमा क्रिया तु ज्ञानन्तु भानूपम-
मित्येतन्महदन्तरं कलियुगे कश्चिद्बुधो विन्दति।
वाह्याभ्यासविनिर्म्मितो हि दुरितक्षेपो भवेद्दुर-
क्षुसक्षोदकणोपमं किमपरं वाक्यं बुधा ब्रूमहे॥

विषयः। शुक्लाम्बरजैनसम्प्रदायानुमतषट्पदार्थविवेचनं। तत्र द्रव्यस्वरूपकीर्त्तनं। गुणलक्षणं। सामान्यकथनं। तिर्य्यक्सामान्यलक्षणं। शक्तिरूपद्रव्यकथनं। दिगम्बरनयेन शक्तिरूपगुणकथनं। केषां चित् द्रव्याणां चौन्द्रियग्राह्यत्वकथनं। गुणपर्य्यायाणां एकेन्द्रियग्राह्यत्वकथनं। संज्ञानिरूपणं। द्रव्यगुणपर्य्यायाणां पारमार्थिकभेदवादनिरसनं। योगाचारमतखण्डनं। नैयायिक कापिलमताक्षेपः। भेदाभेदवादव्यवस्थापनं। सप्तभङ्गिन्यायनिरूपणं। घटपटादिवदेकार्थस्यापि जीवादेस्त्रिरूपत्वनिरूपणं। दिगम्बरनयेन नवविधन्यायादिकथनं। द्रव्यार्थिकस्य दशविधभेदप्रदर्शनं। पर्य्यायार्थिकस्य षड्विधत्वनिरूपणं। त्रिविधनैगमनयनिरूपणं। द्विविधसङ्ग्रहनयविवरणं। द्विविधव्यवहारनयविरूपणं। द्विविध ऋजुसूत्रनयविवेचनं। एकविधशब्दनयनिरूपणं। एकविधसमभिरूढनयकथनं। एकविधभूतनयकीर्त्तनं। त्रिविधोपनयनिरूपणं। असद्भूतव्यवहारस्य त्रिविधत्वनिरूपणं। नवविधोपचारनिरूपणं। द्विविधनिश्चयकथनं। द्विविधव्यवहारकथनं। तत्र तत्र अवान्तरभेदकथनञ्च। अत्र दिगम्बरदेवसेनकृतनयचक्रग्रन्थसंवादकथनं। श्वेताम्बरदिगम्बरयोः समानतन्त्रत्वकथनं। नयावतारकाणामाचार्य्याणां नामकथनं। अन्यान्यनयवादिमतखण्डनं। पदार्थस्य उत्पाद-ध्रुव-विनाशरूपत्रिविधलक्षणकीर्त्तणं। क्षणिकवादिबौद्धमतखण्डनं। उत्पादविनाशादिप्रकारकथनं। धर्म्माधर्म्मादिषड्विधद्रव्यनिरूपणं धर्म्मास्तिकायलक्षणं। अधर्म्मास्तिकायलक्षणं। आकाशास्तिकायलक्षणं। कालनिरूपणं। अत्र दिगम्बरमतदूषणं। पुद्गलास्तिकायलक्षणं। जीवास्तिकायलक्षणादिकं। सामान्यतोदशविधगुणकथनं। आत्मादीनां विशेषगुणकथनं। पारिणामिकस्वभावनिरूपणं। आत्मस्वरूपनिरूपणं। जीवस्वभावकथनं। चैतन्यस्वरूपकथनं। पर्य्यायभेदनिरूपणञ्च।

---

**No. 2517. साध्यसाधनकौमुदी।** Substance, country-made yellow paper, 11 × 4½ inches. Folia, 27. Lines, 6 on a page. Extent, 497 slokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen; another copy at Ráṇágháṭa, Bábu Surendranáth Pála Chaudhuri. Appearance, new. Prose and verse. Correct.

**Sádhya-sádhana-kaumudí.** On worship and the object of worship, a treatise on Bhakti or devotion to Krishṇa as god, as a friend, as a mistress, &c., &c. By Vis'vanátha Chakravarti.

**Beginning.** गुरुकृष्णवैष्णवानां प्रसादल्लब्धलाभतः।
साध्यसाधनविस्तारं कथयामि यथामति ॥

**End.** शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्।

इति श्रीभागवते,—भक्त्या सञ्जातया भक्त्या विभ्रत्युत्पुलकां तनुं। इति साध्यसाधनकौमुद्यां साधनभक्तिनिरूपणात्मके चतुर्थांके भक्तसमूहप्रफुल्लकुमुद्श्चतुर्थः।

**Colophon.** इति श्रीविश्वनाथचक्रवर्त्तिना विरचितः साध्यसाधनकौमुदीग्रन्थः समाप्तः।

विषयः। १प्रथम कुमुदे,—भक्तानां दशभेदनिरूपणं। शान्तिरतिकथनं। दास्यरतिकथनं। सख्यरतिकथनं। वात्सल्यरतिकथनं। माधुर्य्यरतिकथनं। निष्ठा-सेवा-निःसम्भ्रमता-स्नेह-शृङ्गारभेदेन माधुर्य्यस्य पञ्चगुणत्वकथनं। सिद्धभक्तलक्षणं। सम्प्राप्तसिद्धलक्षणं। नित्यसिद्धलक्षणं। साधनसिद्धलक्षणं। कृपासिद्धादिलक्षणं। साधकभक्तलक्षणं। साधन भाव-प्रेमभेदेन रतेस्त्रैविध्यकथनं। वैधीकथनं। रागानुगाकथनं। भावलक्षणं। अस्य अवान्तरभेदनिरूपणं। क्षान्तिमानशून्यतासमुत्कण्ठादेर्लक्षणं। प्रेमलक्षणं। सान्द्रानन्दविशेषात्मा। श्रीकृष्णाकर्षिणी भक्तेः रसत्वनिरूपणं।

२द्वितीये कुमुदे,—साध्यवस्तुनिरूपणं। विषयसम्बन्धाभिमानस्वरूपादीनां लक्षणं। विलासावेशप्रकाशादिनिरूपणं। साधारणी-समञ्जसा-समर्थाभेदेन रतेः पुनस्त्रैविध्यकथन प्रेमोत्पत्तिप्रकारः। प्रौढमध्यमन्दभेदात् प्रेम्णस्त्रैविध्यनिरूपणं। पूर्व्वरागादिभेदकथनं। महाभाव लक्षणादिकं।

३ये कुमुदे,—सखीलक्षणं। नित्यसखी। प्राणसखी। प्रियसखी। परमप्रेमसखी। ललितायाः स्वभावनिर्णयः। एवं विशाखायाः। चित्रायाः। चम्पकलतायाः। तुङ्गविद्यायाः। इन्दुरेखायाः। रङ्गदेव्याः सुदेव्याः। सखीनां क्रियानिरूपणं।

४र्थे कुमुदे—साधनवस्तुनिरूपणं। चतुःषष्टिसाधनाङ्गनिरूपणं। वैधीभक्तिनिरूपणं। रागानुगाभक्तिलक्षणं। कामरूपाभक्तिकथनं। सम्बन्धरूपाभक्तिनिरूपणं। अधिकारिलक्षणं।

---

**No. 2518. गणोद्देशदीपिका।** Substance, country-made yellow paper, 12 × 4½ inches. Folia, 15. Lines, 8 on a page. Extent, 262 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Incorrect.

**Gaṇoddeśa-dípiká.** Brief notices of the mistresses, followers, friends, and associates of Kṛishṇa during his sojourn at Vrindávana and Gokula. Anonymous.

**Beginning.** ये विश्रुताः परीवारा राधामाधवयोरिह ।
तन्नियोगाश्च लीलाश्च तथा परिकरादयः ॥
मथुरामण्डले लोके ग्रन्थेषु विविधेषु च ।
पुराणे चागमादौ च तद्भक्तेषु च साधुषु ॥
ते समासादिहलिख्यन्ते सत्सुहृत्परितुष्टये ।
आनुपूर्व्वीविधानेन रतिप्रथितवर्त्मना ॥

**End.** कलावती रसवती श्रीमती च सुधामुखी ।
विशाखा कौमुदी माध्वी शारदा चाष्टमी स्मृता ॥
इति ग्रन्थकृते रत्नप्रभायाः कथने पुनः ।
भक्तानां सुखरूपः श्रीरूपो नित्यं व्रजं ययौ ॥

**Colophon.** इति गणोद्देशदीपिका समाप्ता ।

विषयः। श्रीकृष्णस्य परीवारनिरूपणं। तत्र पशुपाल-वैश्याभीर-गुर्ज्जरादीनां लक्षणं। नन्दादीनां जन्मादिकथनं। यशोदाया रूपवर्णनं। तस्या नामावलीकथनं। रोहिणीसुनन्द-प्रभृतीनां विवरणं। जटिलाकुटिलादीनां रूपादिकथनं। परिचयकीर्त्तनञ्च। गोकुलस्थब्राह्म-णानां विवरणं। यूथलक्षणादिकथनं। तत्र ललिताविशाखाचम्पकलताचित्रादीनां रूपवर्णनं। पत्यादिकथनञ्च। वरसमाजस्थानां कलावती-शुभाङ्गदा-हिरण्याक्षी-रत्नलेखाप्रभृतीनां रूपव-र्णनं। पत्यादिकथनञ्च। वयस्यानां सामान्यकर्म्माणि। पुष्पेषु मण्डलकथनं। बालपाशालक्षणं। कर्णपूरलक्षणं तद्भेदकथनञ्च। एवं कुण्डल-पुष्पिका-कर्णिकाङ्गद-चन्द्रातपादीनां लक्षणं। वि-शाखायाः स्वभावकार्य्यादिवर्णनं। एवं चम्पकलतादीनां। पिण्डकेलि-वितण्डिका-पुण्डरीकादीनां विवरणं। दूतीनिरूपणादिकं। ललिताविशाखाचम्पकलतादीनां प्रियसहचरीकथनं।

---

**No. 2519. श्रीकृष्णभावनामृतम्।** Substance, country-made paper, 15½ × 5 inches. Folia, 104. Lines, 7 on a page. Extent, 2,929 ślokas. Character, Bengali. Date, Sk. 1762. Place of deposit Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Generally correct.

**S'ríkrishṇa-bhávanámṛita.** An epic poem on the career of Kṛishṇa in Gokula and Vrindávana.

**Beginning.** मूलस्य,—

श्रीकृष्णचैतन्यघनं प्रपद्ये
सपद्यपध्वस्ततमःप्रपञ्चं ।
पार्श्वेषु कोट्यर्व्वुदकान्तिधारा
परम्पराप्यायितसर्व्वविश्वं ॥

**End.** सोऽयं श्रीलोकनाथः स्फुरितपुरुकृपाराशिभिः स्वैः समुद्यन् ।
उद्धृत्योद्धृत्य यो नः प्रचुरतमतमःकूपतो दीपिताभिः ।
दृग्भिः स्वप्रेमवीथ्या दिशमदिशदहो यां श्रिता दिव्यलीला
रत्नाढ्यां विन्दमाना वयमपि निभृतं श्रीलगोवर्द्धनं स्मः ॥

**Colophon.** इति श्रीकृष्णभावनामृते महाकाव्ये नक्तन्तनलीलास्वादनो नाम विंशतितमः सर्गः ।

विश्वाकाशविकारसम्मितशके वारे गुरोः फाल्गुने
विश्वानन्दिनि पूर्णिमाप्रतिपदोः सन्धौ सरस्योस्तटे ।
गान्धर्व्वागिरिधारिणोः सरभसं दोलाधिरूढाङ्गयोः
श्रीचैतन्यदिने तदेतदुदगात्काव्यं भजत्पूर्णतां ॥
— — — — — — —।
समाप्तश्चायं श्रीकृष्णभावनामृतग्रन्थः । शाक १७६१ ।

विषयः । १ प्रथमसर्गे,—राधाकृष्णयोः शय्योत्थानकौतुकवर्णनं । तत्र प्रभातवर्णनं । शुकशारिकयोरालापवर्णनञ्च । २ये,—तयोः प्राभातिकचरितवर्णनं । अन्तरितानामालीनां विलासमाकलयन्तीनामन्योन्यमालापवर्णनं । परिहासवर्णनञ्च । ३ये,—तासां मन्दिरशोभावर्णनं । अनुरागातिशयेन राधायाः श्यामायाः पुरतः नैशविलासविवरणकीर्त्तनं । रसोद्गारवर्णनं । ४र्थे,—राधायाः दन्तधावन केशरञ्जन-स्नान-विलेपन-वसनपरिधानादिकालीनशोभावर्णनं वेणीबन्धन तिलकरचन-भूषणधारणादिसमये सखीनां व्यङ्गोक्तिवर्णनं । अलङ्कारशोभावर्णनञ्च । ५मे,—नन्दालयगमनार्थं राधिकामभ्यर्थयन्त्या कुन्दवल्ल्या सह कलङ्कशङ्काकुलितायाः राधिकाया आलापवर्णनं । अत्र जटिलायाः प्रातिकूल्यवर्णनं । राधायाः नन्दालयगमनसमये सखीनां परिहासवर्णनं । राधाकृष्णयोरन्योन्यं दर्शनोत्सववर्णनं । तत्र राधाया अन्नादिपाकप्रक्रियावर्णनञ्च । ६सर्गे,—श्रीकृष्णस्य शुकशावकपाठनवर्णनं । मल्लस्थलीषु वयस्यैः सार्द्धं क्रीड़नवर्णनञ्च । तस्य स्नानभोजनादिवर्णनं । तत्र ब्राह्मणवटोः कौतुकवर्णनं । वयस्यानां वक्रोक्तिवर्णनञ्च । ७सर्ग—निजगृहस्थितानां सहचराणां श्रीकृष्णनिकटगमनार्थमुत्कण्ठा-

वर्णनं। गोचारनार्थं श्रीकृष्णस्य वनगमनकाले पुरवासिनामवस्थावर्णनं। ८सर्गे,—राधाया मूर्च्छादिवर्णनं। सखीभिः श्रीकृष्णस्य पुरतः तस्याः वैधुर्य्यवर्णनं। सूर्य्यपूजनमिषेण तस्या विपिनप्रयाणवर्णनं। अभिसारवर्णनञ्च। ९सर्गे —राधाकृष्णयोरन्योन्यं व्यङ्गोक्तिवर्णनं। वञ्जुल-कुञ्जे सह सहचरीभिः तयोः नर्म्मविलासवर्णनञ्च। १०सर्गे,—तत्र षड्ऋतुशोभावर्णनं। चातु-र्य्यप्रकटनाय राधाकृष्णयोरन्योन्यं वेशादिपरिवर्त्तनादलक्षितपूर्व्वरूपतया मुग्धानां सखीनां कौतुकवर्णनं। ११सर्गे,—राधाकृष्णयोः सौन्दर्य्येण विमुग्धानां चक्रवाक-कोकिल-मयूरादीनां चेष्टादिवर्णनं। कदम्बकुञ्जे हिन्दोलोत्सववर्णनं वर्षावर्णनञ्च। १२सर्गे, शरत्कालीनवृन्दावन शोभावर्णनं। राधाकृष्णयोः परस्परं स्त्रीपुरुषजात्युपालम्भवर्णनं। शुकोक्तश्रीकृष्णरूपवर्णनं। योगपीठारोहणसमये अष्टसखीनां यथायोग्यस्थानावस्थानवर्णनं। कल्पतरुतललीलावर्णनञ्च। १३,१४सर्गे—हेमन्तवर्णनं। शिशिरवर्णनं। वसन्तवर्णनं। मधुपानमहोत्सववर्णनं। 'अहमेव रसिकः नान्यः' इति कथयता मधुमङ्गलेन सह श्रीकृष्णस्य नर्म्मवर्णनं। राधाकुण्डवर्णणं। तत्र जलविहारवर्णनञ्च। १५,१६ सर्गे,—राधाकृष्णयोरचक्रीड़ावर्णनं। मुरलीहरणकौतुकवर्णनं। वासगृहात् श्रीकृष्णे प्रवसति राधायाः चिन्ताविषादादिवर्णनं। अपराह्नसमये प्रेममुग्धया गृहीतनेपथ्यया राधया सह ललितायाः परिहासवर्णनं। १७सर्गे,—श्रीकृष्णस्य गोष्ठप्रवेश-समये सुरसुन्दरीणां परस्परमालापवर्णनं। सूर्य्यास्तमयवर्णनं। श्रीकृष्णरूपमाधुर्य्यवर्णनं। सायन्तनलीलावर्णनञ्च। १८सर्गे,—प्रदोषवर्णनं। व्रजराजमन्दिरे वयस्यैः सह श्रीकृष्णस्य भोजनवर्णनं। कृताभिसारायाः राधायाः भ्रान्त्यादिवर्णनं। प्रादोषिकलीलावर्णनं। १९सर्गे,—अभिन्नहृदयतया सखीनामपि श्रीकृष्णेन सह सम्भोगार्थं राधिकायाः युक्तिवर्णनं। महारासोत्स-ववर्णनं। तत्र आलीनां प्राहेलिकालापवर्णनं। यमुनापुलिनवर्णनं। नृत्यगीतवाद्यादिवर्ण-नञ्च। २०सर्गे —पर्य्यङ्के शयानयोस्तयोः सखीभिः पादसंवाहनादिवणनं। तत्र परस्परमधर-ताम्बूलदानादिवर्णनं। प्रेमवैचित्यवर्णनं। कर्म्मिज्ञानिप्रभृतीनां गतिनिरूपणञ्च।

---

**No. 2520. भावनामृतटीका।** Substance, country-made paper, $15\frac{1}{2} \times 5$ inches. Folia, 104. Lines, 8 on a page. Extent, 4,914 ślokas. Character, Bengali, Date, Sk. 1762. Place of deposit, Bahrámpur, Rábu Rámadása Sen. Appearance, new. Prose. Generally correct.

**Bhávanámṛita-tíká.** A commentary on the poem noticed under the next preceding No.

**Beginning.** टीकाया,—

वृन्दाटवीश्वरसभाजनराजमान-
श्रीविश्वनाथगुणसूचककाव्यरत्नं।

मचिरसम्पुटमलङ्कृतां तदीत्ता-

सौभाग्यभाजमपि श्रीघ्रमम् विधत्तां ॥

अथ प्रारिप्सितग्रन्थसमाप्तिपरिपन्थिप्रत्यूहव्यूहविध्वंसपटीयसीं श्रीभगवत्प्रतिपत्तिं ग्रन्थकारचूड़ामणिः मङ्गलाचरणत्वेन निबध्नाति श्रीकृष्णेति ।

**End.** टीकाया,—

शाके चोलिकोत्सवे दोलाधिरूढाङ्गयोः राधाकृष्णयोः सरस्योः राधाकृष्णकुण्डयोः तटे श्रीचैतन्यस्य जन्मदिने काव्यं पूर्णतां भजत्युत् उदगात् ॥

विषयः । श्रीकृष्णभावनामृतव्याख्या ।

---

**No. 2521. भाट्टदीपिका ।** Substance, country-made paper, 12 × 4 inches. Folia, 112. Lines, 10 on a page. Extent, 4,717 ślokas, Character, Nágara Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose. Correct.

**Bháṭṭa-dípiká.** The first part of the work noticed under No. 1583, (IV. 156).

**Beginning.** विश्वेश्वरं नमस्कृत्य खण्डदेवः सतां मुदे ।

तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकां ॥

आनायस्यो वायुर्वै चेपिष्ठा देवता वायुमेव स्वेन भागधेयेन उपधावति स एवैनं भूतिं गमयति ।

**End.** तदेवं श्रुत्यादिषट्प्रमाणकमङ्गत्वं निरूपितं । अतः परं प्रयोज्यत्वं निरूपयिष्यते ।

**Colophon.** इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां तृतीयस्याष्टमः पादः ।

विषयः । जैमिनिसूत्रस्य प्रथमाध्यायद्वितीयपादादारभ्य तृतीयाध्यायस्य अष्टमपादान्तं व्याख्यानं ।

---

**No. 2522. उपासनातत्त्वम् ।** Substance, country-made yellow paper, 12 × 5 inches. Folia, 82. Lines, 9 on a page. Extent, 1,822 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrampur, Bábu Rámadása Sen. Appearance, new. Verse. Generally correct.

**Upásaná-tattva.** A treatise establishing that in the present Kali age, the only object of worship is Chaitanya, and laying down rules for the mode in which he should be worshipped. By Nityánanda S'armá.

**Beginning.** नत्वा गुरुपदद्वन्द्वं श्रीनित्यानन्दशर्म्मणा ।
भक्तानां परितोषायोपासनातत्त्वमुच्यते ॥

**End.** निखिलभुवननाथं साधुपीयूषधारा-
तरलितमनुवीजं नौमि कृष्णप्रकाशं ॥

**Colophon.** इति श्रीवायुपुराणे गौतमशतानन्दसंवादे श्रीचैतन्यप्रादुर्भावो नाम अष्टादशोऽध्यायः ।

इति श्रीउपासनातत्त्वे गुरुशिष्यसंवादे श्रीकृष्णचैतन्यावतारप्रकटप्रमाणं दशमः प्रसङ्गः ।

विषयः । कलौ श्रीकृष्ण एव साङ्गोपाङ्गः गौराङ्गरूपेण आविर्बभूवेति पुराणतन्त्रादि-वचनैश्चैवस्थापनं ।

---

**No. 2523.** अव्ययानि । Substance, country-made paper, 10 × 5½ inches Folia, 6. Lines, 9 on a page. Extent, 112 ślokas. Character. Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose. Generally correct.

**Avyayáni.** The Sanskrit indeclinables, their meanings and uses. Anonymous.

**Beginning.** श्रीगणेशाय नमः ।
स्वरादिनिपातमव्ययं । स्वरादयश्च निपाताश्चेति । समाहारद्वन्द्वः । स्वरिति स्वर्गे परलोके च । अन्तरिति मध्ये , प्रातर् प्रत्यूषे ।

**End.** वगाह इति आदिमाकारो लुप्यते । नान्यः अपिना साहचर्य्यात् ।

**Colophon.** इत्यव्ययानि समाप्तानि ॥

विषयः । अव्ययानामर्थनिरूपणं ।

---

**No. 2524.** मध्यसिद्धान्तकौमुदी । Substance, country-made paper, 10½ × 5 inches. Folia, 195. Lines, 9 on a page. Extent, 371 ślokas. Character, Nágara. Date Sk. 1739. Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose. Correct.

**Madhya-siddhánta-kaumudí.** An abridgment of the Sanskrit grammar of Páṇiní: not so elaborate as the Siddhánta-kaumudí nor quite so condensed as Laghu-kaumudí. By Varadarája.

**Beginning.** नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीं ॥
अइ उण् । ऋ ऌक् । ए ओङ् । इत्यादि ।

**End.** अत्र इकारस्य उदात्तता। इत्यादिप्रयोगमनुसृत्य अन्वाख्यातव्यं। इति स्वरप्रक्रिया।

एषा वरदराजेन बालानामुपकारिका।
अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी॥
कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी।
तस्याः संख्या तु विज्ञेया खवाणकरवह्निभिः।

**Colophon.** इति श्रीचरिटिकण्डिवरदराजभट्टकृता मध्यसिद्धान्तकौमुदी समाप्ता। शाके। १७३६।

विषयः। व्याकरणशास्त्रप्रतिपाद्यकथनं।

---

**No. 2525.** गरुड़पुराणम्। Substance, country-made yellow paper, 15½ × 5 inches. Folia, 209. Lines, 10 on a page. Extent, 7,568 ślokas. Character, Bengali. Date, Sm. 1267. Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose and verse. Incorrect.

**Garuda-puráṇa.** One of the 18 leading Puráṇas. The codex is complete, though incorrect.

**Beginning.** अजमजरमनन्तं ज्ञानरूपं महान्तं
शिवममलमनादिं भूतदेहादिहीनं।
सकलकरणहीनं सर्व्वभूतस्थितं तं
हरिममलममायं सर्व्वगं वन्द एकं॥
नमस्यामि हरिं रुद्रं ब्रह्माणञ्च गणाधिपं।
देवीं सरस्वतीञ्चैव मनोवाक्कर्म्मभिः सदा॥
सूतं पौराणिकं शान्तं सर्व्वशास्त्रविशारदं।
विष्णुभक्तं महात्मानं नैमिषारण्यमागतं॥
तीर्थयात्राप्रसङ्गेन उपविष्टं शुभासने।
ध्यायन्तं विष्णुमनघं तमभ्यर्च्यास्तुवन् कविं॥
शौनकाद्या महाभागा नैमिषीयास्तपोधनाः।
मुनयो रविसङ्काशा शान्ता यज्ञपरायणाः॥
ऋषय ऊचुः।
सूत जानासि सर्व्वं त्वं पृच्छामस्त्वामतो वयं।
देवतानां हि को देव ईश्वरः पूज्य एव कः॥

को ध्येयः को जगत्स्रष्टा जगत्कः पाति हन्ति कः ।
कस्मात् प्रवर्त्तते धर्म्मो दुष्टहन्ता च कः स्मृतः ।
तस्य देवस्य किं रूपं जगत्सर्गः कथं मतः ॥
केर्व्रतैः स तु तुष्टः स्यात् केन योगेन वाप्यते ।
अवतारास्य के तस्य कथं वंशादिसम्भवः ।
वर्णाश्रमादिधर्म्माणां कः पाता कः प्रवर्त्तकः ॥
एतत्सर्व्वं तथान्यच्च ब्रूहि सूत महामते ।
नारायणकथाः सर्व्वाः कथयास्माकमुत्तमाः ॥
सूत उवाच ।
पुराणं गारुडं वक्ष्ये सारं विष्णुकथाश्रयं ।
गरुड़ोक्तं कश्यपाय पुरा व्यासाच्छ्रुतं मया ॥
हरिरुवाच ।

**End.** पुराणं गारुड़ं प्रोक्तं विधिनापि मया ततः ।
यः पठेत् शृणुयाद्वापि स हि मोक्षमवाप्नुयात् ॥

**Colophon.** इत्यादिमहापुराणं गारुड़ं समाप्तं। ॐतत् सत्। १२६७ साल। तां २१ चैत्र ॥

**विषयः।** १,२,३ अध्याये,—वासुदेवस्य परब्रह्मत्वकीर्त्तनं। कुमारादिकल्किपर्य्यन्तं भगवतः चतुर्विंशत्यवतारकथनं। ब्रह्मणः सकाशात् व्यासस्य गरुड़पुराणाधिगमविवरणं। तत्र शिवब्रह्मसंवादेन भगवद्विभूतिवर्णनं। गरुड़स्य पुराणरचनाविवरणं। ४, ५, ६, ७अध्याये,—वासुदेवात् अव्यक्तमहत्तत्त्वादिक्रमेण जगत्सृष्टिप्रक्रियाकीर्त्तनं। विरूपादिकौमारान्तनवविधसृष्टिभेदकथनं। विधातृकृतसृष्टिविवरणं। धर्म्मरुद्रमनुप्रभृतीनां ब्रह्मणो मानसपुत्रत्वकथनपूर्व्वकं तेषां पत्नीपुत्रादिकीर्त्तनं। सूर्य्यादिवंशवर्णनं। सूर्य्यपूजनविधानादिकीर्त्तनं। ८, ९, १०, ११, १२, १३, १४, १५, १६ अध्याये—विष्णुपूजनविधिः। देवपूजाविधिः। मुद्रादिकथनं। सामान्यतः पूजानुक्रमकीर्त्तनं। विष्णुपञ्जरस्तोत्रकीर्त्तनं। योगप्रकरणं। विष्णोर्नामसहस्रस्तोत्रकथनं। पुनर्विष्णोर्ध्यानादिनिरूपणं। अन्यविधसूर्य्यार्च्चनविधिः। १७, १८, १९, २०, २१, २२, २३, २४, २५, २६, २७, २८ अध्याये—मृत्युञ्जयार्च्चनविधानं। अमृतेशपूजनविधिः। प्राणेश्वरपूजनविधिः। पाश-कार्म्मुक-चक्र-मुद्गरादिक्षेपणमन्त्रादिनिरूपणं। पञ्चवक्त्रपूजनपद्धतिकथनं। शिवार्च्चनपद्धतिकथनं। गणेशादिपूजाविधानं। त्रिपुरादिपूजाविधानं। आसनपूजाविधिः। कुब्जिकापूजाविधिः। सर्व्वनागादिविषहरणमन्त्रकथनं। गोपालपूजाविधिः। त्रैलोक्यमोहिनीपूजनविधिः। २९ ३०, ३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८ अध्याये,—विस्तरेण विष्णुपूजनविधिः। पञ्चतत्त्वार्च्चनपूजनपद्धतिकीर्त्तनं। सुदर्शनचक्रपूजा-

विधानं। न्यासादिप्रकारकीर्त्तनं। सन्ध्याविधिः। गायत्रीमाहात्म्यकीर्त्तनं। मङ्गलाविजयादी-नामर्चनविधानं। अन्यविधविष्णुपूजाविधानं। ३९, ४०, ४१, ४२, ४३, ४४, ४५, ४६, ४७, ४८, ४९, ५० अध्याये,—माहेश्वरीपूजनविधानं। कालरात्रिपूजाविधिः। नानाविद्याकथनं। पवित्रारोहणविधिः। ब्रह्मणो मूर्त्तिध्यानकथनं। वासुदेवमूर्त्तयः। गृहनिर्म्माणादौ वास्तुलक्षण-कथनं। प्रासादलक्षणतन्निर्म्माणादिप्रकारकथनं। सर्व्वदेवप्रतिष्ठाविधिः। ब्राह्मणक्षत्रियादीनां कर्म्मादिनिरूपणं। अष्टाङ्गयोगकथनं। प्रातःकृत्य-स्नान-तर्पण-वैश्वदेवादिविधिकीर्त्तनं। ५१, ५२, ५३, ५४ ५५, ५६, ५७, ५८, ५९ अध्याये,—दानधर्म्मकथनं। तिथिविशेषे द्रव्यविशेषदा-नफलकीर्त्तनं। प्रायश्चित्तविधानं। पद्म-महापद्म-मकर कच्छपादिचिह्नलक्षितपुरुषाणां प्रकृति-निरूपणं। प्रियव्रतोपाख्यानकथनादिकं। तद्वंशवर्णनं। भूगोलकथनं। पातालवर्णनं। सूर्य्या-दीनां संस्थानपरिमाणादिकथनं। ज्योतिश्चक्रनिरूपणं। तत्र नक्षत्रादीनां देवतादिनिरूपणं। ६०, ६१, ६२, ६३, ६४, ६५, ६६, ६७, ६८, ६९, ७० अध्याये,— फलितज्योतिषकथनं। विवा-हयोग्यकन्यालक्षणकीर्त्तनं। विशेषेण सामुद्रिकशास्त्रकथनं। स्वरोदयशास्त्रकीर्त्तनं। तत्र नाडी-नां संस्थानादिकीर्त्तनं। परविजयादिज्ञानं। रत्नानामुत्पत्तिवृत्तान्तकथनं। तेषां परीक्षाप्रकार-कथनं। तत्र मुक्ताफलपरीक्षा। पद्मरागादिपरीक्षा। मरकतेन्द्रनीलादिपरीक्षणञ्च। ७१, ७२, ७३, ७४, ७५, ७६, ७७, ७८, ७९, ८० अध्याये,—वैदूर्य्य-पुष्पराग-कर्क्केतन-पुलक-रुधिराक्ष-स्फटिकादिपरीक्षादिप्रकारकीर्त्तनं। सर्व्वतीर्थमाहात्म्यकीर्त्तनं। तत्र विशेषेण गयामाहात्म्यक-थनं। स्वायम्भुवमन्वन्तरकथनं। अन्यान्यमन्वन्तरकथनञ्च। ८१, ८२, ८३, ८४, ८५, ८६, ८७, ८८, ८९, ९०, ९१, ९२, ९३ अध्याये,—रुचिना सह पितॄणांसंवादकथनप्रसङ्गेन पितृलोक-माहात्म्यकीर्त्तनं। क्रौष्टकिन उपाख्यानं। पितृस्तोत्रकीर्त्तनं। परमात्मनो ध्याननिरूपणं। पुनर-न्यविधविष्णुध्यानकथनं। याज्ञवल्क्येन सह वसिष्ठदक्षसम्वर्त्तादीनां संवादेन वर्णाश्रमाचारध-र्म्मनिरूपणं। तत्र वेदाध्ययनाचमनप्राणायामादिप्रकारकथनं। नैष्ठिकादिब्रह्मचारिणां निय-मादिकथनं। गार्हस्थ्यधर्म्मनिरूपणं। सङ्करजातिनिरूपणं। ९४, ९५, ९६, ९७, ९८, ९९, १०० १०१, १०२, १०३, १०४ अध्याये,—द्रव्यशुद्धिकथनं। दानविधिः। श्राद्धविधिकीर्त्तनं। तत्र वृत्तिकर्त्तव्यताकीर्त्तनं। विनायकोपसृष्टस्य लक्षणं। तत् शान्त्युपायकथनं। ग्रहयज्ञविधानं। वन स्थधर्म्मकथनं। भिक्षुधर्म्मनिरूपणं। कर्म्मविपाकनिरूपणं। विशेषेण प्रायश्चित्तनिरूपणं। प्रेतशौ-चनिरूपणं। पराशरोक्तधर्म्मशास्त्रकीर्त्तनं। १०५, १०६, १०७, १०८, १०९, ११०, १११, ११२, ११३, ११४, ११५, ११६, ११७ अध्याये—नीतिसारकीर्त्तन। अत्र विशेषेण धर्म्मनीतिकीर्त्तनं। राजनीतिकीर्त्तनञ्च। एकभक्तव्रतव्यवस्थाकथनं। अनङ्गत्रयोदशीव्रतविधानकथन। अखण्डद्वा-दशीव्रतविधानं। अगस्त्यार्घदानव्रतविधानं। रम्भातृतीयाव्रतविधानं। चातुर्मास्यव्रतविधानं। ११८, ११९, १२०, १२१, १२२, १२३, १२४, १२५, १२६, १२७, १२८, १२९, १३० अध्याये,—मासोपवासाख्यव्रतविधानं। कार्त्तिकमासव्रतविधानं। शिवरात्रिव्रतविधानं। एकादशीव्रतमा-

हात्म्यकीर्त्तनं। भीमैकादशीमाहात्म्यकथनं। व्रतपरिभाषाकथनं। प्रतिपदादिव्रतविधानं। पुष्पद्वारोत्सवव्रतविधानं। मदनकादिपूजाविधानं। फाल्गुनतृतीयायां लवणपरित्यागफलकथनं। दष्टोद्धरणव्रतविधानं। सप्तमीव्रतविधानं। जन्माष्टमीव्रतविधानं। रम्भाष्टमीव्रतविधानं। अशोकाष्टमीव्रतविधिः। दुर्गानवमीव्रतविधानं। (अतः परमध्यायाङ्को नास्ति।) वीरनवमीव्रतविधानं। दिग्दशमीव्रतकथनं। श्रवणद्वादशीव्रतविवरणं। मदनचतुर्दशीव्रतं। सर्व्वतीर्थव्रतकथनं। सूर्य्यवंशवर्णनं। चन्द्रवंशवर्णनं। विष्णोर्द्दशावतारकथाप्रसङ्गेन सीताया माहात्म्यकीर्त्तनं। संक्षेपेण रामायणकथाकीर्त्तनं। संक्षेपेण हरिवंशकथाकीर्त्तनं। संक्षेपेण महाभारतकथाकीर्त्तनञ्च। धन्वन्तरिणा सह सुश्रुतस्य संवादेन रोगाणां निदानपूर्व्वरूपादिकथनं। ज्वररोगस्य निदानचिकित्सादिकथनं। एवमस्लपित्त-क्षय-कास-श्वास-हिक्का-ऽरोचक-तृष्णा-मदात्ययादिरोगाणां ज्ञेयं। नाड़ीव्रणादिरोगाणां चिकित्साकथनं। कुष्ठादिचिकित्साकथनं। स्त्रीरोगचिकित्साकीर्त्तनं। मधुरादिवर्गगुणकथनं। घृततैलादिगुणकथनं। मूषिकमक्षिकामशकादिनाशनधूपादिकथनं। वशीकरणौषधकथनं। गर्भधारणोपायकथनं। अङ्गिसञ्जनादिविधानकथनं। वृश्चिकादिविषनाशनौषधकथनं। सुखप्रसवौषधकथनं। स्नानविधिकथनं। तर्पणविधिकथनं। वैश्वदेवविधिकीर्त्तनं। सन्ध्याविधिः। पार्व्वणश्राद्धपद्धतिकीर्त्तनं। नित्यश्राद्धपद्धतिकथनं। सपिण्डनश्राद्धविधिः। धर्म्मसारकथनं। शौचाशौचनिरूपणं। तत्र विशेषेण द्रव्यशुद्धिकथनं। चतुर्युगधर्म्मकीर्त्तनं। पुराणादीनां नामकथनं। नैमित्तिकप्रलयवर्णनं। कर्म्मविपाकनिरूपणं। अष्टाङ्गयोगकथनं। भगवद्भक्तिमाहात्म्यादिकीर्त्तनं। विष्णुध्यानस्तोत्रमाहात्म्यादिकथनं। नरसिंहस्तोत्रकीर्त्तनं। तत्त्वज्ञानोपायकथनं। कृष्णाष्टकस्तोत्रं। अर्च्चनास्तोत्रकथनं। ब्रह्मज्ञाननिरूपणं। आत्मज्ञानोपदेशः॥

---

**No. 2526. दिव्यसूरिचरितम्।** Substance, country-made paper. Folia, 84. Lines, 10—11 on a page. Extent, 2,280 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, fresh. Prose. Incorrect.

**Divyasúri-charita.** Story of a devout Vaishṇava, illustrating the effect of devotion to Krishṇa. By S'rínivása Kavi *alias* Rañgagaruḍavádana *alias* Vaidya-purandara.

**Beginning.** प्रभाकाविव संसक्तौ भवभीतिनिवृत्तये।
रक्षितारौ त्रिजगतां लक्ष्मीनारायणौ भजे॥
क्व दिव्यसूरिचरितं क्व च मे मन्दशेमुषी।
नियन्तुकामोऽस्मि गजं साहसाद्बिसतन्तुना॥

प्राचां प्रशस्तिं प्राज्ञानां प्रार्थये प्राकृताग्रणीः।
पिपासोरग+ग्रस्यं चौद्रं पङ्गोः समोऽस्म्यहं॥
पूर्व्वाचार्य्यादृतं वृत्तं सूरीणामादिशेऽप्यहं।
द्युमणिद्योतितापि द्यौः खद्योतेनापि भासते॥
प्राचीनवाचां विषयं चरितं वर्णयाम्यहं।
गजेन प्रस्थिते मार्गे किं न याति पिपीलिका॥
दोषाश्लिष्टापि मत्सूक्तिर्विदग्धेभ्यो रोचते भृशं।
चन्द्रिकेव चकोरेभ्यः सर्व्वाशान्तरचारिणी॥
सतामेव तु मद्वाणी चपलापि मुदे परं।
शिशोरव्यक्तवचनं गुरुभ्यः किन्न रोचते॥

**End.** इत्याशास्य स वः शठान्तकमुखश्रीदिव्यसूरिः कृती
रव्वासिस्य (?) च तत् प्रबन्धनिवहैः सार्द्धं प्रतिष्ठाप्य सः।
श्रीरङ्गादिमधामसु स्वयमभूच्छ्रीदिव्यसूरिव्रजै-
स्तैः साकं परमं पदं जिगमिषूरामानुजाख्योमुनिः॥

**Colophon.** इति श्रीकाश्यपकुलतिलकस्य रङ्गाधिपारोग्यशालावल्लभस्य कविवैद्यपुरन्दरापरनामधेयस्य श्रीरङ्गगरुड़वादनपण्डितस्य श्रीनिवासकवेः कृतौ दिव्यसूरिचरिते महाकाव्ये अष्टादशःसर्गः। श्रीदिव्यसूरिचरितं सम्पूर्णं। ग्रन्थसंख्या २४००।

**विषयः।** १प्रथमे सर्गे,—वैकुण्ठवर्णनं। तत्र अयोध्याया अवस्थानसंस्थानादिकथनं। एकदा समुदितकरुणया वरुणालयदुहित्रा भगवन् भरतरामकृष्णादिरूपेणापहृतो भूमेर्भारः। अधुना तु लोकानां मोक्षोपायं कर्त्तुमर्हतीति सादरमभ्यर्थितो भगवान् श्रीरङ्गपत्तने निजसान्निध्यमकल्पयत् इति वर्णनं। मुक्ता अपि दिव्यसूरयस्तत्र पार्षदरूपेण अवतेरुरितिकथनं। २सर्गे,—काञ्चीनगरवर्णनं। मल्लप्रपूरपुरादिषु भूतनाम-लतिकाङ्कादीनां जन्मादिकथनं। तैः सार्द्धं भगवत्संवादकथनं। महीद्वारग्रामे भार्गवमहर्षेस्तपोवनवर्णनं। तन्मोहनार्थं सुरेन्द्रप्रेरितानामप्सरसां विभ्रमचेष्टितादिवर्णनं। सफलप्रयत्नायां तस्यां वेत्रगर्त्ते भ्रूणमुत्सृज्य स्वस्थानं गतवत्यां भगवदनुग्रहेण वेत्रजीविभिः तत्परिपालनादिवर्णनं। तस्मै पयः प्रदानेन पूर्वद्रमिथुनस्य कणिकृष्णनामकपुत्रलाभवर्णनं। वेत्रजीविपालितस्य भार्गवस्य भ..वद्दर्शनलाभेन भक्तिसारेतिनामप्राप्तिकथनं। तपश्चरतस्तस्मात् पार्व्वतीसहचरस्य शिवस्य पराभवप्राप्तिकथनं।

३सर्गे,—भार्गवेण सह तरक्षुवाहनस्य कोङ्कणमुनेः समागमादिवर्णनं। मयूरनामकनगरे ब्रह्मणा सह तस्य संवादकथनं। फणिसमागमकथनञ्च। तदनुग्रहेण वृद्धाया यौवनप्राप्तिकथनादिकं। चोलराज्ये भक्तिसारेण सह विष्णुपादनामककोविदस्य संवादः।

४, ५ सग,—कुरङ्गेश्रप्रसादेन अधिगततत्त्वज्ञानस्य कारिपुत्रस्य आषोड़शाब्दं कुरुकनगरे मौनभावेन अवस्थानादिकथनं। कुमुदनामकदिव्यसूरेः जन्मादिकथनं। तेन सह कारिपुत्रस्य समागमकथनं। पराङ्कुशाभिधानात् कारिपुत्रात् द्रामिड़ीसूत्यादेः उत्पत्तिकथनं।

६ सर्ग,—केरलदेशे कौस्तुभात्मनः कुलशेखरनृपतेरुपाख्यानं। भट्टनाथस्य जन्मादिकथनं। गरुड़ात्मनो विष्णुचित्तस्य चरित्रवर्णनं। पाण्डेश्वरस्य वल्लभदेवस्य चरित्रवर्णनं। वनमालांशस्य नारायणद्विजस्य चरित्रकथनं। तेन गणिकायाः संवादकथनञ्च।

७, ८ सर्ग—भगवदर्चारूपस्य रङ्गेश्वरस्य प्रसङ्गात् निचुलेश्वरतनयायाः कमलायाः गर्भे पुत्रोत्पत्तिकथनं। पुरुषोत्तमकार्म्मुकावतारस्य नीलस्य चरित्रवर्णनं। अत्र अयोनिजायाः कन्याया उपाख्यानं। तामुद्वहन्नं परकालमभियोधयितुं चोलभूपतेः प्रयाणादिवर्णनं।

९ १०, ११, १२ सर्ग,—तुलसीकानने कामपि वालिकामधिगच्छतो विष्णुचित्तस्य तत्परिपालनादिवर्णनं। तस्या वाल्यलीलावर्णनं। तारुण्योद्भेदवर्णनञ्च। अष्टोत्तरशतसंख्यकवैष्णवधामकथनं। विष्णुचित्तदुहितुः गोदायाः पूर्व्वरागवर्णनं। स्वयम्बरसभायां गोदायाः रङ्गेश्वरकण्ठे माल्यदानकथनं।

१३, १४, १५ सर्ग,—तया सह रङ्गेश्वरस्य विवाहोत्सववर्णनं। तत्र पुरसुन्दरीणां विभ्रमादिवर्णनं। प्रभातवर्णनं। परकालस्य वेङ्काद्रिहिमालयगमनादिविवरणं। तत्कृतसुवर्णमयबुद्धप्रतिमाहरणविवरणं। निचुलाधिपतेः साहाय्यात् तस्य बौद्धदलपराजयकथनं। वसन्तवर्णनं। रङ्गराजस्य जलविहारवर्णनं। सन्ध्यावर्णनं। वर्षादिवर्णनञ्च।

१६ सर्ग,—वीरनारायणदेवस्य आज्ञया नाथमुनेरधीश्वरमुनेश्च सर्व्ववैष्णवधामपर्य्यटनपूर्व्वकं यमुनापुलिनमधितिष्ठतोस्तयोः समीपात् पुण्डरीकाक्ष- कुरुकाधिपयोः सङ्गीताध्ययन कथनं। यामुनेयस्य जन्मादिकथनं। लब्धराज्येन तेन सह राममिश्रस्य संवादकथनं।

१७, १८ सर्ग,—रामानुजस्य जीवनचरितकीर्त्तनं। तेन सह लक्ष्मणार्य्य-यामुनेययोः संवादकथनं। कस्यचिदेकदण्डिनः रामानुजेन सह विचारकथनं। रामानुजस्य दिग्विजयकथनं। तीर्थयात्राप्रसङ्गेन तेन सह विष्णुचित्तादीनां संवादकथनं। रामानुजेन बौधायन-मतमवलम्ब्य ब्रह्मसूत्रभाष्यरचनकथनं। तत्कृतभगवदर्चास्थापनादिकथनञ्च।

---

**No. 2527. वराहसंहिता।** Substance, country-made paper, $7\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 25. Lines, 9 on a page. Extent, 405 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Verse. Correct.

**Varáha-sañhitá.** A large collection of stories illustrating the life of Kṛishṇa during his sojourn at Gokula and Vṛindávana. The

work belongs to a distinct class of Vaishṇava composition, of which there are several extant. They constitute a series closely similar to the Puráṇas.

**Beginning** पृथिव्युवाच ।

अनन्तकोटिब्रह्माण्डे तदाद्यान्तरसंस्थितं ।
विष्णुः स्थानं परं तेषां प्रधानं प्रियमुत्तमं ॥
यत्परं नास्ति कृष्णस्य प्रियं स्थानं महाद्भुतं ।
तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥
श्रीभगवान् वराह उवाच ।

**End.** कृष्णवर्णं चतुर्व्वाहुं शङ्खचक्रादिभूषितं ।
दक्षिणे द्वारपालञ्च श्रीविष्णुं कृष्णवर्णकम् ॥

**Colophon.** इति श्रीवराहसंहितायां धरणीवराहसंवादे पञ्चमं पटलं सम्पूर्णं ॥

विषयः। धरणीवराहयोः संवादेन श्रीकृष्णस्य वृन्दावनमेव गोलोकादिभ्यः प्रियतमं स्थानमितिनिरूपणं। तत्रापि मथुरायाः प्राधान्यकथनं। तत्र भद्रश्रीलोहभाण्डीरमहातालव-दरवकुलादिद्वादशमहावनवर्णनं। उपवनादिवर्णनञ्च। मथुरां पद्मत्वेन रूपयित्वा तत्र देश-विशेषेषु रासस्थलादिवर्णनं। वृन्दावनमाहात्म्यवर्णनं। शोभावर्णनञ्च। वृन्दावनविहारेषु कृष्णस्य कैशोरविग्रहत्वं नान्यत्रेतिकथनं। श्रीकृष्णस्य ध्यानप्रकारादिकीर्त्तनं। श्रीकृष्णस्य ऐश्वर्य्यादिवर्णनं। गोपीनां सौन्दर्य्यादिवर्णनं। रासस्थलीशोभावर्णनं। सखीनां नामकथनपूर्व्वकं प्रत्येकं राधाकृष्णयोः सेवनप्रकारादिकथनं। सर्व्वेषां वैष्णवमन्त्राणां श्रीकृष्णमन्त्रमूलत्व कीर्त्तनम्।

---

**No. 2528.** दानकेलिचिन्तामणिः। Substance, country made paper, 12½ × 4½ inches. Folia, 15 Lines, 7 on a page. Extent, 323 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, fresh. Verse. Correct.

**Dánakeli-chintámaṇi.** A poem describing the amours, and recreations of Kṛishṇa at Vṛindávana. By Kṛishṇa-chaitanya-chandra.

**Beginning.** कुर्व्वाणैः शतमाशिषां निजनिजप्रेयोजयायोत्सुकैः
स्वीयस्वीयगणैः स्फुटं कुटिलया वाचातितुङ्गीकृतः ।
गव्यानां नवदानकल्पनकृते प्रौढं मिथः स्पर्द्धिनो-
र्गान्धर्व्वा गिरिधारिणोर्गिरितटे केलीकलिः पातु वः ॥

उद्दामनर्म्मरसरङ्गतरङ्गकान्तं
राधासरिद्गिरिधरार्णवसङ्गमोत्थं ।
श्रीरूपचारुचरणाब्जरजःप्रभावा-
दन्धोऽपि दाननवकेलिमणिं चिनोमि ॥

End. राधामाधवयोर्दानकेलिचिन्तामणिर्गिरौ ।
+ + + + —— ——— ——— ।
आददानस्तृणं दन्तैरिदं याचे पुनः पुनः ।
श्रीमद्रूपपदाम्भोजधूलिर्भूयाद्भवे भवे ॥

Colophon. इति श्रीदानकेलिचिन्तामणिर्नाम प्रबन्धः सम्पूर्णः ।

विषयः । आमुक्तमदनवेशयोः राधाकृष्णयोः गिरिवरपरिसरे मिलितयोरन्योन्यं सौन्दर्य्य-दर्शनेन मुग्धयोः रूपवर्णनादिकं । एकदा शिरसि निहितगव्यकलशाभिः सह सहचरीभिः यज्ञभूमिं गच्छन्तीं राधिकां पथि निरुध्य दानं देहीति कथयता श्रीकृष्णेन सार्द्धं तासां परिहासादि व्याजेन लीलावर्णनं ।

---

**No. 2529. राधासौन्दर्य्यमञ्जरी ।** Substance, country-made paper, $11\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 3. Lines, 11 on a page. Extent, 170 ślokas Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, fresh. Verse. Incorrect.

**Rádhásaundarya-manjarí.** Poems descriptive of the personal beauty of Rádhá. By Subala-chandra A'chárya.

Beginning. सौन्दर्य्याम्भोधिरूपा प्रवरगुणमणिस्रग्धरा मीननेत्रा
(नाभीवृन्तानरणिमसुधयाभासभाग्भोगिसुभ्रूः ।)
श्रीकृष्णस्नेहचन्द्रद्युतिभिरनुदिनं वर्द्धिलावण्यवन्या ।
कान्ता स्वान्तान्तरस्था प्रभवतु सततं कापि गौरी किशोरी ॥

End. गत्या हीना कनकलतिका चञ्चला सा
नित्यं शोभां न हि कलयते फुल्लचाम्पेयपुष्पं ।
हेमाम्भोजं रजनिमलिनं कुङ्कुमं मूर्त्तिहीनं
दीपो वातैर्निहत इति राधिकाभां विधत्ते ॥

Colophon. इति श्रीसुवलचन्द्राचार्य्यविरचिता श्रीलराधासौन्दर्य्यमञ्जरी समाप्ता ।

विषयः । विविधालङ्करणैरलङ्कृतायाः राधायाः रूपशोभादिवर्णनं ।

---

**No. 2530.** सहृदयम्, वा सदाचारस्मृतिः। Substance, country-made paper, 13 × 3 inches. Folia, 235. Lines, 7—8 on a page. Extent, 5,058 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, old. Prose and verse. Correct.

**Sahṛidaya** ALIAS **Sadáchára-smṛiti.** A digest of the Smṛiti rules regarding Áchára, or duty. Author's name not made out.

**Beginning.** पञ्चात्मकं द्विरूपञ्च साधने बहुरूपकम्।

स्वानन्ददायकं ह्यव्यं ब्रह्मरूपं परं नुमः।

अ+ + मेव निखिलैरपि वेदवाक्यै

रामायणैः सहितभारतपञ्चरात्रैः।

अन्यैश्च शास्त्रवचनैः सह तत्त्वसूत्रै

र्निर्णायिते सहृदयं हरिणा सदैव॥

इह खलु भगवद्वचनाद्यवगतस्वर्गाद्यल्पफलेतरफलतात्पर्य्यकाणां। इत्यादि।

**End.** विष्णोः सर्व्वोत्तमत्वे तैत्तिरीयश्रुतिमपि प्रमाणयति। वेदाहमेतं पुरुषं महान्तं। आदित्यवर्णं तमसस्तु पारे। सर्व्वाणि रूपाणि विचित्य धीरः। नामानि + + इतः परं खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति।

विषयः। विष्णुस्मरणं विना कृतस्य कर्म्मण आसुरत्वकथनं। विष्णुभक्तिरहितस्य फलाभावकथनं। ग्रन्थस्य विषयप्रयोजनादिनिरूपणप्रसङ्गेन विचारावतरणं। सिद्धासिद्धभेदेन द्विविधकरणनिरूपणं। भगवद्दर्शनसाधनो भगवदनुग्रह एव इति निरूपणं। श्रवणमननादिभिः भगवद्भक्तिप्राप्तिक्रमकीर्त्तनं। मुक्त्यधिकारिणः। अधिकारनिरूपणं। सदाचारस्मृतिकरणे हेतुकथनं। तत्र आचारशब्दार्थनिरूपणं। सच्छब्दार्थकथनं। वैष्णवानां बाह्यलक्षणकथनं। आन्तरलक्षणकथनञ्च। निर्गुणभक्तिलक्षणं। यमनियमादिलक्षणं। तत्तद्भेदकथनञ्च। जैमिनिमतेन धर्म्मलक्षणकथनपूर्व्वकं 'विष्णुप्रीतिकरो धर्म्मः' इति वैष्णवमतेन धर्म्मलक्षणकीर्त्तनं। साधारणधर्म्मनिरूपणं। वर्णधर्म्मविवेचनं। असाधारणधर्म्मकथनं। कलियुगे वर्ज्जनीयकथनं। तत्र (दत्तायाः कन्यायाः पुनर्दानं वरस्य च।) इति वचनं याज्ञवल्क्यीयमितिकथनं। राज्ञां धर्म्मनिरूपणं। तत्स्वमन्त्रादीनां लक्षणतत्कृत्यादिकथनं। राज्ञो भोजनविषये विषादिपरीक्षाप्रकारकथनं। वेदायुक्तकर्म्मकर्त्तव्यता। फलदानसमर्थस्यापि भगवतः स्वेच्छया कर्म्मकरणानन्तरमेव फलदाने कारणकथनं। मोक्षेऽपि कर्म्मणां कर्त्तव्यत्वकथनं। कर्म्मणां भगवत्प्राप्तिहेतुत्वकथनं। पञ्चकालनिरूपणं। तत्र योगाधिक्यसंशयपरिहारः। कालाधिक्यसंशयपरिहारः। पञ्चकालानां परिमाणकथनञ्च। अष्टकालोक्तकर्म्मणां सामान्येन उद्देशः। एवं पञ्चकालोक्तकर्म्मणां ज्ञेयम्। सदाचारस्मृतिप्रामाण्यसाधनोपोद्घातकथनं। मन्वादिस्मृतिकर्तृपरिगणनं। मनोराप्तत्वं प्रति-

**Colophon.** इति गङ्गासहस्रनाम सम्पूर्णं ।

विषयः । गङ्गायाः स्तवनं ।

---

**No. 2565.** **गङ्गासहस्रनामटीका ।** Substance, country-made paper, 13 × 6½ inches. Folia, 37. Lines, 10 on a page. Extent, 1,017 ślokas. Character, Nágara. Date, ? Place of deposit Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose. Correct.

**Gañgá-sahasra-náma-ṭíká.** A commentary on the work noticed under the next preceding No. By Govindaráma.

**Beginning.** नमो भगवते तस्मै ब्रह्मविष्णुशिवात्मने ।
परब्रह्मस्वरूपिण्यै गङ्गायै च नमो नमः ॥
एकोनत्रिंशदध्याये गङ्गानामसहस्रकं ।
वर्ण्यते भूरिमाहात्म्यं सर्व्वाघौघविदारणं ।
पूर्व्वोक्तापरिमितगुणगणाया गङ्गायाः स्नानमन्तरेण नृणां जन्म व्यर्थं स्यात् । इत्यादि ।

**End.** मोचकारणीभूतब्रह्मास्पदं वा । मुक्तिवीजञ्च तदक्षरस्य ब्रह्मण आस्पदक्षेति वा ।

**Colophon.** इति गोविन्दरामकृता गङ्गासहस्रनामटीका सम्पूर्णा ।

विषयः । गङ्गासहस्रनामस्तोत्रस्य व्याख्यानं ।

---

**No. 2566.** **तीर्थकमलाकरः, वा सर्व्वतीर्थविधिः ।** Substance, country-made paper, 11 × 5 inches. Folia, 55. Lines, 5 on a page. Extent, 860 ślokas. Character, Nágara. Date ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, old. Prose and verse. Incorrect.

**Tírtha-kamalákara** ALIAS **Sarvatírtha-vidhi.** A digest of the rules regarding pilgrimage and the duties and the religious rites to be performed at sacred places. By Kamalákara Bhaṭṭa.

**Beginning.** श्रीरामकृष्णपितरं नत्वोमाख्याञ्च मातरं ।
कमलाकरसंज्ञेन तीर्थयात्रा विविच्यते ॥
तत्र गमनदिनात् पूर्व्वदिने हविष्यभोजनब्रह्मचर्य्यादिपूर्व्वकं । इत्यादि ।

**End.** अरुणायाः सरस्वत्याः सङ्गमे लोकविश्रुते ।
मुच्यते ब्रह्महत्याया + + + जिमखे तथा ॥
अत्र दारिद्र्यहरधनदमुक्तिदानं दानकमलाकरे ज्ञेयं ।

**Colophon.** इति कमलाकरभट्टकृततीर्थकमलाकरः समाप्तः ।

विषयः । तीर्थयात्रापूर्व्वदिनकृत्यनिरूपणं । तस्य श्राद्धविधिकथनं । वपनव्यवस्था । तीर्थ-प्रतिग्रहादिनिषेधः । गयायामेव श्राद्धदिने प्रस्थानं तीर्थान्तरे तु श्राद्धोत्तरदिन एवेतिकथनं । तीर्थगतनियमकथनं । तीर्थप्राप्तिदिनकृत्यनिरूपणं । तत्र मुण्डनोत्तरं स्नानादिविधानं । जीवत्पितृकेनापि तीर्थे मुण्डनं कार्य्यमितिकथनं । स्नानादौ मन्त्रकथनं । तर्पणविधिः । सर्व्वेषु तीर्थेषु सामान्यतः कृत्यनिरूपणपूर्व्वकं काशीतीर्थे कर्त्तव्यनिर्द्देशः । पञ्चक्रोशयात्राविधिः । काशीस्थ-लिङ्गानां नामादिकथनं । गयायात्राविधिकीर्त्तनं । अकालेऽपि तत्र यात्रायां विधानकथनं । अत्र प्रयोगकथनं । गयाश्राद्धे विशेषधर्म्मकथनं । निषिद्धेऽपि दिने गयायां तिलतर्पणविधानं । पिण्डदानविधिकथनादिकं । प्रेतपर्व्वकृत्यादिनिरूपणं । कुरुक्षेत्रयात्राविधिः । तत्र प्रयोगादि-कथनञ्च ।

---

**No. 2567.** स्कान्दब्रह्मोत्तरखण्डम् । Substance, country-made yellow paper, 13 × 4 inches. Folia, 100. Lines, 7 on a page. Extent, 2,685 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen ; another copy at Jhañjhápura, Post Mádháipura, Zilá Darbhángá, Paṇḍit Ganesadatta Miśra. Date, Sk. 1720. Appearance, new. Verse.

**Skanda-puráṇa.** One of the 18 great Puráṇas. The codex contains only the second part of the Brahma Khaṇḍa of that work. The part comprises 20 chapters devoted to the praise of the worship of S'iva, and descriptions of celebrated liṅgams in different parts of India. Many legends are given in connexion with the history of these liṅgams.

ॐ नमः शिवाय ।

**Beginning.** ज्योतिर्म्मात्रस्वरूपाय निर्म्मलज्ञानरूपिणे ।
नमः शिवाय नित्याय नमस्ते गुणहन्तये ॥
शौनक उवाच ।
आख्यातं भवता सूत विष्णोर्माहात्म्यमुत्तमं ।
समस्ताघहरं पुण्यं समासेन श्रुतञ्च नः ॥
इदानीं श्रोतुमिच्छामि माहात्म्यं त्रिपुरद्विषः ।
तद्भक्तानाञ्च माहात्म्यमशेषाघहरं परं ।
तन्मन्त्राणां तद्व्रतानां तत्पूजायाश्च सत्तम ॥
तत्कथायाश्च तद्भक्तेः प्रभावमनुवर्णय ।

श्रीसूत उवाच ।

एतावदेव मर्त्यानां परं श्रेयः सनातनं ।
यदीश्वरकथायां वो जाता भक्तिरहैतुकी ॥
अतस्तद्भक्तिलोलस्य माहात्म्यमनुवर्ण्यते । इत्यादि ।

End. विविधगुणविभेदैर्नित्यमस्पृष्टरूपं
जगति च वहिरन्तर्भासमानं महिम्ना ।
सुरगिरिविहरन्तं वाङ्मनोवृत्तिदूरं
परमशिवमनन्तानन्दसान्द्रं प्रपद्ये ॥

Colophon. इति श्रीस्कन्दपुराणे ब्रह्मोत्तरखण्डे पुराणश्रवणफलानुवर्णनं नाम द्वाविंशोऽध्यायः । समाप्तश्चेदं ब्रह्मोत्तरखण्डं ॥

विषयः । १ अध्याये,—सूतेन सह ऋषीणां संवादेन शिवमाहात्म्यकीर्त्तनं । शिवपञ्चाक्षरमन्त्रकथनं । रिरंसया स्वकामिणीं कलावतीं प्रार्थयमानस्य दर्शार्हनामकस्य यादवस्य उपाख्यानकथनमुखेन शैवमन्त्रमाहात्म्यकथनं । २ अध्याये,—माघचतुर्द्दश्यां शिवलिङ्गार्च्चनमाहात्म्यकथनप्रसङ्गेन इक्ष्वाकुकुलजस्य मित्रसहस्य राज्ञ उपाख्यानकथनं । तत्रैकदा मृगयारतं भ्रातृघातकतया तं केनाप्युपायेन जेतुमसमर्थस्य कस्यचित् राक्षसस्य मनुष्यरूपेण तद्दासतामवलम्ब्य नरमांसदानेन वशिष्ठं कोपयित्वा तच्छापेन राज्ञः राक्षसयोनित्वं विधाय स्वस्थानगमनकथनं । राज्ञः कल्माषपादत्वप्राप्तिकथनं । तत्कृतमुनिकिशोरभक्षणादिवृत्तान्तकीर्त्तनञ्च ।

३, ४अ,—गोकर्णमाहात्म्यकीर्त्तनं गोकर्णात् स्वस्थानमागच्छतः शौनकस्य महर्षेः पथि कुष्ठरोगिणीं काञ्चन चण्डालीं पश्यतस्तद्वृत्तान्तकथनं । शिवपूजामाहात्म्यकथनं विमर्षणाभिधानस्य नृपतेरुपाख्यानं । तस्य निजकामिन्याः पुरतः पूर्व्वजन्मनि सारमेयोऽहमासम्' इति तद्विवरणकीर्त्तनं । राज्ञ्याः पूर्व्वजन्मनि कपोतीत्वमधिगतायाः वृत्तान्तकथनञ्च ।

५, ६ अध्याये,—उज्जयिनीस्थमहाकालाभिधानशिवलिङ्गस्य माहात्म्यवर्णनं । उज्जयिनीनाथस्य चन्द्रसेनस्य नृपतेः शिवपारिषदान्मणिभद्रात् चिन्तामणिमधिगतस्य राज्ये मणिलुब्धानां प्रतिकूलभूपालानां युद्धार्थमागमनादिवृत्तान्तकथनं । शिवभक्तस्य पञ्चवर्षीयगोपालबालस्य विवरणं । प्रदोषकाले गिरिशार्चनमाहात्म्यकथनं । अत्र विदर्भाधिपतेः सत्यरथस्य उपाख्यानकीर्त्तनं । एकदा समरसंरम्भे कीर्त्तिशेषमुपगते सत्यरथे शङ्कया विद्रुतायास्तत्पत्न्याः पुत्रमेकं प्रसूय जलपानार्थं कृतावतारायाः सरसि ग्राहोदरे प्रवेशादिवर्णनं ।

७, ८ अध्याये,—शाण्डिल्योक्तशिवपूजाविधिकथनं । शिवाय तुलसीपत्रदानावश्यकता । शिवस्तोत्रकीर्त्तनं । द्विजनन्दनराजनन्दनयोः निधानकलसप्राप्तिकथनं । गन्धर्व्वकुमार्य्या सह धर्म्मगुप्ताभिधानस्य राजकुमारस्य विवाहादिकथनं । उपोष्य सोमवारे शिवपूजने फलश्रुतिकथनं । चित्रवर्म्मदुहितुः नलपौत्रेण चन्द्राङ्गदेन विवाहादिवर्णनं । सोमवारव्रतमाहात्म्यव-

र्णनं। एकदा वयस्यैः सह नौकारोहणेन यमुनायां विहरतः चन्द्राङ्गदस्य पयसि निमज्जनात् नागराजेन सह साक्षात्कारादिकथनं।

९—११ अ,—विदर्भेषु क्रतवासयोः सामविद्वेदविदभिधानयोः ब्राह्मणकुमारयोः दम्पतीवेशमास्थाय धनलाभार्थं निषधराजपत्न्याः समीपमुपस्थितयोरेकतरस्य स्त्रीत्वप्राप्तिकथनादिकं। सीमन्तिन्याः प्रभावकीर्त्तनं। पिङ्गलाभिधानायां वेश्यायामनुरक्तस्य नन्दननामकस्य द्विजतनयस्य वृत्तान्तकथनं। भद्रायुराख्यानकीर्त्तनं। पिङ्गलायाश्चन्द्राङ्गदस्य कन्यारूपेण जन्मग्रहणकथनादिकं।

१२—१६ अ,—शिवचिन्तनप्रकारकथनं। शिवकवचकीर्त्तनं। भद्रायुषे ऋषभस्य शङ्खादिदानकथनं। मागधैः सार्द्धं भद्रायुषो युद्धादिवर्णनं। कीर्त्तिमालिन्या सह तस्य विवाहादिवर्णनं। भद्रायुषो जन्मवृत्तान्तकथनं। तस्य माहात्म्यवर्णनञ्च। वामदेवस्य मुनेः क्रौञ्चारण्यप्रवेशवृत्तान्तकथनं। तेन सह ब्रह्मराक्षसस्य संवादे भस्ममाहात्म्यकथनञ्च। सनत्कुमारस्य पुरतः शिवस्य त्रिपुण्ड्रधारणविधिकीर्त्तनं तत्र तिसृषु रेखासु प्रत्येक नवदेवताकथनञ्च।

१७—१९ अ,—श्रद्धाया अभ्यर्हितत्वकथनं। एकदा मृगयारवेन सिंहकेतुना सह वनमध्ये जीर्णदेवालयदर्शनेन तदभ्यन्तरं प्रविश्य गृहीतशिवलिङ्गस्य शवरराजस्य संवादेन शिवपूजाविधिकीर्त्तनं। उमामाहेश्वरव्रतविधानं। अत्र देवरथदुहितुः शारदायाः सर्पदंशनेन भर्त्तुर्मरणे अन्यमुनिना सह संवादकथनादिकं। पार्व्वत्यास्तस्यै वरदानवृत्तान्तकीर्त्तनं।

२० अ,—रुद्राक्षमाहात्म्यकथनं। अङ्गविशेषे रुद्राक्षधारणमाहात्म्यकीर्त्तनं। एकवक्त्रादिरुद्राक्षभेदकथनं। अत्र काश्मीरस्थयोः सुधर्म्मतारकाभिधानयोः राजामात्यकुमारयोरुपाख्यानकीर्त्तनं। शिवव्रतिनो वैश्यस्य उपाख्यानं। रुद्राध्यायमाहात्म्यकथनं। अत्र काश्मीरनृपतेरुपाख्यानं। शिवमाहात्म्यप्रधानपुराणश्रवणमाहात्म्यकीर्त्तनं। पुराणज्ञप्रशंसाकथनं। पुराणनिन्दाकरणदोषकथनं। पुराणदानमाहात्म्यकथनं। वेश्यापतेः विदुराभिधानस्य ब्राह्मणस्य उपाख्यानकीर्त्तनं। तुम्बुरुपिशाचयोः संवादकथनं। ब्रह्मोत्तरखण्डमाहात्म्यकथनञ्च।

---

**No. 2568.** देवेन्द्रस्तोत्रम्: Substance, country-made paper, 10 × 4½ inches. Folia, 9. Lines, 14 on a page. Extent, 370 ślokas. Character, Mágadhi. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, old. Prose and verse. Correct.

**Devendra-stotra.** A hymn in praise of Devendra, a Jain divinity, in the Mágadhi language. Anonymous.

**Beginning.** अमरणरवन्दि ए वन्दि उसताइ एतिणवरिन्दे।
वीरवर अपि भमंतो तेतुक गुरु पणमि उण॥ इत्यादि।

**End.** या इसि आणं विमाणवासिणं। देवनिकायाणं च णुइइ सइ स समयो। अपरिसेदे॥ ४॥

देविं द तनुसम्म योसचमणु।

विषयः। जैनानां देवेन्द्रस्तवनं।

---

**No. 2569.** द्वीपविचारः वा यन्त्रमाला। Substance, country-made paper, 10 × 4 inches. Folia, 10. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, old. Prose. Correct.

**Dvípa-vichára** alias **Yantra-málá**. A description of the Jambudvípa according to Jain geography. By Nandíṣvara.

**Beginning** जम्बूद्वीपकूटविचारयन्त्रमाह। भद्रसाल अष्टकूट + + नरे। इत्यादि।

**End.** जम्बूद्वीपे पर्व्वत २४ वापी १६ राजधानी १६ सिद्धायतनानि २०।

**Colophon.** इति नन्दीश्वरवरद्वीपविचारः सम्पूर्णः।

विषयः। जैनानां जम्बूद्वीपसक्रमेरुविचारयन्त्रसंस्थानं। भद्रसालवनयन्त्रसंस्थानं। चन्द्नादिवनविचारयन्त्रसंस्थानं। जम्बूद्वीपनवक्षेत्रविचारयन्त्रसंस्थानं। तत्र अष्टषष्टिपर्व्वतविचारयन्त्रसंस्थानं। मध्यकमलविचारयन्त्रसंस्थानं। जीभीविचारयन्त्रसंस्थानं। कुण्डविचारयन्त्रसंस्थानं। एवं नदी-हृद-क्षेत्रादि-जगती-लक्षयोजनप्रमाणचतुर्द्वारविचारयन्त्रसंस्थानादिकथनं। धातकीखण्डे ज्ञेयं। पुस्करद्वीपविचारयन्त्रादिकथनं। एवं शैल-अथनन्दीश्वरवरद्वीपादिविचारयन्त्रादिसंस्थानं। (अत्र पत्राणामङ्काभावोऽस्ति।)

---

**No. 2570** छन्दःकौस्तुभः। Substance, country-made paper, $12\frac{1}{2} \times 6\frac{1}{4}$ inches. Folia, 37. Lines, 3 on a page. Extent, 270 ślokas. Character, Nágara. Date, Sm. 1895. Place of deposit, Bahrámpur, Bábu Rádhíká-prasáda Sen. Appearance, new. Verse. Correct.

**Chhandah-kaustubha.** An elaborate treatise on versification. By Rádhá Dámodara, a Bráhmaṇ of the Chaitanya sect, and supposed to have been an Uriá by birth. The different metres are all illustrated by stanzas in praise of Kṛishṇa.

**Beginning.** छन्दोभिर्विततङ्गैः कवयो यस्यानुकीर्त्तयन्ति गुणान्।

स जयति गोकुलवनिताजितान्तरः श्यामसुन्दरो भगवान्॥

नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः

निरवद्यनिर्व्वृतिमान् गजपतिरनुकम्पया यस्य॥

लीलां विष्णोर्गातुकामोऽतिचित्रां
छन्दांस्याख्यद्योऽभिरूक्षयाणि ।
श्रीमान् विद्यावारिधिर्विश्ववन्द्यः
पायात् सोऽस्मान् पिङ्गलो नागराजः ॥
छन्दोलक्षणहीनं सभासु काव्यं पठन्ति ये मनुजाः ।
कुर्व्वन्तोऽपि स्वेन स्वशिरश्छेदं न ते विद्युः ॥
वर्णमात्राविभेदेन छन्दो द्विविधमीरितं ।
लक्ष्यलक्षणरूपं तत् प्रायः सङ्गृह्यते मया ॥

**End.** द्विजकुलतिलकः श्रीमान् राधादामोदरो हरेः प्रेष्ठः ।
सवर्णैः सूत्रैर्ग्रथितं छन्दःकौस्तुभमिमं व्यतनोत् ॥
वेदर्तुपञ्चसंख्यातारछन्दसां व्यक्तयोऽत्र याः ।
लिखिताः सन्ति ताः सन्तः कलयन्तु कृपाकुलाः ॥

**Colophon.** इति छन्दःकौस्तुभे मात्राप्रस्तारो नवमी प्रभा । छन्दःकौस्तुभः समाप्तोऽयं ॥

विषयः । मकारादिगणनिरूपणं । तेषां शुभाशुभलक्षणं । मनगणयोः सखित्वकथनं । भयगणयोः भृत्यत्वकथनं । एवमन्यत्र ज्ञेयं । अत्र देवतावाचकादिपदानामपवादकथनं । समार्द्धसमविषमाणां लक्षणं । एकाक्षरायामुक्थायां श्रीवृत्तं । द्व्यक्षरायामत्युक्थायां स्त्रीवृत्तं । त्र्यक्षरायां मध्यायां नारीवृत्तं मृगीवृत्तञ्च । चतुरक्षरायां प्रतिष्ठायां कन्यावृत्तं सतीवृत्तञ्च । पञ्चाक्षरायां सुप्रतिष्ठायां पङ्क्तिवृत्तं । प्रियावृत्तञ्च । षडक्षरायां गायत्र्यां तनुमध्यावृत्तं । शशिवदनावृत्तं । सोमराजीवृत्तं वसुमतीवृत्तञ्च । एवमुष्णिहादिषु,—७ अक्षरायां मधुमतीवृत्तं । कुमारललितावृत्तं । मदलेखावृत्तं । चूडामणिवृत्तं । हंसमालावृत्तं । ८ अक्षरायां चित्रपदावृत्तं विद्युन्मालावृत्तं । मानवकवृत्तं । हंसरुतवृत्तं । समानिकावृत्तं । प्रमाणिकावृत्तं । वितानवृत्तं । नाराचवृत्तं । सिंहलेखावृत्तं । पद्ममालावृत्तं । सुचन्द्रावृत्तं । सुविलासावृत्तं ।—९ अक्षरायां हलमुखीवृत्तं । भुजगशिशुसृतावृत्तं । मानमध्यवृत्तं । सङ्गतावृत्तं । १० अक्षरायां,—रुक्मवतीवृत्तं । रूपवतीवृत्तं । चम्पकमालावृत्तं । मत्तावृत्तं । शुद्धविराड्वृत्तं । पणववृत्तं । मयूरसारिणीवृत्तं । त्वरितगतिवृत्तं । मनोरमावृत्तं । ११ अक्षरायां,—इन्द्रवज्रावृत्तं । उपेन्द्रवज्रावृत्तं । उपजातिवृत्तं । उपस्थितावृत्तं । सुमुखीवृत्तं । शालिनीवृत्तं । दोधकवृत्तं । वातोर्म्मिवृत्तं । भ्रमरविलसित[illegible]वृत्तं । रथोद्धतावृत्तं । स्वागतावृत्तं । वृत्तावृत्तं । भद्रिकावृत्तं । श्येनीवृत्तं । उपस्थितवृत्तं । श्रीवृत्तं । शिखण्डितवृत्तं । अनुकूलावृत्तं । मौक्तिकमालावृत्तं । मोटनकवृत्तं । सान्द्रपदवृत्तं । मनोहरावृत्तं । रुक्मावतीवृत्तं । महाविराट्वृत्तं । रुचिरावृत्तं । १२ अक्षरायां चन्द्रवर्त्मवृत्तं । वंशस्थविलवृत्तं । इन्द्रवंशावृत्तं । उद्धत्यादिवृत्तं । तोटकवृत्तं । द्रुतविलम्बितवृत्तं । पुटवृत्तं । मौक्तिकदामवृत्तं । स्रग्विणीवृत्तं । वैश्वदेवीवृत्तं । प्रमिताक्षरावृत्तं । मन्दाकिनीवृत्तं । कुसुम-

विचित्राहत्तं। तामरसहत्तं। मालतीहत्तं। भुजङ्गप्रयातहत्तं। प्रियंवदाहत्तं। मणिमालाहत्तं। पुष्पविचित्राहत्तं। विभावरीहत्तं वा पञ्चचामरं। ललिताहत्तं। उज्ज्वलाहत्तं। जलधरमालाहत्तं। नवमालिनीहत्तं। ललनाहत्तं। ललितहत्तं। द्रुतपदहत्तं। प्रभाहत्तञ्च। १३ अक्षरायां,—प्रहर्षिणीहत्तं। क्षमाहत्तं। रुचिराहत्तं। चण्डीहत्तं। मत्तमयूरहत्तं। गौरीहत्तं। कुटिलगतिहत्तं। उपस्थितहत्तं। मञ्जुभाषिणीहत्तं। सुमङ्गलाहत्तं। सम्बिवर्षिणीहत्तं। चन्द्रिकाहत्तं। नन्दिनीहत्तं। मृगेन्द्रमुखहत्तं। चञ्चरीकावलीहत्तं। १४ अक्षरायां,—असम्बाधाहत्तं। अपराजिताहत्तं। वसन्ततिलकाहत्तं। प्रहरणकलिकाहत्तं। वासन्तीहत्तं। लोलाहत्तं। इन्दुवदनाहत्तं। नान्दीमुखीहत्तं। सुधाहत्तं। कुटिलहत्तं। हंसश्येनीहत्तं। कुमारीहत्तं।

१५ अक्षरायां,—शशिकलाहत्तं। स्रगहत्तं। गुणमणिनिकरहत्तं। मालिनीहत्तं। प्रभद्रकहत्तं। एलाहत्तं। लीलाखेलहत्तं। विपिनतिलकहत्तं। चन्द्रलेखाहत्तं। तूणकहत्तं। चित्राहत्तं। मृदङ्गहत्तं। चन्द्रकान्ताहत्तं। वृषभहत्तं। कामक्रीड़ाहत्तं।

१६ अक्षरायां,—चित्रसंज्ञहत्तं। पञ्चचामरहत्तं। गजविलसितहत्तं। चकिताहत्तं। मदनललिताहत्तं। मणिकल्पलताहत्तं। प्रचरललितहत्तं। वाणिनीहत्तं। अचलधृतिहत्तं। धृतिहत्तं। गरुड़रुतहत्तं। १७ अक्षरायां,—शिखरिणीहत्तं। वंशपत्रपतितहत्तं। नर्दटकहत्तं। वनकोकिलहत्तं। मन्दाक्रान्ताहत्तं। भाराक्रान्ताहत्तं। हरिणीहत्तं। हारीणीहत्तं। समदविलासिनीहत्तं। द्रुताहत्तं।

१८ अक्षरायां,—कुसुमितलतावेल्लिताहत्तं। नाराचहत्तं। नन्दनहत्तं। लताहत्तं। तारकाहत्तं। शार्दूलललिताहत्तं। चित्रलेखाहत्तं। हरनर्त्तनहत्तं। हरिणप्लुतहत्तं। खगतिहत्तं। महामालिकाहत्तं।

१९ अक्षरायां,—मेघविस्फूर्ज्जिताहत्तं। छायाहत्तं। शार्दूलविक्रीड़ितहत्तं। सुरसाहत्तं। फुल्लदामहत्तं। वक्त्रकीहत्तं। पञ्चचामरहत्तं।

२० अक्षरायां,—सुवदनाहत्तं। गीतिकाहत्तं। हत्तहत्तं। शोभाहत्तं। २१ अक्षरायां,—स्रग्धराहत्तं। सरसीहत्तं। २२ अक्षरायां,—हंसीहत्तं। भद्रकहत्तं। मदिराहत्तं। महास्रग्धराहत्तं। लालित्यहत्तं। २३ अक्षरायां,—अद्रितनयाहत्तं। अश्वललितहत्तं। मत्ताक्रीड़हत्तं। २४ अक्षरायां,—तन्वीहत्तं। २५ अक्षरायां,—क्रौञ्चपदाहत्तं। २६ अक्षरायां,—भुजङ्गविजृम्भितहत्तं। अपवाहहत्तं।

दण्डकलक्षणादिकं। अर्द्धसमहत्तकथनं। विषमहत्तकथनं। उद्गताभेदनिरूपणं। चतुरूर्द्धच्छन्दोनिरूपणं। उपस्थितप्रचुपितच्छन्दोनिरूपणं। वक्त्रभेदनिरूपणं। मात्राहत्तनिरूपणं। तत्र अर्य्यालक्षणादिकं वैतालीयच्छन्दोभेदनिरूपणं। सङ्कीर्णमात्राहत्तकथनं। पज्झटिकादिनिरूपणं। वर्णप्रस्तारकथनं। वर्णोद्दिष्टकथनं। वर्णनष्टनिरूपणं। वर्णमेरुनिरूपणं। (अत्र सर्व्वत्र संस्थानकथनं परत्र च।) वर्णपताकानिरूपणं। वर्णमर्कटीनिरूपणं। मात्राप्रस्तारकथनं। मात्रोद्दिष्टकथनं। मात्रानष्टकथनं। मात्रामेरुकथनं। मात्रापताकाकथनं। मात्रामर्कटीकथनं।

**No. 2571** वृद्धशातातपसंहिता। Substance, country-made paper, 11 × 4 inches. Folia, 12. Lines, 5 on a page. Extent, 107 ślokas. Character, Nágara. Date, ? Place of deposit, Lálagolá, Zilá Murshidábád, Kálíbrahma Bhaṭṭáchárya; another copy at Post Dhámadaha, Zilá Purṇiyá, Paṇḍit Vachharana Ṭhákura. Appearance, fresh. Prose and verse. Correct.

**Vṛiddha-śátátapa-sañhitá.** An original code of Hindu law. By Sátátapa. It is called *Vṛiddha* or old in contradistinction to another and a later recension. The latter, however, is the best known and generally correct.

**Beginning.** वृद्धशातातपप्रोक्तं स्मृतितन्त्रविनिश्चयं।
संक्षेपेण प्रवक्ष्यामि यावद्दोषापनुत्तये॥
मूत्ररेतःसमुत्सर्गे यो भुञ्जीत पिवेत वा। इत्यादि।

**End.** वृद्धशातातपो ह्येतदुक्तवान्ऋषिसत्तमः।
अध्येतव्यं प्रयत्नेन ब्राह्मणैः श्रेय इच्छुभिः॥

**Colophon.** इति वृद्धशातातपप्रोक्तं धर्म्मशास्त्रं समाप्तं।

विषयः। मूत्ररेतःसमुत्सर्गे भोजन-पान-चण्डालादिस्पर्शप्रायश्चित्तकीर्त्तनं। उदक्यासूतिकास्पर्शादिप्रायश्चित्तकथनं। श्व-कुक्कुट-रवाच्चादिस्पर्शप्रायश्चित्तकथनं। धर्म्मशास्त्रमनधीत्य प्रायश्चित्तव्यवस्थादाने दोषकथनं। प्रमादेन वज्राद्‌कादिभिर्मरणे अशौचोदकादिक्रियाविधानं। क्षतो शौचादिविधानं। उच्छिष्टादौ शौचविधानं। संहतपात्राणां शौचविधानं। संस्थितायां भार्य्यायां सपिण्डीकरणान्तं कर्म्म पैतृकगोत्रेण कर्त्तव्यमूर्द्धन्तु पतिगोत्रभागित्वमितिकथनं। हस्तदत्तलवणव्यञ्जनभोजनादौ दोषकथनं। मृन्मयभाजने आज्यौषद्रव्यदाने दोषकथनं। दन्तधावनादिविधानकीर्त्तनं। प्रतिग्रहविधिकथनं। अन्यायलब्धद्रव्येण और्द्धदेहिकादिकरणे दोषकीर्त्तनं। धर्म्माधर्म्मनिदाननिरूपणं। मोक्षोपायकथनञ्च।

---

**No. 2572.** वीजकोषः। Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 8. Lines, 5 on a page. Extent, 101 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, old. Verse. Correct.

**Víja-kosha.** The value of the letters of the Sanskrit alphabet as elements of mystic mantras. Another work of this name has already been described. Cf. Vol. I, p. 273.

**Beginning.** ऋषय ऊचुः।
ब्रह्मर्षे ब्रह्मपुत्रस्त्वमशेषागमपारगः।
प्रसन्नोऽसि महाभाग्याद्स्मासु कृपया प्रभो।
नानाशास्त्राणि चस्माभिः श्रुतानि त्वन्मुखाम्बुजात्।
वर्णानां श्रोतुमिच्छामो मन्त्रकोषन्तु चैवहि।
दक्षिणामूर्त्तिरुवाच।
शृणुध्वमृषयः सर्व्वे मन्त्रो+द्यं यथाविधि॥ इत्यादि।

**End.** चकारस्य मया प्रोक्तं कुलचूड़ामणौ प्रिये।
वर्णानां देवदेवेशि कोषः प्रोक्तो मया शिवे।
नानामन्त्रयुतं देवि सर्व्वागमविनिश्चितं॥

**Colophon.** इति वीजकोषः समाप्तः।

विषयः। अकारादिचकारान्त मन्त्रेषु वीजलनिरूपणं।

---

**No. 2573.** वैष्णवाकृतचन्द्रिका। Substance, country-made yellow paper, 16 × 5½ inches. Folia, 155. Lines, 10 on a page. Extent, 6,290 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose. Correct.

**Vaishṇavákṛita-chandriká.** A commentary on the Vishṇu-puráṇa. By Ratnagarbha, son of Hiranyagarbha, and grandson of Mádhava.

**Beginning.** य आस्ते हृदयग्रन्थिगूढचिन्तामणिद्युतिः।
चेतयन्नखिलं विश्वं तस्मै श्रीविष्णवे नमः॥
हिरण्यगर्भतनयो माधवस्यात्मजात्मजः।
श्रीरत्नगर्भस्तनुते वैष्णवाकृतचन्द्रिकां॥
पुराणसंहितासारं पौलस्त्याद्वैष्णवं वरात्।
पराशरमुनिश्चक्रे पुराणं पञ्चलक्षणं।
षट्सहस्र षडंशं तट्टीकया कृतया स्वयं।
श्रीसूर्य्यकरमिश्रेण यत्नतः सङ्कुलं कृतं॥
अस्मिन् विवक्षितं यत्तु वस्तु तन्नमनात्मकं।
मुनिर्मन्त्रोपनिषदाहृत्य बध्नाति मङ्गलं॥
जितन्ते—इति।

**End.** व्यक्ताव्यक्तस्वरूपापरः ईश्वरः आत्मा पुरुषः तन्मम अगदजन्मजरादिलक्षणां सिद्धिं + दिशत्वित्याशीर्व्वादः॥ १२॥

**Colophon.** इति श्रीविष्णुपुराणे षष्ठेऽंशे अष्टमोऽध्यायः।)

विषयः। विष्णुपुराणस्य व्याख्यानं।

**No. 2574.** रत्नकोषः। Substance, country-made paper, 8½ × 5½ inches. Folia, 3. Lines, 10 on a page. Extent, 45 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, fresh. Verse. Incorrect.

**Ratna-kosha.** A vocabulary of synonyms for the different parts of the body. By Kálidása.

**Beginning.** रत्नकोषाभिधं शास्त्रं पिङ्गलाये तु भाषितं
यः शृणोति नरो नित्यं मेधा भवति पुष्कला।
खमं गगनमाकाशं शिखरं कपालमुच्यते॥ इत्यादि।

**End.** कालिदासस्य जल्पोऽयं मानयाघटवासवः।
पिङ्गला सापि तं शब्दं बाला प्रौढा च मुग्धया॥

**Colophon.** इति कविकालिदासकृतो रत्नकोषः सम्पूर्णः।

विषयः। मस्तकादिवस्त्वान्तानां केषाञ्चित् शब्दानां पर्य्यायकथनमात्रं।

---

**No. 2575.** तत्त्वप्रकाशः। Substance, country-made paper, 10 × 3½ inches. Folia, 60. Lines, 12 on a page. Extent, 2,810 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, old. Prose. Correct.

**Tattva-prakáśa.** A commentary on the S'abda-khaṇḍa section of Gaṅges'a's Tattva-chintámaṇi. The codex is incomplete, and the author's name is not apparent. This is quite distinct from the work noticed under No. 167 of this work (Vol. I, p. 89) and that noticed on p. 163 of Mr. Hall's 'Contributions.'

**Beginning** अथ तत्त्वप्रकाशो लिख्यते।
जटाजूटलसद्गाङ्गजलभूषितमस्तकं।
पुनातु गिरिजाप्रेमपात्रमेकमनेकधा॥

उपजीव्योपजीवकभावसङ्गत्या उपमाननिरूपणानन्तरं शब्दं निरूपयन् शिष्यावधानाय प्रतिजानीते अथेति। अत्र ज्ञायमानपदस्य शब्दप्रमाणतया पाद उपमानोपजीवकत्वाभावात् इत्यादि।

**End.** तथा च कथं कर्त्तृत्वादेर्बोधः षष्ठ्यन्ति चेन्न। कर्त्तृत्वकर्म्मत्वत्वाद्यतिरिक्तत्व —इतः परं खण्डितं।

विषयः। गङ्गेशकृततत्त्वचिन्तामण्यन्तर्गतशब्दखण्डस्य व्याख्यानं।

**No. 2576.** सप्तशतीव्याख्यानम्। Substance, country-made paper, 11 × 5 inches. Folia, 50. Lines, 8 on a page. Extent, 16,734 ślokas. Character, Bengali. Date, Sk. 1756. Place of deposit, Bahrámpur, Bábu Rádhiká-prasáda Sen. Appearance, fresh. Prose. Correct.

**Saptaśati-vyákhyána.** A commentary on the Chandi section of the Márkaṇḍeya Puráṇa. By Nágojí Bhaṭṭa, son of S'iva Bhaṭṭa.

**Beginning.** श्रीश्रीगणेशाय नमः।

श्रीमार्कण्डेयेनोक्तं वसिष्ठं किं वा भागुरिं प्रति उक्तं स्तोत्रं जैमिनिं प्रति पक्षिरूपैर्मुनि-पुत्रैरुक्तं मार्कण्डेयपुराणे कथितं स्तोत्रं तद्यथामति व्याचक्ष्महे। तत्रादौ व्याख्यास्यामः। ऋषिणः स्तोत्रे मार्कण्डेयसंवादेति।

**End.** अनेनाष्टम्यां वा चतुर्द्दश्यामित्यादिकौलकोक्तप्रकारेण ज्ञानं सूचितमिति सर्व्वेष्टसिद्धिः। १८।

**Colophon.** इति शिवभट्टसुतसतीगर्भज-नागोजीभट्टकृते सप्तशतीव्याख्याने त्रयोदशोऽध्यायः। समाप्तश्चेदं देवीमाहात्म्यं। शकाब्दाः १७५६।

विषयः। चण्डीमाहात्म्यव्याख्यानं।

---

**No 2577.** कालनिर्णयसंक्षेपः। Substance, country-made paper, $7\frac{1}{2}$ × $3\frac{1}{4}$ inches. Folia, 35. Lines, 10 on a page. Extent, 722 ślokas. Character, Nágara. Date, ? Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance.

**Kálanirṇaya-sañkshepa.** A summary of the rules for the ascertainment of proper times for the performance of ceremonies. By Hemádri.

**Beginning.** ॐ श्रीनर्म्मदायै नमः।

मासश्चतुर्द्धा त्रिंशता दिनैः सावनः सूर्य्यस्य संक्रमादासंक्रान्ति सौरः। पक्षद्वयेन चान्द्रः। अश्विन्यादिरेवत्यन्तनक्षत्रपरिवर्त्तनेन नाक्षत्रः।

**End.** मुख्यं कालमुपाश्रित्य गौणमप्यस्तु साधनं।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणं॥

**Colophon.** इति श्रीहेमाद्रिकृतकालनिर्णयसंक्षेपः॥

विषयः। सावनसौरादिभेदेन चतुर्व्विधमासनिरूपणं। दिवसस्यापि सावनादिभेदेन चातुर्व्विध्यकथनं। चान्द्रादित्रिविधसंवत्सरनिरूपणं। चान्द्रमासस्य द्वैविध्यकथनं। मलमास

निर्णयः । प्रतिपदादिसर्व्वतिथिनिरूपणं । खण्डतिथ्यादिव्यवस्था । व्रतविशेषे विशेषकथनं । एकभक्तकालनिरूपणं । नक्तकालनिर्णयः । उपवासतिथिनिर्णयः । नक्षत्रोपवासनिर्णयः । जन्माष्टमीनिरूपणं । एकादशीनिर्णयः । उन्मीलनीवञ्जुल्यादिमहाद्वादशीनिरूपणं । श्रवणाद्वादशीव्यवस्थाकथनं । शिवरात्रिव्रतनिर्णयः । पर्व्वनिर्णयः । ग्रहणनिर्णयः । उपाकर्म्मकालनिरूपणं । उत्सर्ज्जनकालनिर्णयः । संक्रान्तिकालनिरूपणं । अमावस्याश्राद्धकालनिर्णयः । अष्टकानिरूपणं । वृद्धिश्राद्धकालः । कृष्णपक्षश्राद्धकालः । अपरपक्षश्राद्धकालनिर्णयः । अयनादिश्राद्धकालनिरूपणं । प्रेतश्राद्धेषु नवश्राद्धकालनिरूपणं । षोड़शश्राद्धकालः । सपिण्डीकरणकालः । मघाश्राद्धनिर्णयः । विघ्नपतितश्राद्धकालः । पूर्व्वाह्णादिकालविभागः । श्राद्धे निषिद्धकालः । पिण्डदाननिषिद्धकालः । प्रेतक्रियासु निषिद्धकालः । वैश्वदेवादिकालभेदः । नित्यश्राद्धकालकथनं । तिथिविशेषे देवताविशेषपूजाकथनं । नक्षत्रादियुक्ततिथिनिर्णयः । युगाद्यायुगान्तनिरूपणं । कलौ वर्ज्जनीयानि । मन्वादयः । कालादिकथनं । व्यतीपातनिर्णयः । सामान्यतः पुण्यकालनिरूपणं । तिथिविशेषे वर्ज्जनीयानि । कालविशेषे वर्ज्ज्यानि । स्वापकालः । दन्तधावननिषेधकालः । सन्ध्याकालः । सन्ध्यायां वर्ज्जनीयानि । आमलकस्नानकालः । अभ्यङ्गकालः । तिलतर्पणकालः । पुंसवनादिकालः । अनध्यायनिरूपणं । ब्रह्मचर्य्याविधिः । स्वयंवरकालः । चतुर्थाश्रमकालः । अग्निहोत्रस्वीकारकालः । अग्निहोत्रानुष्ठानकालनिरूपणञ्च ।

---

**No. 2578.** प्रतिज्ञासूत्रभाष्यम् । Substance, country-made paper, 10 × 4 inches. Folia, 20. Lines, 7 on a page. Extent, 315 ślokas. Character, Nágara. Date, Sm. 1890. Place of deposit, Bahrámpur, Bábu Rádhikáprasáda Sen. Appearance, new. Prose. Correct.

**Pratijņá-sútra-bháshya.** A commentary on the supplement to the Pratijņá Sútra chapter of Kátyáyana's Kalpa-sútra of the White Yajur Veda. By Ananta Yájņika. This is distinct from the work noticed under No. 1799, Vol. V, p. 116.

**Beginning.** अस्मायोनिं जगद्योनिरयोनिर्यो निजं जनं ।
योनिवासात् चायते तं वन्देऽहं हंसरूपिणं ।
योनियोगवशं धत्ते यो निजायोनिजं जगत् ।
सोऽहं सोममहं वन्दे जङ्गमाजङ्गमात्मकं ।

तत्र भगवानाचार्य्यः प्रत्यूहसङ्घातविघाताय चिकीर्षितादौ वा मङ्गलार्थस्य आनन्तर्य्यार्थस्य च अथ शब्दस्य एकवृन्तगतफलद्वयन्यायेन एकशेषेण तन्त्रेणावृत्त्या वा ते वदन् शिष्यबुद्धिसमाधये प्रतिजानीते अथ प्रतिज्ञेति ।

**End.** द्विरभ्यासः परिसमाप्त्यर्थः । अन्ये विसरगः स्वरसंस्काराः पञ्चदशशाखा-साधारणेन प्रातिशाख्ये उपनिबद्धा इति ॥

**Colophon.** इति श्रीअनन्तयाज्ञिकविरचिते प्रतिज्ञापरिशिष्टभाष्ये तृतीया कण्डिका । इति प्रतिज्ञासूत्रभाष्यं सम्पूर्णं संवत् १८९० । माघस्य ।

विषयः । कात्यायनकृतशुक्लयजुर्व्वेदीयप्रतिज्ञापरिशिष्टसूत्रस्य व्याख्यानं । प्रतिज्ञापरिशिष्टे तु स्वरप्रक्रियानिरूपणमस्ति ।

---

**No. 2579. एकादशीमाहात्म्यम् ।** Substance, country-made yellow paper, 11 × 4½ inches. Folia, 47. Lines, 10 on a page. Extent, 1,322 ślokas. Character, Bengali. Date, Sk. 1761. Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Incorrect.

**Ekádaśí-máhátmya.** Rules for the performance of a fast on the 11th day of the moon and a number of legends illustrating the merits of the fast. An extract from one of the Puránas, name not ascertained.

**Beginning.** नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥
तत्रैव गङ्गा यमुना च वेणी गोदारी सिन्धुसरस्वती च ।
सर्व्वाणि तीर्थाणि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः ॥
सूत उवाच ।
कदाचिदर्ज्जुनः श्रीमान् विष्णुभक्तिपरायणः ।
भक्तिजिज्ञासयापृच्छद् वासुदेवं महामतिं ।

**End.** एकादशीव्रतमिदं कथितं मया यत्
कामप्रदं सकलकल्मषनाशनञ्च ।
विष्णोः प्रियं सुविधिपूर्व्वकमेतिहासं
कृत्वैव यन्नरवरो लभते विमुक्तिं ॥

**Colophon.** इति एकादशीमाहात्म्यं समाप्तं । शकाब्दाः १७६१ । पौषस्य ।

विषयः । श्रीकृष्णेन सह अर्ज्जुनस्य संवादेन एकादशीव्रतमाहात्म्यकीर्त्तनं । तत्र उपवासेषु अशक्तस्य नक्तभोजनविधानं । नक्तलक्षणं । रात्रौ अनुकल्पादिनिषेधकीर्त्तनं । एकादशीदिनकृत्यनिरूपणं । एकादश्या उत्पत्यादिवृत्तान्तकीर्त्तनं । तत्र मुरदानवविप्रकृतानां देवानां श्रीकृष्णस्तोत्रादिकीर्त्तनं । मुरदानवेन सह विष्णोः समरसंरम्भवर्णनं । तद्भयेन गिरिगुहायां पलायितस्य विष्णोः शरीरात् उद्भूतया कयाचित् कन्यकया मुरनामानादिविवरणकथनं । तस्या एव एकादशीरूपेण विष्णुप्रियात्वप्राप्तिकथनं । अत्र विद्धायां व्यवस्थानिरूपणं । मार्गशी-

श्वेमासे पिशाचमोचन्यभिधानाया एकादश्या माहात्म्यकथनं। अत्र शाकलदेशस्थस्य द्विजस्य पिशाचेन सह संवादादिकथनञ्च। श्रीकृष्णयुधिष्ठिरयोः संवादेन मोक्षैकादशीमाहात्म्यकथनं। अत्र वैखानसेतिनामकस्य राज्ञ उपाख्यानकीर्त्तनं। सफलैकादशीमाहात्म्यकथनं। अत्र चम्पावतीभूपालस्य माहिष्मतस्य राजर्षेः पुत्राणामुपाख्यानकीर्त्तनं। पुत्रदैकादशीमाहात्म्यकीर्त्तनं। अत्र भद्रावतीपुरीनाथस्य सुकेतुमतो राज्ञ उपाख्यानं। षट्तिलैकादशीमाहात्म्यकीर्त्तनं। अत्र कापिलरूपधारिणा भगवता सार्द्धं ब्राह्मण्याः संवादकथनं। जयैकादशीमाहात्म्यकथनं। अत्र इन्द्रशापेन माल्यवतीमाल्यवतोः पिशाचत्वप्राप्तिविवरणकथनं। विजयैकादशीमाहात्म्यकीर्त्तनं। अत्र दाल्भ्येन मुनिना सह श्रीरामस्य संवादकथनं। आमर्द्दक्येकादशीमाहात्म्यकीर्त्तनं। अत्र व्याधस्य उपाख्यानकथनं। पापमोचन्येकादशीमाहात्म्यकथनं। अत्र मञ्जुघोषायाः सङ्गीतश्रवणेन विमुग्धस्य ब्राह्मणस्य उपाख्यानकीर्त्तनं। कामदैकादशीमाहात्म्यकथनं। अत्र ललिताललितयोरुपाख्यानकीर्त्तनं। वरूथिन्येकादशीमाहात्म्यकथनं। मोहन्येकादशीमाहात्म्यकथनं। अत्र धनपालाभिधानस्य वैश्यस्य उपाख्यानकथनं। अपरैकादशीमाहात्म्यकथनं। निर्ज्जलैकादशीमाहात्म्यकथनं। अत्र भीमेन सह भीष्मस्य संवादकथनं। योगिन्येकादशीमाहात्म्यकीर्त्तनं। अत्र हेममालिन उपाख्यानकीर्त्तनं। पद्मैकादशीमाहात्म्यकथनं। अत्र मान्धातुरुपाख्यानकथनं। कामिकैकादशीमाहात्म्यकथनं। अत्र श्रीकृष्णेन सह नारदस्य संवादकथनं। पुत्रदैकादशीमाहात्म्यकथनं। अत्र महीजितनामकस्य नृपतेरुपाख्यानकथनं। अजैकादशीमाहात्म्यकथनं। अत्र हरिश्चन्द्रस्य नृपतेरुपाख्यानकीर्त्तनं। वामनैकादशीमाहात्म्यकथनं। अत्र वैरोचनेरुपाख्यानकथनं। इन्दिरैकादशीमाहात्म्यकीर्त्तनं। अत्र माहिष्मतीपतेरिन्द्रसेनस्य उपाख्यानकथनं। पापाङ्कुशैकादशीमाहात्म्यकथनं। रमैकादशीमाहात्म्यकथनं। अत्र मुचुकुन्ददुहितुश्चन्द्रभागाया उपाख्यानकीर्त्तनं। प्रबोधिन्येकादशीमहात्म्यकीर्त्तनं। अत्र चन्द्रकान्तेरुपाख्यानकीर्त्तनञ्च। इति।

---

**No. 2580.** नर्त्तननिर्णयः। Substance, country-made paper, 10 × 6 inches. Folia, 127. Lines, 32 on a page. Extent, 2,460 ślokas. Character, Bengali. Date, Sk. 1797. Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Verse. Generally correct.

**Narta-nirnaya.** An elaborate treatise on dancing and its accompaniments. By Puṇḍarika Viṭṭhala.

**Beginning.** ईशं जातिलयोपेतं वर्णभेदैरुपाश्रितं।
रासक्रीड़ामयं नत्वा वक्ष्ये नर्त्तननिर्णयं॥
तस्योपकारकाश्चैते तालधर्म्मस्मृदङ्गिनो।

गायको नर्त्तकः पश्चात्ता+कं नाटकादिकं ॥
इति पञ्चक्रमात् तच तावत् तालधरं ब्रुवे।
लक्ष्यलक्षणसम्पन्नो गुणवान् प्रतिभापटुः।

End. लक्ष्मलक्षणसन्दिग्धं परस्पराङ्गसङ्गतं।
तन्नर्त्तनं विट्ठलेन निःसन्दिग्धमकारि हि ॥
अकवरन्टपरुच्यर्थं भूलोके सरलसङ्गीतं।
क्लतमिदं वङ्कतरभेदं सुहृदां हृदये सुखं भूयात् ॥
श्रीमत्पण्डरिविट्ठलेन रचितं लोकोत्तरं सुन्दरं
दृष्ट्वा नर्त्तननिर्णयं भुवि कलौ तत्तत्प्रयोगाधिकं।
श्रीमत्तालमृदङ्गगानचतुरश्रीवंशन्टत्या+णां
सर्व्वेषामपि दर्शयन्तु गुरवो भूत्वा सदा पण्डिताः ॥

Colophon. इति श्रीकार्णाट+तीय पण्डरिकविट्ठलविरचिते नर्त्तन (क) निर्णये नर्त्तनप्रकरणं चतुर्थं समाप्तं ॥ शुभमस्तु शकाब्दाः १७९७।

विषयः। १ म प्रकरणे,—तालज्ञलक्षणं। तालधर्त्तृगुणदोषविवेचनं। पाटस्य कूटशुद्ध-खण्डादिभेदकथनं। मृदङ्गडमरुप्रभृतिषु वाद्येषु प्रधानाचरनिरूपणं। सम-विषम-चक्रवाल-ग्रह-भुक्तादिरूपपाटालङ्कारकथनं। समविषमादीनां लक्षणं। उद्ग्राह मेलाप-ध्रुवान्तरादिरूपप्रबन्धावयवकथनं। एषां लक्षणञ्च। कवितानिरूपणं संवारादिदशविधसञ्चकनिरूपणं। संद्रुत-सम-पादादि सप्तविधस्थानकनिरूपणं। तालस्तुतिः। गजरादीनां लक्षणं। व्यापकश्रुतिभूषणनिरूपणं। पाटचालिकथनं। पञ्चधातुकादितालकथनं। ध्रुवक रूपकादितालक्षणं। यत्यादि-प्रबन्धनिरूपणं। प्रहेलिका-कुवाड़-कौचटादिलक्षणं। मार्ग-देशीभेदात् द्विविधन्टत्यनिरूपणं। चञ्चत्पुटादिभेदेन पञ्चविधमार्गतालकथनं। देशीतालभेदनिरूपणं। तालप्रस्तारनष्टोद्दिष्टादि-कथनं। परिवृत्तिलयादिनिरूपणं।

२ ये,—वादिक-मुखरीभेदेन द्विविधमृदङ्गिलक्षणकथनं। मार्दङ्गिकगुणदोषविवेचनं। रक्तचन्दन-शिरीष-खदिरादिकाष्ठेन मृदङ्गशरीरनिर्म्माणकथनं। मृदङ्गनिर्म्माणप्रकारकीर्त्तनं। मृदङ्गवादने हस्तमुद्रादिनिरूपणं। चालिलक्षणं। तद्भेदनिरूपणं। व्याप्ति-नेम-लेमचालि-व्याप्ति-बन्ध-मोहर-मलाहर-व्यार्द्धि-मुक्तकादिमृदङ्गिकास्थानकनिरूपणं।

३ ये,—गायनलक्षणं। एकेल्ल-यमल-वृन्दगायनभेदेन तत्त्रैविध्यनिरूपणं। गायकगुणदोष-निरूपणं। ध्वन्युत्पत्तिप्रकारकथनं। नाद-स्थान-श्रुति-स्वर-ग्राम-मूर्च्छना-तानानां लक्षणं। स्वर-प्रस्तारकथनं। नष्टवर्णादिनिरूपणं। आरोहावरोहप्रकारकथनं। सरिगमादिस्वरावयवनिरूपणं। गमकस्वरूपनिरूपणं। रागच्छायानिरूपणं। आलापस्वरूपकथनं। स्थापनालक्षणं। राग-पलक्षणं। शुद्ध-सालङ्ग-सङ्कीर्णभेदेन त्रिविधरागकथनं। भैरवादिरागानां लक्षणं। तेषां परि-

धारादिकथनं। एला-करण-ढेङ्की-वर्त्तनी-झोम्बड़-लम्भ रास-शुद्धसूड़-वर्णस्वर-गद्य-कैवाड़ एक-चारिणी-कन्द-- तुरगलीला--गजलीला--द्विपदी--वक्रवाल-क्रौञ्चपद-ध्वनिकुट्टणी-आर्या-गाथा-द्विपथ--कलहंस-तोटक--घट-वृत्त-मातृका-रागकदम्बक-पञ्चतालेश्वर-तालार्णव-श्रीरङ्ग--पञ्चभङ्गी पञ्चानन--उमा-तिलक-त्रिपदी-चतुष्पदी-षट्पदी-विजय-चतुर्मुख-सिंहलील-दण्डक-झमाट-कन्दुक-हरविलास-सुदर्शन-स्वराङ्क-हर्षवर्द्धन-चर्चरी-चर्य्या-वाङ्कड़ी-वीरश्री-धवल-मङ्गल-लोली ढोल्लरीप्रभृतीनां गीतानां लक्षणकीर्त्तनं। रसविशेषे तालविशेषनियमनं। षड्विधमण्टगीतनि-रूपणं। चतुर्थप्रतिमण्टलक्षणं। षड्विधनि-सारूलक्षणं। षड्विधतालकथनं। चतुर्व्विधरास-कथनं। त्रिविधैकतालीकथनं। चन्द्रप्रकाश-सूर्य्यप्रकाश-नवरत्न-वीरशृङ्गार-रुद्रप्रकाश-दशाव-तार-शरभलील-चतुरङ्ग-ऋतुप्रकाश-शृङ्गारहारगीतभेदनिरूपणं। गानगुणाः। रागोपकार-कथनं।

४ र्थे प्रकरणे,—नर्त्तकलक्षणं। नर्त्तनलक्षणं। नाट्य-नृत्य-नृत्तानां लक्षणं। विषम-विकट-लघुभेदात् त्रिविधनृत्तनिरूपणं। ताण्डवलास्ययोः लक्षणं। अभिनयलक्षणतद्भेदकथनं। संयोग-जवर्णनिरूपणं। स्तम्भस्वेदादिसात्त्विकभावानामभिनयप्रकारकथनं। निर्व्वेद-ग्लानि-शङ्कादि द्वात्रिंशद्विधभावानां प्रत्येकमभिनयप्रकारकीर्त्तनं। रत्यादिस्थायिभावानामभिनयप्रकारकथनं। रसाभिनयप्रकारकथनं त्रिचाभिनये ऋतु-चन्द्र-सूर्य्यदर्शन-विद्युत्तापादीनामभिनयप्रणालीक-थनं। स्वभावाभिनयप्रकारः। षट्त्रिंशद्विधदृष्ट्यभिनयप्रकारः। भ्रूविक्षेपाभिनयप्रकारः। मुखरा-गाद्यभिनयप्रकारः। अष्टत्रिंशदसंयुतहस्ताभिनयप्रकारः। एवं संयुतनृत्तहस्ताद्यभिनयः। कट्य-भिनयः। चरणाभिनयः। स्थानकानि। नृत्यभेदनिरूपणं। लीन-समनख-छिन्न-गङ्गावतरण रेचित-प्रलम्बितादीनां लक्षणं। नृत्तमण्टपलक्षणं। नर्त्तकगात्ररेखादीनां लक्षणं। लास्याङ्गनिरू-पणं। सभालक्षणं। सभापतिलक्षणं। सभासन्निवेशप्रकारकथनं। वंशवेणुप्रभृतीनां लक्षणं। रङ्गभूमिलक्षणं। तत्र प्रवेशे इतिकर्त्तव्यतादिकथनं। गतिविशेषनिरूपणञ्च। भेरि-चित्रप्रभृ तीनां लक्षणं। पद्मबन्ध-नागबन्ध-वृक्षबन्धादिकथनं। शब्दनृत्तनिरूपणं। स्वराभिनयप्रकार-स्वर-मण्ड-विन्दु-गीत-मालाविन्दु-गीतमुद्रादिविन्दुप्रभृतीनां लक्षणं। काणधर-मुक्ताधरनृत्तलक्षणं। रासनिबन्धनृत्यादिनिरूपणञ्च।

---

**No. 2581.** कुमारपालप्रबन्धः। Substance, foolscap paper. Folia, 136. Lines, 11 on a page. Extent, 4,640 ślokas. Character, Bengali. Date, ? Place of deposit, Bahrámpur, Bábu Rámadása Sen. Appearance, new. Prose and verse. Incorrect.

**Kumárapála-prabandha.** History of Kumárapála, a Jain prince of Kanouj. By Jinamaṇḍana Upádhyáya, a disciple of Somasundara

Súrí. The work opens with an account of a petty chief of the name of S'ríbhúya. He was the lord of a town named Kalyána-kaṭaka in the province of Kanouj. He killed his uncle Sámanta Siñha and became king. His married Kanamaka Deví, daughter of Jayakáśí, a prince of the Chálukya race. His interview with Madanavarmá, of Maharaka Utturna. History of Hemachandra. His first name was Somachandra; he was brought up as an orphan in the house of the minister of Añgadeva. In the house of a banker at Nágapur, he converted a heap of charcoal into gold by his mere touch, and thereby obtained the appellative of Hemachandra. He travelled in Kashmír, Gauḍa and other places, and disseminated the Jaina religion wherever he went. He was born on the day of the full moon in the month of Kártika, 1145 Samvat. In 1154, he was initiated in the Jaina religion; he attained the rank of a Súrí in 1166, and died in 1229 = A. D. 1162. Turning from this digression to the main subject of the work, the auther next describes the birth of Kumárapála, son of Bhúvanapála, chief of the town of Dadhísthalipuri. Hemachandra was appointed tutor to the young prince. Proceeding one day on pilgrimage with Jaya Siñha, to preserve himself from the enemies of Jaya Siñha, Kumárapála travels *incognito*. Jaya Siñha entertains his companions with flesh-meat. Hemachandra and Kumárapála are disgusted at this and retire to the house of a potter. There the prince obtains some gold in a rat-hole. Thence by the advice of Hemachandra, the prince retires and secretes himself in the house of the minister of Udayana. He worships Mahálakshmí, retires to Kolándra, and obtains the protection of the king of that place. Subsequently he assumes sovereignty in his own country, builds a palace, and gives currency to an era of his own. His circumstances and his victory over his neighbours are then described at length. Hemachandra instructs him in the science of music, and subsequently initiates him in the Jain religion. Kumárapála becomes an ardent Jain, and dedicates many Jain temples. His nephew, Ajayapála, mixes poison in his food, and kills him in Samvat 1230 = A. D. 1163. The concluding portion of the work is devoted to the principles of the Jain religion, fasts, pilgrimages, the merits of erecting and repairing temples, &c. The work abounds in quotations from Pálí and Mágadhi works.

**Beginning** ॐ नमः श्रीमहावीरजिनेन्द्राय परात्मने ।
परब्रह्मस्वरूपाय जगदानन्ददायिने ॥
स+ सर्व्वे प्रकुर्व्वन्तु करस्थाः सुखसम्पदः ।

स्वनामस्थापनाद्व्यभावैः पावितविष्टपाः ।
जी+ + श्रीगुरुः सूर्य्यः सदाभ्युदयभासुरः ॥
यस्य वाचः प्रभासस्य + + भाषणलालसाः ।
सुमनःसुमनोभृङ्गसङ्गीतगुणवैभवाः ॥
सरस्वती जगन्माता पनौ+ + सरस्वतीं ॥ इत्यादि ।

**End.** प्रबन्धो योजितः श्रीमत्कुमारनृपतेरयं ।
गद्यपद्यैर्नवैः कैश्चित् कैश्चित्प्राक्तननिर्म्मितैः ॥
श्रीसोमसुन्दरगुरोः शिष्येण यथाश्रुतानुसारेण ।
श्रीजिनमण्डनगुणिना द्वाङ्कमनु (१४९२) प्रमितवत्सरे रुचिरः ॥

**Colophon.** इति श्रीसोमसुन्दरसूरीश्वरशिष्यश्रीजिनमण्डनोपाध्यायैः—श्रीकुमारपालप्रबन्धो दृष्टश्रुतानुसारेण योजितः । इति श्रीकुमारपालप्रबन्धः समाप्तः ।

विषयः । कान्यकुब्जदेशीयकल्याणकटकाभिधानपुराधिपस्य श्रीभूयनामकनृपतेरुपाख्यानं। तत्पत्न्या वनमध्ये अधिगततया वनराजेतिसंज्ञामधिगतवतो राजकुमारस्य सामन्तसिंहभगिन्या लीलादेव्या सह विवाहादिकथनं । श्रीभूयकृतपार्श्वनाथप्रतिमाप्रतिष्ठादिकीर्त्तनं । एकदा आपन्नसत्वाया लीलादेव्या अकाण्डमरणे सचिवैरुदरं विदार्य्य कर्षितस्य मूलराजनामकस्य तदनु स्वमातुलं सामन्तसिंहं निपात्य राज्याभिषेकादिवर्णनं । वनराज-योगराज-क्षेमराजप्रभृतीनां चौलुक्यवंशीयानां कर्णादित्य-चन्द्रादित्य-सोमादित्यादीनाञ्च राजत्वकालादिनिरूपणं । दुर्लभराजकुमारस्य श्रीभीमस्य मालवाधीशेन मुञ्जेन सह संवादादिकथनं । तत्र भैम-राजत्वकालादिनिरूपणं । जयकेशिराजसुताया रणमल्लदेव्या विवरणं । श्रीकर्णदेवस्य पुरतः श्रीधनेश्वर-भद्रेश्वरप्रभृतिसूरीणां जैनधर्म्मकथनं । जयसिंहदेवस्य वृत्तान्तकीर्त्तनं । तेन सह योगिन्योः संवादादिकथनं । युद्धार्थं कृतप्रयाणस्य तस्य महोरकपत्तननाथेन मदनवर्म्मणा सार्द्धं संवादादिकथनं । श्रीदत्तसूरिभिः सह वटपद्रपुराधिपतेः यशोभद्रस्य संवादकथनं । स्वमात्रा श्रीगुरुभ्यः समर्पितस्य अङ्गदेवस्य उदयननृपसचिवगृहे प्रतिपालितस्य जैनप्रव्रज्याग्रहणेन तदनु सोमचन्द्रमुनीति संज्ञान्तराधिगमादिवृत्तान्तकीर्त्तनं । अथैकदा नागपुरस्थधनदनामकश्रेष्ठिनो गृहे करस्पर्शमात्रेण अङ्गारराशिं सुवर्णजातं विधाय पुनस्तस्य हेमचन्द्रनामप्राप्तिविवरणं । हेमचन्द्रस्य काश्मीरगौड़देशादिपर्य्यटनविवरणं । सिद्धराजापराभिधानस्य जयसिंहस्य पुरतो हेमचन्द्रस्य शङ्खाख्यानकीर्त्तणं । तत्कृतजैनधर्म्मप्रचारविवरणं । तत्कृतजैनेन्द्रव्याकरण-कोषादिविवरणं । दधिस्थलीपुरीनाथत्रिभुवनपालकुमारस्य कुमारपालस्य जन्मादिवृत्तान्तकीर्त्तनं । जयसिंहस्य परिषदि हेमचन्द्रप्रमुखात् कुमारेण नीतिश्रवणादिकथनं । हेमचन्द्रादिभिः सह जयसिंहस्य तीर्थदर्शनवर्णनं । जयसिंहादात्मरक्षार्थं कुमारपालस्य प्रच्छन्नभावेन भ्रमणकथनं । अथैकदानिमन्त्रितैः भरटकैः सह मिलितं मत्स्यादिशुभलक्षणैः कुमारपालं प्रत्यभिज्ञाय नूनमेनं भोज-

आनन्तरं घातयिष्यामीति कृतसंकल्पे जयसिंहे कूरदृष्ट्यादिना तदभिप्रायस्य दुष्टत्वमनुमाय वमनव्याजेन ततो निर्गतस्य तस्य शनैः कुम्भकारगृहप्रवेशादिवृत्तान्तकीर्त्तनं। अन्येद्यु मूषिकं रौप्य-मुद्रां विलाद्‌ाकर्षन्तं विलोक्य कुमारस्य मुद्राग्रहणादिविवरणकथनं। हेमचन्द्रोपदेशात् कुमा-रपालस्य उदयनराजमन्त्रिमन्दिरे आत्मगोपनादिकथनं। श्मशाने तत्कृतमहालक्ष्मीसाधनादि-कथनं। कुमारस्य कोलस्वपत्तनाधीशाश्रयप्राप्तिकथनं। तत्र कुमारपालेश्वरनामकप्रासादनिर्म्माण-कथनं। तन्नामाङ्कितनाणकप्रवर्त्तनञ्च। कुमारस्य पुरतः केनचित् स्थविरेण उज्जयिनीनाथस्य संवत्प्रवर्त्तकस्य विक्रमादित्यस्य आख्यानकीर्त्तनं। नागेन्द्रपत्तनविवरणं। कुमारपालस्य अपूर्व्व-राज्याभिषेककौतुकवर्णनं। तत्र हेमचन्द्रादिसूरीणां समागमादिकथनं। कुमारपालस्य दिग्-विजयवर्णनं। गीतमाधुर्य्येण सकनकशृङ्खलस्य मृगस्य अटवीतो राजधानीप्रत्यानयनविवरण-कीर्त्तनं। हेमचन्द्रकृतसङ्गीतशास्त्रमर्म्मोद्भेदनादिकथनं। कुमारप्रत्यर्थिपार्थिवानां पराजयादि-वर्णनं। कुमारपालं प्रति हेमचन्द्रेण जैनधर्म्मोपदेशदानं। कुमारकृतजैनमन्दिरनिर्म्माणादि-विवरणं। विस्तरेण जैनधर्म्मनिरूपणं। तत्र उपवासादिविधिः। तीर्थयात्रादिविधिः। प्रतिमा-र्च्चनादिविधिः। शत्रुञ्जयगिरि-श्रीपुण्डरीकासनादिमाहात्म्यकथनं। जैनमन्दिरसंस्करणादिमा-हात्म्यकीर्त्तनं। जयसिंहस्य पूर्व्वजन्मवृत्तान्तकथनं। नरवीरस्य जैनधर्म्मग्रहणादिविवरणं। हेमचन्द्रस्य प्रभावेण अमावस्यायामपि पूर्णचन्द्रोदय इति वृत्तान्तकथनं। हेमचन्द्रस्य ११४५ संवत्सरे कार्त्तिकपूर्णिमायां जन्म ११५४ संवत्सरे जैनदीक्षा, ११६६ संवत्सरे सूरिपदप्रा-प्तिः, १२२९ संवत्सरे परलोकगमनकथनञ्च। अथैकदा स्वदौहित्रं प्रतीपमल्लं राजपदे निवे-शयितुकामं कुमारपालं तद्भ्रातृव्यः अजयपालः विषप्रयोगेण संजहारेति वृत्तान्तकथनं १२३० संवत्सरे तत्परलोकगमनमिति निरूपणञ्च। (अत्र पालीभाषाया अपि श्लोका वहवः सन्ति।)

---

**No. 2582. भविष्योत्तरपुराणम्।** Substance, country-made yellow paper, 12 × 5 inches. Folia, 340. Lines, 13 on a page. Extent, 9,116 ślokas. Character, Nágara. Date, Sm. 1620. Place of deposit, Calcutta, Rájá Rájendranárayana Deva, Bahádur. Appearance, old. Verse. Incorrect.

**Bhavishottara-purána.** A notice of this work has already been printed under No. 1742, Vol. V, p. 33, but the codex now under notice appears to be to a great extent distinct. Its contents are shown below in Sanskrit.

**Beginning.** ॐ नमः शिवाय। ॐ नमो वासुदेवाय सशार्ङ्गाय सुकेतवे।

सगदाय सचक्राय सश्रीकाय नमो नमः।

नमः शिवाय सोमाय सगणाय ससूनवे॥

नमस्त्रिशूलशूलाय सकपालाय येन्दवे ।
शिवं ध्यात्वा हरिं स्तुत्वा प्रणम्य परमेष्ठिनं ॥
चित्रभानुञ्च नत्वा वै ततो ग्रन्थमुदीरयेत् ।
कृताभिषेकं राजानं धर्म्मपुत्रं युधिष्ठिरं ॥
द्रष्टुमभ्यागता हृष्टा व्यासाद्याः परमर्षयः ।
मार्कण्डेयसमाण्डव्यशाण्डिल्यशाकटायनाः ॥
गौतमो गालवो गार्ग्यः शातातपपराशरौ ।
जामदग्न्यो भरद्वाजो भृगुर्भार्गुरिरेव च ।
उतङ्कः शङ्खलिखितौ शौनकः शांशपायनः (शिंशपायनः) ॥
पुलस्त्यः पुलहो दाल्भ्यो वृद्धदक्षः सलोमसः ।
नारदः पर्व्वतो जङ्गुरथावसुपरावतौ ॥
तानृषीनागतान् दृष्ट्वा वेदवेदाङ्गपारगान् ।
भक्तिमान् भ्रातृभिः सार्द्धं कृष्णधौम्यपुरःसरः ॥
युधिष्ठिरः संप्रहृष्टः समुत्थायाभिवाद्य च ।
अर्घमाचनं पाद्यमासनानि स्वयं ददौ ॥

**End.** शय्यां वराणि चान्नानि सुवर्णं रजतादि च ।
गोमहिष्यौ अजाव्यश्वग्रामदानं गृहाणि च ॥
आसनानि च ताम्बूलं यथावच्च युधिष्ठिरः ॥

**Colophon.** इति भविष्योत्तरे दानधर्म्मे सर्व्वशास्त्रोद्धृते सर्व्वदानानि समाप्तः (सर्व्वदाननियमः समाप्तः) । शुभं भवतु ।

विषयः । १ माध्याये व्यासादिऋषीनामागमनकथनं । २ याध्याये ब्रह्माण्डोत्पत्तिकथनं । ३याध्याये वैष्णवमायाकीर्त्तनं । ४ र्थाध्याये संसारदोषकथनं । ५मे अध्याये पापोत्पादककर्म्मनिरूपणं । ६ष्ठे अध्याये शुभाशुभकर्म्मफलनिर्द्देशः । ७मे अध्याये शकटव्रतकथनं । ८मे अध्याये तिलकव्रतकथनं । ९मे १०मे अध्याये करवीरव्रतकथनं । ११शे अध्याये भद्रोपचारप्रतिपद्व्रतकथनं । १२शे अध्याये अशून्यशयनद्वितीयाव्रतं । १३शे अध्याये गोपदत्रिरात्रव्रतं । १४शे अध्याये हरिकालीव्रतं (हरितालीव्रतं) । १५शे अध्याये तृतीयाललिताव्रतं । १६शे अध्याये अवियोगतृतीयाव्रतं । १७शे अध्याये उमामहेश्वरव्रतं । १८शे अध्याये रम्भातृतीयाव्रतं । १९शे अध्याये सौभाग्याष्टकतृतीयाव्रतं । २०शे अध्याये रसकल्याणीतृतीयाव्रतं । २१शे अध्याये रसकल्याणीतृतीयाव्रतान्तरं । २२शे अध्याये आनन्दकतृतीयाव्रतं । २३शे अध्याये चैत्रभाद्रपदमाघमासेषु तृतीयाव्रतं । २४शे अध्याये अनन्ततृतीयाव्रतं । २५शे अध्याये अक्षयतृतीयाव्रतं । २६शे अध्याये अङ्गारकचतुर्थीव्रतं । २७शे अध्याये विनायकस्नानचतुर्थीव्रतं । २८शे अध्याये विघ्नविनायकचतुर्थीव्रतं ।

२९शे अध्याये नागशान्तिव्रतं। ३०शे अध्याये सारस्वतव्रतं। ३१शे अध्याये पञ्चमीव्रतं। ३२शे अध्याये श्रीपञ्चमीव्रतं। ३३शे अध्याये विशोकषष्ठीव्रतं। ३४शे अध्याये षष्ठीव्रतं। ३५शे अध्याये मन्दारषष्ठीव्रतं। ३६शे अध्याये ललिताषष्ठीव्रतं। ३७शे अध्याये कार्त्तिकेयषष्ठीव्रतं। ३८शे अध्याये शाण्डिल्यसप्तमीव्रतं। ३९शे अध्याये विजयसप्तमीव्रतं। ४०शे अध्याये आदित्यमण्डल-व्रतविधिः। ४१शे अध्याये अभीष्टसप्तमीव्रतं। ४२शे अध्याये कुक्कुटीव्रतं। ४३शे अध्याये उभय-सप्तमीव्रतं। ४४शे अध्याये कल्याणसप्तमीव्रतं। ४५शे अध्याये शर्करासप्तमीव्रतं। ४६शे अध्याये कमलसप्तमीव्रतं। ४७शे अध्याये शुभसप्तमीव्रतं। ४८शे अध्याये आदित्यस्नपनसप्तमीव्रतं। ४९शे अध्याये सोमाष्टमीव्रतं। ५० मे अध्याये बुधाष्टमीव्रतं। ५१मे अध्याये जन्माष्टमीव्रतं। ५२मे अध्याये कृष्णाष्टमीव्रतं। ५३मे अध्याये अनघाष्टमीव्रतं। ५४मे अध्याये सोमाष्टमीव्रतान्तरं। ५५ मे अध्याये ध्वजनवमीव्रतं। ५६ मे अध्याये उल्कानवमीव्रतं। ५७मे अध्याये दशावतार-व्रतं। ५८मे अध्याये आशादशमीव्रतं। ५९मे अध्याये अरण्यद्वादशीव्रतं। ६०मे अध्याये रो-हिणीचन्द्रव्रतं। ६१मे अध्याये अवियोगद्वादशीव्रत। ६२मे अध्याये गोवत्सद्वादशीव्रतं। ६३ मे अध्याये नीराजनद्वादशीव्रतं। ६४ मे अध्याये भीष्मपञ्चकव्रतं। ६५मे अध्याये भीमद्वादशीव्रतं। ६६ मे अध्याये श्रवणाद्वादशीव्रतं। ६७ मे अध्याये संप्राप्तिद्वादशीव्रतं। ६८ मे अध्याये गोविन्द-द्वादशीव्रतं। ६९ मे अध्याये मनोरथद्वादशीव्रतं। ७० मे अध्याये तिलद्वादशीव्रतं। ७१मे अध्याये सुकृतद्वादशीव्रतं। ७२मे अध्याये धरणीव्रतं। ७३मे अध्याये विशोकद्वादशीव्रतं। ७४मे अध्याये विभूतिद्वादशीव्रतं। ७५मे अध्याये अनङ्गद्वादशीव्रतं। ७६मे अध्याये यमादर्शनत्रयोद-शीव्रतं। ७७मे अध्याये अनङ्गत्रयोदशीव्रतं। ७८मे अध्याये पालीव्रतं। ७९मे अध्याये रम्भाव्रतं। ८०मे अध्याये आनन्दचतुर्द्दशीव्रतं। ८१मे अध्याये अनन्तचतुर्द्दशीव्रतं। ८२मे अध्याये सर्व्वफल-त्यागचतुर्द्दशीव्रतं। ८३मे अध्याये जयपूर्णिमाव्रतं। ८४मे अध्याये वैशाखीकार्त्तिकीमाघीव्रतं। ८५मे अध्याये सावित्रीव्रतं। ८६मे अध्याये कृत्तिकाव्रतं। ८७मे अध्याये पूर्णमनोरथव्रतं। ८८ मे अध्याये अशोकपूर्णिमाव्रतं। ८९मे अध्याये अनन्तफलदव्रतं। ९०मे अध्याये साम्भरायणीव्रतं। ९१म अध्याये नक्षत्रपुरुषव्रतं। ९२मे अध्याये सम्पूर्णव्रतं। ९३मे अध्याये कामदानव्रतं। ९४मे अध्याये नक्षत्रव्रतं। ९५मे अध्याये संक्रान्तिव्रतं। ९६मे अध्याये भद्राव्रतं। ९७मे अध्याये अगस्त्यार्घ्यव्रतं। ९८मे अध्याये भार्गवार्घ्यविधिः। ९९मे अध्याये पञ्चाशीतिव्रतानि। १००मे अध्याये माघस्नानवि धिः। १०१मे अध्याये नित्यस्नानविधिः। १०२ये अध्याये रुद्रस्नानविधिः। १०३ये अध्याये अन-शनविधिः। १०४र्थे अध्याये तड़ागवापीकूपोत्सर्गविधिः। १०५मे अध्याये दीपदानविधिः। १०६ष्ठे अध्याये वृषोत्सर्गविधिः। १०७मे अध्याये फाल्गुनमैार्णमास्युत्सवः। १०८मे अध्याये दम-नकान्दोलनरथयात्रोत्सवविधिः। १०९मे अध्याये मदनमहोत्सवविधिः। ११०मे अध्याये भूतमा-लोत्सर्गविधिः। १११ शे अध्याये महानवम्युत्सवः। ११२ शे अध्याये लक्षहोमविधिः। ११३ शे अध्याये कोटिहोमविधिः। ११४ शे अध्याये होमविधिः। ११५ शे अध्याये धेनुदानविधिः।

११६शे अध्याये तिलधेनुदानविधिः। ११७ शे अध्याये क्षीरधेनुदानविधिः। ११८ शे अध्याये दधिधेनुदानविधिः। ११९ शे अध्याये मधुधेनुदानविधिः। १२० शे अध्याये लवणधेनुदानविधिः। १२१ शे अध्याये फलधेनुदानविधिः। १२२ शे अध्याये नवनीतधेनुदानविधिः। १२३ शे अध्याये रसधेनुदानविधिः। १२४ शे अध्याये सुवर्णधेनुदानविधिः। १२५ शे अध्याये रत्नधेनुदानविधिः। १२६ शे अध्याये कृष्णगोदानविधिः। १२७ शे अध्याये गोसहस्रदानविधिः। १२८ शे अध्याये वृषदानविधिः। १२९ शे अध्याये महिषीदानविधिः। १३० शे अध्याये अश्वदानविधिः। १३१ शे अध्याये कर्त्तव्यनिर्णयः। १३२ शे अध्याये प्रेतलपरीहारकदानविधिः। १३३ शे अध्याये श्राद्धतत्त्वनिर्णयः। १३४ अध्याये श्राद्धविधिः। १३५ शे अध्याये ब्राह्मविवाहादिलक्षणं। १३६ शे अध्याये भूमिदानमाहात्म्यं। १३७ शे अध्याये पृथिवीदानविधिः। १३८ शे अध्याये हलपङ्क्तिदानविधिः। १३९ शे अध्याये गृहदानविधिः। १४० शे अध्याये अन्नदानमाहात्म्यं। १४१ शे अध्याये स्थालीदानविधिः। १४२ शे अध्याये दासीदानविधिः। १४३ शे अध्याये प्रपाकरणविधिः। १४४ शे अध्याये अग्निकाष्ठिकादानविधिः। १४५ शे अध्याये विद्यादानविधिः। १४६ शे अध्याये तुलापुरुषदानविधिः। १४७ शे अध्याये हिरण्यगर्भदानविधिः। १४८ शे अध्याये ब्रह्माण्डदानविधिः। १४९ मे अध्याये कल्पपादपदानविधिः। १५० मे अध्याये कल्पलतादानविधिः। १५१ मे अध्याये गजरथाश्वदानविधिः। १५२ मे अध्याये कालपुरुषदानविधिः। १५३ मे अध्याये महाभूतघटदानविधिः। १५४ मे अध्याये शय्यादानविधिः। १५५ मे अध्याये आत्मप्रतिकृतिदानविधिः। १५६ मे अध्याये हिरण्याश्वरथप्रदानविधिः। १५७ मे अध्याये कृष्णाजिनदानविधिः। १५८ मे अध्याये हेमहस्तिरथदानविधिः। १५९ मे अध्याये विश्वचक्रदानविधिः। १६० मे अध्याये भुवनदानप्रतिष्ठाविधिः। १६१ मे अध्याये नक्षत्रविशेषे द्रव्यविशेषदानविधिः। १६२ मे अध्याये तिथिविशेषे द्रव्यविशेषदानविधिः। १६३ मे अध्याये धान्यशैलदानविधिः। १६४ मे अध्याये लवणाचलदानविधिः। १६५ मे अध्याये गुडपर्व्वतदानविधिः। १६६ मे अध्याये हेमाचलदानविधिः। १६७ मे अध्याये तिलशैलदानविधिः। १६८ मे अध्याये कार्पासपर्व्वतदानविधिः। १६९मे अध्याये घृतशैलदानविधि। १७० मे अध्याये रजताचलदानविधिः। १७१ मे अध्याये शर्कराचलदानविधिः। १७२ मे अध्याये सदाचारलक्षणकथनं। १७३-मे अध्याये व्रतादीनां नामकीर्त्तनं। १७४ मे अध्याये मत्स्यपुराणोक्ततिलपात्रदानविधिः। १७५ मे अध्याये ऋषिपञ्चमीव्रतं। १७६ मे, १७७ मे अध्याये ऋषिपञ्चमीव्रतविधिकथनं।

---

**No. 2583.** सङ्गीतनारायणः। Substance, country-made yellow paper. $16\frac{1}{2} \times 5\frac{1}{2}$ inches. Folia, 69. Lines, 10 on a page. Extent, 2,500 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Saṅgíta-náráyaṇa**. A treatise on music, singing and dancing. By Náráyaṇa-deva. This is distinct from the work of this name noticed under No. 318, Vol. I, p. 180.

**Beginning**. नीलाद्रिकन्दरानन्दिमन्दारालयवन्दितं ।

वन्दे तद्दावमन्दारसेन्दिवं (सुन्दरं) परमं महः ॥ १ ॥

प्रहृत्ततालङ्करतालिकाभिराभीरिकाणां कलवेणुगीतं ।

व्रत्यन्नमत्यन्तमुदाद्द्धासं (मुदारहासं) रागं भजन्तं हरिमन्तरीडे ॥ २ ॥

प्रालेयशैलतनयाकुचकोटिमुद्रैर्निसुस्य धरामुखमुखे (षण्मुखमुखे) रतिपीतमुक्तां ।

हर्षाकुलस्य नियतं शुभमादिशन्तु लम्बोदरस्य दरपुष्करधूननानि ॥ ३ ॥

**End**. यदधीतं कठिबलात्पुरुषोत्तममिच्छता मया सुधिया तत्र प्रकटीकृता-मस्मिन् (?) सुधियः परितोषयितुं शतशः । यावच्छिवस्यार्द्धशरीरहर्त्री जगद्गुरोः पर्व्वतराज-पुत्री तावत् क्षितीन्द्रस्य नारायणस्य श्रीमान्मुदेयं समुदेतु लोके।

**Colophon**. इति श्रीमन्निखिलान्वयोत्तुङ्गखर्व्वगर्वशावन्तस्याखिलगुणसद्मपद्मनाभभूमि-पतितनूजन्मनो महाराजस्य साहित्यसङ्गीतार्णवकर्णधारकमणेर्गजपतिवीरश्रीनारायणदेवस्य कृतौ सङ्गीतनारायणे शुद्धप्रबन्धोदाहरणं नाम चतुर्थपरिच्छेदः ।

विषयः । १म परिच्छेदे सङ्गीतलक्षणं । २य, ३य परि च्छेदेवाद्यनिर्णयः । ४र्थ परिच्छेदे शुद्धप्रबन्धानामुदाहरणं ।

---

**No. 2584.** कोषः । Substance, Kásmíri paper, 11½ × 7 inches. Folia, 51. Lines, 21 on a page. Extent, 1,025 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

**Kosha**. A vocabulary of words having more than one meaning, arranged alphabetically according to their initial letters. Anonymous.

**Beginning**. ॐ श्रीगणेशाय नमः ॐ सिद्धलक्ष्म्यै नमः ।

ॐ पातु वोधिधरो दूरविकीर्णकरशीकरः ॥

दुःखवीजच्छिदे वर्षन् करका इव विघ्नजित् ।

विषमपदविषधरालीं निहत्य संदृह्य शेवधिविशेषान् सकलजनसुलभविभवान् कश्चन निर्मत्सरः कुरुते । भागुरिकात्यहालायुधदुर्गामरसिंहशाश्वतादिकृतान् कोषान् निरीक्ष्य निपुणं धन्वन्तरिनिर्मितं निघण्टुञ्च । लिङ्गानुशासनानि च विचार्य लक्षणं महाकवीनां च कुरुतेऽनेका-र्थानां शब्दानां सङ्क्षेपतः कोषं । यथासम्भवकान्तादिक्रमादक्षरसंख्यया करामलकवत् साक्षा देष भाविष्यते सतां । यत्रैक एव रूढोऽर्थो यौगिकस्तत्र तूच्यते ।

अनेकस्मिंस्तु रूढेऽर्थे यौगिकः प्रोच्यते न वा।
पदभङ्गादनेकार्थः प्रकटीक्रियते न च ॥
विशेषेण प्रत्ययाद्यैः सिद्धं लिङ्गं न चोच्यते।
प्रायशो रूपभेदेन साहचर्य्याच्च कुत्रचित् ॥
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित्।
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने च द्वयोरिति ॥
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्व्वभाक्।
कोचार्कात्मवातेषु कं शिरोऽम्बुसुखेसु च ॥

End अन्तिमं खण्डितं।

विषयः। कान्तादिक्रमेण एकार्थशब्दानामर्थकथनं।

---

**No. 2585.** कथाकौतुकम्। Substance, Káśmírí paper, 11¼ × 7 inches. Folia, 55. Lines, 12 on a page. Extent, 1,284 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Very incorrect.

**Kathákautuka.** The story of Yusaf and Zuleikhá, rendered into Sanskrit verse from the well-known poem of Jámí. By Śrívara.

**Beginning** ॐश्रीगणेशाय नमः। ॐश्रीरामाय नमः। ॐसानन्दं हृदयं विलोक्य विषदं यच्छुष्कशस्योपमं मन्यन्ते भुवनाधिपत्यमखिलं योगेन योगीश्वरः। ध्यात्वाप्येकनिमेषमात्रमपि यत्सौख्यं सदा प्राप्यते वन्दे सिद्धसुरेन्द्रवन्दितमहस्तेजः परं शाम्भवं। ॐ प्रणम्य विघ्नौघहरं गणेशं त्रिधास्वरूपामपि भारतीं तां। विरच्यते यावनशास्त्रबद्धकथा मया निर्ज्जरभाषयेयं। क्रमेण येन भेतार्थो (?) मल्लाज्यमेन वर्णितः। तेनैव हि मया सोऽयं श्लोकेनाद्य निरूप्यते। प्रबोधयाशाकलिकां प्रसादमधुरप्रभो। तदुत्पन्नं प्रोतु (?) फलं दातुमर्हसि मे शुभं।

शोभितं कुरु तेनैव मानसोऽद्य ?) वचोऽद्य मे।
तत्सौगन्धेन शुद्धेन शरीरं परिपूरय ॥

End. छतं किं वा शुभंप्राक्चेत् कथं शिवपरा गतिः।
विमलश्चेत् कथं नाथ शोकमोहाधिकं लिदं ॥
मनुष्यभावमाश्रित्य त्वाच्च निस्तारकं प्रभुं।
मोहं वसामि चेद्देव वद कस्य विडम्बना ॥
याचे त्वामेव वरदं वरमेकं महेश्वर।
भूयान्मम भवद्भक्तिर्लोकद्वयहितावहा ॥

पिता बन्धुः सुहृत् स्वामी शरण्यः सर्व्वदेहिनां ॥
अनन्यशरणं नाथ रक्ष मां परमेश्वर ।

**Colophon.** इति श्रीयवनभाषापारङ्गमपण्डितश्रीवरविरचिते कथाकौतुके पञ्चकौतुकं ।

विषयः । तैमन्दपतिसुतायाः जोलेखायाः उपाख्यानं ।

---

**No. 2586.** प्रवराध्यायः । Substance, Kásmírí paper, 7½ × 4½ inches. Folia, 105. Lines, 9—10 on a page. Extent, 1,890 ślokas. Character, Kásmírí, Sáradá. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Pravarádhyáya.** Genealogy of the leading Bráhmaṇ septs. Anonymous. This work is distinct from the works of this name noticed under No. 583 of Vol. II, p. 38, No. 1795 of Vol. V, p. 113, and No. 2248 of Vol. VII, p. 5.

**Beginning.** ॐ नमो विघ्नहन्त्रे श्रीगुरुभ्यो नमः श्रीवाग्देव्यै नमः नमो ब्रह्मणे नमो भगवते परमशिवाय नमो भृगवे आगमनिगमनिधानाय ॐ हर्य्यक्षालकालाय नमः । कालाज्जायते केशवः केशवाद्ब्रह्मा २ ब्रह्मणा ब्रूयते जगद्विषय इति शेषः ब्रूयते इत्यभिध्यायतेः ब्रह्मणो रुद्रो ललाटादास अभिध्यायतस्तस्य प्रथमसङ्कल्परूपो ललाटाद्रुद्रो जातः ५ यचोद्भवः यदनन्तरं सर्व्वोद्भवः इत्यजः ६ स्वायम्भुवमनुः शतरूपा च ७ ब्रह्मण करोर्जातः तस्मान्नवप्रजापतयः तावत्त्वरिता न हि १० भवति चाच ततोभिध्यायतस्तस्य जज्ञिरे मानसीः (स) प्रजाः ।

तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः कारणैः सह ।
यदास्य ताः प्रजाः सर्व्वा न व्यवमन्त ? धीमतः ॥
अथान्यान्मानसान् पुत्रान् सदृशानात्मनोऽसृजत् ।
भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ॥
मरीचिं दक्षमत्रिञ्च वसिष्ठञ्चैव मानसान् ।

नव ब्रह्मण इत्येते वेदेन स्वयमीरितः ११ सप्तर्षय एतन्मध्य एवेति १२ दिव्यतना द्योतमाना इति भावः । नद्यीति जलव्याप्तेर्निषेधः त्वरिता इति सनाथं समानमन्यत् १२ ।

**End.** अन्तिमं खण्डितं ।

विषयः । प्रवरविवरणं ।

---

**No. 2587.** **ईश्वरप्रत्यभिज्ञाहृदयम्।** Substance, Káśmírí paper, $10\frac{1}{2} \times 7\frac{1}{4}$ inches. Folia, 11. Lines, 22—23—24 on a page. Extent, 330 ślokas. Character, Káśmírí, Sáradá. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Iśvarapratyabhijná-hridaya.** A dissertation on the Vedántic theory of the identity of the Godhead with the universe. By Rájanaka Kshemarája, disciple of Abhinava Gupta.

**Beginning.** ॐ नमो गुरवे सरस्वतीरूपाय। ॐ नमः शिवाय।

ॐ नमः शिवाय सततं पञ्चकृत्यविधायिने।
चिदानन्दघनस्वात्मपरमार्थावभासिने॥
शाङ्करोपनिषत्सारप्रत्यभिज्ञामहोदधेः।
उद्धरामि परं सारं संसारविषशान्तिदं॥

इह सुकुमारमतयोऽकृततीक्ष्णशास्त्रपरिश्रमाः शक्तिपातवचोन्मिषितपरमश्वराभिलाषिणः कतिचिद्भक्तिभाजस्तेषामीश्वरप्रत्यभिज्ञोपदेशतत्त्वं मनागुन्मील्यते तत्र स्वात्मदेवताया एव कारणत्वं सुखोपायप्राप्यत्वं च महाफलत्वं चाभिव्यक्तमाह ॐ चितिः स्वतन्त्रा विश्वसिद्धिहेतुः॥

**End.** येषां + न्तः शाङ्करः शक्तिपातो येनाभ्यसात्तीर्ण्युक्तिष्वतीक्ष्णः। शक्ता ज्ञातुं नेश्वरप्रत्यभिज्ञामुक्तस्तेषामेष तत्त्वोपदेशः।

**Colophon.** समाप्तमिदमीश्वरप्रत्यभिज्ञाहृदयं। कृतिर्महामाहेश्वराचार्य्यश्रीमदभिनवगुप्ताचार्य्यपादपद्मोपजीविनः श्रीमद्राजानकक्षेमराजस्येति शुभं।

विषयः। एका चिच्छक्तिरेव ईश्वरः स एव सर्व्वं जगत् इति प्रतिपादनं।

---

**No. 2588.** **क्षीरतरङ्गिणी।** Substance, Káśmírí paper, $9\frac{3}{4} \times 6\frac{3}{4}$ inches. Folia, 163. Lines, 12 on a page. Extent, 2,900 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Kshíratarangiṇí.** Meanings of the verbal roots of the ten classes and the effect of prefixes thereon. By Kshíra S'vámí.

**Beginning.** ॐ नमः सरस्वत्यै ॐ नमः शिवाय ॐ नमो विघ्नहन्त्रे।

ॐ तरङ्गसुभगं क्वणन्मधुपकिङ्किणीजालिनं
करं प्रचलपुष्करारुणशिखं समुल्लासयन्।
विभुर्जयति विघ्नजिद्भुवनधृष्टमारोपयन्।

दुरन्तदुरितक्षयाद्विजयवैजयन्तीमिव ॥ १ ॥
धातुवैषम्यसमनाद्वाङ्मयाप्यायिनी सतां ।
क्षीरस्वामिप्रसूतेयं वृत्तिः क्षीरतरङ्गिनी ॥ २ ॥
सूत्रव्याख्याकार्येजातं गणानां सेट्लानिट्लोपग्रहादिफलञ्च ।
अष्टाध्याय्यां ये विशेषप्रयोगा धातोर्धातोर्दर्शितास्ते विशेषात् ॥ ३ ॥
य एव पारायणिकैर्दृष्टोऽत्र विवरीतृभिः ।
मूढैतो नैव याताः स्वः कृत्वा गजनिमीलिकां ॥ ४ ॥
न विचारिताः प्रयोगाः पारायणिकैर्हि तत्र सरव्यं ।
सत्यार्थे धातुकेऽपि च पीडा नोदाहृता प्रकृतिः ॥ ५ ॥
भग्नाः पारायणिकाश्चन्द्राद्या अपि च यत्र विश्रान्ताः ।
तान् धातून् विवरीतुं गहनमहो अध्यवसिता स्मः ॥ ६ ॥
जाता विश्वसृजः क्रमेण मुनिभिः संस्कारमापादिताः
शब्दाः संवसनादसाधुभिरपभ्रष्टाः स्थ भो भ्रातरः ।
वारेद्व्याप्यकृता मदेकशरणा मात्रायतेऽस्मान्मया (?)
न्याय्ये वर्त्मनि वर्त्तनाय भवतां षड्वृत्तयः कल्पिताः ॥ ७ ॥
अथ नित्यानां स्वरार्थसाधनकल्पनया व्याख्यानमिति ।
प्रकृतयो निर्दिश्यन्ते भूसत्तायामुदात्तः ।

**End.** पुच्छभाण्डचीवराण्णिङिति पुच्छादिभ्योधात्वर्थे उदसनादौ णिङ्प्रत्ययः सिद्धः पाणिनिनैवोक्तत्वात् पुच्छमुदस्यति उत्पुच्छयते परिपुच्छयते भाण्डानि समाचिनोति संभाण्डयते चीवरमर्ज्जयति परिदधाति वा संचीवरयते भिक्षुः एवं मुण्डादिभ्यः सत्यापपाशादिभ्योऽपि णिच् सिद्धः नपुंसकेन निर्द्देशो मङ्गलार्थः । एतन्नामपर्य्यन्तकः ।

**Colophon.** भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतङ्गिण्यां चुरादिगणः सम्पूर्णः ।

विषयः । दशगणपठितानां धातूनामर्थनिर्द्देशपूर्व्वकं तिङ्विभक्तियोगेन रूपप्रदर्शनं उपसर्गपूर्व्वकाणां तेषामर्थविशेषप्रदर्शनञ्च ।

---

**No. 2589.** न्यायकन्दली । Substance, Kásmírí paper, $11\frac{3}{4} \times 7$ inches. Folia, 200. Lines, 27 on a page. Extent, 6,600 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Nyáya-kandalí.** A commentary on the Padártha-dharmasaṅgraha—a Vais'eshika treatise on the meaning and purport of the categories. By S'rídhara Bhaṭṭa.

Beginning. ॐ नमः सरस्वत्यै ॐ नमः शिवाय ।
ॐ अनादिनिधनं देवं जगत्कारणमीश्वरं ॥
प्रपद्ये सत्यसंकल्पं नित्यविज्ञानविग्रहं ।
ध्यानैकतानमनसो विगतप्रचाराः
पश्यन्ति यं कमपि निर्म्मलमद्वितीयं ।
ज्ञानात्मने विघटिताखिलबन्धनाय
तस्मै नमो भगवते पुरुषोत्तमाय ॥
ग्रन्थारम्भेऽभिमतां देवतां शास्त्रस्य
प्रणेतारं गुरुं श्लोकस्य पूर्व्वार्द्धेन नमस्यति
प्रणम्य हेतुमीश्वरं मुनिं कणादमन्ततः
पदार्थधर्म्मसंग्रहः प्रवक्ष्यते महोदय इति ।

End. उपसंहरति तस्मादिति ।
परस्परोपसंश्लेषो भिन्नानां पक्षतो भवेत् ।
समवायः स विज्ञेयः स्वातन्त्र्यप्रतिबोधकः ॥
इति भट्टश्रीश्रीधरकृतायां न्यायकन्दलीटीकायां समवायपदार्थः समाप्तः।
सुवर्णमयसंस्थानं रम्या सर्व्वोत्तरस्थितिः ।
सुमेरोः शृङ्गवीथीव टीकेयं न्यायकन्दली ॥ १ ॥
अक्षीणा निजपक्षेषु स्थापयन्ती गुणोजसी ।
परप्रसिद्धसिद्धान्तं दलति न्यायकन्दली ॥ २ ॥
आसीद्दक्षिणराढायां द्विजानां भूरिकर्म्मणां ।
भूरिसृष्टिरिति ग्रामो भूरिश्रेष्ठिजनाश्रयः ॥ ३ ॥
अम्भोराशेरिवैतस्माद्बभूव क्षितिचन्द्रमाः ।
जगदानन्दनाद्वन्द्यो बृहस्पतिरिव द्विजः ॥ ४ ॥
तस्माद्विशुद्धगुणरत्नमहासमुद्रो विद्यालतासमवलम्बनभूरुहोऽभूत् ।
स्वच्छाशयो विविधकीर्त्तिनदीप्रवाहप्रस्यन्दनोत्तमबलो बलदेवनामा ॥ ५ ॥
तस्याभूद्भूरियशसो विशुद्धकुलसम्भवा ।
अम्भोकेत्यर्च्चितगुणा गृहिणो गृहमेधिनी ॥ ६ ॥
सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः ।
तस्याः श्रीधर इत्युच्चैरर्थिकल्पद्रुमादभूत् ॥ ७ ॥
असौ विद्याविदग्धानामस्तुत ग्रहणोचितां ।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीं ॥ ८ ॥

**Colophon.** त्र्यधिके दशोत्तरे नवशतवर्षे श्रीन्यायकन्दली रचिता ।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयं ॥ ९ ॥
समाप्तेयं पदार्थप्रवेशन्यायकन्दलीटीका ।

विषयः । पदार्थधर्म्मसंग्रहनामकस्य अथवा पदार्थप्रवेशनामकस्य न्यायग्रन्थस्य व्याख्यानं ।

---

**No. 2590.** चातुराश्रम्यधर्म्मः । Substance, Káśmírí paper, 11¾ × 7 inches. Folia, 2. Lines, 27 on a page. Extent, 35 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse Incorrect.

**Cháturáśramya-dharma.** Duties of the four classes of Hindus including Vedic pupils, householders, ascetics and hermits. By S'ríkaṇṭháyana.

**Beginning.** नमो ब्रह्मणे । अथातश्चातुराश्रम्यधर्मं व्याख्यास्यामः तद्यथा ब्रह्मचारी-गृहस्थः वानप्रस्थः परिव्राजक इति चत्वार आश्रमाः ।

**End.** यतीनां प्रशमो धर्म्मो नियमो वनवासिनां ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणां ।

**Colophon.** इति श्रीकण्ठायनकृतश्चातुराश्रम्यधर्म्मः समाप्त इति शिवम् ।

विषयः । ब्रह्मचर्य्यादिचतुराश्रमधर्म्मव्याख्यानं ।

---

**No. 2591.** सर्व्वसंप्रदायाभेदसिद्धान्तः । Substance, country-made paper, 12 × 5 inches. Folia, 9. Lines, 11 on a page. Extent, 235 ślokas. Character, Nágara. Date, Sm. 1807. Place of deposit, Sántipur, Rámanátha Tarkaratna; another copy at Calcutta, Dr. Rájendralála Mitra. Appearance, old. Prose. Generally correct.

**Sarvasampradáyábheda-siddhánta.** Reconciliation of the different schools of Vaishṇava philosophy. Anonymous. An abstract of this work has been published in the Journal of the Asiatic Society of Bengal, Vol. LIII, pp. 103 f.

**Beginning.** ॐ नमो भगवते वासुदेवाय । श्रीगणेशाय नमः । ॐ सरस्वत्यै नमः । अथ सर्व्वेषामप्याचार्य्याणामाचार्य्यं मां विजानीयादिति श्रीभागवताद्भगवदवतारत्वेन प्रमितत्वात् तत्तद्वचनानि प्रमाणभूतानि तत्र यद्वल्लभाचार्य्यादिभिर्द्वैतं खण्डितमद्वैतं स्थापितं तत्तथैवाङ्गीक्रियते चेत् तर्हि केवलद्वैतप्रतिपादकमाध्ववचनानामप्रामाण्यं स्यात् । यदि माध्व-

वचनप्रामाण्याद्द्वैतमेवाङ्गीक्रियते तर्हि वल्लभाचार्य्यादिवचनानां द्वैतखण्डकानामप्रामाण्यं स्यात्। एवञ्च विप्रतिषेधाच्चासमञ्जसमिति न्यायेन सर्व्वेषामेवमतानामप्रामाण्यं स्यात्। तस्मात्तद्ग्रन्थानां पौर्व्वापर्य्याश्वारस्यं ( पौर्व्वापर्य्यस्वरसं ) विचार्य्य परस्परमचिन्त्यशक्त्या द्वैताद्वैताङ्गीकारेण सर्व्वाचार्य्यमतानामविरोध एवास्तीति प्रतिपादनार्थं स्पष्टतः अचिन्त्यशक्त्या द्वैताद्वैताविरोधप्रतिपादकसर्व्वाविरुद्धश्रीनिम्बादित्यमतानुवर्त्तिश्रीमहाप्रभुमतेनायं ग्रन्थ आरभ्यते।

**End.** महाप्रभुभीरामानुजमतस्थः कथनोपदिष्ट- माध्वसन्न्यासिनोऽप्युपदिष्टो वल्लभाचार्य्येभ्यः स्तोचं तैरपि महाप्रभूणां परमादरः कृतः।

**Colophon.** इति सर्व्वसम्प्रदायाभेदसिद्धान्तः समाप्तः।

विषयः। द्वैताद्वैतमतद्वैधे द्वैताद्वैताविरोधप्रतिप्रतिपादकश्रीनिम्बादित्यमतानुवर्त्तिश्रीमहाप्रभुमतानुसारेण द्वैताद्वैतमतयोरविरोधप्रतिपादनं। निम्बादित्यमतन्तु सगुणनिर्गुणब्रह्मप्रतिपादकं। निर्गुणं ब्रह्म सच्चिदानन्दरूपं तस्य निर्गुणब्रह्मणो भक्तानुग्रहाय गृहीतविग्रहत्वात् तदेव ब्रह्म सगुणं। अतः द्वैताद्वैतमतयोरविरोधः।

---

**No. 2592.** नवतत्त्वसूत्रम्, बालाबोधसहितम्। Substance, country-made paper, 14 × 5 inches. Folia, 104. Lines, 10 on a page. Extent, 4,120 ślokas. Character, Nágara. Date, Sm. 1850. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Generally correct. Text in Mágadhí, commentary partly Sañskṛit and partly in Western Hindi.

**Navatattva-sútra.** On the leading philosophical topics of the Jains. By Śiromaṇi. The work is in the Mágadhi language.

**Beginning.** टीकायाः।

ज्ञानं पञ्चविधं प्रोक्तं श्रुतज्ञानं विशेषतः।
येन श्रवणमात्रेण प्राप्यते परमं पदम्॥

जिणेन्द्ररी वस्तुनो स्वरूपजाणिये ते ज्ञानकहिये ते ज्ञान श्रीभगवन्तजी पांचें प्रकार कह्यो। इत्यादि।

मूलस्य,—
जीवाजीवापुण्णं पारासव संवरोय निज्जरणा।
बंधो मुक्खोय तहा नवतत्ताइं तिनायव्वा॥
एकविह दुविह तिविहा चउविहा पंचषड्विहा जीवा।
चेयन तसइयरेहिं वेयगइ करणका एहिं॥ इत्यादि।

**End.** मूलस्य ।

भंते दाणे किं फले अकिरिया फले सेणं भंते ।

अकिरिया फले सिद्धिपजूभ वासाणफले पणत्ते गोयमा ॥

व्याख्यायाः,—एवं ग्रन्थ आदिमध्यअन्तत्रिविधमङ्गली करै । आदिमङ्गलतो पञ्चज्ञानशब्द है । मध्यतो ज्ञानादिअष्टऋद्धि है । अन्तमङ्गलतो श्रीसिद्धभगवन्तो जगत्रयशिरोमणि है इति तत्त्वं । संवत् १७९९ । संवत् १८५० आश्विनमास ।

विषयः । जीव-अजीव-पुण्य-पाप आस्रव संवर-निर्जर-बन्ध-मोक्षरूपनवविधतत्त्वनिरूपणम् ।

---

**No. 2593. महादेवार्थस्तवः ।** Substance, country-made paper, 14 × 5 inches. Folia, 3. Lines, 7 on a page. Extent, 49 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Correct.

**Mahádevártha-stava.** A hymn in praise of Mahádeva as the supreme divinity. In this work an attempt is made to eliminate the human attributes of Mahádeva and refine the conception of his identity. By Hemácharya.

**Beginning.** प्रशान्तदर्शनं यस्य सर्व्वभूताभयप्रदं ।

माङ्गल्यञ्च प्रशस्तञ्च शिवस्तेन विभाव्यते ।

महत्त्वादीश्वरत्वाच्च यो महेश्वरतां गतः ।

रागद्वेषविनिर्म्मुक्तं तं देवञ्च महेश्वरं ॥ इत्यादि ।

**End.** भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।

ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥

**Colophon.** इति श्रीहेमाचार्य्यविरचितो महादेवार्थस्तवः ।

विषयः । शिवमहादेवादिनामधेयानां निर्व्वचनकथनमुखेन तेषामर्हत्परत्वनिरूपणं । शिवादीनां शिवमूर्त्तिप्रतिपादकशब्दानां पारिभाषिकत्वकथनपूर्व्वकमर्हत्परत्वनिरूपणं । अर्हन्नामनिर्व्वचनादिकथनञ्च ।

---

**No. 2594. विधिप्रकरणम्, विधिकौमुद्याख्यविवरणसहितम् ।** Substance, country-made paper, 11 × 6 inches. Folia, 332. Lines, 8 on a page. Extent, 8,109 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose and verse. Text in Mágadhí verse, commentary in Sañskṛita Mágadhí.

**Vidh-i-prakaraṇa,** with a commentary called *Vidhi-kaumud.*. The text in Mágadhi, and the commentary in Sanskṛit. A complete code of Jain duties including Judicature, Law of Inheritance, and other matters, ordinarily, treated in Hindu Smritis. By Ratnasundara Súri, disciple of Somasundara Súri, Munisundara Súri, Jayachandra Súri, and Bhuvanasundara Súri. For a correct understanding of the laws and domestic rules of the Jains this work is of great value. The chapter on inheritance, if translated, would prove of great use in our civil courts.

**Beginning** विवरणस्य ।

अर्हत्सिद्धगणीन्द्रवाचकमुनि+ष्ठाः प्रतिष्ठास्पदं
यच्च श्रीपरमेष्ठिनः प्रददतां प्रोच्चैर्गरिष्ठात्मनां ।
द्वैधान् पञ्च सुपर्व्वणां शिखरिणां प्रोद्दाममाहात्म्यत-
श्चेतश्चिन्तितदानतश्च कृतिनां ये स्मारयन्त्यन्वहम् ॥
श्रीवीरं सगणधरं प्रणिपत्य श्रुतगिरश्च सुगुरूंश्च ।
विवृणोमि स्वोपज्ञश्राद्धविधिप्रकरणं किञ्चित् ॥
युगवरतया गणाधिपपूज्यश्रीसोमसुन्दरगुरूणां ।
वचनादधिगततत्त्वः सत्त्वहितार्थं प्रवर्त्तेऽहं ।

तस्य चेयमाद्यगाथा,—मूलस्य,—सिरिवीरजिणं पणमिअ सुआउभाहेमि किमवि सड्ढविहिं ।

रायगिहे जगगुरुणा जह भणिअं अभयपुट्ठेणं । इत्यादि ।

**End.** मूलस्य ।

एअं गिहिधम्मविहिं पईदिअहं निव्वहंति जि गिहिणा ।
इह भवि परभवि निव्वुइ सुहं लहुंते लहंति धुवं ॥

विवरणस्य यथा,—

या निर्व्वृतिर्मोक्षस्तत्सुखञ्च लघु शीघ्रं ध्रुवमवश्यं ते लभन्ते प्राप्नुवन्ति—इति सप्तदशगाथार्थः ।

**Colophon.** इति श्रीतपागच्छाधिपश्रीसोमसुन्दरसूरिश्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरिश्रीभुवनसुन्दरसूरिशिष्यश्रीरत्नशेखरसूरिविरचिते विधिप्रकरणविवरणे षष्ठप्रकाशः ।

**विषयः ।** ये धर्म्मविधिं सम्यक पालयन्ति ते गृहिणः श्राद्धा इति प्रोच्यन्ते । अत्र हि गृहिणां नित्यनैमित्तिकक्रियाकलापविधीनां सम्यगुपदेशात् श्राद्धविधिप्रकरणमिति नाम्ना ग्रन्थो व्यपदिश्यते । तत्र प्रथमं गृहिणां दिनकृत्यकथनं । गृहिलक्षणादिकथनं । तत्र लज्जादया-

द्वकविंशतिगुणकथनं। तत्रायं भावः। यः खलु, अकार्य्यवर्ज्जितः सत्वानुकम्पकः, अतुच्छहृदयः, स्पष्टपञ्चेन्द्रियः, स्वभावतोऽपापकर्त्ता सुखसेव्यश्च। दानविनयशीलवत्तया लोकप्रियः, अक्लिष्टचित्तः, पापायशोभ्यां भीतः, अवञ्चकः, प्रार्थनाभङ्गभीरुः, रागद्वेषरहिततया सौम्यदृष्टिः, दूरादेव दोषत्यागी, गुणपक्षपाती, सत्कथानुरक्तः, सुशीलानुरक्तेन परिवारेण युक्तः, परिणामदर्शी, अपक्षपातित्वेन गुणदोषविशेषज्ञः, वृत्तस्थज्ञानवयोवृद्धसेवकः, कृतज्ञः, निरीहः सन् परार्थकारी, धर्म्मकृत्येषु सुशिक्षितश्चेति। सोऽसौ श्राद्धस्य योग्यत्वेन निर्द्दिष्टः। अत्र शुकराजकथाप्रसङ्गेन जिनेन्द्रस्तवकथनं। अथ नाम-स्थापना-द्रव्य-भावभेदात् श्राद्धस्य चतुर्व्विधत्वनिरूपणं। तत्र प्रथमः, राजोपाधिधारिदरिद्र इव केवलं नामधारी। द्वितीयः लेपमयादिः। तृतीयः, अनुरागशून्यत्वेन क्रियाकृत्। चतुर्थः, प्रीतिपूर्व्वकारितया क्रियानिष्ठः। अथ भावश्राद्धोऽपि त्रिविधः, दर्शनश्राद्धः, व्रतश्राद्धः उत्तरगुणश्राद्धश्चेति। तत्र केवलसम्यक्त्वधारी प्रथमः, सम्यक्त्वमूलानुव्रतधारी द्वितीयः, त्रिविधगुणव्रत-चतुर्व्विधशिक्षाव्रतधारणपूर्व्वकं स त्वानुव्रतधारी तृतीयः। अथ श्रावकस्यापि भावश्राद्धधर्म्मातिदेशकथनं। तत्र स्रवन्ति मुञ्चन्ति दानशीलतपोभावनादिना शुभयोगेन अष्टप्रकारं कर्म्मेति श्रावकशब्दनिर्व्वाचनकथनं। अथ श्राद्धस्य दिनकृत्यनिरूपणं। तत्र प्रथमं प्रातःकृत्यनिरूपणं। शय्योत्थानविधिकथनं। तत्र नाभ्यां पृथिव्यादिपञ्चतत्त्वस्थितिनिरूपणं। मन्त्रजपविधिकथनं। मानस-उपांशु-भाष्यभेदेन त्रिविधजपभेदनिरूपणं। (भाष्यन्तु अन्यश्राव्यं। ध्यानकथनं। योगमाहात्म्यकथनं। स्वप्नकृतप्राणिवधादिपापक्षयाय प्रार्थनादिकथनं। स्वप्नस्य शुभाशुभकथनं। प्रसङ्गात् श्राद्धानां भक्ष्यद्रव्यादिनिरूपणं। अभक्ष्यनिरूपणञ्च। जलादिपानविधिकथनं। तण्डुलादिपाकविधिकथनं। ऋतुभेदे विशेषकथनं। अथ दन्तकाष्ठग्रहणादि विधिकथनं। वारादिविशेषे दन्तकाष्ठादिनिषेधकथनं। स्नानविधिकथनं। देवपूजाविधिकथनं। पुष्पविवेचनं। वस्त्रपरिधानादिविधिकथनं। तिलकविधिकथनं। धूपदीपादिविधिकथनं। अर्हत्पूजायां दिगादिनियमकथनं। तत्र शङ्ख-शृङ्ग-पणव-वेणु-वीणादिवादनविधिकथनं। देवपूजाचरणे मौनमेव कार्य्यमितिकथनं। मूलविम्बपूजापूर्व्वकं अन्यान्यविम्बपूजाविधिकथनं। अथ एका अर्हत्प्रतिमा व्यक्त्याख्या, एकत्र आसने चतुर्व्विंशतिसंख्याः प्रतिमाः क्षेत्राख्याः एवं सप्ततिशतप्रतिमा महाख्या इति कथनं। अङ्गपूजाविधिकथनं। नैवेद्यनिरूपणं। आरात्रिकविधिकथनं। नमस्कारविधिः। जैनमूर्त्तिपूजायां पश्चिमाभिमुखत्वस्यावश्यकत्वकथनं। जिनेन्द्रपूजाया एकविंशतिविधत्वकथनं। निषिद्धपुष्पादिनिरूपणं। देवपूजामाहात्म्यकथनप्रसङ्गेन धर्म्मदत्ताभिधानस्य नृपतेरुपाख्यानकथनं। गुरूपसत्तिविधिकीर्त्तनं। देवद्रव्यग्रहणे दोषकथनादिकं। अथ आहारादिविधिकथनं। अथ वणिग्-वैद्यादीनां क्रमेण जीविकाकथनं। जीविकाश्च सप्तविधा एव। वाणिज्यं, विद्या, कृषिः, पाशुपाल्यं। शिल्पं। सेवा। भिक्षा चेति। क्रमेण आसामवान्तरभेदादिकथनं। सर्व्वथा वाणिज्यस्यैव मुख्यत्वकथनं। वचनादानविधिकथनं। शयनादिविधिकथनं। अथ नीतिकथनं। त्रिवर्गसाधनविधिकथनं। माङ्गल्यामाङ्गल्यजननकर्म्म-

निरूपणं। त्रिसन्ध्यां जिनपूजाकर्त्तव्यतादिनिरूपणं। अथ स्वाध्यायविधिकथनं। अथ पर्व्वकृत्य निरूपणं। तत्र अष्टमीचतुर्द्दश्यादिपर्व्वनिरूपणं। पर्व्वदिनेषु कृत्याकृत्यनिरूपणं। आराधना-विधिकीर्त्तनञ्च। चातुर्मास्यकृत्यविधानं। वर्षकृत्यनिरूपणं। तत्र सङ्घार्च्चनतीर्थयात्रादि-विधिकथनं। अथ जन्मकृत्यनिरूपणं। तत्र श्रावकस्य अवस्थानयोग्यस्थानादिनिरूपणं। अथ विवाहे वरकन्ययोः गुणादिनिरूपणं। तत्र अग्निदेवादिसाक्षिकं पाणिग्रहणं विवाह इति लक्षणकथनपूर्व्वकं तस्य ब्राह्माद्यष्टविधभेदनिरूपणं। अथ चैत्यनिर्म्माणविधिकथनं। तत्र प्रति-मास्थापनादिविधिकथनं। तन्माहात्म्यादिकथनं। सम्यग्दर्शनादीनामाजन्मसेव्यत्वनिरूपणं।

---

**No. 2595.** कप्पसुत्तं, (कल्पसूत्रम्।) Substance, country-made paper, 12 × 5½ inches. Folia, 192. Lines, 4—5 on a page. Extent, 1,777 ślokas. Character, Jain, Nágara. Date, ? Place of deposit, A'jimganja, Ráya Dhanapat Siñha, Bahádur. Appearance, fresh. Prose. Correct. Mágadhí.

**Kappa-sutta** (Sanskrit, **Kalpa-sútra**). Directions for the observance of the quadrimensial Jain fast during partly the rainy and partly the autumn season; it is commonly called *Vassá* or the rainy season fast. The duties to be observed are treated under ten heads, each of which is called a Kalpa. The duties are: 1st, *A'chelakya* or abstinence from raiment: some hold white clothes not to come under the prohibition; 2nd, *Auddeśika*, living in the society of pious hermits; 3rd, *Sayyátara*, abstinence from bedding; 4th, *Rájapiṇḍa*, abstinence from rich dishes or the society of the kings and great men; 5th, *Kritikarma*, society of pious men; 6th, *Vratáni*, frequent special, but optional, fasts; 7th, *Purusha-jyeshṭha*, conduct like seniors; 8th, *Pratikrama*, morning and evening exercise; 9th, *Másakalpa*, avoidance of attachment likely to result from constant association with any object; 10th, *Paryúshaṇá*, uniform occupation of the same abode during the currency of the fast. According to some, these Kalpas are reduced to six. The work treats of each of these Kalpas at length, and illustrates its themes by reciting many legends, drawing them frequently from the lives of the last three great Jinas. The work is in Mágadhi.

**Beginning.** तेणं कालेणं तेणं समयेणं भगवं महावीरे पंच हत्योत्तरे हत्थो। तं जहा हत्युत्तराहिं चुए चइत्ता गब्भं वक्कं ते। इत्यादि।

**End.** एवं भासेइ एवं पणवेइ एवं प + वेइ पज्जोसणा कप्पा नाम अवभयणं

न अद्द सहेउयं भकारणं समत्तं सअट्ठं सउभयं सवागरणं भुज्जो भुज्जो उवदंसे इत्ति वेमि ।

**Colophon.** इति पज्जोसणाकप्पोदसासु अस्कं धम्म अठमं अवभणं समत्तं ॥ इति कप्प सुत्तं समत्तं ॥

विषयः । कल्पः साध्वाचारः (कल्पोऽयं चतुर्मासकमासीनैः यतिभिः मङ्गलनिमित्तं वाच्यते उपदिश्यते ।) स च दशविधः । क्रमेण यथा,—प्रथमतः आचेलक्यं । (नास्ति चेलं वस्त्रं यस्यासौ अचेलकः तस्य भावः आचेलक्यं । केषाञ्चित् श्वेतवस्त्रधारित्वेऽपि अचेलकत्वमौपचारिकमिति ।) द्वितीयः औद्देशिकं । (उद्दिश्य साधून् अङ्गीकृत्य क्रियते यत् तदौद्देशिकमशनादिकं ।) तृतीयः शय्यातरः । (शय्यया वसत्या तरतीति शय्यातरः, वसत्यादिदानेन यतयः पूज्या इति भावः ।) चतुर्थः, राजपिण्डः । (राजा तावदुदितकुलप्रसूतः सेनापतिपुरोहितादिपञ्चलक्षणलक्षितः । तस्य पिण्डः । अधिकारिविशेषेण तस्य निन्द्यत्वप्रतिपादनमिति ।) पञ्चमः कृतिकर्म्म । (तच्च द्विधा अभ्युत्थानं वन्दनञ्च । सर्व्वैरपि साधवो वन्दनीया इति भावः ।) षष्ठः व्रतानि । सप्तमः पुरुषज्येष्ठः, (ज्येष्ठताव्यवहारः ।) अष्टमः प्रतिक्रमणं । (उभयसन्ध्यं परिक्रमः कर्त्तव्य इति ।) नवमः मासकल्पः । (एकत्र अधिकदिनावस्थाने शय्यातरादिवस्तुषु अभिष्वङ्गो भवति ततः शयनादिभूमिपरावर्त्तनमवश्यं विधेयमिति भावः ।) दशमः पर्य्युषणाकल्पः । (परि सामस्त्येन एकत्र अवग्रहीतक्षेत्रमात्रे वसतिः पर्य्युषणा । कल्पोऽयं द्विविधः सालम्बनो निरालम्बनश्च । निरालम्बोऽपि द्विधा जघन्य उत्कृष्टश्चेति ।) एते दश विकल्पा ऋषभवर्द्धमानादितीर्थे नियता एव । अन्यत्र तु षट्कल्पा निर्द्दिष्टाः । कल्पानामिह नियतविभागकरणे कारणं तावत् तत्तत्कालभाविनो मनुजा एव । अत्र यथाक्रमेण दृष्टान्तकथनं । तत्र कौङ्कणसाधुचरित्रकीर्त्तनं । श्रेष्ठिपुत्रविवरणकथनं । अथ जिनानां चरित्रकीर्त्तनं । तत्र विशेषेण महावीरस्य चरित्रकथनं । पार्श्वनाथचरित्रकथनं । नेमिनाथचरित्रकथनं । ऋषभदेवचरित्रकथनं । अथ जम्बूस्वामिमूलभद्रप्रभृतीनां स्थविराणां चरित्रकथनं । पर्य्युषणाकल्पानुष्ठानविधिकथनं । कल्पमाहात्म्यकीर्त्तनञ्च ।

---

**No. 2596.** कम्मविवागं, (कर्म्मविपाकम् ।) Substance, country-made paper, 12 × 6 inches. Folia, 40. Lines, 8 on a page. Extent, 560 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganja, Ráya Dhanapat Siñha, Bahádur. Appearance, new. Verse. Incorrect. Mágadhí.

**Kammabibága.** This is a counterpart of the Hindu *Karma-vipáka,* and treats of the retributions in after life of works done in this life. Anonymous.

Beginning. सिरिवीरजिणं वंदिअ कम्मविवागं समासउ वुच्छं ।
कीरइ जिएण हेउहिं जेण तो भणए कम्मं ॥
पयइ ठिइरस पएसा तं चउहा मोअ गस्सदिट्ठंता ।
मूलपगइ उत्तर पगइ अडवन्न स य ॥ इत्यादि ।

End. गाहगां स परीए चंदमहत्तर मयानुसारीए ।
+ गाइ निअ मियाणं एगुणा होइ नवइओ ॥

Colophon. इति समाप्तो ।

विषयः । क्रियते यत् तत्कर्म्म तथाच जीवेन मिथ्यादिभिः हेतुभिः चौरनौरन्यायेन कर्म्म वर्गणाद्रव्यं येन कारणेन आत्मसंबद्धं क्रियते तस्मात् कर्म्म भण्यते । तत्र शुभाशुभकर्म्मणां परीपाककथनमुखेन जीवानां ज्ञानावरणदर्शनावरणादिकर्म्मस्वरूपादिनिरूपणं । तथा च ज्ञायते परिच्छिद्यते वस्तु अनेनेति ज्ञानं तच्च सामान्यविशेषात्मके वस्तुनि विशेषात्मको बोधः । तथा दृश्यते अनेनेति दर्शनं । तच्च सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोध इति । आव्रियते आच्छाद्यते अनेनेति आवरणं । निरुक्तयोर्ज्ञानदर्शनयोरावरणञ्च अतस्मिंस्तत्प्रकारकत्वरूपमयाथार्थ्यमिति समुदितार्थः । एवं बन्धादिनिरूपणञ्च ।

---

**No. 2597.** कल्पकिरणावली । Substance, country-made paper, 13 × 5½ inches. Folia, 250. Lines, 7 on a page. Extent, 4,575 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganja, Rája Dhanapat Siñha, Bahádur. Appearance, old. Prose. Correct.

**Kalpa-kiraṇávalí.** A Sanskrit commentary on the *Kappa-sutta* noticed under, No. 2595.

Beginning. प्रणम्य प्रणताशेषवीरं वीरजिनेश्वरम् ।
स्ववाचनकृते कुर्व्वे कल्पव्याख्यानपद्धतिम् ॥

इह हि तावच्चतुर्मासकमासीना मुनयो मङ्गलनिमित्तं पर्य्युषणाकल्पाभिधमध्ययनं पञ्चदिनानि वाचयन्ति तत्र कल्पः साध्वाचारः । स च दशधा तद्यथा आचेलक्कु उद्देसिअ, सिज्जायर, रायपिण्ड, किइकाम्मवय जिट्ठ, पडिक्कमण, मासं पज्जोसवणाकल्प । इत्यादि ।

End. नेदं स्वमनीषिकया ब्रवीमि किन्तु तीर्थकरगणधरोपदेशेनेति । अनेन च गुरुपारतन्त्र्यमभिहितमिति ।

इति श्रीमत्तपागणगगनाङ्गणनभोमणिश्रीमहीरविजयसूरिशिष्योपाध्यायश्रीधर्म्मसागरगणिविरचितं व्याख्यानं ।

व्याख्योपयोगिनिःशेषवाच्य + + + वश्विनां।
स्फूर्त्तिकर्त्री सदास्त्वेषा श्रीकल्पकिरणावली॥
विक्रमादष्टयुक् षट्कशशाङ्काङ्कित १६२८ वत्सरे।
दीपोत्सवदिने दृष्टा राजधन्यपुरे पुरे॥
अनुष्टुपोऽष्टचत्वारिंशच्छतानि च चतुर्दश।
षोड़शोपरिवर्णाश्च ग्रन्थमानमिहोदितम्॥

Colophon. इति श्रीकल्पकिरणावली समाप्ता।

इतः परं व्याख्यातुः प्रशस्तिर्वर्त्तते सा च लुप्तप्रायेति।

विषयः। कल्पसूत्रस्य व्याख्यानम्।

---

**No. 2598.** प्रश्नव्याकरणम्। Substance, country-made paper, 14 × 5 inches. Folia, 96. Lines, 5—6 on a page. Extent, 1,169 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganja, Ráya Dhanapat Siñha, Bahádur. Appearance, fresh. Gáthá, prose. Incorrect.

**Praśna-vyákarana.** Questions and answers about sins and their retributions—a work closely similar to the *Kamma-libága,* No. 2596. By Sudharmá Svámí, in Mágadhi.

**Beginning.** जम्बू इणमो अन्यय संवर विणिच्छियं पवयणस्स
निस्सदं वोच्छामि निच्छयत्थं सुभासियत्थं महेसीहिं।
पंचविहोपणत्तो जिणेहिं इह अन्यओ अणादिव्वो
हिंसा मोसमदत्तं अवंभ परिग्गहं चेव॥ इत्यादि।

**End.** अज्भयणं एक्कं सरगादसस्सु चेव दिवसेसु॥
उद्दिसिज्जंति एकं तरसु आयं विलेसु निरुद्देसु।
आउत्तभत्तपाणएणं अंगजहा आयारस्स॥

**Colophon.** इति श्रीप्रश्नव्याकरणं दशमाङ्गं समाप्तं।

विषयः। तत्र आभिमुख्येन श्रवति कर्म्म येभ्यस्ते आश्रवाः तथा संव्रियते निरुध्यते आत्मतड़ागे कर्म्मजलं प्रविशत्येभिरिति संवराः। तथा च आश्रवाः पञ्च संवराश्च पञ्च तेषां प्रश्नाः प्रश्नविद्याः व्याक्रियन्ते व्युत्पाद्यन्ते अस्मिन्निति ग्रन्थाभिधेयो ज्ञातव्यः। तत्र पापप्रकृतिनिरूपणं। हिंसाया निन्द्यत्वकथनपूर्व्वकं पाप-चण्ड-रुद्र-साहसिक-अनार्य्य-निर्घृण-नृशंस-महाभय-प्रतिभयादीनां आश्रवद्वारत्वकथनं। अथ प्राणवधपर्य्यायकथनं। जलचर-भूचर-खेचरादिप्राणिनिरूपणपूर्व्वकं भोजन-वसन-भूषण-गृहादिनिर्म्माणेषु किमपि प्रयोजनमपेक्ष्य वालिशाः जलकाय-

पृथिवीकायप्रभृतीन् जीवान् हिंसन्तीति निरूपणं। विविधकारणेन प्राणिहिंसकाः म्लेच्छा एव, ते च शक-यवन-शवर-वर्व्वर-गौड़-सिंहल-पारस-क्रौञ्च-अन्ध्र-द्रविड़-पुलिन्द-मलय-चूलिक-पह्लव-मालव-चीन-खस-महाराष्ट्र-आरव-हूण-रोमक-मरुकप्रभृतय इति निरूपणं। अपि च ते प्राणवधरूपपापस्य विपाकमजानन्तो नरकतिर्य्यग्योनिं वर्द्धयन्तीतिनिरूपणं। अथ प्राणिहिंसकानां नरकयन्त्रणाकथनप्रसङ्गेन विस्तरतया भीषणनरकवर्णनं। किञ्च ते प्राणिनः नरकादुद्गताः तिर्य्यग्योणिषु जायन्ते-इति निरूपणञ्च। अथ हिंसाजनितपापविशेषेण कुब्जत्व-वामनत्वादिप्राप्तिकथनं। (इतिआश्रवस्य प्राणिवधरूपः प्रथमद्वारः)। अथ तस्य मृषावादरूप द्वितीयद्वारकथनं। तत्र मृषा-असत्य-कपट-अपार्थादिरूपतत्पर्य्यायकथनपूर्व्वकं मृषावादस्य नितरां हेयत्वप्रतिपादनं। अथ चार्व्वाक-बौद्धादीनां मतस्य मिथ्यात्वकथनपूर्व्वकं देहात्मवादादिखण्डनं। अथ वैदिकपौराणिकादिमतस्य च मिथ्यात्वकथनं। अथ तृतीयद्वारं। तत्र अदत्तादानरूपचौर्य्यनिरूपणं। तत्पर्य्यायादिकथनं। युद्धादिकरणनिन्दाकथनं। तत्र २ पापविशेषनिरूपणञ्च। चौर्य्यापवादादिनिरूपणं। अपह्नवादिभेदकथनञ्च। अथ कामरूपचतुर्थद्वारनिरूपणं। तत्पर्य्यायादिनिरूपणं। पापभेदनिरूपणं। कामसाधननिरूपणं। अत्र श्रीकृष्णस्य वृत्तान्तकीर्त्तनं। रामचन्द्रस्य विवरणकथनञ्च। अहिंसासत्यादिमाहात्म्यकीर्त्तनं। मद्द्वारनिरूपणं। तत्र कषायादिनिरूपणं। आर्त्तरौद्रादिध्याननिरूपणं। साध्वाचारनिरूपणञ्च।

---

**No. 2599.** लघुक्षेत्रसमासप्रकरणम्। Substance, country-made paper, 11 × 6 inches. Folia, 32. Lines, 7 on a page. Extent, 488 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganja, Ráya Dhanapat Siñha, Bahádur. Appearance, new. Verse, Gáthá. Incorrect.

**Laghukshetra-samása-prakaraṇa.** A Jain Geography. Anonymous. In Mágadhi.

**Beginning.** वीरं जयसेहरमयपद्द ट्ठियं पणमि उण सगुरुं च।
संभ्भत्ति ससरणद्द खित्त विपाराणु मुंचामि॥
तिरित्र गरजु खित्ते असंख दीवो दहीतते सव्वे।
उद्धार पलिय पणवीस कोड़िकोड़ीसमय उल्ला॥ इत्यादि।

**End.** सूरिहिं जंरयण सेहरणाम एहिं
अप्पथेमेव रइयं नरकखितवकखं।
संसोह्यिं पयरणं सुयणेहिं लोए
पावे उतं कुसलरं गमयं पसिद्दं॥

**Colophon.** इति लघुक्षेत्रसमासप्रकरणं सम्पूर्णं।

विषयः। तिर्य्यक्‌चेत्रस्थद्वीपोदधीनां परिमाणादिकथनं। सूक्ष्मानुकल्पनया तेषामसंख्येयत्वकथनं। अथ जम्बूद्वीपधातकीखण्ड-पुष्करादिद्वीपानां नामकथनं। लवणाद्युदधीनां नामकथनं। द्वीपोदधीनां क्रमेण विस्तारादिमानकथनं। तत्र वेदिकावनरमणीयतावर्णनं। तत्र देवीनां देवानाञ्च उत्पत्तिकथनं। अथ जम्बूद्वीपस्थहिमालयादिकुलगिरिकथनं। वर्षनिरूपणं। तत्र तत्र पर्व्वतानां नामकथनं। भारतवर्षादीनां विष्कम्भादिप्रमाणकथनं। तत्र करणसूत्रानयनादिप्रकारकथनञ्च। नदीनिरूपणं। जम्बूद्वीपस्थनदीनां द्वादशशतसंख्यकत्वकथनं। अथ जिनभवनानां प्रमाणकथनं। चैत्यमानादिकथनं। मागधादीनां तीर्थानां कथनं। चक्रस्वरूपकथनं। प्रथमान्तिमजिनोत्पत्तिकथनं। पूर्णकालचक्रकथनं। मेरुस्वरूपकथनं। पण्डकवने जिनभवनप्रमाणादिकथनं। सिंहासनादिप्रमाणकथनं। नन्दनवनभद्रशालवनादिकथनं। अधोलोकवासिनीनां दिक्कुमारीणां स्थानादिकथनं: विजयादिकथनं। जिनादीनां सम्भवकथनं। चन्द्रचारकथनं। तयोः परस्परान्तरकथनं। प्रतिमण्डलादिकथनं। ग्रहादीनां संख्यापरिज्ञानाय करणसूत्रकथनं। जम्बूद्वीपादीनां परिध्यानयनादिविधिकथनं। पातालनिरूपणं। अन्तरद्वीपादिनिरूपणं। मेरुद्वयस्वरूपादिकथनं।

---

**No. 2600. गौतमीयमहाकाव्यम्।** Substance, country-made paper. 15 × 6 inches. Folia, 34. Lines, 5 on a page. Extent, 478 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganja, Ráya Dhanapat Siñha, Bahádur. Appearance, new. Verse. Incorrect.

**Gautamíya-mahákávya.** A Sanskrit poem in 10 cantos on the life of Mahávira, the last Jina. By Rúpachandra Gaṇi, disciple of Dayásiñha Gaṇi.

**Beginning.** श्रीराविरासीद्दिव दिव्यदीप्तिर्यस्यात्मनि ज्ञानमयी समग्रा।
तीर्थप्रवृत्त्यै स च वीरनाथः प्रख्यातुमैच्छन्नगरीमपापाम्॥
तावद्विदित्वागममस्य धात्रीपतेरिव व्यन्तरदेवसंघः।
इव क्रियावान् वनपालवर्गः ससर्ज्ज रम्यं महसेनषण्डं॥
स्वराज्यदेशानिव राजवर्य्या विभज्य वृत्तान्ततवोऽध्यवात्तुः।
स्वसारसम्भारमथाभिरामं विकाशयामासुरिनार्च्चनाय॥ इत्यादि।

**End.** भव्याम्भोरुहबोधने दिनकरस्त्रिंशत्समा भूतले
मोहाज्ञानतमोभरं विघटयन् यो धर्म्मराज्यं व्यधात्।
यस्माक्राय निनाय जन्तुनिकरं स्वर्गापवर्गालयं
स श्रीवीरजिनेश्वरो भवतु नः संघस्य च श्रेयसे॥

**Colophon.** इति वाचनाचार्य्यश्रीदयासिंहगणिशिष्यकविरूपचन्द्रगणिविरचिते गौतमीये महाकाव्ये एकादशः सर्गः। समाप्तोऽयं ग्रन्थः।

विषयः। १ प्रथमे सर्गे,—वीरजिनस्य अपापाभिधानपुरगमनवर्णनप्रसङ्गेन तत्रत्योपवनेषु षड्ऋतुप्रादुर्भाववर्णनं। २ये सर्गे,—पवनकुमारनिर्ज्जराणां भगवति वीरजिने भक्त्यातिशय्यवर्णनं। अशोकचैत्यशालादिनिर्म्माणवर्णनं। भगवत्समवसरणवर्णनञ्च। ३ये सर्गे,—भगवतो देवगणैः सार्द्धं समवसरणे निशायां विलासवर्णनं। ४र्थे सर्गे —अथ प्रभाते चैत्यद्रुमसन्निकर्षमधिष्ठितस्य भगवतः सौन्दर्य्यवर्णनम्। अथ प्रसङ्गेन गुर्व्वरग्रामवसतेरिन्द्रभूत्यभिधानस्य गौतमगोत्रस्य ब्राह्मणस्य वृत्तान्तकथनं। तस्य सौन्दर्य्यपाण्डित्यादिवर्णनं। तत्कृतज्योतिष्टोमयज्ञानुष्ठानवर्णनं। ५मे सर्गे,—अथ तस्मिन्नेव समये विमानयानेन समवसरणमुद्दिश्य चलिता देवा "ममैव यज्ञानुष्ठानेन नितरां प्रीतिमापन्ना देवा प्रत्यक्षमिहैवागच्छन्तीति" जातहर्षेण गौतमेन तेषामनागमनेन च निकामं निरुत्साहतया दूतमुखेन समवसरणे भगवान् विहरतीति विदितवृत्तान्तेन तेन पञ्चशतसंख्यकैः शिष्यैः सह तत्र गमनवृत्तान्तवर्णनं। ६ष्ठे सर्गे —तत्र प्रविष्टस्य तस्य भगवदैश्वर्य्यदर्शनेन विचित्ततावर्णनं। ७मे सर्गे,—अथ सर्व्वज्ञेन भगवता महावीरेण स्वयमेव गौतमहृदयस्थं जीवात्मविषये संशयमुत्प्रेक्ष्य प्रथमतः चार्व्वाकबौद्धादिमतकथनपूर्व्वकं नायमात्मा प्रत्यक्षानुमानागमादिसंवेद्य इति निरूप्य च विज्ञानात्मा चिन्मयोऽयं जीवात्मा प्रत्यक्षत एव उपलभ्यते अपि च नासौ विभुः किन्तु किञ्चिन्मूर्त्तिमान् देहपरिमितः अनेकश्चेति निरूपितं। अत्र नैयायिकवैदान्तिकादिमतखण्डनञ्च। अथैतत् निशम्य गौतमोऽपि सह शिष्यगणैः भगवतः प्रव्रज्यां जग्राहेति कथनं।

८मे सर्गे,—अथैतद्वृत्तान्तमुपलभ्य अग्निभूतिर्नाम इन्द्रभूतेः सहोदरः भगवन्तं वीरजिनमुपससाद। भगवानपि तन्मनोगतं भावं समाकलय्य अदृष्टवादसंस्थापनपूर्व्वकं तस्य मूर्त्तत्वमपि कथयामास। अत्रान्तरे नाम्ना वायुभूतिर्भ्राता गौतमस्य जिनान्तिकमुपतस्थौ। भगवानपि देहात्मवादपक्षपातिनं तमुपदिदेश देहातिरिक्तात्मवादोपपादनेन। अथ तावपि भगवत्कृपया प्रव्रज्यामापतुरितिकथनञ्च। ९मे सर्गे,—अथ जगदिदं स्वप्नोपममिति मन्यमानस्य व्यक्ताभिधानस्य कस्यचिन्महापण्डितस्य पुरतो भगवतो जिनस्य भूताखिलप्रतिपादनपुरःसरं तस्मै जैनदीक्षादानमिति विवरणम्। अथ सधर्म्माभिधेयस्य कस्यचिदाचार्य्यस्य पण्डितमण्डितनामकस्य च कस्यचित् स्वामिनः कारणकार्य्यविषये कर्म्मबन्धविषये च संशयं निरस्य भगवतः दीक्षादानविवरणकथनं। अथ शक्रादिदेवानामखिलविषये सन्दिग्धचित्तस्य सुधर्म्माभिधानस्य कस्यचिदाचार्य्यस्य वीरजिनप्रभावेन विगतसन्देहतया सशिष्यस्य तस्य ततो दीक्षाग्रहणादिवृत्तान्तकीर्त्तनं।

१०मे सर्गे,—नरकादिविषये सन्दिहानस्य अकम्पिताचार्य्यस्य जिनप्रभावात् निरस्तविप्रतिपत्तिकतया जैनदीक्षाग्रहणकथनं। अथ पुण्यपापयोरखिले विप्रतिपन्नस्य अचलभ्रातृनामकस्य कस्यचित् विदुषः संशयापनोदनेन तस्मै भगवान् जैनदीक्षां प्रददावितिकथनञ्च। ११शे

सर्गे —परलोकविषये संशयारूढ़चित्तस्य मेतार्य्यनामधेयस्य कस्यचित् विद्वद्वरस्य भगवज्जिनप्रसादेन तत्र निःसंशयतया प्रव्रज्याग्रहणादिकथनं । अथ निर्व्वाणविषये सन्दिहानस्य प्रभासाभिधानस्य आचार्य्यस्य जिनकृपया संशयापनोदनद्वारा तद्दीक्षाग्रहणविवरणकथनं । तत्र हि निर्व्वाणदशायां जीवः सच्चिदानन्दरूपतया परात्मभावेन सिद्धक्षेत्रे तिष्ठति । परात्मभावापन्ना जीवाश्च बहवः । जीवातिरिक्तः कोऽपि परात्मा नास्तीति विज्ञेयम् ।

---

**No. 2601.** गौतमीयप्रकाशः । Substance, country-made paper, 15 × 6 inches. Folia, 200. Lines, 10 on a page. Extent, 4,602 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Corrupt Sanskrit.

**Gautamíya-prakáśa.** A commentary on the work described under the next preceding No. By Kshemakalyáṇa Gaṇi, disciple of Amṛitadharma Gaṇi.

**Beginning.** अनन्तविज्ञानमयं विशुद्धं निरुद्धरागादिपरं प्रचारम् ।
जिनोत्तमं वीरमचिन्त्यशक्तिं निधाय भक्त्या हृदयाब्जकोषे ॥
निराश्रवोद्दामगुणैकधाम समुल्लसद्विघ्नविघातदक्षं ।
गणेश्वराणां गणमुक्तियुक्त्या विधाय सद्यः स्तुतिगोचरञ्च ॥
प्रणम्य रम्यं गुरुपादपद्मं सरस्वतीञ्चापि निवेश्य चित्ते ।
श्रीगौतमीयोत्तमकाव्यबन्धे वितन्यतेऽसौ प्रवरप्रकाशः । त्रिभिः मद्दुर्कं ॥

अथ तत्र भवन्तः श्रीमन्तः कवयः पाठकरूपचन्द्रगणयः सत्काव्यस्यानेकश्रेयःसाधनतां पश्यन्तो निर्दुष्टसकलजनमनश्चमत्कारकारि चारु गौतमीयाख्यं महाकाव्यं चिकीर्षवश्चिकीर्षितार्थस्याविघ्नपरिसमाप्त्यर्थमाशीर्नमस्क्रिया वस्तुनिर्द्देशो वापि तन्मुखमित्युक्तत्वाद्ग्रन्थादावाशीरादन्यतमं मङ्गलमवश्यं कर्त्तव्यमितिमन्वानाः श्रीवीरप्रभोरपापां पुरीं प्रति या प्रस्थानेच्छा तद्रूपं वस्तु निर्द्दिशन्तः प्रबन्धमुपनिबध्नन्ति । तत्रादिमं काव्यमाह श्रीराविरिति । स वीरनाथो वीरप्रभुस्तीर्थस्य चतुर्व्विधसंघस्य प्रवृत्त्यै—इत्यादि ।

**End.** शार्दूलविक्रीड़ितच्छन्दोऽलङ्कृतं । तल्लक्षणं प्रागुक्तमेवेति । एतत्पद्यचतुष्टयमपि स्पष्टार्थमिति न व्याख्यातम् ।

**Colophon.** इति वाचनाचार्य्यश्रीमदमृतधर्म्मगणिविनेयवाचनाचार्य्यक्षमाकल्याणगणिनिर्म्मितायां गौतमीयमहाकाव्यस्य व्याख्यायां गौतमीयप्रकाशाख्यायामेकादशः सर्गः । समाप्तेयं व्याख्या ।

**विषयः ।** रूपचन्द्रगणिकृतगौतमीयमहाकाव्यस्य व्याख्यानम् ।

---

**No. 2602.** प्रश्नोत्तरोपासकाचारः। Substance, country-made paper, 14 × 6 inches. Folia, 142. Lines, 8 on a page. Extent, 3,384 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Generally correct. Sanskrit and Gáthá.

**Praśnotatropásakáchára.** A dialogue on the duties of Jain Upásakas, interspersed with many tales and anecdotes. By Sakalakírtti Bhaṭṭáraka.

**Beginning.** जिनेभं वृषभं वन्दे वृषभं वृषनायकं।
वृषाय भुवनाधीशं वृषतीर्थप्रवर्त्तकं॥
मोहनिद्रातिरेकेण जगत्सुप्तं वचोंऽशुभिः।
बोधितं शिरसा येन वीराय च नमोऽस्तु ते॥
द्वाविंशतिजिनान् शेषान् भव्यलोकसुखप्रदान्।
वन्दे प्रारब्धसिद्ध्यर्थं धर्म्मसाम्राज्यनायकान्॥
अष्टकर्म्म विनिर्मुक्तान् गुणाष्टकविभूषितान्। इत्यादि।

**End.** शून्याष्टाष्टद्वयाङ्काढ्यं संख्यया मुनिनोदितं।
नन्दतत्त्वावनौ ग्रन्थो यावत्कालान्तमेव हि॥

**Colophon.** इति श्रीभट्टारकश्रीसकलकीर्त्तिविरचिते प्रश्नोत्तरोपासकाचारे चतुर्व्विंशतितमः परिच्छेदः। श्रीरस्तु। संवत् १८६८।

विषयः। धर्म्मलक्षणादिकथनं। जैनागमप्रवृत्तिनिरूपणं। जीवाजीवास्रव-बन्ध-सम्बर-निर्ज्जर-मोक्षरूपसप्ततत्त्वनिरूपणं। अथ अर्हज्जिनादिशब्दनिर्व्वचनकथनं। जिनानां क्षुत्पिपासाद्वेषरागमोहविस्मयनिद्राद्यष्टादशदोषहीनत्वकथनं। जिनानामनन्तगुणत्वमनन्तमहिमत्वञ्चेतिकथनं। अहिंसालक्षणधर्म्मनिरूपणं। जीवादिहिंसने प्रत्यवायकथनं। प्रत्यहं स्नानाद्यनुष्ठाने पापातिशयकथनं। पितॄनुद्दिश्य तर्पणश्राद्धाद्यनुष्ठाने प्रत्यवायकथनं। पित्रादीनुद्दिश्य दानादेरपि निरर्थकत्वकथनं। मिथ्यात्वस्वरूपकथनपूर्व्वकं तत्तद्दोषनिरूपणं। तपस्याकरणस्य प्रशंसाकीर्त्तनं। अष्टाङ्गनिरूपणं। अत्र अमितिप्रभनामकस्य देवस्य वृत्तान्तकीर्त्तनं। अञ्जनाख्यचौरस्य विवरणकथनं। अनन्तमत्या उपाख्यानकथनं। वङ्गदेशीयस्य उद्दापनाभिधानस्य नृपतेरुपाख्यानं। तन्महिष्या रेवत्या वृत्तान्तकथनं। सौराष्ट्रदेशाधिपस्य यशोधरस्य कथाकीर्त्तनं। उपगूहनगुणस्थितीकरणनिरूपणमुखेन जिनदत्तवारिसेनस्य उपाख्यानकथनं। वात्सल्यगुणप्रशंसाप्रसङ्गेन विष्णुकुमारस्य कथाकीर्त्तनं। हस्तिनापुरवास्तव्यस्य वज्रकुमारस्य वृत्तान्तकथनं। गुणाष्टकमाहात्म्यकथनञ्च। अथ सम्यक्त्वमलदपञ्चविंशतिदोषनिरूपणं। सम्यक्त्वनिरूपणं। सम्यग्दर्शन-

माहात्म्यकीर्त्तनं । अष्टमूलगुणनिरूपणं । द्यूतामिषादिसप्तव्यसननिरूपणं । हिंसाविरतिव्रतनिरूपणं । तत्र मातङ्गधनश्रीकथाकीर्त्तनं । सत्यव्रतानुष्ठानमाहात्म्यकीर्त्तनं । अत्र धनदेवसत्यघोषयोः कथाकथनं । दयाव्रतानुष्ठानमाहात्म्यकीर्त्तनं । अत्र वारिसेनकथाकीर्त्तनं । ब्रह्मचर्य्यानुव्रतमाहात्म्यकथनं । नील्यारक्षकोपाख्यानकीर्त्तनं । परिग्रहप्रमाणरूपसन्तोषानुरूपव्रतकीर्त्तनं । अत्र नवनीतोपाख्यानकीर्त्तनं । अथ गुणव्रतकथनं । तत्र दिग्व्रतादिविविधव्रतमाहात्म्यकथनञ्च । अथ शिक्षाव्रतकथनं । तत्र सामायिकादिव्रतमाहात्म्यकीर्त्तनं । प्रोषधव्रतमाहात्म्यादिकथनं । अथ चतुर्व्विधदानव्रतमाहात्म्यादिकथनं । तत्र दानयोग्यदेशकालपात्रादिनिरूपणञ्च । सूकरभेककथादिकीर्त्तनञ्च । अथ सन्न्यासादिमाहात्म्यकथनं । रात्रिभोजननिन्दाकथनं । निधुवनादिनिन्दादिकथनं । विशेषेण ब्रह्मचर्य्यव्रतविधिकथनञ्च । अथ पापानुमतिवर्ज्जनादिविधिकथनं ।

---

**No. 2603. प्रज्ञापनाटीका ।** Substance, country-made paper, 12 × 5 inches. Folia, 440. Lines, 13 on a page. Extent, 11,440 ślokas. Character, Nágara. Date, Sm. 1866. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose, Sanskrit and Mágadhi. Correct.

**Prajnápaná-ṭíká.** A commentary on the Jain Sútra text entitled Paṇṇávaná. By Malaya Girí.

**Beginning.** जयति नमदमरमुकुटप्रतिबिम्बच्छद्मविहितबहुरूपः ।
उद्दर्त्तुमिव समस्तं विश्वं भवपङ्कतो वीरः ।
जिनवचनामृतजलधिं वन्दे यद्बिन्दुमात्रमादाय ।
अभवन्नूनं सत्त्वा जन्मजराव्याधिपरिहीनाः ॥
प्रणमत गुरुपदपङ्कजमधरीकृतकामधेनुकल्पलतम् ।
यदुपास्तिवशान्निरुपममश्नुवते ब्रह्म तत्त्वभाजः ॥
जड़मतिरपि गुरुचरणोपास्तिसमुद्भूतविपुलमतिविभवः ।
समयानुसारितोऽहं विदधे प्रज्ञापनाविवृतिम् ॥

अथ पण्णवणेति प्रज्ञापनेति कः शब्दार्थ उच्यते । प्रकर्षेण निःशेषकुतीर्थकरासाध्येन यथावस्थितस्वरूपनिरूपणलक्षणेन ज्ञाप्यन्ते शिष्यबुद्धावारोप्यन्ते जीवाजीवादयः पदार्था अनयेति प्रज्ञापना । इत्यादि ।

**End.** अतएव सुखिनः सन्तस्तिष्ठन्ति ।
नमत नयभङ्गकलितं प्रमाणबहुलं विशुद्धसद्बोधं ।

जिनवचनमन्यतीर्थिककुमतनिरासैकदुर्ललितं ॥
जयति हरिभद्रसूरिष्टीकाकृद्विषमविवृतभावार्थः ।
यद्वचनवशाद्दमपि जातो लेशेन विवृतिकारः ॥
कृत्वा प्रज्ञापनाटीकां पुण्यं यदवाप मलयगिरिरनघं ।
तेन समस्तोऽपि जनो लभतां जिनवचनसम्बोधं ॥

**Colophon.** इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां षट्त्रिंशत्तमं पदं समर्थितं । समर्थिता प्रज्ञापनाटीका । संवत् १८६९ ।

विषयः । प्राकृतभाषामयस्य पन्नावणेतिसमाख्यस्य जैनसूत्रग्रन्थस्य व्याख्यानम् ।

---

**No. 2604.** हनुमदष्टकम् । Substance, country-made paper, 13 × 4 inches. Folia, 2. Lines, 8 on a page. Extent, 24 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, old. Verse. Incorrect.

**Hanumadashṭaka.** A mystic mantra in praise of Hanumán. By Rámachandra.

**Beginning.** सं सं सं
शं शं शं सिद्धिनाथं प्रणमति चरणं वायुपुत्रस्य रुद्रं
हं हं हं
तं तं तं दिव्यरूपं मृदुमृदुहसितं गर्ज्जितं मेघशब्दं ।
तं तं तं त्रैलोक्यनाथं तपति दिनकरं तन्त्रिनेत्रस्वरूपं
कं कं कं कन्दर्पजितं कलिमलहरणं शाकिनीकालरूपं ॥ इत्यादि ।

**End.** सङ्ग्रामे शत्रुमध्ये जलनिधितरणे व्याघ्रसिंहे च सर्पे
राजद्वारे च मार्गे गिरिगुहविवरे निर्झरे कन्दरे वा ।
भूतप्रेतेषु सर्व्वे ग्रहगणविषये शाकिनीयोगिनीनां
विस्फोटस्य ज्वराणां दलति हनूमतो + + रुद्रं नितान्तं ॥
पठनाच्छ्रवणाज्जापात् सिद्धं भवति वाञ्छितं ।
सर्व्वकामाः फलन्त्येव लभ्यते नात्र संशयः ॥

**Colophon.** इति श्रीरामचन्द्रेण विरचितं हनूमदष्टकं समाप्तं ।

विषयः । हनूमतो माहात्म्यकीर्त्तनं ।

---

**No. 2605.** शिवमहिमस्तोत्रम् । Substance, country-made paper, 12 × 5 inches. Folia, 8. Lines, 6 on a page. Extent, 234 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Pundit S'yâmalála Duve. Appearance, new. Verse. Incorrect.

**S'ivamahima-stotra.** A hymn in praise of S'iva, alleged to have been imparted by Vishṇu to S'esha.

**Beginning.** महेशानन्ताद्यत्रिगुणरहितामेयविमल-
स्वराकारापारामितगुणगणाकारनिहते ।
निराधाराधारामरवरनिराकारपरम
प्रभापूराकारावरपर नमो वेद्य शिव ते ॥
नमो वेदावेद्याखिलजगदुपादाननियम
स्वतन्त्रासामन्तानवधृतिनिजाकारविरते ।
निवर्त्तन्ते वाचः शिवपरमप्राप्यमनसा
यतोऽशक्ताः स्तोतुं सकृदपि गुणातीत शिव ते ॥ इत्यादि ।

**End.** त्वयापि शाङ्करं लिङ्गं पूजनीयं प्रयत्नतः ।
विद्यायैवान्यदेवानां पूजनं शेष सर्व्वदा ॥

**Colophon.** इति श्रीविष्णुविरचितं शिवमहिमस्तोत्रं समाप्तं ।

विषयः । शेषेण सह विष्णोः संवादेन विष्णुकृतशिवमाहात्म्यकीर्त्तनं ।

---

**No. 2606.** प्रशस्तिप्रकाशिका । Substance, country-made paper, 15 × 4 inches. Folia, 24. Lines, 12 on a page. Extent, 705 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Pandit S'yámalála Duve. Appearance, new. Prose and verse. Incorrect.

**Praśasti-prakáśiká.** A letter-writer in Sanskrit, giving the forms and addresses appropriate for relations, officials, and the different castes. By Sambhu Deva.

**Beginning.** नत्वा गणपतिं देवं सर्व्वविघ्नविनाशनं ।
गुरुञ्च करुणानाथं ब्रह्मानन्दाभिधानकं ॥
प्रशस्तिकाशिका दिव्या शम्भुदेवेन लिख्यते ।
सर्व्वेषामुपकाराय लेखनाय च धीमतां ॥

चतुर्णामपि वर्णानां क्रमतः कार्य्यकारिणां ।
लिख्यते सर्व्वविद्यार्थिप्रबोधाय प्रशस्तिका ॥
यस्य लेखनमात्रेण विद्या कीर्त्तिर्यशोऽपि च ।
प्रतिष्ठा लभ्यते शीघ्रमनायासेन धीमतां ॥

तत्रादौ ब्राह्मणानां । स्वस्तिश्रीमत्सकलविद्याविनोदरसिकविराजमानसन्मण्डलीसमाज-मण्डलविहितदिग्विजयवादीन्द्रवृन्दमर्द्दनविद्वज्जनकमलकुलप्रकाशनमार्त्तण्डमूर्त्तिषु । इत्यादि ।

**End.** युक्तं स्वाश्रितलोकानां पालनं महतां नृणां ।
मेघं विना सुखं को वा सिञ्चेचातकपक्षिणाम् ॥

श्रीमत्याः । स्वस्तिश्रीमदरुन्धतीसमानपातिव्रत्यालङ्करणालङ्कृतभोगायतनप्रपालितनिखि-लस्वाश्रितजनकदम्बासु अमुकमहाराज्ञीषु ॥

**Colophon.** इति प्रशस्तिप्रकाशिका समाप्ता ।

**विषयः।** ब्राह्मणादीनां प्रशस्तिरचनाप्रकारादिकथनं ।

---

**No. 2607.** हयग्रीवसहस्रनाम-स्तोत्रम् । Substance, country-made paper, 16 × 5 inches. Folia, 8. Lines, 12 on a page. Extent, 165 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, new. Verse. Generally correct.

**Hayagríva-sahasranáma-stotra.** A hymn in praise of Hayagríva, an incarnation of Vishṇu. An extract from a Tantra. S'iva recites it for the edification of Párvatí.

**Beginning.** कैलासशिखरासीनं देवदेवं महेश्वरं ।
ध्यानोपरतमासीनं जटाजूट विभूषितं ॥
अपृच्छत् पार्व्वती देवी विनयावनता स्थिता ।
किं त्वया जप्यते देव स्मर्य्यतेऽभ्यर्च्यते च किं ॥
तदहं श्रोतुमिच्छामि त्वत्प्रसादान्महेश्वर ।
त्वमादिः सर्व्वदेवानां योगिनाञ्चातिवल्लभः ॥
त्वमेव जगतां कर्त्ता संहर्त्ता रक्षकस्तथा ।
त्वत्तः सर्व्वं श्रुतं नाम वेदागमरहस्यकं ॥
स्तोत्राणि च पवित्राणि नाम साहस्रकाणि च ।
श्रुतानि देवदेवेश मन्त्रयन्त्राणि भूरिशः ॥

हयग्रीवस्य देवस्य पुण्यं नाम सहस्रकं ।
कथयस्व महादेव यद्यहं तव वल्लभा ॥ इत्यादि ।

**End.** तन्मूर्त्तिपुरतो देवि यः पठेद्भक्तितत्परः ।
कुवेर इव वित्ताढ्यः स भवेत्सम्पदां पदं ॥
वज्जनात्र किमुक्तेन पठनादस्य भामिनि ।
इह लोके सुखं भुक्त्वा परमाप्नोति तत्पदं ॥

**Colophon.** इति श्रीहयग्रीवसहस्रनामस्तोत्रं सम्पूर्णम् ।

विषयः । गुणकथनव्याजेन हयग्रीवस्य विष्णोरवतारविशेषस्य सहस्रनामकीर्त्तनं ।

---

**No. 2608.** लोकप्रकाशः । Substance, country-made paper, 12 × 5 inches. Folia, 800. Lines, 8 on a page. Extent, 19,188 ślokas. Character, Nágara. Date, Sm. 1900. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Loka-prakáśa.** An elaborate dissertation on Jain Geography. By Vinaya-pála.

**Beginning.** ॐ नमः परमानन्दनिधानाय महस्विने ।
शङ्खेश्वरपुरोत्तंसपार्श्वनाथाय तारिणे ॥
पिपर्त्ति सर्व्वदा सर्व्वकामितानि स्मृतोऽपि यः ।
स कल्पद्रुमजित्पार्श्वो भूयात् प्राणिप्रियङ्करः ॥
पार्श्वक्रमनखाः पान्तु दीप्रदीपाङ्कुरश्रियः ।
सुष्टप्रत्यूहशलभाः सर्व्वभावावभासिनः ॥
जयन्ति व्यञ्जिताशेषवस्तवोऽनन्तसमोद्भुहः ।
गिरः सुधाकिरस्तीर्थकृतामद्भुतदीपिकाः ॥
कृपाकटाक्षनिःक्षेपनिपुणीकृतसेवकाः ।
भक्तव्यक्तिसविची सा जयति श्रुतदेवता ॥
जीयाज्जगद्गुरुर्विश्वजीवातु वचनामृतः ।
श्रीहीरविजयः सूरिर्मदीयस्य गुरोर्गुरुः ॥
श्रीकीर्त्तिविजयान् सूते श्रीकीर्त्तिविजयाभिधः ।
श्रुतकल्पोऽनुभूतोऽयं मन्त्रः स्वादिष्टसिद्धिदः ॥
अस्ति लोकस्वरूपं यद्विप्रकीर्णं श्रुताम्बुधौ ।

परोपकारिभिः पूर्व्वपण्डितैः पिण्ड्यते स्म तत् ॥

— — — — — — — — — ।

लोकप्रकाशनामानं ग्रन्थमेनं विचक्षणाः ।
आद्रियध्वं जिनप्रोक्तविश्वरूपनिरूपकं ॥
प्राप्यानुशासनमिदं समपक्रमेऽहं
मेदं युगीनविहरद्गुरुगौतमस्य ।
श्रीमत्तपागणपतेर्विजयादिदेव-
सूरीशितुर्विजयसिंहमुनीशितुश्च ॥ इत्यादि ।

End. उत्तराध्ययनवृत्तिकारकैः सुष्टुभावविजयाख्यवाचकैः ।
सर्व्वशास्त्रनिपुणैर्यदागमग्रन्थ एष समशोधितोद्यमैः ॥
जिनविजयाभिधगणयो ग्रन्थेऽस्मिन + + यतोद्यमं सुतरां ।
लिखितप्रथमादर्शः शोधनलिखनादिपटुमतयः ॥
वसुखाश्वेन्दुप्रमिते वर्षे हर्षेण जीर्णदुर्गपुरे ।
राधोज्ज्वलपञ्चम्यां ग्रन्थः पूर्णोऽयमजनिष्ट ॥

— — — — — — -- ।

प्रत्यक्षरं गणनया ग्रन्थेऽत्र स्युरनुष्टुभां ।
सहस्राणि सप्तदशषट्शती चैकविंशतिः ॥

Colophon. इति श्रीलोकप्रकाशः सम्पूर्णः ॥ संवत् १९० । फाल्गुनवदी ।

विषयः । सूक्ष्म-व्यवहारिकभेदेन परमाणोः द्वैविध्यनिरूपणं । अनन्तैः सूक्ष्मपरमाणुभिः व्यवहारिकः परमाणुरेको जायते । तैश्च अष्टाभिः श्लक्ष्णश्लक्ष्णिकैका कल्प्यते । ताभिश्च अष्टाभिः ऊर्ध्वरेणुरेको जायते । तैरप्यष्टभिः त्रसरेणुरेको भवति । अष्टाभिश्च त्रसरेणुभिरेको रथरेणुरुत्पद्यते । तैरपि अष्टाभिः केशाग्रमेकं जायते । तैरष्टगुणैः स्थूलं सम्पद्यते । एवं क्रमेण लिक्षा-यूका-यवमध्यादीनां परिमाणादिकथनं । एकदशशतादिगणनस्थाननिरूपणं । भागहारादिविधि-कथनं । पादवितस्तिभुजधनुरादिपरिमाणनिरूपणं । संख्यातासंख्यातपरीत्तादिपरिमाणक-थनं । एवं जम्बूद्वीपादिसमायामविष्कम्भपरिवेशादिनिरूपणं । अथ द्रव्य-क्षेत्र-काल-भावभेदेन पञ्चास्तिकायभेदनिरूपणं । तत्र क्रमेण जीवाजीवादिरूपद्रव्यक्षेत्रादिलोकनिर्णयः । अथ धर्म्मा-स्तिकायः अधर्म्मास्तिकायः आकाशः, जीवः, पुद्गलः, कालश्चेति षट् द्रव्याणि । तत्र काल-मन्तरेण अपरे पञ्च अस्तिकायशब्देन आख्यायन्ते । जीवादीनां लक्षणादिकथनं । साधर्म्म्या-दिकथनञ्च । सिद्धानां जीवानां स्वरूपादिकथनं । संसारिजीवानां स्वरूपादिकथनं । तत्र स्थानपर्य्याप्ति-लेश्या-संहनन-दृष्टि-ज्ञान-दर्शनप्रभृतिसप्तत्रिंशद्विधद्वारकथनं । अथ त्रसस्थावरभे-

देन जीवानां द्वैविध्यकथनं। तेषु क्रमेण एकद्वित्रिचतुःपञ्चेन्द्रियजीवनिरूपणं। एषामवान्तर-भेदनिरूपणञ्च। अथ क्षिति-जल-वायु-तेजो-मयीरुहरूपपञ्चविधस्थावरजीवनिरूपणं। वस्तुतो-जीवानामसंख्येयत्वकथनं। निगोदगोलकस्थापनादिस्वरूपकथनं। सूक्ष्माणां जीवानां भेदक-थनं। तेषां स्थानादिकथनञ्च। अथ सूक्ष्मनिगोदजीवानां त्रिधा कायस्थितिर्भवति यथा-—अनाद्यन्ता अनादिसान्ता साद्यन्ता चेति। एवमन्यत्र कायस्थितिनिरूपणं। अथ पृथ्व्यादिसूक्ष्म जीवानां वपुः त्रिविधं तैजसं कार्म्मणं औदारिकञ्चेति। अथ सूक्ष्मैकाचादिशरीरेषु समुद्घाता-दिनिरूपणं। एवं गतिवर्णाहारादिनिरूपणं। पूर्व्वोक्तस्थानपर्य्याप्त्यादिद्वारनिरूपणञ्च। मणि माणिक्यस्वर्णादिधातूनां पृथिवीकायत्वकथनं। एवं हिमकरकाघृतादीनां जलकायत्वकथनं। वज्रनिर्घातसूर्य्यकान्तादीनां तेजःकायत्वकथनं। प्राच्योदीच्यादिदिगादीनां वायुकायत्वक-थनं। वनस्पत्यादीनां सात्मकत्वनिरूपणपूर्व्वकं स्थावराणां सात्मकत्वकथनं। यवगोधूमधान्या-दीनां माषतिलमसूरकादीनाञ्च त्रिपञ्चवर्षादिव्याप्तिक्रमेण अङ्कुरयोनित्वमितिकथनं। साधा-रणवनस्पतिभेदादिकथनं। तेषामाहारकालादिनिरूपणमुखेन ऋतुविशेषे वनस्पतयः आहा-राधिक्यं कुर्व्वन्तीतिकथनं। एवं लतादीनां स्वरूपादिकथनं। (उद्भिज्जविद्याकथनं।) वनस्प-त्यादीनां स्थानादिनिरूपणं। तृणादिस्थानादिनिरूपणं। अथ कृम्यादिरूपद्वीन्द्रियजीवनि रूपणं। लिक्षायूकादिरूपत्रीन्द्रियजीवनिपरूणं। वृश्चिकादिरूपचतुरिन्द्रियजीवनिरूपणं। मनुष्यतिर्य्यगादिरूपपञ्चेन्द्रियकथनं। क्रमेण तेषां भवस्थितिसंख्या-समुद्घात-गतागति-संहनन-कषाय-आहार-दृष्टि-ज्ञानादिकथनं। तिर्य्यगादिषु प्रत्येकमवान्तरभेदकथनपूर्व्वकं लक्षणादिक-थनं। (प्राणिविद्याकथनं।) अथ मनुष्या द्विविधाः संमूर्च्छिता गर्भजाश्चेतिकथनं। अत्र तेषां भेद-स्थान-पर्य्याप्ति कायस्थित्यादिनिरूपणं। अथ आर्य्यम्लेच्छभेदेन नराणां द्वैविध्यकथनं। आर्य्या अपि द्विविधाः, ऋद्धिप्राप्ता अनृद्धिप्राप्ताश्च। आर्य्याणां वसतिस्थानादिकथनं। हरिवर्षा-दिकथनं। वैमानिकव्यन्तरलोकादिनिरूपणं। तत्र अनन्तराप्ति-सिद्धिसंज्ञितादिद्वारनियमन-कथनं। अथ भवन-व्यन्तरज्योतिष-वैमानिकभेदेन सुराणां चतुर्व्विधत्वकथनं। तत्र भवनानां असुरनागसुपर्णादिरूपदशविधभेदकथनं। एवं क्रमेण अन्येषां भेदकीर्त्तनं। रूपगुणस्थानादि-निरूपणञ्च। देवानामधिकारनिरूपणं। नारकजीवस्वरूपादिकथनं। अथ जीवस्वरूपकथनं। तस्य कथञ्चिन्मूर्त्तत्वकथनं। मिथ्यात्व-अविरति-कषायादिपञ्चविधा एव बन्धमूलमितिनिरूपणं। अथ ज्ञानावरणीय-दर्शनावरणीय-वेदनीय-मोहनीयादिरूपाष्टविधकर्म्मनिरूपणं। एतेषामवा-न्तरभेदनिरूपणं। तत्र मतिश्रुतादिपञ्चविधज्ञानावरणकथनं। सुख-प्रबोधादिनवविधदर्श-नावरणकथनं। एवं वेदनीयादिभेदकथनं। गति-जाति-वपुराद्यष्टाविंशतिप्रकृतिनिरूपणं। तत्र तत्र अवान्तरभेदनिरूपणञ्च। अथ पुद्गलस्वरूपनिरूपणं। तेषामवान्तरभेदादिकथनं। अत्र द्रव्य-क्षेत्र-काल-भाव-गुणादिनिरूपणञ्च। परमाण्वादीनां संयोगप्रकारादिकथनं। तत्र वर्ण-रस-स्पर्शादिभेदकारणनिरूपणञ्च। अथ क्षेत्रलोकनिरूपणं। तत्र अधोलोक-तिर्य्यक्लोक-मेरुचूलि-

कादिस्थापनादिस्वरूपकथनं। भूलोकस्थापनादिकथनं। तत्र पृथिव्याश्चत्वार आश्रयाः घनोदधिः, घनवातः, तनुवातः, महत्पथश्च इति। अपि च सा घनोदधि-घनवात-तनुवातरूपैः चतुर्भिः वलयैः परितो वेष्टिता तिष्ठति। सर्व्वेषां लोकानां क्रमशः परिमाणादिकथनं। व्यन्तरलोकादिसंस्थानादिनिरूपणं। जम्बूद्वीपस्य वर्षादिनिरूपणं। सुरनरतिर्य्यगादिवसतिभेदकथनञ्च। अथ नरकसंस्थानादिकथनं। नारकजीवानां नरकदुःखस्य च वर्णनं। तिर्य्यक्लोकसंस्थानादिकथनं। विशेषेण जम्बूद्वीपवर्णनं। अथ भारतवर्षवर्णनं। तत्र तस्य अधिज्यधनुराकारत्वकथनं। तत्र गिरिनदीप्रभृतीनां विशेषेण वर्णनं। तेषां विष्कम्भादिकथनञ्च। महाविदेहादिदेशवर्णनं। मेरुप्रदेशवर्णनं। विशेषेण कनकशैलवर्णनं। अथ सर्व्वेषां कालमानानामादित्यमूलकतया विशेषत आदित्यतारादिनिरूपणं। तत्र सूर्य्यमण्डलक्षेत्रादिमानकथनं। व्यासादिनिरूपणं। अथ वत्सरस्य षट्षष्ट्युत्तरत्रिशतदिनात्मकत्वनिरूपणं। सूर्य्यौ च द्वौ क्रमेण दक्षिणायनमुत्तरायणञ्च सम्पादयतः इति निर्णयः। दिनरात्रिह्रासवृद्धिकारणकथनं। अथ जम्बूद्वीपे यदा मेरोर्द्दक्षिणोत्तरयोर्द्दिनमुत्कृष्टं तदा पूर्व्वापरयोः दिशोः रात्रिरेव जघन्या। एवं यदा पूर्व्वापरयोः दिशोः सर्व्वोत्कृष्टं दिनं तदा दक्षिणोत्तरयोः रात्रिरेव जघन्येतिनिरूपणं। एवमुदयास्तमयविशेषनिरूपणं। अत्र मतभेदकथनञ्च। अन्धकारस्य ज्योतिषश्च संस्थानादिकथनं। अथ गणनाप्रक्रियाकथनं। सूर्य्यमण्डलस्य दूरत्वादिनिरूपणं। अथ चन्द्रचारनिरूपणं। तत्र मण्डलविष्कम्भादिपरिमाणकथनं। चन्द्रस्य पञ्चदशमण्डलानि तेषां पञ्च जम्बूद्वीपे प्रकाशन्ते, अपराणि अन्यस्मिन्निति निरूपणं। अथ चन्द्रावपि द्वावेतिनिरूपणं। गत्यादिनिरूपणं। सर्व्वत्र गणितोपपत्तिकथनञ्च। अथ ध्रुवराहुः पर्व्वराहुश्चेति राहोर्द्दैविध्यकथनपूर्व्वकं तयोः स्थानादिनिरूपणं। अथ प्रत्यहं राहुमण्डलस्य आवरणतारतम्येन प्रतिपदादितिथ्युत्पत्तिकथनं। चन्द्रमण्डलस्य राहुमण्डलापेक्षया बृहत्वेऽपि ग्रहणादौ राहोः सम्पूर्णचन्द्रमण्डलस्य आच्छादकत्वे कारणादिकथनं। अथ मतभेदादिकथनञ्च। चान्द्रमानादिनिरूपणं। अथ नक्षत्राणां मण्डलक्षेत्रादिनिरूपणं। अथ अभिजित्-श्रवणा-धनिष्ठादिक्रमेण अष्टाविंशतिनक्षत्रकथनं। तत्र अभिजित्परित्यागेन सप्तविंशतिनक्षत्राणां व्यवहारिकत्वकथनं। अथ अभिजिन्नक्षत्रस्य गोशीर्षाकारत्वं, श्रवणायाः कासाराकारत्वं, धनिष्ठायाः पक्षिपञ्जराकारत्वमित्यादिक्रमेण नक्षत्राणामवयवसंस्थानकथनं। अथ विकालक-अङ्गारक-लोहिताङ्क-प्राघुणिक-कण-कणक-अश्वसेन-कर्ब्बूरक-दुर्द्दलक-शनैश्चरप्रभृतीनां बहूनां ग्रहाणां संज्ञाकथनं। अथ जम्बूद्वीपस्य परिक्षेपकादिकथनं। अथ धातकीखण्डवर्णनं। उत्तरकुरुप्रदेशवर्णनं। सुमेरुवर्णनं। पुष्करद्वीपवर्णनं। अत्र त्रिषु भुवनेषु सर्व्वेषां जिनप्रासादानां संख्या (८५७००२८२) कथनं। एवं सर्व्वासां जिनप्रतिमानां संख्या (१५४२५८३६०८०) कथनञ्च। द्वीपेषु सूर्य्यचन्द्रयोश्चारादिनिरूपणं। तिर्य्यक्लोके ज्योतिश्चक्रसंस्थानादिकथनं। ग्रहमण्डलदूरत्वादिनिरूपणं। नक्षत्रमण्डलस्य ऊर्द्धाधः स्थानादिनिरूपणं। रविचन्द्रयोः फलादिकथनं। चन्द्रविमानादौ देवादीनां स्थित्यादिकथ-

नं। ऊर्द्धलोकस्वरूपादिवर्णनं। अथ शक्रलोकवर्णनं। तत्र शक्रस्य पूर्व्वजन्मवृत्तान्तकथनं। अर्हिं साम्प्रतमाहात्म्यकीर्त्तनञ्च। सुरासुरयोः युद्धवर्णनं। सुधर्म्माभिधानस्वर्गवर्णनं। ईशानाभिध-स्वर्गवर्णनं। सनत्कुमारस्वर्गवर्णनं। माहेन्द्रस्वर्गवर्णनं। अथ द्विष्टलोकस्वरूपादिवर्णनं। कालाग्निकायस्वरूपभेदादिकथनं। तत्र प्रयोगज-वैश्रविक-मिश्रकभेदात् त्रिविधपरिनाम-स्वरूपनिरूपणं। स्थितिस्वरूपभेदकथनं। चणलवमुहूर्त्तादीनां स्वरूपादिकथनं। आढ़क-द्रोणादिपरिमाणनिरूपणं। अथ नक्षत्रक्षेत्रभागानां सूर्य्यभोगार्हत्वनिरूपणं। चान्द्रसौरादि-वत्सरनिरूपणं। (अत्र सर्व्वत्र गणितोपपत्तिकथनमितिज्ञेयम्।) तिथिकरणादिनिरूपणं। ऋतुनिरूपणं। अथ अभिनन्दित-प्रतिष्ठित-विजय-प्रीतिवर्द्धन-श्रेयः-शिव-शिशिर-हिमवत्-वसन्त-कुसुमसम्भव-निदाघ-वनविरोहकाभिधानाः अलौकिकाः मासा इति द्वादशमासनाम-कथनं। अथ प्रतिपदादितिथीनाम् उत्तमा-सुनक्षत्रा-एलापत्यादिपञ्चदशनामकथनं। एवं नन्दाभद्रादिनामकथनञ्च। शुभाशुभतिथ्यादिनिरूपणं। स्त्रीपुरुषयोः शुभाशुभलक्षणकथनं। सामुद्रिकविद्याकथनञ्च। स्त्रीणां लीलाविलासविच्छित्तिविब्बोकादिलक्षणादिकथनं। स्त्री-पुरुषयोः जात्यादिभेदकथनञ्च। अथ अर्हत्-सिद्ध-प्रवचन-गुरु-स्थविर-वहुश्रुतप्रभृतीनां लक्षणादिकथनं। शान्तिनाथचरित्रकथनं। वासुपूज्यचरित्रकथनं। प्रसङ्गात् शुभजातक-निरूपणं। सामान्यतः अर्हतां चरित्रकथनं। वेदनीयमोहनीयादिकर्म्मस्वरूपादिकथनं। एवं परीषह-उपसर्गादिस्वरूपकथनं। अवान्तरभेदकथनञ्च। अथ अन्तर्मुखतया मनः-स्थैर्य्यमेव ध्यानमितिलक्षणकथनपूर्व्वकं आर्त्त-रौद्र-धर्म्म-शुक्लभेदात् ध्यानस्य चातुर्व्विध्य-कथनं। अथ आत्मवीर्य्यपरिणामविशेषाद्योगस्यापि त्रैविध्यकथनं। अथ समवसरण-निर्म्माणविधिकथनं। जरत्या उपाख्यानकथनं। अथ भगवद्वाक्यस्य संस्कारवत्त्व-औदात्त्य-उपचारपरीतता-मेघगम्भीरघोषत्व-प्रतिनादविधायिता-दाक्षिण्य-उपनीतरागत्व-महार्घता-अ-व्याहतत्व-स्निग्धत्वप्रभृतिपञ्चत्रिंशद्गुणकत्वनिरूपणं। अथ साधूनां श्रावकाणाञ्च अहिंसा-सुनृत-ब्रह्मचर्य्य-अपरिग्रह-अस्तेयरूपपञ्चमहाव्रतविधानं। अनुव्रतनिरूपणं। तत्र षड्भङ्गिन्यायकथनं। अथ चक्रवर्त्तिस्वरूपादिकथनं। प्रासादनिर्म्माणविधिकथनं। तत्र तद्भेदकथनादिकञ्च। चतुः-षष्टिपद-एकाशीतिपद-शतपदादिवास्तुन्यासकथनं। वास्तुदेवतादिनिरूपणं। अथ इन्दुमा-लायाः गर्भे नारदस्य उत्पत्त्यादिकथनं। तस्य देवताभिः पालितत्वाद् देवर्षीतिनामकथनपूर्व्वकं तच्चरित्रवर्णनं। अथ विमलवाहन-अभिचन्द्र-प्रसेनजित्प्रभृतीनां विवरणकथनं। ऋषभचरित्र-कथनं। पञ्चकल्याणकथनं। अजितस्य जीवनवृत्तान्तकीर्त्तनं। श्रीसम्भवस्य जीवनकथनं। अभि-नन्दनस्य जीवनीकथनं। पद्मप्रभस्य चरितकथनं। सुपार्श्वस्य चरित्रवर्णनं। एवं चन्द्रप्रभ-सुमति-सुपार्श्व-सुविधिश्रेयांस-वासुपूज्य-विमलस्य-अनन्तजिन-धर्म्मनाथ-शान्तिनाथ-कुन्थुनाथ-अरनाथ मुनिसुव्रत-नेमि-श्रीपार्श्वमहावीराणां जीवनीकीर्त्तनञ्च। अथ इन्द्रभुति-अग्निभूति-वायुभूति-व्यक्ति-सुधर्म्म-मण्डितपुत्र-मौर्य्यपुत्र-अकम्पित-अचलभ्रातृ-मेतार्य्य-प्रभासनामैकादशगणधराणां

नामनगरगोत्रादिकथनं। अथ भरत-सगर मघवा-वाणि रावण विभीषण-दशरथ-रामादीनां विवरणकथनं। एवं वसुदेव-बलदेव-कृष्णादीनां विवरणकीर्त्तनञ्च। अथ भविष्यकथनं। अथ चतुर्व्विधपुद्गलावर्त्तकथनं। औदारिकादिवर्गकर्म्मणां नामादिनिरूपणं। भावलोकस्वरूपादिकथनं।

---

**No. 2609.** आचारदिनकरः। Substance, country-made paper, 12 × 5 inches. Folia, 84. Lines, 7 on a page. Extent, 1,126 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect.

**Áchára-dinakara.** Religious duties of Jains; comprising also a summary of their rituals. By Vardhamána Súri. The codex contains only the last section of the work.

अथ शान्तिकपौष्टिकविधि।

**Beginning.** तत्रादौ गुरुर्ब्रह्मगुरुर्वा सुस्नातः कङ्कणमुद्राङ्कितकरः + दशाव्यङ्गश्वेतवस्त्रधरो भवेत्। शान्तिककारकोऽपि तादृग्वेशधारी भूषणयुक्तः सभार्य्यपुत्रो भवेत्। गीतनृत्यवाद्यादिनारीमङ्गलगायनाचारञ्च प्रगुणीकुर्य्यात्। इत्यादि।

**End.** ॐ नमः चतुःषष्टिसुरासुरेभ्यः सम्यग्दृष्टिभ्यो जिनवचनजन्यदीक्षाज्ञाननिर्व्वाणनिर्म्मितमहिमेभ्यः। सर्व्वे चतुःषष्टिसुरासुरेन्द्रभवनव्यन्तरज्योतिष्कवैमानिक — — — — — — — — — — — तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्व्वसमीहितानि कुर्व्वन्तु स्वाहा। अनेन सर्व्वेन्द्राणां परिपिण्डितपूजा॥

इति शान्तिकपौष्टिकविधि। समाप्त।

**Colophon.** इत्याचार्य्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे उभयधर्म्मस्तम्भे शान्तिकपौष्टिकविधिः समाप्तः।

विषयः। शान्तिकपौष्टिककर्म्मप्रयोगकथनं। तत्र शान्तिनाथप्रतिमाकल्पनविधिकथनं। जिनप्रतिमायां सम्यक्तीर्थङ्करस्य कल्पनाविधिकथनं। पञ्चपुष्पधूपदीपादीनां निष्पापताकरणविधिकथनं। तेषामभिमन्त्रणविधिकथनं। तिलककरणविधिकथनं। दशसु दिक्षु गन्धजलादिनिक्षेपविधिकथनं। अर्हत्प्रतिमास्थापनविधिकथनं। जलेन प्रतिमाभिषेचनविधिः। एवं पुष्पाक्षतादिना पूजाविधिकथनं। ग्रहाणां पूजाविधिकथनं। लोकपालानां पूजाविधिः। अर्हन्मन्त्रकथनं। नैवेद्यदानविधिः। आरात्रिकविधिः। कुसुमाञ्जलिदानविधिः। कुङ्कुमदानविधिः। एवं मृगमदादिदानविधिकथनं। पुष्पादिदानसमये प्रत्येकं स्तवपाठविधिकथनं। स्तवकथनञ्च। जिनबिम्बपरिचर्य्यादिविधिकथनं। स्वर्णादिमयरत्नपीठन्यासविधिकथनं। अथ पञ्च-

परमेष्ठिपूजाविधिकथनं। दिक्पालपूजाकथनं। राशिपूजनविधिकथनं। षोड़शविद्यादेवीपूजनविधिकथनं। कालीगौरीगणेशकार्त्तिकेयादिपूजनविधिः। क्षेत्रपालपूजाविधिः। पञ्चामृतस्नानादिविधिः। जिनस्तुतिविधानं। कलसस्थापनादिविधिकथनं। अथ शान्तिदण्डकपाठविधिकथनं। अथ पौष्टिकविधिकथनं। तत्र पूर्व्ववत् सर्व्वकृत्यकरणावश्यकताकथनं। अथ पौष्टिकदण्डकपाठविधिकथनं। अर्हद्बलिविधिकथनं। चतुःषष्टिशक्रस्थापनाविधिकथनञ्च।

---

**No. 2610.** पन्नावणासुत्तम्। Substance, country-made paper, 12 × 5 inches. Folia, 257. Lines, 13 on a page. Extent, 8,560 ślokas Character, Nágara. Date, Sm. 1866. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Paṇṇávaná Sutta.** Jain metaphysics, discussing the leading topics of the Hindu Darsanas from a Jain standpoint. Anonymous.

ॐ नमः श्रीवीतरागाय नमः।

**Beginning.** नमो अरिहन्ताणं नमो सिद्धाणं नमो आयरियाणं
नमो उवज्झायाणं नमो लोए सव्वसाहूणं।
ववगयजरमरणभरासिद्धे अभिवन्दि उणतिविहेणं
वन्दामि जिणवरिं इतेलुक्कगुरुं महावीरं।
सुयरयणनिहाणं जिणवरेणभवियजणनिव्वुइ
करेणं उवदंसियाभयवयापन्नवणासव्वभावाणं॥

**End.** निव्विण्ण सव्वदुक्खाजातिजरामरणवं धणविमुक्कासासयमव्वावाहं चिट्ठंतिसुही सुहंपत्ता।

**Colophon.** इति श्रीपन्नावणासुत्तं सम्पूर्णम्। संवत् १८६६।

विषयः। अत्र प्राधान्येन जीवाजीवस्वरूपनिरूपणं। तत्र प्रसङ्गात् श्रुतजिनाः, अवधिजिनाः, मनःपर्य्यायजिनाः केवलिजिनाश्चेति चतुर्व्विधजिनलक्षणादिकथनं। अथ प्रज्ञापनाविषयनिरूपणं। तत्र प्रकर्षेण निःशेषकुतीर्थितीर्थकरासाध्येन यथावस्थितस्वरूपनिरूपणलक्षणेन ज्ञाप्यन्ते शिष्यबुद्धावारोप्यन्ते जीवाजीवादयः पदार्था अनयेति प्रज्ञापना। अथ सा द्विविधा प्रज्ञप्ता प्ररूपिता चेति। अथ जीवन्ति प्राणान् धारयन्तीति जीवाः। तेऽपि प्राणा द्विविधा द्रव्यप्राणाः भावप्राणाश्चेति। तत्र प्रथमं इन्द्रियादीनि। द्वितीयन्तु ज्ञानादीनि। अजीवास्तु धर्म्माधर्म्माकाशपुद्गलास्तिकायादिरूपाः। तत्र तेषां स्वरूपनिरूपणं। स्कन्धादिस्वरूपकथनं। परमाणुप्रदेशसन्निवेशादिनिरूपणं। तेषां परिणामविशेषेण रूपरसादिपरिणामविशेषकथनं। अथ जीवास्तु संसारसमापन्ना असंसारसमापन्नाश्चेति द्विधा। अथ तीर्य्यते संसारसागरोऽनेनेति तीर्थं यथावस्थितसकलजीवाजीवादिपदार्थसार्थस्वरूपकं परमगुरुप्रणीतं

प्रवचनम्। तत्र निराधारं भवतीति संघेन वेदितव्यः। स्वयंबुद्धप्रत्येकबुद्धानां विशेषकथनं। तत्र प्रथमः बाह्यप्रत्ययमन्तरेणैव बुध्यते द्वितीयस्तु बाह्यं प्रत्ययमपेक्ष्य प्रत्येकं बाह्यं कारणमभिसमीक्ष्य बुद्ध इति। अथ बुद्धा आचार्य्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धा इत्यादिभेदनिरूपणं। स्त्रीणामपि निर्व्वाणप्राप्त्यधिकारनिरूपणं। अथ एकेन्द्रियादिजीवभेदकथनं। तत्र स्पर्शमात्रेन्द्रिया वनस्पत्यादय एकेन्द्रिया जीवाः। स्पर्शरसनेन्द्रिया द्वीन्द्रियाः शङ्खशुक्तिकादयः। स्पर्शनरसनाघ्राणेन्द्रियाः त्रीन्द्रिया यूकामत्कुणादयः। स्पर्शरसनाघ्राणनयनेन्द्रियाश्चतुरिन्द्रिया-दंशमशकादयः। स्पर्शरसनाघ्राणश्रोत्रलक्लक्षणेन्द्रियाः पञ्चेन्द्रिया मनुष्यादयः। एतेषां प्रत्येकमवान्तरभेदनिरूपणञ्च। अथ पृथिव्यादीनां संस्थानवर्षभेददेशनगरादिनिरूपणं। रुचिनिरूपणमुखेन दर्शन-ज्ञान-चरित्राणां लक्षणादिनिरूपणं। तत्र सरागवीतरागादिदर्शनभेदकथनं। भवनवासिनो व्यन्तराः ज्योतिष्का वैमानिकाश्चेति चतुर्व्विधदेवताभेदनिरूपणं। किंपुरुष-किंपुरुषोत्तम-किन्नरोत्तम-हृदयङ्गम-रूपशालि-अनिन्दित-मनोरम-रतिप्रिय-रतिश्रेष्ठरूपदशविधकिन्नरकथनं। अथ पुरुष-सत्पुरुष-महापुरुष-मरुत्-मेरुप्रभ पुरुषवृषभ-पुरुषोत्तम-अतिपुरुष-महादेव-यशस्वदिति दशविधकिंपुरुषकथनं। अथ भुजग-भोगशालि-महाकाय-अतिकायस्कन्धशालि-मनोरम-महावेग महाद्युति मेरुकान्त-भास्वदिति दशविधमहोरगकथनं। एवं गन्धर्व्व-यक्ष-राक्षसादिभेदकथनं। अथ पृथिवीकायिकानां जीवादीनां स्थानादिनिरूपणं। अथ चतुरशीतिविधनरकसंस्थानादिकथनं। गुण-पर्य्यायर्योर्विशेषकथनं। सिद्धानां लक्षणादिकथनं। मिथ्यादृष्टिसम्यग्दृष्टिप्रभृतिनिरूपणं। अथ पृथिव्यादिकायिकानां दिग्विभागादिकथनपूर्व्वकमल्पत्वबहुत्वादिकथनं। तत्र दिग्द्वार गतिद्वार इन्द्रियद्वार-कायद्वार-योगद्वार-वेदद्वार-कषायद्वार-लेश्याद्वारादिसप्तविंशतिद्वारनिरूपणं। तिर्य्यग्योनिचक्रनिरूपणं। मनुष्यगतिविषयकथनं। देवगतिकथनं। भवनपतिगतिनिर्णयः। ज्योतिष्कगतिनिर्णयः। वैमानिकगत्यादिकथनं। विनेयस्य गुरोश्च लक्षणादिकथनं। अथ सत्वानां जन्मतः प्रभृति आमरणात् नारकादिपर्य्यायरूपेण अवस्थितिचिन्तनं। अपि च सत्वानामौदयिक-क्षयोपशमिक-क्षायिकभावाश्रयपर्य्यायावधारणं। अथ जीवविपाकिज्ञानावरणीयादिकर्म्मक्षयोपशमभावाश्रयकथनं। अथ सत्वानामुत्क्रान्त्यादिचिन्तनं। अथ नारकादिभावेन उत्पन्नानां सत्वानां यथासम्भवं उच्छ्वासनिःश्वासकालपरिमाणकथनं। अथ तेषां वेदनीयमोहनीयापायाद्यात्मपरिणामविशेषकथनं। तत्र रत्नप्रभादिस्थानकथनञ्च। अथ सत्वानां भाषादिनिरूपणं। स्त्रीलिङ्गपुंलिङ्गनपुंसकलिङ्गभेदनिमित्तादिकथनं। अथ शरीरनिरूपणं। तस्य परिणामनिरूपणञ्च। तत्र बन्धनपरिणामादिस्वरूपकथनञ्च। अथ क्रमेण कषायपरिणामेन्द्रियपरिणामादिनिरूपणं। जीवानां गतिनिरूपणं। अथात्मनो लेश्यापरिणामस्वरूपादिकथनं। अथ कायस्थितिपरिणामस्वरूपादिकथनं। तत्र सांव्यवहारिकासांव्यवहारिकभेदेन जीवस्य द्वैविध्यनिरूपणं। कायस्थितिविशेषे सम्यग्दृष्ट्यादिभेदेन जीवभेदनिरूपणं। नरकादिषु उत्पन्नानां शरीरसंस्थानादिकथनं। तेषां प्राणातिपातादि-

रूपक्रियाविशेषनिरूपणं कर्म्मबन्धस्वरूपादिचिन्तनं। वेदकस्वरूपादिकथनं। आहारनिरूपणं। तत्परिणामकथनञ्च। ज्ञानपरिणामस्वरूपकथनं। संज्ञापरिणामस्वरूपकथनं। चारित्रपरिणाम-स्वरूपचिन्तनं। अवधिस्वरूपादिनिरूपणं। आहार्य्यमाणपुद्गलविषये ज्ञानदर्शनसम्बन्धनिरूपणं। अथ रूपरसशब्दादिपरिचारणास्वरूपचिन्तनं। वेदनास्वरूपादिनिरूपणं। समुद्घातस्वरूपादि-निरूपणं। अथ सिद्धायतनलक्षणादिकथनञ्च।

---

**No. 2611. वीसस्थनकतपकाविधि, (विंशतिस्थानकतपस्याविधिः।)** Substance, country-made paper, 12 × 5 inches. Folia, 80. Lines, 8 on a page. Extent, 1,974 ślokas. Character, Nágara. Date, Sm. 1850. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Visasthanaka-tapaká-vidhi.** Rules for twenty special Jain acts of penance, in Hindi. Anonymous.

**Beginning.** श्रीमदर्हन्तमानम्य गुरुञ्च ज्ञानसागरं।

विंशतेः स्थानकस्याहं लिखामि विधिविस्तरं॥

अथ वीसस्थनकतपकाविधि। तिहां प्रथमशुभनिर्द्देशमुहूर्त्तादिवसे नन्दीस्थापनपूर्व्वक सुविहितगुरुके समीपविंशतिस्थानकतपविधिपूर्व्वक उच्चरे एक उल्लीदोमासे यावत् छमासे पुरीकरे कदाचित् छमासे मध्ये पुरीकरणसकेतो। इत्यादि

**End.** आह्वानं नैव जानामि नैव जानामि पूजनं।

विसर्ज्जनं न जानामि लङ्गतिं परमेश्वरि॥

आ-हीनं क्रियाहीनं मन्त्रहीनञ्च यत्कृतं।

तत्सर्व्वं चम्यतां देवि प्रसीद परमेश्वरि॥

**Colophon.** इति।

शान्तिकं पौष्टिकञ्चैव वश्यमाकर्षणं तथा।

उच्चाटनं स्तम्भनञ्च सर्व्वकार्य्याणि साधयेत्।

इमं मन्त्रं प्रथमाराधनकाले स्मर्त्तव्यं। संवत् १८५०।

विषयः। अत्र उपवास-आराधना-भक्ति-द्रव्यक्षेत्रकाल-उपसनादिस्वरूपादिनिरूपणं। साधुसंयमादिविधिकथनञ्च। देववन्दनविधिकथनं। सिद्धचक्रस्तवनादिकथनं। चैत्यवन्दनादि-विधिकथनं।

---

**No. 2612.** श्रीपालरास । Substance, country-made paper, 12 × 5 inches. Folia, 12. Lines, 11 on a page. Extent, 376 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**S'rípála-rása.** A discussion between S'rípâla, king of Ujjayiní, and certain S'rávakas, on Jain religion and the importance of initiation and other rites of that religion. A poem in Mágadhi. Anonymous.

**Beginning** आदिपुरुष आदिसरूप आदिराय आदेय ।
परमातम परमेसरू नमो नमो नाभेय ॥ १ ॥
अरिहन्त सिद्धपुरीसरूप उवज्झायामुनिपत्ति ।
दंसण नाण चारित्ततय एनवपद्धरचित्त ॥ २ ॥
मयणासुंदर श्रीपालनो भणसुरासुरसाल ।
सां भलतां सुख उपजै टलै दुरत जंजाल ॥ ३ ॥ इत्यादि ।

**End.** पाठकपद्मगणिशिष्य वातकदर्शनलाभसमुद्र ।
तामसीसमुनितत्त्वकुमार तिणएगावो चरित उदार ॥

**Colophon.** इति श्रीश्रीपालरास सम्पूर्ण ।

विषयः । उज्जयिन्यधिपतेः श्रीपालस्य गौतमाभिधानेन श्रावकेण सह संवादाज्जैन-धर्म्मग्रहणविवरणादिकथनं ।

---

**No. 2613.** गौतमकुलकवृत्तिः, मूलसहिता । Substance, country-made paper, 12 × 5½ inches. Folia, 64. Lines, 8 on a page. Extent, 1,512 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Sitábchánd Náhára, Bahádur. Appearance, new. Text, verse; commentary, prose. Incorrect.

**Gautama-kulaka-vṛitti.** A commentary on a treatise in verse on Jain morality and discipline; each maxim is explained in a verse which puts in marked contrast what is recommended and what is condemned. The text is called Gautama-kulaka, and attributed to the sage Gautama. The commentary is by Jnánatilaka Gaṇi.

टीकायाः ।

**Beginning.** नत्वा श्रीदेवगुरून् सत्त्वासत्त्वावबोधनं वक्ष्ये ।
प्राचीनगौतमऋषिप्रणीतकुलकस्य वृत्तिमिमाम् ॥

इह हि चातुर्गतिकसंसारहेतुकषायचतुष्टयान्तर्लोभस्यातिदुर्ज्जयत्वेन चिरावस्थायित्वेन सर्व्वपापमूलत्वेनादौ तदुपादानपुरःसरमस्यादिसूत्रमुच्यते,—तथा हि,—

मूलस्य,—

लुद्धा नरा अत्थपरा हवंति

मूढा नरा कामपरा हवंति ।

बुद्धा नरा खंतिपरा हवंति

मिस्सा नरा तिन्निवि आयरंति ॥ इत्यादि ।

**End.** मूलस्य,—

असासयं जीवियमाहु लोए

धम्मं चरे साहुजणोव इट्ठं ॥

टीकायाः,—

धर्म्मं निषेव्य सुखं लभन्ते ।

श्रीखरतरगणनायकजिनहंसयतीश्वरा भुवि बभूवुः ।

श्रीपुण्यसागरमहोपाध्यायास्तद्विनेयवराः ।

विजयन्ते तच्छिष्या वाचकवरपद्मराजमणिगणयः ॥

तेषामन्तेवासी विनिर्म्ममे ज्ञानतिलकगणिः ॥

गौतमकुलकसुवृत्तिं विलोक्य शास्त्राणि वाक्यतायां ।

वर्षे व्योमभवानीसुतास्यलेश्याशशाङ्कमिते ॥

दीपोत्सवपर्व्वदिने विजयिनि जिनचन्द्रयुगवरे जगति ।

यदशुद्धं तच्छोध्यं प्रसद्य सद्योऽत्र धीमद्भिः ॥

**Colophon.** इति श्रीगौतमकूलकवृत्तिः सम्पूर्णा ॥

विषयः । केवलं नीतिकथनं । तत्र लोभाभिभूता एव दुर्गतिं गच्छन्ति अतएव तन्निवृत्तौ यतनीयं । मुर्खा एव केवलं विषयसुखाभिलाषिणः कामपराश्च भवन्ति । विदितक्रोधजनितफला एव क्षमन्ते । विरोधः सर्व्वथा न कार्य्यः । क्रोधाभिभूताः कदापि न सुखं लभन्ते । अजरामरहेतुत्वेन सर्व्वरोगविनाशकत्वेन च सुधेव अहिंसा सदा सेवनीया । अप्रमत्तानामेव सर्व्वथा हितावाप्तिः । सत्यमेव शरणमतः तद्भाषणे सुतरां यतनीयं । सन्तोष एव सकलसुखनिदानं । विद्या प्रकृत्या अचण्डमेव पुरुषं भजते । कुशीलस्य अकीर्त्तिर्भवति । दरिद्रता सच्छिन्नचित्तमेव (भ्रष्टाचारमेव) नरं श्रयति । सर्व्वथा स्वाचारपालने यतनीयं । लक्ष्मीः सत्ये प्रतिष्ठितमेव पुरुषमवलम्बते । मित्राण्यपि कृतघ्नं बन्धुं त्यजन्ति । पापभीरुभिः चित्तसंयमे यतनीयं । सम्यग्विचारहीनमेव बुधयः परित्यजन्ति । अन्यासक्तचित्ते श्रोतरि किमपि न कथनीयं । चारित्ररक्षणमेव मोक्षनिदानम् । अनीतिभाज एव नृपतयः प्रजासु दण्डपरा भवन्ति । मन्त्रपरता विद्वत्स्वेव

घमते। साधुभिः सत्यार्थचिन्तनपरैर्भवितव्यं। उग्रतपस्विनः चमैव शोभावहा। उपशमवत एव समाधानं सिध्यति। विनय एव शिष्याणां शोभामावहति। ब्रह्मचारिणा निष्परिग्रहेण भाव्यं। नृपमन्त्रिणा बुद्धिमता भवितव्यं। लज्जैव साध्वीनामलङ्करणं। चपलचित्तस्य आत्मैव परमः शत्रुः। सर्व्वथा जितेन्द्रियत्वमादरणीयं। दयादिलक्षण एव धर्म्मः सेवनीयः। प्राणिहिंसनमकार्य्यं। राग एव संसारबन्धननिमित्तं। सम्यक्त्वलाभे सद्भिः सर्व्वथा यतितव्यं। कदापि परस्त्रीः न सेवितव्या। विद्वद्भिः जातुचिदपि मूर्खाः न सेवनीयाः। विद्वांसमपि पिशुनं परित्यज्य धार्म्मिका एव सेवितव्याः। सुधीभिः तत्त्वज्ञानार्थं पण्डिता एव प्रष्टव्याः। सर्व्वथा साधव एव पुरुषाः प्रशंसनीयाः। सत्पुत्रस्य सच्छिष्यस्य च साम्यमेव चिन्तनीयं। मूर्खाणां सदैव पशुतुल्यत्वं युक्तमेव। सतैः सह दरिद्राणां सहशलेन सर्व्वथा अर्थोपार्ज्जने गृहिणा यतितव्यं। मद्यपानरतस्य अर्थनाशो यशोहानिः दुर्गतिश्च भवति। वेश्यासक्तस्य कुलनाशो जायते। मृगयाद्यासक्तस्य नृपस्य राज्यच्युतिः भवति। कदापि चौर्य्यं न विधेयं। परस्त्रीप्रसक्तिः सर्व्वथा परिहरणीया। निर्द्धनाय दानं कर्त्तव्यं। शक्तस्य चमा श्रेयस्करी। धर्म्म एव सकलसुखनिदानमिति।

टीकाकारस्तु प्रत्येकमुपाख्यानप्रदर्शनेन सर्व्वासां नीतीनां व्याख्यानमकरोत्।

---

**No. 2614.** ध्वजदण्डारोपणविधिः। Substance, country-made paper, 12 × 6 inches. Folia, 20. Lines, 8 on a page. Extent, 420 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Correct.

**Dhvajadaṇḍáropaṇa-vidhi.** The rituals for the consecration of flags, staffs, jars, &c., on or in Jain temples. Anonymous.

**Beginning.** अथ ध्वजदण्डारोपणविधिः।

तथाहि तिर्हां प्रथमभूमिशुद्धमङ्गोदकवांटणु पुष्पादिकं पगरपविचस्थानकनें जलआणंव अगारिपलाविसंघतेड्वो। इत्यादि।

**End.** इत्यादि सौभाग्यमन्त्रन्यासपूर्व्वसरिशिवादिग्रन्थिमिढ़ल उतारवां पछै नन्द्यावर्त्तविसर्ज्जवो। ॐ विसर विसर स्वस्थाने गच्छ गच्छ स्वाहा।

**Colophon.** इति नन्द्यावर्त्तविसर्ज्जनमन्त्रः। इति ध्वजदण्डारोपणविधिः सम्पूर्णः।

विषयः। अर्हत्प्रतिमादिप्रतिष्ठाङ्गध्वजकलसादिस्थापनादिविधिकथनं।

---

**No. 2615.** पञ्चकल्याणम्। Substance, country-made paper, 12 × 6 inches. Folia, 18. Lines, 6 on a page. Extent, 216 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Panchakalyáṇa.** A collection of five highly esteemed hymns in praise of Jina. Anonymous.

**Beginning.** श्रमरनिकरनितजेहना भगतिरासं भरपुर।
पदपङ्कजपूजाकरीकरेङ्करम चकचूर ॥
उङ्कोसयसत्तरिसया जिनवरजगसिणगार ।
प्रणमीगास्युं तेहना पञ्चकल्याणकसार ॥ इत्यादि ।

**End.** कपूर खेमाजिन इतमनां मेदिनदिन सुजससवाया ।
श्रीगुरुपद्मविजयपदपङ्कजनमतां दुरितगमाया ॥
नन्दद्दिशागजगजचन्दवरसंमघुसुदिपूणिमेध्याया ।
श्रीसिद्धाचलतीर + + + रमीरूपविजायं गुणगाया ॥

**Colophon.** श्रीपञ्चकल्याणं सम्पूर्णं ।

विषयः । केवलज्ञानादिप्रार्थनाव्याजेन जिनस्य पञ्चविधस्तोत्रकीर्त्तनम्।

---

**No. 2616.** आगमसारोद्धारः। Substance, country-made paper, 12 × 5½ inches. Folia, 125. Lines, 11 on a page. Extent, 1,800 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**A'gama-sárodhára.** A digest in Mágadhi of the Jain A'gamas, giving expositions of various metaphysical and religious topics. By Parmánanda.

**Beginning.** हिवै भव्यजीवनै प्रतिबोधवानिमित्ते मोक्षमारगनीवचनिकालिखियै छै। ते कहे तिहां प्रथमजीव श्रनादिकालनें मिथ्यात्वीथो सोकालत्वधिपां मीने चौगक- रणकरै छै ॥ इत्यादि ।

**End.** परमागमस्युं राचयोलहिसौ परमानन्द ।
धर्म्मरागगुरुधर्म्मसुंदरजीए सुखहन्द ॥
ग्रन्थकीयोमनरङ्गसुसितपद्मफागुणमास ।
सोमवार श्रवतीजतिथिसफलफलीमन श्रास ॥

**Colophon.** इति श्रीश्रागमसारोद्धारग्रन्थ सम्पूर्ण।

विषयः। प्रवृत्तिकरणस्वरूपकथनं। अपूर्व्वकरणनिरूपणं। अनिवृत्तिकरणस्वरूपकथनं। ज्ञानावरणीकर्म्मनिरूपणं। दर्शनावरणीकर्म्मकथनं। वेदनीकर्म्मनिरूपणं। अन्तरायकर्म्मनिरूपणं। एवं गोत्रादिकर्म्मनिरूपणं। अथ व्यवहारज्ञाननिरूपणं। निश्चयज्ञाननिरूपणञ्च।

अनुयोगनिरूपणं। तत्प्रपञ्चकथनञ्च। अथ धर्म्मास्तिकायनिरूपणं। आकाशास्तिकायनिरूपणं। पुद्गलास्तिकायनिरूपणं। जीवास्तिकायनिरूपणं। एतेषामस्तिकायानां गुणादिकथनञ्च। अथ द्रव्यार्थिकनिरूपणं। पर्य्यायार्थिकनिरूपणं। नैगमस्वरूपादिकथनं। व्यवहारनयादिस्वरूपकथनं। विरतिपरिणामकथनं। अविरतिपरिणामकथनं। वर्गणाभेदनिरूपणं। साधुसाध्वीश्रावकश्राविकादीनां लक्षणादिकथनं। अहिंसानिरूपणं। प्रमाणनिरूपणं। अवक्तव्यादिनिरूपणं। चारित्रादिनिरूपणं। व्रतनिरूपणं। ध्यानप्रपञ्चनिरूपणं। भावनाप्रपञ्चनिरूपणं। कालीय-उत्कालीय-सेउत्कालीय-अणेगविहपन्नत्त-दशवैयालीयजीवाभिगम-पन्नवणा-महापन्नादि जैनागमानां संज्ञादिकथनं। अथ वृत्तिप्रपञ्चनिरूपणं। एकान्तमार्गकथनं। भोगमिथ्यात्वादिकथनं। विविधव्रतकथनं। देवतत्त्वकथनं। पापस्थाननिरूपणं। महाव्रतनिरूपणं। चतुर्द्दशगुणस्थानकविवेचनम्।

---

**No. 2617.** सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तिः। Substance, country-made paper, 13 × 4 inches. Folia, 659. Lines, 13 on a page. Extent, 22,488 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct.

**Siddha-hemachandrábhidhána.** A grammatico-explanatory lexicon of the Sanskrit language in which the application of the rules of grammar is illustrated by the explanation of a large number of words. The work is in eight parts, of which the codex contains the first seven parts relating to the Sanskrit language. The eighth refers to the Prákṛit language, and a codex of it has already been noticed under No. 2449 (vii, p. 208).

**Beginning.** ॐ नमो वीतरागाय।

प्रणम्य परमात्मानं श्रेयःशब्दानुशासनं।
आचार्य्यहेमचन्द्रेण स्मृत्वा किञ्चित् प्रकाश्यते॥

अर्हं॥१॥ अर्हमित्येतदक्षरं परमेश्वरस्य परमेष्ठिनो वाचकं सिद्धचक्रस्य आदिबीजं सकलागमोपनिषद्भूतमशेषविघ्नविघातनिघ्नमखिलदृष्टादृष्टफलसंकल्पकल्पद्रुमोपममाशास्त्राध्ययनाध्यापनावधि प्रणिधेयम्। प्रणिधानञ्च। अनेनात्मनः सर्व्वतः सम्भेदस्तदभिधेयेन वा भेदः। वयमपि चैतच्छास्त्रारम्भे प्रणिदध्महे। अयमेव हि तात्त्विको नमस्कार इति। सिद्धिः स्याद्वादः। स्यादित्यव्ययमनेकान्तद्योतकं। ततः स्याद्वादोऽनेकान्तवादः। नित्यानित्याद्यनेकधर्म्मशबलैकवस्त्वभ्युपगम इति यावत्। इत्यादि।

**End.** उत्सर्गोपवादः। अपवादात् क्वचिदुत्सर्गोऽपि न निष्ठार्था शास्त्रप्रवृत्तिरिति॥

**Colophon.** इत्याचार्य्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ सप्तमाध्यायस्य चतुर्थः पादः। शुभमस्तु।

विषयः। प्रक्रियानुसारेण व्याकरणसूत्राणि विरचय्य स्वयमेव तद्वृत्तिनिर्म्माणोदाहरणप्रदर्शनादिना विशदीकरणम्।

---

**No. 2618.** सिद्धचक्रविधिः। Substance, country-made paper, 12 × 5 inches. Folia, 9. Lines, 14 on a page. Extent, 236 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect.

**Siddhachakra-vidhi.** Rules for the formation and consecration of a mystic diagram called Siddhachakra. The diagram is used in the worship of different forms of S'akti, and forms a part of the secret worship of the Tántrics.

**Beginning.** श्रीसिद्धचक्राय नमः।

यत् किञ्चित् परमं तत्त्वं प्रसिद्धं जिनशासनम्।
तदत्र सिद्धचक्रेऽस्ति तदुद्धारमतः स्तुवे॥
आद्यन्तवर्णजं शुद्धमूर्द्धाधो+युतं पदं।
नादविन्दुकलोपेतमेतद्ध्येयमिहादितः॥ इत्यादि।

**End.** श्रेयःश्रीसुविलासवासभवनश्रीसिद्धचक्रस्थिता-
र्हत्सिद्धादिपदप्रभावविभवप्राग्भारविस्तारकाः।
देवाः श्रीविमलेश्वरप्रभृतयो देव्यो जयाद्या ग्रहा
दिक्पालाश्च भवन्तु + + इशः श्रीसंघरत्नाकराः॥

**Colophon.** इति श्रीसिद्धचक्रविधिः सम्पूर्णः।

विषयः। तत्र सिद्धचक्रयन्त्रोद्धारविधिकथनं। सिद्धचक्रतपोविधानोद्यापनविधिकथनं। तच्चक्राराधनफलादिकथनं। मन्त्रसंस्थापनादिविधिकथनं। सन्निधानविधिकथनं। सन्निरोधनविधिकथनं। पूजनविधिकथनं। मूलनवपदपूजाविधिकथनं। अनाहतादिपदपूजाविधिकथनं। पञ्चामृतस्नानविधिः। उपचारदानादिविधिः। नमस्कारादिविधिः। स्तवनविधिकथनञ्च।

---

**No. 2619.** परीक्षामुखलघुवृत्तिः, वा परीक्षामुखपञ्जिका। Substance, country-made paper, 14 × 4 inches. Folia, 60. Lines, 14 on a page. Extent, 1,962 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct.

**Paríkshámukha-laghu-vṛitti** ALIAS **Paríkshá-mukha-panjiká**. A commentary on the work noticed under No. 2419. Vol, VII. p. 176. It is a treatise on the logic of the Jains. By Anantavirya.

**Beginning.** नतामरशिरोरत्नप्रभाप्रोतनखत्विषे ।
नमो जिनाय दुर्व्वारमारवीरमदच्छिदे ॥
अकलङ्कवचोऽम्भोधेरुद्दध्रे येन धीमता ।
न्यायविद्यामृतं तस्मै नमो माणिक्यनन्दिने ॥
प्रभेन्दुवचनोदारचन्द्रिकाप्रसरे सति ।
मादृशाः क्व नु गण्यन्ते ज्योतिरिङ्गणसन्निभाः ॥
तथापि तद्वचोऽपूर्व्वरचनारुचिरं सतां ।
चेतोहरं भृतं यद्वन्नद्या नवघटे जलं ॥
वैजेयप्रियपुत्रस्य हीरपस्योपरोधतः ।
शान्तिषेणार्थमारब्धा परीक्षामुखपञ्जिका ॥

श्रीमन्न्यायपारावारस्यामेयप्रमेयरत्नसारस्यावगाहनमव्युत्पन्नैः कर्त्तुं न पार्य्यते इति तद-वगाहनाय + त प्रायमिदं प्रकरणमाचार्य्यः प्राह । तत्प्रकरणस्य च सम्बन्धादित्रयापरिज्ञाने प्रेक्षा वतां प्रवृत्तिर्न स्यादिति तत्त्रयानुवादपुरःसरं वस्तुनिर्द्देशपरं प्रतिज्ञाश्लोकमाह। प्रमाणादर्थसंसि-द्धिस्तदाभासाद्विपर्य्ययः । इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः ॥ अहं वक्ष्ये किं तल्लक्ष्म लक्षणं किम्भूतं लक्ष्म—इत्यादि ।

**End.** श्रीमद्वैजेयनामाभूदग्रणीर्गुणशालिनां ।
वदरीपालवंशालीव्योमद्युमणिरूर्ज्जितः ॥
तदीयपत्नी भुवि विश्रुता + + नाणम्बनामा गुणशीलधामा ।
यां रेवतीति प्रथिताम्बिकेति प्रभावतीति प्रवदन्ति सन्तः ॥
तस्यामभूद्विश्वजनीनवृत्तिर्दानाम्बुवाहो भुवि हीरपाख्यः ।
स्वगोत्रविस्तारनभोऽशुमाली सम्यक्त्वरत्नाभरणार्चिताङ्गः ॥
तस्योपरोधवशतो विशदोरुकीर्त्तेर्माणिक्यनन्दिकृतशास्त्रमगाधबोधं ।
स्पष्टीकृतं कतिपयैर्वचनैरुदारैर्बालप्रबोधकरमेतदनन्तवीर्य्यैः ॥

**Colophon.** इति श्रीपरीक्षामुखलघुवृत्तिः समाप्ता ।

विषयः । माणिक्यनन्दिकृतपरीक्षामुखाभिधानजैनन्यायसूत्रस्य व्याख्यानम्। (परीक्षा-मुखसूत्रमिदं पूर्व्वत्र विवृतमिति ज्ञेयम्)।

---

**No. 2620.** दशाश्रुतस्कन्धसूत्रम् । Substance, country-made paper, 12 × 5 inches. Folia, 102. Lines, 6 on a page. Extent, 1,363 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Incorrect. Mágadhí.

**Daśáśruta-skandha-sútra.** One of the original texts of the Jain scriptures. It treats first of the lives of the 24 Jinas, giving prominence to Vardhamána; next of the genealogy of Sthaviras; and lastly of the Paryushaná or quadrimensial autumnal fast. By Bhadrabáhu.

**Beginning** नमो अरिहंताणं ; नमो सिद्धाणं । नमो आयरियाणं । नमो उवज्झाायाणं । नमो लोए सव्वसाहूणं ।

एसोपंचणमुक्कारो सव्वपावप्पणासणो ।
मंगलाणं चसव्वेसि पढमं हवइमंगलं ॥
तेणं कालेणं तेणं समएणं समणे भगवं महावीरे पंचहत्थुत्तरे होत्था ।

इत्यादि ।

**End.** सकारणं सगुत्तं सअट्ठं सउभयं सवागरणं भुओ भुओ उवदंसेइत्ति बेमि।

इति ।

**Colophon.** इति दशाश्रुतस्कन्धसूत्रं सम्पूर्णं ।

विषयः । अर्हतां चरित्रकथनं । तत्र सर्व्वतः प्राधान्यात् प्रथमं वर्द्धमानजिनस्य चरित्रकथनं । एवं संक्षेपेण अन्यान्यजिनानां चरित्रकीर्त्तनं । स्थविरावलिकथनं । पर्य्युषणाविधिकथनञ्च । पर्य्युषणाय आषाढ़ादिचतुर्मासान् यावत् यतीनां गृहस्थस्य गृहे अवस्थानं । तत्र स्थितस्य नियमादिकथनं । आहारादिविधिकथनञ्च ।

---

**No. 2621.** कर्म्मविवागबालावबोधः । Substance, country-made paper, 14 × 4½ inches. Folia, 39. Lines, 17 on a page. Extent, 2,372 ślokas, Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráy Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect Mágadhí and Gujaratí.

**Karmavivága-báláva-bodha.** A commentary on the Jain Karmavipáka, a work on the consequences in a future life of works done in this life. By Matichandra, disciple of Gunachandra.

**Beginning.** श्रेयोमार्गस्य वक्तारं भेत्तारं कर्म्म + + र्णां ।

भेत्तारं विश्वतत्त्वानां वन्दे वीरं जगत्प्रभुं ॥
गणचन्द्रं गुरुं नत्वा मतिचन्द्रेण धीमता ।

क्रियते कर्म्मग्रन्थस्य व्याख्या बालावबोधिनी ॥

सिरिवीरजिणं वंदिय कम्मविवागं समा+ ज ।

वुत्थं कीरइ जिएण हेउहिं जेणतं उभिन्नएकम्मं ॥

अथ । सकलत्रिभुवनजनजनने चमत्कार उपजाओ । इत्यादि ।

End. एकम्मविवागनामे शास्त्रलिख्यं देवेन्द्रसूरिइं श्रीजगचन्द्रसूरिणे शिष्ये ।

गुणचन्द्रगणिशिष्येण मतिचन्द्रेण धीमता ।

व्याख्या कर्म्मविपाकस्यालेखि बालावबोधिनी ॥

Colophon. इति कम्मविवागबालाबोधः सम्पूर्णः ।

विषयः । जैनकर्म्मविपाकग्रन्थस्य गुर्ज्जरभाषया व्याख्यानम् ।

---

**No. 2622.** ज्ञातानुयोगः, वा ज्ञाताधर्म्मकथावृत्तिः । Substance, country-made paper, 11 × 6 inches. Folia, 130. Lines, 12 on a page. Extent, 3,870 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect Sanskrit.

**Jnátánuyoga,** ALIAS **Jnátádharmakathá-vritti.** A commentary on the Jnátádharmakathá, one of the leading text books of the Jains. By Abhayadeva Súri.

**Begining.** नत्वा श्रीमन्महावीरं प्रायोऽन्य+वीचितुः ।

ज्ञाताधर्म्मकथाङ्गस्यानुयोगः कश्चिदुच्यते ॥

तत्र च फलमङ्गलादिचर्य्यस्यानोत्तरादवसेयः । केवलमत्र योगद्वारविशेषस्योपक्रमस्य प्रतिभेदरूपं प्रक्रान्तशास्त्रस्य वीरजिनवरेन्द्रापेक्षया—इत्यादि ।

**End.** परिणेतारो यस्याः सा निर्विन्नवरा अत एव वरवर्ज्जितेतिशेषं सूचयितं ।

समाप्तो द्वितीयश्रुतस्कन्धः ।

— — — — — — — —

यो जैनाभिमतं प्रमाणमनघं व्युत्पादयामासिवान्

प्रस्थानैर्निखिलैर्निरस्य निखिलं बौद्धादिसम्बन्धितं ।

नानावृत्तिकथाकथा + +मतिक्रान्तं + + तपो-

+ सम्बन्धविहारमप्रतिहतं शास्त्रानुसारात् तथा ॥

तस्याचार्य्यजिनेश्वरस्य मदवद्वादीन्द्रविस्पर्द्धिं न

स्तद्बन्धोरपि बुद्धिसागर इति ख्यातस्य सूरे + + + ।

छन्दोबन्धनिबद्धबन्धुरवचःशब्दादिसल्लक्षणः

श्रीसंविग्नविहारिणः श्रुतनिधेश्चारित्रचूडामणेः ॥
शिष्येणाभयदेवाख्यसूरिणा विवृतिः कृता ।
ज्ञाताधर्म्मकथाङ्गस्य श्रुतभक्त्या समासतः ॥

**Colophon.** समाप्ता चेयं ज्ञाताधर्म्मकथावृत्तिः ।

**विषयः ।** ज्ञाताधर्म्मकथाभिधानसूत्रग्रन्थस्य श्रुतस्कन्धाभिधानप्रकरणस्य व्याख्यानम् ।

---

**No. 2623.** प्रद्युम्नचरितम् । Substance, country-made paper. 13 × 5 inches. Folia, 112. Lines, 7 on a page. Extent, 2,282 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect Sanskrita.

**Pradyumna-charita.** A Jain version of the story of Pradyumna, son of Krishṇa by Rukminí. By Mahasena A'chárya. It is an epic poem, and professes to be a condensed version of a more elaborate work by Gaṇes'vara and others. The object of the work is to show that Krishṇa, Balaráma, and the rest of the Yádava race accepted the Jain religion from Neminátha, and were staunch Jains. The story of Pradyumna as given in the Bhágavata Purāṇa remains in its main outline untouched, but the episodes, scenes and persons are frequently changed to suit altered circumstances.

**Beginning.** श्रीमन्नमानम्य जिनेन्द्रनेमिं ध्यानाग्निदग्धाखिलघातिकक्षम् ।
व्यापारयामास न यत्र बाणान् जगद्विजेता मकरध्वजोऽपि ॥
बाल्येऽपि यस्याप्रतिमं सुरेन्द्रो विलोक्य रूपं पुनरीक्षते स्म ।
चक्षुः सहस्रं युगपद्विधाय नत्वा च तं वीरजिनं विरागम् ॥
जिनेन्द्रवक्त्राम्बुजराजहंसीं प्रणम्य शुक्लामथ भारतीञ्च ।
उपेन्द्रसूनोश्चरितं प्रवक्ष्ये यथागमं पावनमात्मशक्त्या ॥
कवीन्द्रसीमानमितैर्यदुक्तं गणेश्वराद्यैरतिविस्तरेण ।
तत्पादपद्मद्वयभक्तिशक्त्या संक्षिप्य तद्वस्तुमयं क्रमेण ॥ इत्यादि ।

**End.** राज्यं प्राज्यमुदस्य निर्म्ममतमं तप्त्वा तपो दुश्चरं
ध्यानाग्नौ सकला विकर्म्मसमिधो कृत्वा पयः केवलं ।
यावज्ज्ञेयविसर्पिविश्वकरणग्रामातिगं निश्चलं
देयाद्वः पदमव्ययं स भगवान् + + ऽनिरुद्धो विभुः ॥

**Colophon.** इति श्रीसिन्धुराज+ +महामहत्तमश्रीपर्प्पटगुरोः श्रीमहसेनाचार्य्यस्य कृतौ प्रद्युम्नचरिते चतुर्द्दशः सर्गः समाप्तः । ॐ अर्हते नमः । समाप्तोऽयं ग्रन्थः ।

विषयः। प्रथमे सर्गे,—उपेन्द्रस्य द्वारकापुरीवर्णनं। २यै सर्गे,—नारदागमनकथनं। बलभद्रकृष्णादिकृततदुपचारादिकथनं। अथ तत्र सहसा समागतस्य कृष्णसहोदरस्य नेमिजिनस्य अभ्यर्थनादिकथनं। नारदस्य सत्यभामागृहगमनादिविवरणकथनं। तत्र सत्यभामां प्रति जातरोषेण महर्षिणा कृष्णसमीपे रुक्मिण्याः रूपगुणादिकथनं। ३ये सर्गे,—कुण्डिनपुरगमनपूर्व्वकं कृष्णस्य रुक्मिणीहरणवृत्तान्तवर्णनं। कृष्णकृतशिशुपालवधवर्णनं। हरिणा सह रुक्मिण्या विवाहः। पुरसुन्दरीणां विभ्रमादिवर्णनं। सत्यभामाकृतरुक्मिणीपादपूजनादिवर्णनञ्च। ४र्थे,—सर्गे—प्रद्युम्नस्य जन्मोत्सवादिवर्णनं। धूमशिखाभिधानदानवकृततदपहरणकथनं। तथा सम्बरकृततत्पालनादिवृत्तान्तकीर्त्तनं। ५मे सर्गे,—पुत्रवियोगविधुरायाः रुक्मिण्याः परितापादिवर्णनं। अथ नारदकृततदन्वेषणादिवृत्तान्तवर्णनं। ६ष्ठे सर्गे,—प्रसङ्गादयोध्याधिपतेः अरिञ्जयाभिधानस्य राज्ञो विवरणकीर्त्तनं। जैनधर्म्मसुशासनादिकीर्त्तनं। ७मे सर्गे,—कोशलाधिपतेर्हेमनाभस्य मधुकैटभनामधेयौ द्वौ पुत्रौ बभूवतुरितितद्विवरणकथनं। वसन्तवर्णनं। सन्ध्यावर्णनं। ८मे सर्गे,—रत्या सह प्रद्युम्नस्य परिणयवर्णनं। अथ नारदेन सह प्रद्युम्नस्य द्वारकागमनादिवर्णनं। ९मे सर्गे,—विमानस्थयोर्नारदप्रद्युम्नयोर्द्वारकागमनकाले गिरिवनप्रभृतिवर्णनं। अथ सम्बरमायया भिक्षुकरूपेण प्रद्युम्नस्य रुक्मिणीसमीपगमनादिरहस्यवर्णनं। सिंहादिरूपधारिणा तेन सह बलदेवादीनां युद्धवर्णनं। १०मे सर्गे,—कृष्णसैन्यमारसैन्ययोर्युद्धवर्णनं। अथ नारदस्य श्रीकृष्णादिसमीपे प्रद्युम्नस्य परिचयादिदानवर्णनं। ११, १२, १३, १४सर्गे—बलबलानुजप्रभृतीनां नेमिनाथसमीपात् जैनधर्म्मानुष्ठानश्रवणादिकथनञ्च।

---

**No. 2624.** यशोधरचरितम्। Substance, country-made paper, 16 × 5, inches. Folia, 85 Lines, 7 on a page. Extent, 1,183 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Generally correct. Sanskrita.

**Yaśodhara-charita** Legend of one Yas'odhara, a king, who abjured his family custom of sacrificing animals in honour of S'akti and became a Jain. By Srutaságara, disciple of Vidyánandí. The object of the legend is to extol Jain morality.

**Beginning.** विद्यानन्दीश्वरं देवं नाभिराजसमुद्भवं।
स्तवेऽहं मरुदेव्यङ्गसम्भवं वृषभं जिनम्॥
अकलङ्कं जिनधीशमजितं विजयात्मजं।
जितशक्रमहाराजनन्दनं प्रणमाम्यहम्॥
समन्तभद्रं सर्व्वज्ञं स्वस्तिस्वावस्तिसम्भवं।
दृढराजसुषेणासम्भवं चिन्तयाम्यहं॥

शिवकोटिप्रदं वन्दे शरणमभिनन्दनं ।
स्वयंवरमहाराजसिद्धार्थस्वामिनीसुतं ॥
उमास्वामिनमर्हन्तं श्रयामि सुमतीश्वरं ॥
श्रीमेघरामराजेन्द्रमङ्गला+सुमङ्गलं ॥
भद्रबाहुं जगद्भद्रं भजे पद्मप्रभुं विभुं ।
कौशाम्बीधरणाधीशसुसीमासुतनूद्भवं ॥
— — — — — — — — ।
अथास्ति दक्षिणे मेरोर्जम्बूद्वीपस्य भारते ।
वर्षे देशस्तु यौधेयो विधेयो यत्र सद्वृषः ॥
दिव्यदृष्टिर्विधातुर्व्वा स्वर्गिविद्वेषकारिणः ।
स देशो वर्ण्यते केन न वर्ण्यः केन वा कृतः ॥ इत्यादि ।

**End.** तर्कव्याकरणार्हतप्रविलसत्सिद्धान्तसारामल-
छन्दोऽलङ्कृतिपूर्व्वनव्यकृतधीसंश्रव्यकाव्योदये ।
चञ्चच्चारुधिया प्रमोदितमतिर्भव्यः कृताभ्यर्थनः
साधुश्रीमतिसागरेण कृतवानेतच्चरित्रं शुभम् ॥

**Colophon.** इति श्रीभट्टारकश्रीविद्यानन्दिप्रियशिष्यब्रह्मश्रीश्रुतसागरविरचिते यशोधरचरिते चतुर्थः परिच्छेदः समाप्तः ।

विषयः । प्रथमे परिच्छेदे,—राजपुरवास्तव्यस्य महासेनाङ्गजस्य चण्डमार्य्यभिधानायाः कालिकायाः कल्याणार्थं देव्याः पुरतो विविधच्छागमहिषादिबलिदानविवरणकथनं । तत्र अभयमतेर्विवरणकथनं । यशोधरनृपतेर्जन्मवृत्तान्तकथनं । द्वितीये परिच्छेदे—कामासक्तस्य पुरुषस्य नरकदुःखवर्णनमुखेन प्राणिहिंसनस्य अशुभजनकत्वनिरूपणं । यशोधरस्य पूर्व्वजन्मवृत्तान्तकीर्त्तनञ्च । तृतीये परिच्छेदे—अभयरुचिनामकस्य कस्यचित् मारदत्ताभिधाननरपतिपुरत स्वजन्मवृत्तान्तकथनं । देहात्मवादनिरूपणपूर्व्वकं तन्निरासकथनञ्च । यशोधरनृपतेः दुश्चरित्राया वृत्तान्तकथनं । चतुर्थे परिच्छेदे,—अर्हत्कर्म्ममाहात्म्यकीर्त्तनं । विनयादिमाहात्म्यकीर्त्तनं । रूपयौवनधनधान्यादीनामनित्यत्वकथनं । जैनधर्म्ममाहात्म्यकथनं । अभयरुचेः, अभयमतेर्मारदत्तस्य, यशोमतेः, कल्याणमित्रस्य, कुसुमावल्याः श्रीसुदत्तस्य च स्वर्गगमनकथनञ्च ।

---

**No. 2625.** विहिप्पपासूत्तम्, (विधिप्रपासूत्रम् ।) Substance, country-made paper, 14 × 6 inches. Folia, 178. Lines, 8 on a page. Extent, 3,628 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Mágadhí.

**Vihippapá-sútta** (Sanskrit, **Vidhiprapásútra**). A collection of rituals for various Jain rites and ceremonials. Anonymous. In Mágadhí.

**Beginning.** णमिय महावीरजिनं सम्मं सरिउं गुरुव एसं च ।
सावयमुणिकिच्चाणं सामारिं लिहामि अहं ॥
सम्मत्तमुलत्तेणं गिहिधम्मंकप्पतरुणो ।
पढमं समत्तारोय णविभणइ + + + ॥
तत्थजिणभवणे समोसरणे वा सुहेसु तिहिमुहुत्ताइ एसु उवसमाइ गुणगणासय । इत्यादि ।

**End.** विहिसग्गा प्रपाणाम सामायारी इमा चिरं जयइ ।
पल्हायन्ती हिययं सिद्दिपुरीपवथियजणानं ॥

**Colophon.** इति श्रीविहिप्पपासुत्तं समाप्ता ।

विषयः । सम्यक्तारोपणविधिकथनं । परिग्रहपरिमाणकथनं । सामायकारोपणग्रहणपारणविधिकथनं । उपधानविधिकथनं । मालारोपणविधिकथनं । प्रतिकमणपञ्चकविधिकथनं । कल्याणकादितपोभेदकथनं । नन्दिरचनाविधिकथनं । अर्हदादिस्तोत्रकथनं । प्रव्रज्याविधिकथनं । स्थण्डिलप्रतिलेखनादिविवेचनं । उपयोगविधिकथनं । मण्डलीतपोविधिकथनं । उत्थापणाविधिकथनं । योगविधानकथनं । अनध्यायविधिकथनं । तत्र स्वाध्यायकालादिनिरूपणञ्च । कल्पाकल्पविधिकथनं । आचाराङ्गादियोगकथनं । उपाङ्गादियोगकथनं । प्रकीर्णकयोगकथनञ्च । वाचनाविधिकथनं । अर्थस्थापनाविधिकथनं । उपाध्यायाचार्य्यपदस्थापनाविधिकथनं । गणानुज्ञाविधिकथनं । व्रतादावनशनविधिकथनं । महापरिष्ठापनिकाविधिकथनं । साधुप्रायश्चित्तविधिकथनं । गृहिप्रायश्चित्तविधिकथनं । अर्हन्मूर्त्त्यादिप्रतिष्ठाविधिकथनं । नन्द्यावर्त्तस्थापनाविधिकथनं । जलानयनविधिकथनं । कलशारोपणविधिकथनं । ध्वजारोपणविधिकथनं । कूर्म्मचक्रप्रतिष्ठाविधिकथनं । स्थापनाचार्य्यादिप्रतिष्ठाविधिकथनं । मुद्राविधिकथनं । यात्राविधिकथनं । तिथिविधिकथनं । अङ्गविद्यासिद्धिविधानकथनञ्च ।

---

**No. 2626.** क्षेत्रसमासटीका, वा वृहत्क्षेत्रसमासवृत्तिः । Substance, country-made paper, 12 × 6 inches. Folia, 172. Lines, 15 on a page. Extent, 8,224 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Sinh, Bahádur. Appearance, new. Prose. Generally correct.

**Kshetrasamása-tíká,** ALIAS **Vṛihatkshetra-samása-vṛitti.** A commentary on Jinabhadra Súri's treatise on mensuration called Kshetrasamása. By Malaya Giri. A Jain work.

**Beginning.** जयति जिणवचनमवितथममितगभीरार्थमखिलनयकलितं ।
अजितं पर + + गगणैः शिवसुखफलदायि परमशिवम् ॥
कलिकालेऽपि यथास्थितजिनसिद्धान्तप्रकाशकरणेन ।
जयति भरतैकदीपो जिनभद्रगणिक्षमाश्रमणः ॥
विवृणोमि यथाशक्ति क्षेत्रसमासं समासतः स्पष्टं ।
यदवगतौ मन्दा अपि जायन्ते श्रुतविदः परमाः ॥

इह जिनभद्रगणिक्षमाश्रमणो मन्दमेधसामवबोधाय सकलजम्बुद्वीपप्रज्ञप्त्यादिशास्त्रसंक्षेपं समुद्दिधीर्षुकामोऽविघ्नेनेष्टप्रसिद्ध्यर्थमिष्टदेवतानमस्कारं प्रेक्षावतां प्रवृत्त्यर्थमभिधेयादिकञ्च प्रतिपादयिषुरिदमाह । नमिऊण । इत्यादि ।

**End.** शरणं जिननिर्दिष्टं धर्म्मंशरणमाश्रिताः ।
अर्हन्तो मङ्गलं सिद्धा मङ्गलं मम साधवः ॥
मङ्गलं मङ्गलं धर्म्मस्तन्मङ्गलमश्रियमिति ।

**Colophon.** इति श्रीमलयगिरिविरचिता क्षेत्रसमासटीका पारमुपागमत् ।
इति श्रीवृहत्क्षेत्रसमासवृत्तिः सम्पूर्णा ।

विषयः । जिनभद्रगणिकृतक्षेत्रसमासस्तूत्रस्य व्याख्यानम् ।

---

**No. 2627.** सूत्रकृताङ्गवार्त्तिकम् । Substance, country-made paper, 14 × 6 inches. Folia, 202. Lines, 14 on a page. Extent, 10,200 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct. Gujráṭí.

**Sútrakṛitáñga-vártika.** A commentary in Gujráṭí on the Jain text called Sútrakṛitáñga Sútra. By Páśachandra.

**Beginning.** प्रणम्य सद्गुरून् भक्त्या बालानां बोधहेतवे ।
किञ्चित् सूत्रकृताङ्गस्य लिख्यते वार्त्तिकं मया ॥

प्रथम श्रीआचाराङ्गकहीने । पछी सुयगडांग कह्युं । तेनो सम्बन्ध मेलवेछे, जे कारण श्रीआचाराङ्ग मांहे । जीवो छक्काय परूवणायतेसिं वह हेण बन्धोत्ति ॥ इत्यादि कह्युं छे । ते सर्व्व परमार्थने जाणवु जोइए । एम आचाराङ्गसाथे आ सुयगडाङ्गनो सम्बन्ध जाणवो । इत्यादि ।

**End.** एवीजा श्रीसूयगडाङ्गनावीजाश्रतस्कन्धनो संक्षेपार्थ बालावोध समाप्त थयो ।

समाप्तं सूयगडाङ्गं आदितः । सर्व्वाणि अध्ययनानि त्रयोविंशतिकानि सम्पूर्णानि ।

**Colophon.** श्रीसाधुरत्नशिष्येण पाशचन्द्रेण दृव्धितः ।

कृतं बालावबोधार्थं द्वितीयाङ्गस्य वार्त्तिकं ॥

विषयः । सूत्रकृताङ्गसूत्रस्य गुर्ज्जरभाषया व्याख्यानम् ।

---

**No. 2628.** सूत्रकृताङ्गटीका । Substance, country-made paper, 13 × 6 inches. Folia, 302. Lines, 12 on a page. Extent, 14,673 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct. Sanskrita.

**Sútrakṛitáñga-ṭíká.** Another commentary on the *Sútrakṛitáñga Sútra.* By S'ila A'chárya, with the co-operation of the Váhari Gaṇi.

**Beginning.** स्वपरसमयार्थसूचकमनन्तगमपर्य्ययार्थगुणकलितम् ।
सूत्रकृतमङ्गमतुलं विवृणोमि जिनान्नमस्कृत्य ॥
व्याख्यातमङ्गमिह यद्यपि सूरिमुख्यै-
र्भक्त्या तथापि विवरीतुमहं यतिष्ये ।
किं पक्षिराजगतमप्यवगम्य सम्यक्
तेनैव वाञ्छति पथा शलभो न गन्तुम् ॥
ये मय्यवज्ञां व्यधुरिद्धबोधा जानन्ति ते किञ्चन तानपास्य ।
मत्तोऽपि यो मन्दमतिस्तथार्थी तस्योपकाराय ममैष यत्नः ॥

इहापारसंसारान्तर्गतेनासुमताऽत्यन्तदुर्ल्लभं मनुजत्वं सुकुलोत्पत्तिसमग्रेन्द्रियसामग्र्याद्युपेतेनार्हद्दर्शनमशेषकर्म्मोच्छित्तये यतितव्यं । कर्म्मोच्छेदश्च सम्यग्विवेकसव्यपेक्षः । असावपि चाप्तोपदेशमन्तरेण न भवति । इत्यादि ।

**End.** उक्तञ्च ।
सव्वेसिं पिणयाणं वहुविहवत्तव्वयं णिसामेत्ता ।
तं सव्वणय विसुद्ध जं चरणगुणट्ठिउ साहू ॥

समाप्तमिदं नालन्दाख्यं सप्तममध्ययनं ।

समाप्ता चेयं सूत्रकृतद्वितीयाङ्गस्य टीका । कृता चेयं शीलाचार्य्येण वाहरिगणिसहायेन ।
यदवाप्तमत्र पुण्यं टीकाकरणे मया समाधिभृता ।
तेनापेततमस्को भव्यः कल्याणभाग् भवतात् ॥

विषयः । सूत्रकृताङ्गसूत्रस्य व्याख्यानम् ।

---

**No. 2629.** सूत्रकृताङ्गदीपिका। Substance, country-made paper, 13 × 6 inches. Folia, 282. Lines, 9 on a page. Extent, 10,748 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct. Sanskrita.

**Sútrakṛitáñga-dípiká.** Another commentary on the Sútrakṛitañga Sútra. Anonymous.

**Beginning.** प्रणम्य श्रीजिनं वीरं गौतमादिगुरूंस्तथा।
स्वाम्योपज्ञतये कुर्व्वे द्वितीयाङ्गस्य दीपिकाम्॥

इह हि प्रवचने चत्वारोऽनुयोगाः। तथाहि चरणकरणानुयोगः। द्रव्यानुयोगः। धर्म्मकथानुयोगः। गणितानुयोगश्च। तत्र प्रथमं श्रीमदाचाराङ्गं चरणकरणानुयोगप्राधान्येन व्याख्यातं। अथेदं श्रीसूत्रकृताख्यं द्वितीयाङ्गं द्रव्यानुयोगप्राधान्येन व्याख्यायते। सूत्रकृताङ्गमिति कः शब्दार्थः। उच्यते। सूत्रं स्वपरसमयसूचनं कृतं येन तत् सूत्रं तदेवाङ्गमिति। तत्र श्रुतस्कन्धद्वयं। प्रथमश्रुतस्कन्धे षोड़शाध्ययनानि। द्वितीये सप्त। तत्र प्रथमश्रुतस्कन्धस्य प्रथमाध्ययने चत्वार उद्देशकाः। इत्यादि।

**End.** तद्यथा। सोऽहं ब्रवीमि येन मया भगवदन्तिके श्रुतमिति। नालन्दीयाख्यमिदं सप्तममध्ययनं समाप्तं।

विषयः। सूत्रकृताङ्गसूत्रस्य व्याख्यानम्।

---

**No. 2630.** सारस्वतदीपिका। Substance, country-made paper, 12 × 6 inches. Folia, 120. Lines, 16—17 on a page. Extent, 6,159 ślokas. Character, Nágara. Date, Sm. 1727. Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Generally correct.

**Sárasvata-dípiká.** A commentary on the Sárasvata Grammar of Anubhúti Svarúpa A'chárya. By Chandrakírti Súri. Vide *ante* Nos. 141 and 2543.

**Beginning.** नमोऽस्तु सर्व्वकल्याणपद्मकाननभास्वते।
जगत्त्रितयनाथाय पराय परमात्मने॥
नमः श्रीगुरवे वासवुद्दये दत्तसिद्धये।
मतिप्रदानशीलायै सरस्वत्यै नमो नमः॥

अथ श्रीमत्परमहंसपरिव्राजकाचार्य्यः श्रीमदनुभूतिस्वरूपाचार्य्यः निःशेषविघ्नसंघातशान्त्यर्थं सत्स्वपि देवेष्वपरेषु ऐहिकामुष्मिकफललिप्सुत्वांस्च फलद्वयदानाक्षमानपास्य भगवन्नमस्कृ-

तिपूर्व्वकं सारस्वतीं प्रक्रियां चिकीर्षुः सरस्वतीदत्तवर आदावेव प्रस्तावनाश्लोकमाह प्रणम्ये-त्यादि। अथैतस्य साधनापूर्व्वकं व्याख्यालेशः प्रारभ्यते। णम् प्रह्वीभावे। आदेः ष्णः। णः। नम्। प्रपूर्व्वसमासे क्यप्प्रत्ययः। इत्यादि।

**End.** तैरियं पद्मचन्द्राह्वोपाध्यायाभ्यर्थना कृता।
शुभा सुबोधिकानाम्नी श्रीसारस्वतदीपिका॥
श्रीचन्द्रकीर्त्तिसूरीन्द्रपादाम्भोजमधुव्रतः।
हर्षकीर्त्तिरिमां टीकां प्रथमादर्शकेऽलिखत्॥
अज्ञानध्वान्तविध्वंसविधानदीपिकाविभा।
दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम्।
स्वल्पस्य सिद्धस्य सुबोधकस्य सारस्वतव्याकरणस्य टीकां।
सुबोधिकाख्यं + + + + + सूरीश्वरः श्रीप्रभुचन्द्रकीर्त्तिः॥
स्फुटं सप्तसहस्राणि शतमेकमनुष्टुभाम्।
सारस्वतस्य टीकाया ग्रन्थमानमिहोदितम्॥

**Colophon.** इति श्रीमन्नागपुरीयतपागच्छाधिराजभट्टारकश्रीचन्द्रकीर्त्तिसूरिविरचित-श्रीसारस्वतव्याकरणस्य दीपिका सम्पूर्णा। संवत् १७२७।

विषयः। अनुभूतिस्वरूपाचार्य्यकृतसारस्वतचन्द्रिकाभिधानव्याकरणस्य व्याख्यानम्।

---

**No. 2631.** सामाचारीशतकम्। Substance, country-made paper, 12 × 6 inches. Folia, 273. Lines, 8 on a page. Extent, 5,995 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sanskrit and Mágadhí.

**Sámáchárí-śataka.** An elaborate treatise on Jain rites and ceremonies. By Samayasundara Upádhyáya.

**Beginning.** श्रीवीरस्य गुरुं नत्वा स्मृत्वा गच्छपरम्पराम्।
प्रश्नोत्तरशतग्रन्थं वक्ष्ये शास्त्रानुसारतः॥
नानाप्रकाराः सन्देहा उत्पद्यन्तेऽल्पमेधसां।
तत्र प्रकरणे स्वीयगच्छाचारानुगामिनां॥
स्यात्सन्देहेन मिथ्यात्वं मिथ्यात्वेन भवभ्रमः॥
तस्मात् तस्य व्यपोहाय प्रक्रमः क्रियते मया॥
— — — — — — — —।

प्रश्नोत्तरमयं सामाचारीनामिदमद्भुतम् ।
शास्त्रं सुविहिताचारविचारप्रतिपादकं ॥
श्रीमद्खरतरे गच्छे श्रीजिनचन्द्रसूरयः ।
युगप्रधाना इत्याख्यां प्रापिताः पातिसाहिना ॥
— — — — — — — — ।
तेषां प्रसादमासाद्य शिष्यः समयसुन्दरः ।
प्रश्नोत्तरशते पञ्च प्रकाशान् तनुते क्रमात् ॥

तत्र प्रथमं तावत् श्रीबृहद्खरतरगच्छे क्रियमाणसामाचारीक्रियानुष्ठानानि शास्त्रसम्मत्या शिष्यप्रश्नोद्देशेन समर्थयन्नाह—इत्यादि ।

**End.** खरतरगच्छाधीशा जिनचन्द्रयुगप्रधानगुरुराजाः ।
श्रीपातिशाहमान्याः समभूवन् भुवि विख्याताः ॥
श्रीपूज्यमुख्यशिष्या दक्षाः श्रीसकलचन्द्रनामानः ।
मद्गुरवो गुणरवस्तेषामेष प्रसादो मे ॥
एवं द्वादशभिः सम्यक् पूर्णं प्रश्नोत्तरैः स्फुटम् ।
प्रकाशं पञ्चमं चक्रे गणिसमयसुन्दरः ॥

**Colophon.** इति श्रीसमयसुन्दरोपाध्यायविरचिते पञ्चप्रकाशे समाचारीशतके पञ्चमः प्रकाशः सम्पूर्णः ।

विषयः । सामायिकदण्डकोद्गरणानन्तरं ईर्य्याधिकारकथनं । चतुष्पर्व्वीपोषधाधिकारकथनं । महावीरस्य षट्कल्याणाधिकारकथनं । खरतराधिकारकथनं । प्रतिक्रमणाधिकारकथनं । साधूनां साध्वीभिः सह एकस्मिन् गच्छे अवस्थित्यादिनिषेधाधिकारकथनं । पर्य्युषिताधिकारकथनं । पाक्षिकप्रतिक्रमणाधिकारकथनं । वर्णान्तरप्राप्तपानीयप्रवृत्त्यधिकारकथनं । चलद्रव्यग्रहणाधिकारकथनं । अपक्वदुग्धग्रहणाधिकारकथनं । श्रावकाणां पानकादिग्रहणनिषेधाधिकारकथनं । तरुण्याः स्त्रिया मूलनायकदेवपूजानिषेधाधिकारकथनं । श्रावकाणां प्रतिमावाहननिषेधाधिकारकथनं । सामायिकदण्डकवाचनाधिकारकथनं । नवीनसामायिकग्रहणाधिकारकथनं । श्रावकाणां जातमृतसूतकपिण्डनिषेधाधिकारकथनं । श्रावणभाद्रयोर्दिनवृद्धौ पर्य्युषणाधिकारकथनं । कल्पसूत्रवाचने नववाचनानियमाभावकथनं । सूरेः प्रतिष्ठाधिकारकथनं । तिथिक्षये पूर्व्वा तिथिर्ग्राह्येतिकथनं । एवं तिथिवृद्धौ च कर्त्तव्येतिकथनं । सामायिकग्रहणे स्वाध्यायकरणकथनं । प्रातः सन्ध्यायाञ्च कम्बलवस्त्रादिप्रतिलेखने विशेषकथनं । कार्त्तिकमासवृद्धौ प्रथमकार्त्तिके चातुर्मासिकप्रतिक्रमणाधिकारकथनं । अथ जिनप्रतिमादिविधिकथनं । जिनप्रतिमास्थापनादिविधिकथनं । तत्पूजादिफलकथनं । देवानां विरत्यादिधर्मचिन्तनं । श्रावकाणां मुखवस्त्रिकाधिकारकथनं । साधूनां भक्तपानादियोग्यद्रव्य-

निरूपणं। अशनादिनिर्णयकथनं। लवण-तक्र-दधि-पक्वान्नादीनां ग्राह्याग्राह्यत्वकथनं। पञ्चम्यादीनां पर्व्वत्वनिरूपणं। अथ जिनवल्लभसूरिसामाचारकथनं। जिनदत्तसूरिसामाचारकथनं। जिनपतिसूरिसामाचारकथनं। गच्छाधिपतिसामान्याचार्य्योपाध्यायानां प्रतिपत्तिविधिकथनं। अनुयोगवाद्विसर्ज्जनविधिकथनं। पर्य्युषणापर्व्वणि भवनदेवताकायोत्सर्गविधिकथनं। श्रावकाणामतिचारचिन्तनपाठविधिकथनं। तत्र चुतादिकरणे तद्दोषनिवारणविधिकथनं। अस्वाध्यायविवेचनं। चैत्रपूर्णिमायां देववन्दनविधिः। श्रावकाणां देवतावसरस्थापनाविधिकथनं। दीक्षादानविधिः। सप्तोपधानक्रियाविधिः। विंशतिस्थानकतपोविधिः। प्राभातिकप्रतिक्रमणविधिः। श्रुतदेवतादिकायोत्सर्गस्थापनाविधिकथनं। पानीयरक्षार्थं स्वप्नमयस्तरक्षणविधिकथनं। शान्तिविधिकथनञ्च।

---

**No. 2632.** कर्म्मशतयबालाबोधः। Substance, country-made paper, 14 × 4¼ inches. Folia, 39. Lines, 17 on a page. Extent, 2,372 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñha, Bahádur. Appearance, new. Prose and verse. Incorrect. Mágadhí and Gujrátí.

**Karmaśataya-bálá-bodha.** An epitome of future retributions for works done in this life. By Matichandra.

**Beginning.** रत्नत्रयोपदेष्टारं नत्वा वीरं जिनेश्वरं।
स्वल्पोऽपि शतकस्यार्थो मतिचन्द्रेण लिख्यते॥
नमिय जिणं धुवरं धयधाय पुत्तपरि+ मे।
यर च उद्द विरागावुधं बंध विद्द सामीय॥

अर्थः। जिण कहिए रागद्वेषमोहदुर्निवारवैरवारिणा जेता अष्टमहाप्रातिहार्य्यलक्षणघाइ। इत्यादि।

**End.** करालकलिपालपातालतलनै विषै। निमज्ज धर्म्मोद्धरणधुरीणश्रीमान् अभयचन्द्रसूरि तच्चरणसरसीरुहचञ्चरीकदेवेन्द्रसूरि तेनै कर्म्मप्रकृतिपञ्चसङ्ग्रहबृहच्छतकादिशास्त्रलिखोद्दे आत्मस्मरणेऽर्थे॥

**Colophon.** इति श्रीमदञ्चलिकगच्छीमतिचन्द्रमुनिविरचितकर्म्मशतयबालाबोधः समाप्तः।

विषयः। कर्म्मविपाकसङ्ग्रहशतकस्य गुर्ज्जरभाषया व्याख्यानम्।

---

**No. 2633.** आत्रेयसंहिता। Substance, Káśmírí paper, 13 × 7 inches. Folia, 267. Lines, 15 on a page. Extent, 8,762 slokas. Character Nagara. Date, ? Place of deposit, Ludhiyáná, Sardár Atar Siñh, Bahádur. Appearance, old. Verse. Incorrect.

**A'treya-sañhitá.** An original treatise on Hindu Medicine. It is usually attributed to A'treya, a son or descendant of Atri, one of the oldest Vedic sages. This statement, however, is contradicted as regards the text now under notice. It opens with a statement that Atri had obtained from Brahmá a voluminous treatise of four hundred thousand verses, some of which A'treya compiled in an abridgement of two hundred thousand verses, and shorter digests were subsequently compiled by other sages. These digests are named Átreyí, Gárgí, Márkaṇḍi, Vaishṇaví, Aśvíní, Bhárgaví, Sauryá, Mátañgí, Parásarí, A'ñgirá, Vásakí, Kautsí, Jábálí, Kásyapí, Vaisvámitrí, Tvañgí, Bhárdváji, Gautamí, Kháranádí, Agnívaisyí, Khárapádí, and Paushkalí. It is further stated that Atri was the chief physician and founder of the science of medicine of the first or *Kṛita* age. Charaka was the leading author of the second or *Tretá yuga.* Susrata, a disciple of Dhanvantari, was the teacher of the third or *Dvápára* age, and Vágbhaṭa of the fourth or *Kali* age. All these introductory remarks cannot come from Atri, and the work in its entirety cannot belong to that sage. It is obvious, however, from the manner in which the work is written,—short quotations or texts which the work comments upon and amplifies,—that the quotations are from some now lost work of Atri. This is the plan followed also by Charaka, and the same quotations are given in the name of Atri or A'treya. The conclusion to be deduced from this is, that the work is by some unknown author commenting, amplifying and elaborating the rules of Atri. Commentators are of opinion that each of the four founders of schools of medicine had a chief pupil who wrote down the doctrines of his teacher, and that subsequently the notes of the pupil were revised and recast by a compiler. Thus in the case of Dhanvantari, the sage was the expounder or *Vaktá,* Suśrata was the pupil-hearer or *śrotá,* and Nágárjuna the compiler or *Prati-sañskartá;* and in the case of Charaka A'treya was the expounder, Agniveśa the pupil-hearer, and Charaka the compiler. I have failed to find out references to the expounders, pupil-hearers and compilers of the lectures of Atri and Vágbhaṭa; but there is no doubt that the work under notice is the production of a compiler. In one place I find the names of Agniveśa, Bheḍa, Jatukarṇa, Parás'ara, Hárita and

Kshárapáṇi mentioned as the principal compilers: they are frequently cited as authorities. I have seen a second codex of this work in the library of Rájá Rájendranárayaṇa, Bahádur, Calcutta, but it is very corrupt, and does not correspond with the text now under notice. The Sanskrit College of Calcutta has two codices, under the name of Atrí Sañhitá, but they are frágments. It is scarcely necessary to add here that there is a law text under the name of *Atri* or *Átreya Sañhitá*, which has nothing to do with this work.

The work under notice comprises 78 chapters. The contents are given in the Sanskrit abstract.

**Beginning.** ॐस्वस्ति श्रीगणेशाय नमः। श्रीधन्वन्तरये नमः। ॐनमः प्रजापतिभ्यः विलिभिधन्वन्तरिसुश्रुतप्रभृतिभ्यः। अथातः आयुर्वेदोत्पत्तिनामाध्यायं व्याख्यास्यामः। अथोवाच भगवान् धन्वन्तरिः।

नत्वा शिवं परमतत्त्वकलाधिरूढं ज्ञानामृतैकचटुलं परमात्मरूपं।
रागादिरोगशमनं दमनं स्मरस्य शान्तं त्रयाधिपधरं त्रिगुणात्मरूढं ॥ १ ॥

नाभिपद्मसमुत्पन्नो ब्रह्मा विष्णोरजायत।
दृष्टिहृष्टे न जानाति परं मोहेन मोहितः ॥ २ ॥
पुनः प्रविश्य नालीये पद्मे नारायणस्य च।
ब्रह्मणो रूपमाधाय विलोकयत कारणं ॥ ३ ॥
ततः स्थितिज्ञो निःसृत्य ब्रह्मा च वहिरात्मना।
सर्गव्यापारमाकुर्व्वन ससर्ज त्रिजगन्मुनिः ॥ ४ ॥
त्रिजगत्कृपया भेदमायुर्वेदं सभाध्यकं ॥ ५ ॥
त्रयस्त्रिंशत्कोटिदेवै + + च ब्रह्मणः सभा।
अष्टाशीतिसहस्रैस्तु ऋषिभिः परिशीलिता ॥ ६ ॥
सार्द्धकोटिभिरष्टाभिर्दिव्यदेवाङ्गनादिभिः।
सशीकानाहरांस्तैग (?) शुद्धाम्भोजविराजिता ॥ ७ ॥
तत्र पद्मासनासीन आयुर्वेदमुवाच तान्।
+ + + ऋषीणाममृतोपमान् ॥ ८ ॥
समन्त्रा वेदऋग्युक्ता चतुर्मुखसमीरिता।
अष्टाङ्गिका चतुर्लक्षा संहिता ब्रह्मणोदिता ॥ ९ ॥
आत्रेया चात्रिणा प्रोक्ता द्विलक्षा सारसंहिता।
त्रैलोक्यस्योपकाराय जितेन्द्रियमहात्मना ॥ १० ॥
आत्रेयस्तपसा सम्यक्परमज्ञानलोचनः।

संस्तुतो बहुभिः शिष्यैर्हिमवन्तमुपेयिवान् ॥ ११ ॥
हिमवदुत्तरे कूले सिद्धर्षिगणसेविते ।
प्रशान्तमृगया (मृगसं) कीर्णे नानापादपशोभिते ॥ १२ ॥
युग्मं, तत्रस्थं तपते जाद्यं (?) तरुणादित्यतेजसं ।
शुद्धस्फटिकवत् शुभ्रं भूतिभूषितविग्रहं ॥ १३ ॥
जटाजूटाढ्यमौलिं भासितं शुद्धकुण्डलं ।
आत्रेयं ऋषिभिः सर्व्वैः सेवितं तपसान्वितं ॥ १४ ॥
पप्रच्छुः ऋषयः सर्व्वे भृगुकुत्साङ्गिरा वसुः ।
जावालिकाश्यपश्नौकगौतमौतङ्कविष्णवः ॥ १५ ॥
अश्विनौ गर्गमातङ्गविश्वामित्रपराशराः ।
मार्कण्डेयाग्निवैश्याकभारद्वाजाद्यो मुनिः ॥ १६ ॥
भगवन् जगदाधार लोकानां हितकाम्यया ।
आयुर्वेदं समासेन ब्रूहि नः पुरतः प्रभो ॥ १७ ॥
आयुर्वेदाम्बुधेस्तेषामात्रेयो मुनिसत्तमः ।
सारं सारं समुद्धृत्य ऋषीणां तमचीकथत् ॥ १८ ॥
आत्रेयवचनाम्भोधेरायुर्वेदामृतं बहु ।
ववर्षुर्भुवने शुभ्रं संहृष्टा मुनिवारिदाः ॥ १९ ॥
एतद्वाक्यामृतं पीत्वा चक्रिरे ऋषिभिस्तथा ।
स्वस्वनामाङ्किताः सर्व्वे संहिताः पुन्यसंहिताः ॥ २० ॥
आत्रेयी च तथा गार्गी मार्कण्डी वैष्णवी तथा ।
आश्विनी भार्गवी सौर्य्या मातङ्गी च पराशरी ॥ २१ ॥
आङ्गिरा वासवी कौत्सी जावाली काश्यपी तथा ।
वैश्वामित्री तथा त्वाङ्गी भारद्वाजी च गौतमी ॥ २२ ॥
खारनाद्यग्निवैश्यी च क्षारपादी च पौष्कली ।
इत्यादिसंहिता बह्वी मुनिभिः परिकीर्त्तिताः ॥ २३ ॥
आयुर्वेदो बुधैः सारं सारं ग्राह्यं महर्षिभिः ।
बद्धश्चक्रैश्च नामाङ्कः पुरुषैः सुश्रुतादिभिः ॥ २४ ॥
एता वेदसमा ज्ञेया नावज्ञा क्रियते मया ।
अन्यानि बहुशास्त्राणि चिकित्सानि च चक्रिरे ॥ २५ ॥
संहिता श्रूयते येन वाच्यते पठ्यते सदा ।
स नीरुक् च महासाधुः पुन्यात्मा स शिवं व्रजेत् ॥ २६ ॥

अत्रिः कृतयुगे वैद्यः त्रेतायां चरकोत्तमः ।
द्वापरे सुश्रुतः प्रोक्तः कलौ वाग्भट एव हि ॥ २७ ॥
एते त्रयो मदंशाश्च संपद्यन्ते युगे युगे ।
धन्वन्तरेश्च शिष्योऽयं सुश्रुतो मुनिसत्तमः ॥ २८ ॥
सुश्रुता च संहिताचैषी अपरांश्च ततः परं । इत्यादि,
अथात्रेयो मुख्यशिष्योऽसौ हारीतो मुनिसत्तमः ।
पादौ निपत्य शिरसा योजितः करसंपुटे ॥ ३१ ॥
पप्रच्छ गुरुमात्रेयं विनयावनतोऽपि च ।
गुरुः प्रसन्नः प्रोवाच इच्छावत् समतोत्तमं ॥ ३२ ॥

**End.** खण्डितत्वात् परिसमाप्तिसूचकवाक्यानि न सन्ति ।

विषयः । १मे अध्याये वैद्यगुणदोषकीर्त्तनं । २ये अध्याये चिकित्सासंग्रहः । ३ये अध्याये रोगोपचारक्रमकथनं । ४र्थे अध्याये देशकालबलाबलनिर्णयः । ५मे अध्याये ऋतुचर्य्याकथनं । ६ष्ठे अध्याये दिनचर्य्यानिरूपणं । ७मे अध्याये शोणितोत्पत्तिनियमः । ८मे अध्याये दोषधातुमलानां लक्षणं तेषां चयवृद्धिनिरूपणञ्च । ९मे अध्याये दोषप्रतिषेधकथनं । १०मे अध्याये आतुरोपक्रमकथनं । ११शे अध्याये द्रव्यरसगुणवीर्य्यविपाककथनं । १२शे अध्याये द्रव्यविशेषविज्ञानं । १३शे अध्याये रसविशेषविज्ञानं । १४शे अध्याये रोगानुत्पत्तिहेतुकथनं । १५शे अध्याये तोयपानविधिः । १६शे अध्याये क्षीरदधिघृतादिगुणकथनं । १७शे अध्याये मूत्रगुणनिर्णयः । १८शे अध्याये इक्षुगुणनिर्णयः । १९शे अध्याये तुषोदककाञ्जिकादिद्रव्यगुणकथनं । २०शे अध्याये रक्तशालिधान्यादीनां गुणकथनं । २१शे अध्याये शाकगुणनिर्णयः । २२शे अध्याये फलगुणनिर्णयः । २३शे अध्याये विविधमधुगुणकीर्त्तनं । २४शे अध्याये मद्यगुणकीर्त्तनं । २५शे अध्याये चतुष्पदमांसगुणकीर्त्तनं । २६शे अध्याये पक्षिमांसगुणकीर्त्तनं । २७शे अध्याये जलचरमांसगुणकथनं । २८शे अध्याये भोज्यद्रव्यगुणकथनं । २९शे अध्याये द्रव्यसंग्रहः । ३०शे अध्याये रोगिणां पापदोषप्रतीकारकथनं । ३१शे अध्याये शुभाशुभस्वप्ननिर्द्देशः । ३२शे अध्याये अरिष्टव्याधिकथनं । ३३शे अध्याये वैद्यानयनार्थं तद्दूतगमनसमये शुभाशुभनिमित्तकथनं । ३४शे अध्याये रोगोत्पत्तौ शुभाशुभलक्षणं । ३५शे अध्याये रोगोत्पत्तौ शुभाशुभलग्नादिकथनं । ३६शे अध्याये नाडीपरीक्षा । ३७शे अध्याये मूत्रपरीक्षा । ३८शे अध्याये रोगसङ्करकारणनिर्द्देशः । ३९शे अध्याये रोगनिर्णयस्यावश्यकताकथनं । ४०शे अध्याये वातपित्तश्लेष्मसन्निपातानां संक्षेपतश्चिकित्साकथनं । ४१शे अध्याये ज्वरनिदानं, ज्वरचिकित्सा-पित्तज्वरचिकित्सा-श्लेष्मज्वरचिकित्सा-सन्निपातज्वरचिकित्सा—भूतज्वरचिकित्सा, माहेन्द्रज्वरादीनां लक्षणं तेषां चिकित्सा च । ४२शे अध्याये कर्णनेत्रादिस्थानभेदे सान्निपातिकलक्षणं तस्य चिकित्सा च । ४३शे अध्याये अतिसारनिदानं तस्य चिकित्सा, ग्रहणीनिदानं तस्य चित्सा, गुल्मनिदानं यक्ष्मनिदानं तयोः चिकित्सा, वातगु-

ल्मलक्षणं तस्य चिकित्सा, पित्तगुल्मलक्षणं तस्य चिकित्सा, अजीर्णनिदानं तस्य चिकित्सा, क्रमिनिदानं तस्य चिकित्सा, मन्दाग्निचिकित्सा, तीव्राग्निचिकित्सा, अरोचकचिकित्सा च। ४४शे अध्याये शूलचिकित्सा। ४५शे अध्याये पाण्डुरोगनिदानं तस्य चिकित्सा। ४६शे अध्याये क्षयरोगराजयक्ष्मनिदानं तयोः चिकित्सा। ४७शे अध्याये रक्तपित्तनिदानं तस्य चिकित्सा, नासाप्रवृत्तरुधिरचिकित्सा, मुखप्रवृत्तरक्तचिकित्सा, रक्तातिसारचिकित्सा च। ४८शे अध्याये अर्शनिदानं तस्य चिकित्सा। ४९शे अध्याये वातश्लेष्मादिकासलक्षणं तेषां चिकित्सा। ५०शे अध्याये हिक्कानिदानं श्वासनिदानं तयोश्चिकित्सा। ५१शे अध्याये स्वरभेदचिकित्सा छर्दिचिकित्सा च। ५२शे अध्याये तृष्णानिदानं तत्चिकित्सा। ५३मे अध्याये मूर्च्छाभ्रमनिद्रासन्न्यासनिदानं तेषां चिकित्सा। ५४मे अध्याये मदात्ययचिकित्सा। ५५मे अध्याये वातव्याधिनिदानं तस्य चिकित्सा। ५६मे अध्याये आमवातनिदानं तस्य चिकित्सा, गृध्रसीनिदानं तत्चिकित्सा वातरक्तनिदानं तस्य चिकित्सा। ५७मे अध्याये शीतपित्तोदर्दकोठनिदानं तेषां चिकित्सा। ५८मे अध्याये अम्लपित्तनिदानं तस्य चिकित्सा। ५९मे अध्याये व्रणशोथनिदानं तयोश्चिकित्सा। ६०मे अध्याये उदरनिदानं तस्य चिकित्सा। ६१ मे अध्याये मूत्रकृच्छ्रनिदानं तस्य चिकित्सा। ६२मे अध्याये मूत्राघातनिदानं तस्य चिकित्सा। ६३मे अध्याये अश्मरीनिदानं तस्य चिकित्सा। ६४मे अध्याये अन्तर्वृद्धिनिदानं तस्य चिकित्सा। ६५मे अध्याये विसर्पनिदानं तस्य चिकित्सा क्षुद्ररोगनिदानं तेषां चिकित्सा च। ६६मे अध्याये विद्रधिनिदानं तस्य चिकित्सा। ६७मे अध्याये श्लीपदशस्त्रीपनिदानं तेषां चिकित्सा। ६८मे अध्याये ग्रन्थ्यर्बुदगलगदानां निदानं तेषां चिकित्सा, गण्डमालाचिकित्सा, लूतागण्डमालाचिकित्सा च। ६९मे अध्याये कुष्ठनिदानं तेषां चिकित्सा। ७०मे अध्याये मूढगर्भनिदानं तस्य चिकित्सा, सूतिकानिदानं स्तन्यरोगनिदानं असृग्दरनिदानं, योनिदोषनिदानं तस्य चिकित्सा, स्तन्यरोगचिकित्सा, योनिशूलचिकित्सा, असृग्दरचिकित्सा च। ७१मे अध्याये स्त्रीणामष्टविधरोगनिदानं बालरोगनिदानं तेषां चिकित्सा, बालानां प्रज्ञाकरणं, बालानां अपस्मारचिकित्सा च। ७२मे अध्याये भिन्नादीनां चिकित्सा, शल्योद्धारचिकित्सा, विषचिकित्सा, भग्नचिकित्सा, अग्निदग्धचिकित्सा च। ७३मे अध्याये मुखरोगनिदानं तस्य चिकित्सा। ७४मे अध्याये शिरोरोगनिदानं तस्य चिकित्सा, नासारोगनिदानं तस्य चिकित्सा, कर्णरोगनिदानं तस्य चिकित्सा, नेत्ररोगाणां निदानं तेषां चिकित्सा च। ७५मे अध्याये औषधकरणविधिः तैलपाकविधिः। ७६मे अध्याये शारीरस्थानकथनं। ७७मे अध्याये देहसम्भवकथनं अध्यात्मकथनं च।

---

**No. 2634.** काव्यप्रकाशटीका। Substance, Káśmíri paper, 13 × 7 inches. Folia, 148. Lines, 13 on a page. Extent, 3,606 ślokas. Character, Nágara. Date, ? Place of deposit, Ludhiyáná, Sardár Atar Siñh Bahádur. Appearance, old. Prose. Incorrect.

**Kávyaprakáśa-ṭíká.** A commentary on the *Kávya-prákáśa,* a treatise on rhetoric. By Narahari. This is distinct from Nos. 1157, 1526, 1527, 1651, and 1681 already noticed.

**Beginning.** ॐस्वस्ति श्रीगणेशाय नमः श्रीरामचन्द्राय नमः ।

हृष्टिसंज्ञमभिनौमि सिद्धिदं विघ्नराजमतिसुन्दराधरं ।
यस्य स्मरणलेशतोऽखिलो विघ्नराशिरपयाति दूरतः ॥ १ ॥
हंसगा सितदुकूलभूषणा वीचणा कुचनता चतुर्भुजा ।
देववन्द्यचरणा शुचिस्मिता भारती वसतु वाचि मे सदा ॥ २ ॥
जयन्ति गिरिजापतेश्चरणरेणवो येऽन्वहं
वहन्त्यखिलमङ्गलव्रततिसन्ततेर्वीजतां ।
धृता हरिसुरेश्वरप्रभृतिभिः स्वमौलिभिरथ ।
लेशतां कतकवत्तथा विमलयन्ति ये मानसं ॥ ३ ॥
अपि पञ्चवाणमित्रं गौरीमुखसाम्यलेशलोभेन ।
मौलौ सदा मृगाङ्कं कलयन्कल्याणकेलयेऽस्तु शिवः ॥ ४ ॥
विधातुकामः सुकृतं गरीयः क्षमातलं स्वर्ग इवावतीर्णः ।
आलम्बनं सर्व्वविशेषणानां जयत्यखण्डस्थितिरब्धिजेशः ॥ ५ ॥
फलमिव सुकृतानां लोकधात्र्याः समग्रं विगलितमिव भूमौ नाकलोकस्य खण्डं ।
नगमतिगरीयः सर्व्वसंसारसारस्त्रिभुवनगिरिनाम्ना तत्र विख्यातमास्ते ॥ ६ ॥
तत्राभवत्सकलशास्त्रविचारपात्रं श्रीवात्सगोत्रसुरकाननपारिजातः ।
अन्यद्विधातुरबलं वनमाम्नवाचां रामेश्वरः कलिकलङ्ककथान्तरायः ॥ ७ ॥
आसीत् प्रमाणपदवाक्यविचारशीलः साहित्यसूक्तिविसिनीकलराजहंसः ।
ब्रह्माण्डलग्नहृदनाटितलोभटन्तिस्तस्यात्मजोनिपुणधीर्नरसिंहभट्टः ॥ ८ ।
तस्मादचिन्त्यमहिमा महनीयकीर्त्तिः श्रीमल्लिनाथ इति मान्यगुणो बभूव यः ।
सोमयागविधिना कलिखण्डनाभिरद्वैतसिद्धमिव सत्ययुगं चकार ॥ ९ ॥
लक्ष्मीरिव सुराराते पुराराते रिवाम्बिका ।
तस्य धर्म्मवरा त्वासीन्नाङ्गमेति कुलोज्ज्वला ॥ १० ॥
ज्येष्ठस्तदीयतनयो विनयोदितश्रीनारायणोऽभवदशेषनरेन्द्रमान्यः ।
वाग्देवताकमलयोरपि यस्य गेहे सीमाविभागकलहो न कदापि शान्तः ॥ ११ ॥
विरिञ्चेः पर्य्यायो भुवि सदवतारः फणिपतेस्त्रिदोषो दोषाणां सकलगुणमाणिक्य-जलधिः ।
अवाचां प्राचां वा सकलविदुषां मौलिकुसुमं कनीयांस्तत्सूनूर्जयति नयशाली नरहरिः ॥ १२ ॥

सचतुग्रहह्वस्तेन ब्रह्मणा समलंकृते ।
काले नरहरेर्जन्म कस्य नासीत् मनोहरं ॥ १३ ॥
तत्काले सह मङ्गलेन गुरुणा मित्रेण लाभे वणिग्राशिस्थ प्रमदत्रयेण समभूद्दुच्चैः सकाव्यो बुधः ।
सत्केतुप्रभहेतवे द्विजपतिर्जातः कुलीरागते मैत्रं शान्तिमयं दधार कलशं जन्मोत्सवाडम्बरे ॥ १४ ॥
विचार्य्य सर्व्वं सुखमेव दुःखं सुधामये ब्रह्मणि लोलुपस्य ।
सन्न्यस्यतस्तस्य बभूव साथी सरस्वतातीर्थ इति प्रसिद्धिः ॥ १५ ॥
तर्के कर्कशकेलिना बलवता दान्तेन विद्यारसैर्मीमांसागुणमांसलेन परितः सांख्येऽप्यसंख्योक्तिना ।
साहित्यामृतसागरेण पथिना व्याख्यासु विख्यावता काश्यां तेन सदाशयेन किमपि ब्रह्मामृतं पीयते ॥ १६ ॥
काश्यां सरस्वतीतीर्थयतिना तेन रच्यते ।
टीका काव्यप्रकाशस्य बालचित्तानुरञ्जनी ॥ १७ ॥
ननु नियतीत्यादि ।

**End.** खण्डितत्वात् परिसमाप्तिसूचकवाक्यानि न सन्ति ।

**विषयः ।** काव्यप्रकाशस्य व्याख्या ।

---

**No. 2635.** भृगुसंहिता । Substance, Kásmírí paper, 13 × 5½ inches. Folia, 434. Lines, 9 on a page. Extent, 9,032 ślokas. Character, Nágara. Date, ? Place of deposit, Ludhiáná, Sardára Atar Siñh, Bahádur. Appearance, old. Verse. Incorrect.

**Bhṛigu-Sañhitá.** An elaborate treatise on astrology, alleged to be by the sage Bhṛigu, but obviously a mediæval compilation.

**Beginning.** श्रीगणेशाय नमः । वृषलग्नोदये जन्म लग्नेशो भाग्यसंस्थितः ।
धने रविबुधौ भौमस्तथैव राहुसंज्ञकः ॥
सुखेषु वाक्पतिः सम्यक् षष्ठे शनिनिशाकरौ ।
एवं ग्रहानुमानेन योगोऽयं वज्र उच्यते ।

**End.** खण्डितत्वात् परिसमाप्तिसूचकवाक्यानि न सन्ति ।

अस्मिन् पुस्तके विलेखितयोगपर्य्यन्तं लिखनमस्ति । विलेखितयोगो यथा ।
वृषलग्नोदये जन्म तत्रैव सिंहिकासुतः ।

सहजे भवने मन्दो निधने सूर्य्यसोमजौ ।
भृगुचन्द्रौ तथा भाग्येकादशे भवने कुजः ॥
द्वादशे सुरपूज्यश्च योगोऽयञ्च विलेखितः ।

Colophon. अध्यायसमाप्तिसूचकवाक्यं। इति श्रीभृगुसंहितायां भृगुशुक्रसंवादे माहिषयोगफलकथनो नाम ।

विषयः । मेषादिलग्नविशेषे ग्रहविशेषाणां स्थित्या लग्नविशेषे जातस्य योगविशेष उक्तस्तस्य योगस्य फलकीर्त्तनं च ।

---

**No. 2636.** वीतरागस्तोत्रम् । Substance, country-made paper, 12 × $5\frac{1}{2}$ inches. Folia, 12. Lines, 7 on a page. Extent, 220 ślokas. Character, Nágara. Date, Sm. 1908. Place of deposit, Ájimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect.

**Vítarága-stotra.** A score of hymns in praise of the last Jina. Anonymous.

**Beginning.** यः परात्मा परं ज्योतिः परमः परमेष्ठिनाम् ।
आदित्यवर्णं तमसः परस्तादामनन्ति यं ॥
सर्व्वे येनोदमूल्यन्त समूलाः क्लेशपादपाः ।
मूर्द्धा यस्मै नमस्यन्ति सुरासुरनरेश्वराः ।
प्रावर्त्तन्त यतो विद्याः पुरुषार्थप्रसाधिकाः ।
यस्य ज्ञानं भवद्भाविभूतभावावभासकृत् ॥ इत्यादि ।

**End.** तव प्रेष्योऽस्मि दासोऽस्मि सेवकोऽस्मि च किङ्करः ।
ओमिति प्रतिपद्य (?) स्व नाम नातः परं ब्रुवे ॥

**Colophon.** इति श्रीवीतरागस्तोत्रे विंशतिस्तवः सम्पूर्णः । संवत् १९०८ ।

विषयः । अर्हतो गणमाहात्म्यव्याजेन स्तवावलीकथनं ।

---

**No. 2637.** अङ्गुलिविचारसप्ततिकासूत्रम् : Substance, country-made paper, 12 × $5\frac{1}{2}$ inches. Folia, 4. Lines, 13 on a page. Extent, 130 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Mágadhí.

**Anguli-vichára-saptatiká-sútra.** A short treatise on the Jaina system of linear measurements, in Mágadhí. Anonymous.

**Beginning.** उसभसममणमुसभं जिणमणिमिससामि संथ अमुणोहं।

नमि उणङ्गुललक्खण संखेवमिणं पव्वखकामि ॥

उस्से हङ्गलमानं गुलंचत हचपमाणनामं च।

इयतिषि अङ्गलाइं वा वारिज्जंति समर्थमि। इत्यादि।

**End.** सिरिमं मुणिचन्दमुणीसरेहिं सुणानमक्खरं तेहिं सुगम इजभत्ति सारं रयियमिणं सपरगुणे हेउं।

**Colophon.** इत्यङ्गलिविचारसप्ततिकासूत्रं समाप्तं।

विषयः। अङ्गलिवितस्तिनन्वक्रोशादिपरिमाणस्वरूपादिकथनं।

---

**No. 2638.** विशेषशतकम्। Substance, country-made paper, 12 × 6 inches. Folia, 61. Lines, 8 on a page. Extent, 1,750 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Partly Sañskṛit, partly Mágadhí.

**Viśesha-śataka.** A treatise on Jaina A'chára or rules of domestic purity, &c. By Samayasundara Upádhyáya. The work opens with an account of Krishṇa's birth and family according to Jain tradition, or Jain transmogrification of Hindu tradition.

**Beginning.** सुधर्मस्वामिनं नत्वा तदीयवचनानुगं।

विशेषशतकं वच्मे शिष्यप्रश्नोत्तरप्रदम् ॥

ननु श्रीकृष्णवासुदेवस्तृतीयनरके समुत्पन्नस्तच योडशस्थेऽपि तस्यायुः सप्तसागरोपममेव इत्यादि।

**End.** सुगन्धिद्रव्यादिना + + भावनादिकुर्य्यात्। गच्छनिर्मतस्तु य+ +या प्रासुकोदकादिना स्तोकोपधानसंसक्तिभयान्मलापनयनं कुर्य्यादिति।

**Colophon.** इति श्रीसमयसुन्दरोपाध्यायविरचितं विशेषशतकं सम्पूर्णं ॥

विषयः। श्रीकृष्णस्य जन्मचतुष्टयकथाकीर्त्तनं। शुडाशुद्धचायिककर्म्मविवेचनं। साधूनामनशने रात्रौ दीपकरणविधिकथनं। तालवृन्तजन्यस्य वायोः सचित्तत्वादिविवेचनं। चेटकन्वपतेः सप्तकन्यानां कथाकीर्त्तनं। द्वारिकाया उत्पत्तिकथनं। समुद्रविजयस्य राज्ञः षोड़शपुत्राणां विवरणकथनं। शीतार्त्तस्य साधोरग्नितापनेन तद्दूरीकरणे गुरुस्वस्य फलकथनं। स्थविरकल्पिकानां वस्त्रप्रचालनविचारः। विकलेन्द्रियाणां रुधिरादिपातेऽपि दोषाभावकथनं। सम्यग्दृशां व्याकरणादिमिथ्याश्रुताध्ययनेऽपि न दोष इति निरूपणं। पार्श्वस्थादिकारितचैत्येऽपि वन्दनाधिकारकथनं। दिगम्बरसम्प्रदायकृतचैत्यस्य शुक्लाम्बराणामवन्द्यत्वनिरूपणं। विशेष-

कारणाद्व क्वचित् साधूनां दिवानिद्राधिकारकथनं। शिष्यकादिनिमित्तं कदाचित्साधूनां द्रव्य-रक्षणविधिकथनं। पूजासमये सचित्ताचित्तजलस्नानश्वेतवस्त्रादिपरिधानविधिकथनं। विशेष पुष्पादिना पूजाधिकारकथनं। गजदन्तानां पवित्रतादिकथनं। आदित्यादिपञ्चसंवत्सरविवेकः। साधोः सचित्ताचित्तलवणपानीयादिपरिष्ठापनादिविधिकथनं। तण्डुलादिविवेचनं। अथ दर्श-नज्ञानयोर्भेदकथनं। स्त्रीणामपि मुक्तिमार्गाधिकारकथनं। जातिभव्यजीवानां लक्षणादिक-थनं। मिथ्यात्वस्य गुणस्थानत्वविवेचनं। साधूनां ग्राह्याग्राह्यवस्त्रविचारकथनादिकञ्च।

---

**No. 2639.** एकाक्षरनाममालिका। Substance, country-made paper, 12 × 6 inches. Folia, 14. Lines, 15 on a page. Extent, 511 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect.

**Ekákshara-náma-máliká.** A dictionary of words of one syllable or of the various meanings of the letters of the Sanskrit alphabet. By Vis'vas'ambhu.

**Beginning.** आगमेभ्योऽभिधानेभ्यो धातुभ्यः शब्दशासनात्।
एतदेकाक्षरं नामाभिधानं क्रियते मया॥
कः प्रजापतिरुद्दिष्टः को वायुरिति शब्दितः।
कश्चात्मनि समाख्यातः कः प्रकाश उदाहृतः। इत्यादि।

**End.** क्ष हर्षे चैव हिंसायां क्षीरे क्षारे हरौ च क्षः।
क्षौस्त्यागे चरणे व्याधः क्षः क्षेत्रे च क्षये ग्रहे॥

**Colophon.** इति श्रीविश्वशम्भुप्रणीता एकाक्षरमालिका समाप्ता।

विषयः। ककारादिक्षकारान्तवर्णानां विविधार्थकथनं।

---

**No. 2640.** क्षेत्रसमासवृत्तिः। Substance, country-made paper, 12 × 5½ inches. Folia, 37. Lines, 15 on a page. Extent, 1,386 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sañskṛita with Mágadhí quotations.

**Kshetra-samása-vṛitti.** An epitome of Malayagíri's commentary on the Kshetra-samása,—a treatise on mensuration. Anonymous. This is a Jain system of mensuration.

**Beginning.** अर्हमिति ब्रह्मपदं परमं परमेष्ठिवाचकं सिद्धं।
ध्यायामि धवलममलं मूलं सर्व्वार्थसिद्धीनाम्।
— — — — — — — — —।

जयति श्रीमलयगिरियत्कृतविवरणबलेन सूत्रार्थं ।
गुरुगदितमिव व्यक्तं बुध्यन्ते मन्दमतयोऽपि ॥
— — — — — — — — — ।

तत्रादौ मङ्गलाभिधेयाद्यर्थामार्यां सूत्रगाथामाह । वीरं जेयसेहर इत्यादि ।

**End.** अक्खरमत्ताहीणं जं च पढ़िअ अयाणमाणेहिं ।
तं खमह मुज्ज सव्वं जिणवयणविणिग्गया वाणी ॥

**Colophon.** इति चेत्रसमासवृत्तिः समाप्ता ।

विषयः । मलयगिरिकृतवृहत्चेत्रसमासटीकायाः सारसङ्कलनेन विनिर्म्मितेयं चेत्रसमासविवृतिः ।

---

**No 2641.** गुणस्थानप्रकरणम्, वृत्तिसहितम् । Substance, country-made paper, 13 × 5 inches. Folia, 22. Lines, 18—19 on a page. Extent, 992 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text in verse. Commentary in prose. Generally correct. Sañskṛit.

**Guṇasthána-prakaraṇa.** With a commentary (*vṛitti*), a treatise on Jain philosophy, beginning with the definition of truth and falsehood and ending with Yoga perfection. By Ratnas'ekhara Súrí.

**Beginning.** टीकायाः,—

अर्हत्पदं हृदि ध्यात्वा गुणस्थानविचारिणाम् ।
अनुष्टुभामियं त्तिर्लिख्यते सूत्रचूर्णिवत् ॥

तत्रादौ मङ्गलार्थमभीष्टदैवतं नमस्कारस्य सम्बन्धादेश्चाविर्भावकमाद्यपद्यमाह गुणेति । यत्र यत्र पूर्व्वाप्राप्तगुणविशेषाविर्भावो भवति तत्तद्गुणस्थानमित्युच्यते ।

मूलस्य यथा,—

गुणस्थानक्रमारोहहतमोहं जिनेश्वरं ।
नमस्कृत्य गुणस्थानस्वरूपं किञ्चिदुच्यते ॥
चतुर्द्दशगुणश्रेणिस्थानकानि तदादिमं ।
मिथ्यात्वाख्यं द्वितीयन्तु स्थानं सास्वादनाभिधं ॥ इत्यादि ।

**End.** मूलस्य,—

इत्युद्धृतो गुणस्थानरत्नराशिः श्रुतार्णवात् ।
पूर्व्वर्षिसूक्तिना चैव रत्नशेखरसूरिभिः ॥

**Colophon.** इति गुणस्थानप्रकरणं समाप्तम् ।

टीकायाः,—

श्लोकैः प्रायः पूर्व्वर्षिरचितैः श्लोकैरेव इत्यर्थः। कैरुद्धृतो रत्नशेखरसूरिभिर्बृहद्गच्छीय-श्रीवज्रसेनसूरिशिष्यैः श्रीहेमतिलकसूरिपदप्रतिष्ठितैः श्रीरत्नशेखरसूरिभिः स्वपरोपकाराय प्रकरणरूपतया प्रकटित इत्यर्थः। श्रीरस्तु।

विषयः। तत्र प्रथमगुणस्थाने मिथ्यात्वस्वरूपविवेचनं। मिथ्यात्वञ्च व्यक्ताव्यक्तभेदेन द्विविधं। अथ स्पष्टचैतन्यानां संज्ञिपञ्चेन्द्रियादिजीवानाम् अदेवागुर्व्वधर्म्मेषु क्रमेण या देवगुरुधर्म्मबुद्धिः सम्पद्यते तद्व्यक्तं मिथ्यात्वं। अव्यक्तन्तु मोहलक्षणं। तत्र अधर्म्मे धर्म्मसत्ता धर्म्मे अधर्म्मसत्ता अजीवे जीवसत्ता जीवे अजीवसत्ता इत्यादिरूपं। यथा मनुष्यो मदिरोन्मादात् हितमहितं वा किमपि न जानाति नष्टचैतन्यत्वात्। तथा मिथ्यात्वमोहितो जीवो धर्म्माधर्म्मौ सम्यग् न जानाति अज्ञानत्वात्। अत एव सर्व्वथा मिथ्यात्वपरिहाराय प्रयत्नः कार्य्यः। एवं द्वितीये गुणस्थाने सासादनस्वरूपादिनिरूपणं। तत्र जीवोऽयं शान्तानन्तानुबन्धिनां मध्ये एकस्मिन्नपि क्रोधादौ उदीर्णे सति प्रथमौपशमिकसम्यक्त्वात् परिच्युतस्थानमिथ्यात्वभूमिमण्डलं नासादयति तावत् समयादावलीषट्कान्तं कालं सासादनगुणस्थानवर्त्ती भवतीतिनिरूपणं। अथ तृतीये मिश्र-गुणस्थानस्वरूपादिनिरूपणं। तत्र जीवो हि सम्यक्त्वमिथ्यात्वयोरेकतरे भावे वर्त्तमानो मिश्रगुण-स्थानस्थो भवतीतिनिरूपणं। अथ चतुर्थे अविरतसम्यक्त्वदृष्टिगुणस्थानकथनं। तत्र जीवस्य सर्व्वज्ञप्रणीतेषु तत्त्वेषु पूर्व्वाभ्यासविशेषजनितात्यन्तनैर्म्मल्यगुणात्मस्वभावादुपदेशाद्वा या रुचि-रूपा भावना समुत्पद्यते तत्सम्यक्श्रद्धानलक्षणमुच्यते। तत्र कृपाप्रशमसंवेगनिर्व्वेदास्तिक्यलक्षणा गुणा यस्य वर्त्तन्ते स खलु भव्यो जीवो भवति। अत्र संवेगः मोक्षाभिलाष इति निरूपणञ्च।

अथ पञ्चमे,—देशविरतिगुणस्थानकथनं। अत्र पूर्व्वोक्तप्रकारेण तत्स्वरूपादिकथनं। एवं षष्ठे,—प्रमत्तगुणस्थानकथनं। सप्तमे,—अप्रमत्तगुणस्थानकथनं। अष्टमे, अपूर्व्वकरणवादर-सूक्ष्मसम्परायोपशान्तमोहक्षीणमोहाख्यपञ्चगुणस्थानकथनं। तत्र योगविधिकथनं। ध्यानधा-रणाप्राणायामादिस्वरूपकथनञ्च। अथ सयोगिगुणस्थानकथनं। अयोगिगुणस्थानकथनं। सिद्धानां स्थित्यादिनिरूपणं। सिद्धानां ज्ञानदर्शनादिविषयकथनञ्च।

---

**No. 2642.** आचारदिनकरः, (वृहत्) I Substance, country-made paper, 16 × 5 inches. Folia, 532. Lines, 8 on a page. Extent, 15,140 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgañj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose and verse. Generally correct. Sañskṛita with Mágadhí quotations.

**A'chára-dinakara.** An elaborate treatise on Jain duty, embracing all the various topics usually included in the Hindu Smṛitis under the head of A'chára. By Vardhamána Súri. There is a Hindu work

under this name by Dinakara Achárya, but it is quite distinct. The topics have been named in detail in the following Sanskrit abstract of the contents of the work.

**Beginning.** नत्वा ज्ञानमयं लोके य आचारं प्रणीतवान्।
केनापि हेतुना तस्मै नम आद्याय योगिने॥
आत्मान्तर्द्धानहेतोर्वा कारुण्याद्य देहिनाम्।
य आचाराध्यायं चक्रे तं वन्देऽर्हन्तमादिमं॥
तत्प्रसादात्तु स्वालोकपथि तत्त्वोपयोगिनि।
यो लोकाचारमाचख्यौ तस्मै सर्व्वात्मने नमः॥
अनादितत्त्वज्ञातापि स्वस्वमोक्षपदेऽपि च।
स्वयं चचाराचारं यो नमस्तस्मै स्वयम्भुवे॥
यस्याः श्रुतेः परा वाणी पूजनात् परमश्रियः।
तत्त्वालोकः परं ध्यानात् तस्या अर्हद्गिरे नमः॥
— — — — — — — —।
सत्यज्ञानसुखालोक्यः पञ्चकैवल्यकारणं।
तत्त्वाचारवतां नॄणामुन्मीलति विशेषतः॥

इह केचिद्घनमोहान्धधियः + + + सौगत-वैशेषिक-नैयायिक-सांख्य-चार्व्वाकादय-स्वत्त्वालोकनामानुसारिण एव अदृष्टतत्परमार्थाः स्वहृदयोपात्तप्रमाणप्रमेयप्रमाणप्रभावा आचारमेव तिरस्कुर्व्वन्ति। न तेषां वचः सद्भिः प्रमाणपथमुपनेयं। यतः भगवान् अर्हन्नपि विदितसमस्तपरमार्थः — — — —सम्यक्त्वारोपणरूपमाचारमाचीर्णवान्। इत्यादि।

**End.** आचारसम्पादितसर्व्वकार्य्या
आत्मध्यानप्राप्तविशुद्धिभावाः।
समाधितः प्राप्य शिवं वरिष्ठा
नराः महानन्दभृतो जयन्ति॥

**Colophon.** इत्याचार्य्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे तत्त्वालोककीर्त्तनो नाम महाद्योतः सम्पूर्णः। सम्पूर्णोऽयं ग्रन्थः।

विषयः। जैनानामाचारविधिनिरूपणं। आचारस्य प्रामाण्यकथनं। तत्र यत्याचारगाईस्थ्याचारभेदेन तस्य द्वैविध्यनिरूपणं। तत्र गृहस्थानां षोड़शसंस्काराः, यथा,—गर्भाधान-पुंसवन-जातकर्म्म-चन्द्रार्कदर्शन-क्षीरपान षष्ठीजागरण-शुचिकर्म्म-नामकरण-अन्नप्राशन-कर्णवेध-मुण्डन-उपनयन-पाठारम्भ-विवाह-व्रतारोप-मृत्युविधिरूपाः। तथा यतीनामपि षोड़शविषयः। क्रमेण यथा,—ब्रह्मचर्य्यं, क्षुल्लकं, प्रव्रज्या, उत्थापना, योगोद्वहनं, वाचनानुज्ञा, सोपाध्या

यपदस्थितिः, आचार्य्यपदयुक्तिः, प्रतिमोद्वहनं, प्रतिनीव्रतदानं, प्रवर्त्तिनीपदक्रमः, महत्तराप-दाचारः, दिनरात्रिस्थितिः, ऋतुस्थितिः मरणविधिश्चेति। अथ यतिगृहस्थयोः समानास्तावद्यथा,—चैत्यबिम्बप्रतिष्ठा, शान्तिकं, पौष्टिकं, बलिकर्म्म, प्रायश्चित्तं, सद्दावश्यकविधिः, तपोवि-धिः, पदारोपणञ्चेति। अथ यतिभिः, व्रतारोपं विहाय गृहस्थानामन्ये संस्कारा न सम्पादनीया इति नियमकथनं। अथ गर्भाधानसंस्कारविधिकथनं। तत्र जैनवेदमन्त्रविधानञ्च। गर्भाधान-योग्यमासतिथ्यादिनिरूपणञ्च। अथ पुंसवनविधिकथनं। तत्र नक्षत्रवारादिविशेषकथनं। अथ जातकर्म्मविधिकथनं। तत्र जलाभिमन्त्रणादिविधिकथनञ्च। अथ सूर्य्येन्दुप्रदर्शनविधि-कथनं। तत्र सूर्य्यादीनां जैनवेदोक्तमन्त्रकथनं। एवं परत्रापि ज्ञेयम्। क्षीराशनविधिकथनं। षष्ठीसंस्कारविधिकथनं। शुचिकर्म्मसंस्कारविधिकथनं। तत्र अशौचकालादिनिरूपणं। षोड्-शपुरुषादर्व्वाक् ज्ञातिभ्योऽशौचं गृह्यते—इति कथनं। नामकरणविधिकथनं। तत्र मण्डलीपू-जादिकथनं। कर्णवेधविधिकथनं। चूड़ाकरणविधिकथनं। उपनयनविधिकथनं। तत्र इक्ष्वा-कुवंशनारदवंशप्राचोदीच्यवंशानां जैनब्राह्मणानामुपनयनं जैनोपवीतधारणञ्च कर्त्तव्यमिति-निरूपणं। एवं क्षत्रियवंशानां जिनचक्रवर्त्तिबलदेववासुदेवादिसन्तानानामुपनयनादिधारणा-वश्यकताकथनं। जिनोपवीतलक्षणं। युगभेदेन स्वर्णरौप्यताम्रकार्पासभेदेन उपवीतस्य चातु-र्व्विध्यकथनं। वैश्यानान्तु सर्व्वदा कार्पासमसूत्रमेव विहितमितिकथनं। उपनयनादौ वेदिस्थाप-नादिविधिकथनं। व्रतादेशविधिकथनं। अत्र ब्राह्मणक्षत्रियवैश्यभेदेन व्रतकथनञ्च। चातुर्व्व-र्णसमानव्रतादेशकथनं। व्रतविसर्ज्जनकालकथनं। गोदानविधिकथनं। गोभूमिरत्नादिदान-मन्त्रादिकथनं। अष्टव्रात्यनैवेद्यादिभोजिनां ब्राह्मणानां वटुकरणविधिकथनं। तत्र कौपीना-दिधारणविधिकथनं। विद्यारम्भविधिकथनं। विवाहविधिकथनं। ब्राह्मादिविवाहानां कलि-युगे अभावात् प्राजापत्यविवाहस्यैव कर्त्तव्यत्वप्रतिपादनं। कन्यादानविधिकथनं। तत्र कुलकर-स्थापनादिविधिकथनं। अग्निन्यासादिकथनं। लाजाकर्म्मविधिकथनं। विवाहयोग्यकन्यादि-निरूपणं। व्रतारोपणविधिकथनं। तत्र सम्यक्त्वसामायिकारोपणविधिकथनं। देशविरतिसा-मायिकारोपणविधिकथनं। प्रतिमोद्वहनविधिकथनं। तत्र दर्शनप्रतिमाव्रतप्रतिमादिकथनं। उपधानविधिकथनं। तत्र उपधानयन्त्रादिनिरूपणं। अथ जैनानां दिनचर्य्या (आह्निककृत्य)-कथनं। तद्विधिकथनञ्च। अथ मुखादिप्रक्षालनार्थं जलाभिमन्त्रणविधिकथनं। शस्त्रतिल-कादिकरणविधिः। पुष्पेण पूजाविधिः। फलेन पूजाविधिः। चन्दनमन्त्रादिकथनं। तदर्चनवि-धिकथनं। आरात्रिकविधिः। प्रतिमायाः कलसाभिषेकविधिः। तत्र इन्द्राग्नियमवरुणकुबेर-ब्रह्मसूर्य्यादिपूजाविधिकथनं। अथ समपुद्गलनिरूपणं। अन्त्यसंस्कारविधिकथनञ्च। तत्र शवसंस्कारादिविधिकथनञ्च। अथ यतीनामाचारनिरूपणं। तत्र ब्रह्मव्रतविधिकथनं। प्रव्र-ज्याविधिकथनं। तत्राधिकारिनिरूपणं। अथ वाचनानुज्ञाविधिकथनं। उपाध्यायपद-

स्थापनाविधिकथनं। आचार्य्यपदस्थापनाविधिकथनं। आचार्य्यपदानधिकारिनिरूपणं। यतीनां द्वादशप्रतिमोद्वहनविधिकथनं। अथ व्रतिनीव्रतदानविधिकथनं। प्रवर्त्तिनीपदस्थापनाविधिकथनं। महत्तरापदस्थापनाविधिकथनं। यतीनामहोरात्रचर्य्याकथनं। स्थविरकल्पिनामुपकरणसंख्यादिकथनं। एवं साध्वीनामुपकरणादिकथनं। पात्रनिर्योगकथनं। स्वयंबुद्धसाधूनां द्वादशविधोपाधिनिरूपणं। अथ साधूनामृतुचर्य्याविधिकथनं। विहारनिर्म्माणविधिकथनं। तत्करणयोग्यदेशादिनिरूपणं। तत्र म्लेच्छदेशादिकथनं। तत्र शक-जवन-हूण-रोमककुवात-चीन-मानवप्रभृतीनां म्लेच्छदेशत्वकथनं। आर्य्यदेशनिरूपणं। विहारारम्भयोग्यतिथिनक्षत्रादिनिरूपणं। पर्य्यन्ताराधनविधिकथनं। महापरिष्ठापनविधिकथनं। अथ जिनप्रतिमाप्रतिष्ठाविधिकथनं। तत्र ग्रहयागकङ्कणमोचनादिविधिकथनं। चैत्यप्रतिष्ठाविधिकथनं। ध्वजकलसप्रतिष्ठादिकथनं। जिनविम्बपरिकरप्रतिष्ठाविधिकथनं। जलपट्टतोरणादिप्रतिष्ठाविधिः। अथ देवीप्रतिमाप्रतिष्ठाविधिः। क्षेत्रपालादिप्रतिष्ठाविधिकथनं। गणपत्यादिप्रतिष्ठाविधिकथनं। समवसरण (रथविशेषः) प्रतिष्ठाविधिकथनं। पितृमूर्त्तिप्रतिष्ठाविधिकथनं। यतिमूर्त्तिप्रतिष्ठाकथनं। सूर्य्यादिग्रहप्रतिष्ठाविधिकथनं। गृहप्रतिष्ठाविधिकथनं। वृक्षादिप्रतिष्ठाविधिकथनं। वनदेवताप्रतिष्ठाविधिकथनं। दुर्गयन्त्रादिप्रतिष्ठाविधिकथनं। प्रतिष्ठालक्षणकथनञ्च। अथ शान्तिकरणविधिकथनं। तत्र द्वादशराश्यादिपूजाविधिकथनं। एवं सर्व्वेषां नक्षत्राणां पूजाविधिकथनं। अथ योगयात्रानुसारेण नक्षत्रशान्तिकथनं। तत्र ग्रहाणां मण्डलादिस्थापनाविधिकथनं। नवग्रहपूजाकथनं। ग्रहशान्त्यर्थं स्नानविधिकथनं। अथ पौष्टिककर्म्मविधिकथनं। अथ बलिविधिकथनं। तत्र अर्हद्बल्यादिदानविधिकथनं। अथ प्रायश्चित्तविधिकथनं। तत्र प्रायश्चित्तं नाम प्रमादकृतस्य पापस्य विशुद्धिहेतुः कर्म्मविशेषः। जानन्नपि क्रोधादिना प्रेरितश्चेत् पापमाचरति तस्य प्रायश्चित्तेन नापगमः किन्तु तत्र जन्मनि जन्मान्तरे वा भोगेनेतिनिरूपणं। प्रायश्चित्ताधिकारिलक्षणं। प्रायश्चित्तानाचरणे दोषकथनं। प्रायश्चित्तग्रहणविधिकथनं। अथ प्रतिक्रमणप्रायश्चित्तविधिकथनं। विवेकानुप्रायश्चित्तकथनं। कायोत्सर्गार्हप्रायश्चित्तकथनं। ज्ञानातिचारप्रायश्चित्तकथनं। दर्शनातिचारप्रायश्चित्तं। चारित्रातिचारप्रायश्चित्तं। वीर्य्यातिचारप्रायश्चित्तं। तपोऽर्हप्रायश्चित्तं। वेदार्हप्रायश्चित्तं। अनावृत्तप्रायश्चित्तं। पाराञ्चिकप्रायश्चित्तं। प्रायश्चित्ताधिकारे श्रावककल्पकथनं। सामान्यप्रायश्चित्तकथनं। यतीनां प्रायश्चित्तविधिकथनं। अथ स्नानार्हप्रायश्चित्तं। दानार्हप्रायश्चित्तं। विशोधनार्हप्रायश्चित्तं। नित्यानुष्ठेयविधानकथनं। तत्र विविधस्तवपाठादिविधिकथनं। अथ वन्दनविधिकथनं। प्रतिक्रमणविधिकथनं। क्षामणविधिकथनं। प्रतिक्रमणविधिकथनं। यतिप्रतिक्रमणविधिकथनं। गृहिप्रतिक्रमणविधिकथनं। कायोत्सर्गविधिकथनं। अथ गुणप्रत्याख्यानविधिकथनं। शुद्धिनिरूपणं। सामायिकयोजनाविधिकथनं। अथ तपोविधिकथनं। तत्र नमस्कारतपःकथनं। एकावलीतपःकथनं। पञ्चपरमेष्ठितपःकथनं। इहत्यञ्चमीतपःकथनं। श्रेणीतपःकथनं। फल-

तपः। सर्व्वाङ्गसुन्दरतपः। रोहिणीतपः। मोक्षदण्डतपः। अदुःखदेवीतपः। अमृताष्टमी-तपः। अखण्डदशमीतपः। अथ अर्हत्पूजा-गुरुपूजा-प्रवचनस्थविरपूजा-धर्म्मध्यानादिरूपविंश-तिस्थानकथनं। अथ पदारोपविधिकथनं: तत्र यतिपदारोपविधिकथनं। विप्राणां पदारोप-विधिकथनं। उपाध्यायपदारोपविधिः। एवं ब्राह्मणक्षत्रियादिपदारोपविधिः। अथ मण्डले-श्वर-ग्रामाधिपति-मन्त्रि-सेनापतिलक्षणादिकथनं। अथ व्यवहारनिरूपणं।

---

**No. 2643.** विंशतिस्थानकविचारामृतसङ्ग्रहः। Substance, country-made paper, 11 × 4½ inches. Folia, 165. Lines, 9 on a page. Extent, 2,952 ślokas. Character, Nágara. Date, Sm. 1818. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect. Sañskṛit and Mágadhí.

**Viñśati-sthánaka-vichárámṛita-sañgraha.** Summary of the religious doctrines and duties of the Jains. By Jinaharsha Gaṇi, disciple of Jayachandra Súri. This is an excellent summary, and enters at considerable length into the details of the duties enjoined. The contents are given below in Sanskrit.

**Beginning.** श्रीभूर्भुवःस्वस्त्रितयं पुनाना द्रव्याभिधानाकृतभावरूपैः।
त्रिकालवर्त्तिस्त्रितयो जिनेन्द्राः ह्वजन्तु सर्व्वाङ्गतसौख्यलक्ष्मीम्॥
जिनेन्द्रपदवीप्राप्तिनिमित्तं सुदशं तपः।
विंशतिस्थानव्याख्यानं जयति श्रीजिनागमे॥
दानशीलतपोभावभेदैर्द्धर्म्मश्चतुर्व्विधः।
प्रणीतसकलश्रेयोलतारामसुखावहः॥
यतः। दानं सुपात्रे विशदञ्च शीलं
तपोविचित्रं शुभभावना च।
भवार्णवोत्तारणयानपात्रं धर्म्मं चतुर्द्धा मुनयो वदन्ति॥ इत्यादि।

**End.** ग्रन्थस्यास्य पवित्रस्य वाचनाश्रवणादिभिः।
लभन्ते प्राणिनः प्रौढं श्रीजिनेश्वरसम्पदं॥

**Colophon.** इति श्रीविंशतिस्थानकविचारामृतसङ्ग्रहे श्रीतपागच्छेशश्रीजयचन्द्रसूरि-राजशिष्येण जिनहर्षगणिना निर्म्मिते विंशतिस्थानककथा॥ सम्पूर्णश्चायं ग्रन्थः।

विषयः। दानशीलतपोभावभेदेन धर्म्मस्य चतुर्व्विधत्वकथनं। तत्र प्रत्येकं तेषां लक्षणा-दिकथनञ्च। दानादीनां सम्यग्दर्शनादुपयोगित्वेन तत्प्राप्तुकामेन जिनपरिचर्य्या विधेयेति तत्-पूजाविधिकथनं। तत्र प्रातःकृत्यस्नानाभिषेकादिविधिनिरूपणञ्च। जिनमूर्त्तिपरिचर्य्याविधा-

मनिरूपणं। ध्यानमुद्रादिनिरूपणं। जिनबिम्बार्चनदर्शनादिमाहात्म्यकीर्त्तनं। तत्र प्रसङ्गेन चम्पपुराधिपस्य सिंहरथाभिधाननरपतेरुपाख्यानकथनं। द्रव्यभावभेदेन अर्हद्भक्तेर्द्वैविध्यकथनं। सात्त्विकभक्तिमाहात्म्यकथनं। अथ पूष्पाद्यर्चा-तदाज्ञापरिरक्षण-तद्‌द्रव्यपरिरक्षण-उत्सव-तीर्थयात्राभेदेन तस्याः पञ्चलक्षणत्वकथनं। पुनराभोगानाभोगभेदात् तस्या द्विविधत्वकथनञ्च। अथ सिद्धभक्तिलिप्सुना तीर्थयात्रा विधेयेतिकथनं। तत्र शत्रुञ्जयगिरियात्राया मुख्यत्वकथनं। तत्र साकेतपत्तनाधिपतेः हस्तिपालनरेन्द्रस्य उपाख्यानकथनं। जीवस्य शिवस्वरूपत्वकथन-पूर्व्वकं तद्रक्षणे सत्फलप्राप्तिस्तन्नाशने दुर्गतिप्राप्तिश्चेतिनिरूपणं। अनन्तज्ञानदर्शनानन्दमयाः सिद्धा एव जन्मजरादिक्लेशरहितास्तेषां लोकस्य सिद्धलोकतया प्रसिद्ध इतिकथनं। धर्म्मघोषाख्यस्य मुनिनाथस्य दृष्टान्तकथनं। सिद्धभक्तिप्राप्त्युपायकथनपूर्व्वकं शत्रुञ्जयगिरिरेव सिद्धस्थानमितिनिरूपणं। अथ विवेकिना निर्व्याजं द्रव्यभक्तिः भावभक्तिश्च विधेयेतिनिरूपणं। तत्र सद्भाव-पूर्व्वकं द्वादशव्रतानुष्ठान-सर्व्वज्ञशासनभावना-प्रासादार्हत्प्रतिमाप्रतिष्ठा-तीर्थयात्रारूपैव द्रव्यभक्तिरितिकथनं। तथा सम्यग्गुणादिमत्तया पुनः पुनरेकाग्रतया च ध्यानेन आत्मनस्तन्मयीकरणमेव भावभक्तिरितिनिरूपणञ्च। तत्र वसन्तपुरवास्तव्यस्य जिनदासाभिधानस्य श्रेष्ठिन उपाख्यानकथनं। पुरुषार्थकामेन विवेकिना गुरुभक्तिः कर्त्तव्येतिनिरूपणं। अत्र पुरुषोत्तमस्य नृपतेरुपाख्यानकथनं। अथ विवेकिना स्थविरावली वन्दनीया। सा च लौकिकलोकोत्तरभेदात् द्विविधा। अत्राद्या स्थविरा जनकजनन्यादयः। तेष्वपि लोकद्वयसुखावहत्वेन भक्तिः कर्त्तव्या। अथ लोकोत्तरस्थविराश्च पञ्चमहाव्रतभूषिता निःसङ्गचित्तवृत्तयो यतय एव। न हि पलितादिमात्रेण वृद्धत्वं भवति, किन्तु विवेकसंयमादिनैवेतिनिरूपणं। अत्र पद्मोत्तरस्य नृपतेरुपाख्यानकथनं। महेन्द्रपालस्य नरपतेरुपाख्यानकथनं। तपस्विनां गौरवं विधेयमितिनिरूपणं। इन्द्रियजयावश्यकताकथनं। कषायोदयनिरोधादिबाह्यतपःकथनं। प्रायश्चित्तादिरूपाभ्यन्तरतपोनिरूपणं। विनयनिरूपणं। वाचना-पृच्छना-परिवर्त्तना-अनुप्रेक्षा-धर्म्मकथारूपपञ्चविधस्वाध्यायकथनं। आर्त्त-रौद्र-धर्म्म-शुक्लभेदेन चतुर्व्विधध्यानकथनं। अथ कषायोदयनिरोधादिरूपद्वादशविधतपोविशिष्टा एव तपस्विनो नान्ये इति निरूपणं। अत्र ऋषभदासस्य उपाख्यानकथनं। वीरभद्राभिधानस्य श्रेष्ठिन उपाख्यानकथनञ्च। अथ ज्ञानयोगकथनं। तत्र देवराजर्षेरुपाख्यानकथनं। सम्यग्दर्शननिरूपणं। अत्र हरिविक्रमनृपतेरुपाख्यानकथनं। अथ विवेकिना अर्हदादिषु त्रयोदशपदेषु विनयो विधेय इति कथनं। तत्र विनीयते अपनीयते अष्टप्रकारं क्लिष्टकर्म्म अनेनेति विनय इति निर्व्वचनकथनञ्च। अथ निर्व्वाणसाधकान् योगान् साधयतीति साधुरिति तल्लक्षणकथनं। तत्र धनिमुनेरुपाख्यानकथनं। अरुणदेवाख्यानकथनञ्च। अथ विवेकिना निर्म्मलशीलं कर्त्तव्यमितिकथनं। तत्र चन्द्रवर्म्मणो नृपतेरुपाख्यानकथनं। अथ धर्म्मध्यानशुक्लध्यानरूपशुभध्यानद्वयकथनं। एवं रौद्रध्यानार्त्तध्यानरूपाशुभध्यानकथनं। तत्र हरिवाहनस्य कथाकीर्त्तनं। अथ विवेकिना प्रीतिपूर्व्वकं सर्व्वश्रेयोनिदानं धर्म्ममूलं सर्व्वेभ्य दातव्यमिति-

कथनं। अत्र नरवाहनस्य उपाख्यानकथनं। अथ मनःशुद्धिविधिकथनं। तत्र जीमूतकेतोरु-पाख्यानकथनं। अथ समाधिविधिकथनं। अथ विवेकिना श्रुतग्राहिणा भवितव्यमितिकथनं। अत्र सागरचन्द्रस्य उपाख्यानकथनं। अतः शीतभक्तिनिरूपणं। अत्र रत्नचूड़स्य उपाख्यानकथनं। अथ अर्हत्त्रिकालपूजापञ्चशक्रस्तववन्दनादिविधिकथनञ्च॥

---

**No. 2644.** सुयपण्णत्तिसुत्तम्, (सूर्य्यप्रज्ञप्तिसूत्रम्।) Substance, country-made paper, 12 × 4 inches. Folia, 78. Lines, 11 on a page. Extent, 2,345 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Mágadhí.

**Suya-paṇṇati-sutta** (Sanskrit, *Súrya-prajṇapti-sútra*). Jain astronomy alleged to have been related by Mahávíra in course of conversation with a Guṇadhara of the name of Indrabhúti.

**Beginning.** णमो अरिहन्ताणं। तेणं कालेणं तेणं समयेणं मिथिलानामनयरी होत्था रिद्धिगुमियसमिद्धाए मुद्यतजणजाणवयाजावपासादीया हतजियसत्तूरायाधारिणी देवी। इत्यादि।

**End.** वीरवरस्स भयवयोजरामरणकिलेसदोसरहियस्स।
वंदामि विनयपणतो सोखुप्पा एसयापा एव॥
सुयपण्णत्तिसुत्तं समत्तो शुभमस्तु। कल्याणमस्तु।

विषयः। इन्द्रभूतिनामकेन केनचिद्गणधरेण सह संवादेन भगवतो महावीरस्य ज्योतिर्विद्याकथनं। तत्र द्वावेव सूर्य्यौ चन्द्रौ च क्रमेण सुमेरुमुभयतः परिभ्रमत इति निरूपणं। दिनरात्रिकारणकथनं। सूर्य्यादीनां संस्थानादिकथनं। क्षणलवमुहूर्तादीनां लक्षणादिकथनं। सौरचान्द्रमासादिनिनिरूपणं। नक्षत्रनिरूपणं। नक्षत्रमासादिनिरूपणं। राशिनिरूपणं। लग्नादिनिरूपणं उदयास्तमयनिरूपणं। सूर्य्यादीनां गत्यादिनिरूपणं। मौनपरिभाषाकथनं। ग्रहादीनां मण्डलविष्कम्भादिनिरूपणं। अतीचारादिनिरूपणं। मण्डलादिविभागकथनं। नक्षत्रसंख्याकथनं। राहुनिरूपणं।

---

**No. 2645.** श्रीपालचरित्रम्, लघुव्याख्यासहितम्। Substance, country-made paper, 12 × 5 inches. Folia, 270. Lines, 7 on a page. Extent, 4,706 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, Mágadhí verse; commentary, Sanskrit prose. Incorrect.

**S'rípála-charitra.** History of S'rípála, a devout Jain prince, in Mágadhí verse, with a prose Sanskrit commentary entitled *Laghuvyákhyá*. By Jinaharsha Súri.

**Beginning.** मूलस्य॥ अरिहाइ नवपयाइं भाइत्ता हिययकमलमज्झंमि।
सिरिसिद्धचक्कमाहप्पमुत्तमं किंपि जम्पेमि॥
टीकायाः—
ध्यात्वा नवपदीं भक्त्या श्रीश्रीपालमहीभुजः।
चरित्रं कीर्त्तयिष्यामि रम्यं संस्कृतभाषया॥

अर्हदादिनवपदानि हृदयकमलमध्ये ध्यात्वा उत्तमं श्रीसिद्धचक्रस्य यन्त्रराजस्य माहात्म्यं किमपि जम्पेमि कथयामि।

**End.** मूलस्य॥ सायरमेरुजा महियलं मिजावकणय चलामि।
ससिसूरावट्टंति तावनं दउवाइसंता कहा एसा॥

यावन्महीतले पृथ्वीतले सागरः समुद्रो मेरुश्च कनकाचलो द्वावपि वर्त्तेते। तथा नभःस्थले आकाशे यावत् शशिसूरौ चन्द्रसूर्य्यौ वर्त्तेते तावत् एषा श्रीपालनरेन्द्रकथा वाच्यमाना सती नन्दतु समृद्धिं लभताम्॥

**Colophon.** टीकायाः॥ इति श्रीश्रीपालनरेन्द्रस्य कथा श्रीसिद्धचक्रमाहात्म्ययुक्ता समाप्ता।
वर्षे नन्दगुहास्यसिद्धिवसुधासंख्ये शुभे चाश्विने।
मासे निर्म्मलचन्द्रके सुविजयाख्यायां दशम्यां तिथौ॥
पूज्यश्रीजिनहर्षसूरिगणभृत् सद्धर्म्मराज्ये मुदा।
श्रीश्रीपालनरेन्द्रचारुचरिते व्याख्या समासात् कृता॥

इति श्रीपालचरितस्य लघुव्याख्या समाप्ता।

विषयः। मगधविषये राजगृहनगरे श्रेणिकनामा नरपतिरासीत्। तस्य च अवरोधकुलेऽपि नन्दा वेल्लणा चेति द्वे प्रधाने भार्य्ये। तत्र प्रथमायां अभयकुमारनामा कुमारः समजनि, द्वितीयायान्तु अशोकचन्द्र. हल्लः, विहल्लश्चेति त्रयः पुत्राः समजायन्त। अस्मिन्नवसरे गौतमादिभिः गणधरनिकरैः परितः सेव्यमानो भगवान् महावीरः तत्र विहरति स्म। अथैकदा धर्म्मशुश्रूषया समवेतान् श्रेणिकादीन् समुपलभ्य भगवतो महावीरस्य अभ्यनुज्ञया गौतमस्वामी तत्कथयितुमारेभे। तत्र दान-शील-तपो-भावभेदेन धर्म्मस्य चतुर्विधत्वकीर्त्तनं। भावस्य मनोविषयो मनोगोचरोऽस्तीतिनिरूपणं। तत्र भाव एव भवभ्रमनस्य परमं निदानमितिकथनञ्च। अत एव भावादिविशुद्ध्यर्थं भगवदर्हत्प्रोक्तं नवपदमाश्रयणीयं। तद्यथा, अर्हन्तः, सिद्धाः, आचार्य्याः, उपाध्यायाः, साधवः, सम्यक्त्वं, ज्ञानं, चारित्रं, तपश्चेति। तत्र अर्हन्तः अष्टादशदोषैर्विमुक्ता

विशुद्धज्ञानमया इति निरूपणं। सिद्धाश्च जिनादिपञ्चदशभेदप्रभिद्धाः विमुक्तकर्म्मबन्धा अनन्त-ज्ञानदर्शनादिसम्पन्ना इत्यादिक्रमेण प्रत्येकं लक्षणादिकथनं। पदानि खल्वेतानि जिनधर्म्मसा-रभूतानि कल्याणलिप्सुभिः सम्यगनुष्ठेयानि। पदानामेषां समुदयैः समुदितं श्रीसिद्धचक्रमारा-धयन् श्रीपालराज इव मनुजो निरतिशयं सुखं प्राप्नोतीतिकथनपूर्व्वकं विशेषेण श्रीपालरा-जस्य चरित्रकीर्त्तनं। तन्महिष्या मदनसुन्दर्य्या अलौकिकजैनधर्म्मभावकथनञ्च। सिद्धचक्रमा-हात्म्यकीर्त्तनञ्च।

---

**No. 2646.** श्रीकल्पसिद्धान्तः वा पर्य्युषणाकल्पदशश्रुतस्कन्धः, वृत्तिसहितः।
Substance, country-made paper, 13 × 5 inches. Folia, 91. Lines, 14—16 on a page. Extent, 1,064 ślokas. Character, Nágara. Date, Sm. 1768. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Text., Mágadhí; Commentary, Sanskrit.

**S'ríkalpa-siddhánta** ALIAS **Paryúshaṇá-kalpa-daśa-srú-ta-skandha,** with a commentary. Brief biographical notices of the 24 Jinas, beginning with Ṛishabha and ending with Mahávíra. In course of these notices, the peculiar religious and social characteristics of their times, and the lives of many saints and wise men are recited. Anonymous.

**Beginning.** मूलस्य। सूत्रमर्थस्तथा चान्तं वाच्यमेतत्त्रयं समं।
वृत्तावस्यां समानीतमेत+थिक्यमन्यतः॥

तत्र तावत् श्रीकल्पसिद्धान्तस्य अधिकारत्रयवाचिकेयं गाथा।
पुरिमचरमाणकप्पो मंगलं वद्धमाणतित्थंमि।
तोपरि कहियो जिणगणहराइ थेराबलिचरित्तं॥

अस्यार्थः,—श्रीआदिवीर++तीर्थ++कल्पाचारः, मङ्गलं भवतु। इत्यादि।

**End** मूलस्य,—
सहेतुं सकारणं ससुत्तं स अत्थं स+जयं सज्जागरणं भुज्जो उवदंसेमि पज्जोसणाकप्पो दसासुअक्खंधो संपुसं।

वृत्तेः,—

**Colophon.** इति समुचार्य्य वचःस्थानस्थं वृतं सर्व्वं पायसेन संमील्य स्थाल+उत्पाद्य च भुक्तमेव मध्यदिने ++कृतं पापं सर्व्वमपि अपनेतव्यं न रक्षणीयमिति स दृष्टान्तः। इति सामाचारी।

अस्मिन् ग्रन्थे अन्येऽपि बह्व्यः कथाः सन्ति लेशमात्रेण कथिताः। इति संवत् १७६८।

विषयः। ऋषभादारभ्य महावीरपर्य्यन्तं सर्व्वेषां जिनानां संक्षेपेण चरित्रकथनं तत्र कल्पभेदकथनं। आचारभेदकथनञ्च। गौतमादीनां गणधराणां स्थविरावलीनाञ्च चरित्रकथनं। साधुसमाचारकीर्त्तनञ्च।

---

**No. 2647.** निरयावलिश्रुतस्कन्धटीका। Substance, country-made paper, 16 × 4 inches. Folia, 22. Lines, 7 on a page. Extent, 606 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Nirayávali-srúta-skandha-ṭíká.** A commentary on the Nirayávali-srúta-skandha—a work on hells by Sudharma Svámí By Chandra Súri.

**Beginning.** पार्श्वनाथं नमस्कृत्य प्रायोऽन्यग्रन्थवीक्षिताः।
निरयावलीयश्रुतस्कन्धव्याख्या प्रकाश्यते॥

तत्र निरयावलिकाख्याङ्गग्रन्थस्यार्थं महावीरमुखनिर्गतः, तमभिधित्सुराचार्य्यः सुधर्म्मस्वामी सूत्रकारः। तेणं कालेणमित्यादि ग्रन्थं तावदाह। अस्मिन् काले अवसर्पिण्यां। इत्यादि।

**End.** सकलकर्म्मकृतविकाररहिततया तात्पर्य्यमाह। सर्व्वदुःखानामन्तं करिष्यति।

**Colophon.** इति श्रीचन्द्रसूरिविरचितनिरयावलिश्रुतस्कन्धटीका समाप्ता।

विषयः। सुधर्म्मस्वामिकृतनिरयावलीयश्रुतस्कन्धस्य व्याख्यानम्।

---

**No. 2648.** परमहंससम्बोधचरितम्। Substance, country-made paper, 14 × 3½ inches. Folia, 63. Lines, 6 on a page. Extent, 1,157 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse, Incorrect. Sanskrit and Mágadhí.

**Parama-hañsa-sambodha-charita.** The duties of Parama-hañsas or wise men. The object is to extol the merits of metaphysical knowledge, or of abstract truth, which alone can effect salvation. It shows also that Arhat is the Supreme divinity, and Brahmá and the other gods are his servants. By Navyarañga, disciple of Guṇaśekhara Gaṇi.

**Beginning** चिदानन्दमयं सार्व्वं प्रणम्य परमेश्वरम्।
परमहंससम्बोधचरितं किञ्चिदुच्यते॥

यद्यन्तगविज्ञानं देहिनां नास्ति दी + नम् ।
तर्हि किं वागभरै + + रजागलस्तनोपमैः ॥
ज्ञानदर्शनचारित्रतपोरूपचतुष्टयम् ।
शुद्धेः स्थानमुरीकृत्य जीवा यान्ति परं पदम् ॥ इत्यादि ।

**End.** मूलमन्त्रं मनोमाह्यं फलवन्तौ तपोजपौ ।
अनेन सप्रभावेण सर्व्वं सम्पद्यते सुखम् ॥

**Colophon.** इति श्रीमत्खरतरग + वाचनाचार्य्य श्रीगुणशेखरगणिशिष्यनयरङ्गविरचिते परमहंससम्बोधचरिते पुनः परमहंसमावाज्यप्राप्तिवर्णनो नामाष्टमः प्रस्तावः समाप्तः ।

विषयः । सम्यग्ज्ञानदर्शनचारित्रसम्पत्त्या परमसुखं लभ्यते नान्येन केनचिदुपायेनेतिकथनं। तत्र ज्ञानस्यैव प्राधान्यकथनं । भगवान् अर्हन्नेव परमेश्वरः, ब्रह्मादयः सर्व्वे तस्यैव परिकरा इति निरूपणं। परमहंसानां चारित्रकथनञ्च ।

---

**No. 2649. चन्दपण्णत्तिसूत्तम्, ( चन्द्रप्रज्ञप्तिसूत्रम् ।)** Substance, country-made paper, 14 × 4 inches. Folia, 98. Lines, 6 on a page. Extent, 1,543 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose, Magadhí. Incorrect.

**Chandapannatti-sútta** (Sanskrit, **Chandra-prajnapti-sútra.**) Astronomical dissertations on the size, distance, character, light, eclipses, &c., of the sun and the moon according to Jain belief. It is a work of considerable interest.

**Beginning.** ॐ नमो अरिहंताणं ।
जयति णवणलिणकुलेयविगसियवत्तपत्तलदलाच्छा ।
वीराग इंदमयगलसललियगयविक्कमो भववं ॥
नमि ऊण असुरसुरगरुयलभुयगपरिवन्दिये गतकिलेसे ।
अरिहे सिद्धाय रिउचि भाये सव्वसाऊया फुड़ वियड़पाय ॥ इत्यादि ।

**End.** अरहंत मेर गणहरमेर किररहोत्तिचोत्तीणा ।
तम्हीधित्तिउट्ठाणु ञाइकम्मचरवरियणाणं ॥
धारेयव्वं नियमं णय अरिणीए सुदायव्वं ।

**Colophon.** इति चन्दपण्णत्तिसुत्तं समत्तो ।

विषयः । तत्र प्रथमे प्राभृते,—सूर्य्यो वर्षमध्ये कतिमण्डलानि एकवारं कति वा द्विरारं व्रजतीति तन्निरूपणं। २ये,=तस्य तिर्य्यक् गमननिरूपणं। ३ये सूर्य्यचन्द्रयोः क्षेत्रमानादिनिरू-

पणं। ४र्थे,—तयोः संस्थितिनिरूपणं। द्वावपि सूर्य्यौ चन्द्रौ च परस्परं कियत्प्रमाणमन्तरं कृत्वा चरतीतिनिरूपणञ्च। ५मे,—कियत्प्रमाणं द्वीपं समुद्रं वा अवगाह्य सूर्य्यश्चारं चरतीति-तन्निरूपणं। ६ष्ठे,—एकेन रात्रिन्दिवेन एकैकः सूर्य्यः कियत्प्रमाणं क्षेत्रं विकाश्य चरतीति तन्नि-रूपणं। ७मे,—सूर्य्यमण्डलादीनां संस्थानादिकथनं। ८मे,—सूर्य्यादीनामुद्यास्तमयादिकार-णकथनं। छायापरिमाणकथनं। ९मे,—नक्षत्रविषयकमुहूर्त्तादिनिरूपणं। नक्षत्राणामष्टाविंश-तिसंख्यकत्वकथनं। १०मे,—योगनिरूपणं। ११,१२शे,—द्वादशसंवत्सरनिरूपणं। १३शे—चन्द्रमसः कलाया ह्रासवृद्धिकारणकथनं। १४शे,—पूर्णिमामावस्यानिरूपणं। १५शे,—चन्द्रा-दीनां मध्ये कः शीघ्रगतिरिति तन्निरूपणं। १६शे,—ज्योत्स्नालक्षणादिकथनं। १७शे,—चन्द्रा-दीनामुपपातादिनिरूपणं। १८शे चन्द्रादीनां समतलाद्भूभागादुच्चतादिनिरूपणं। नक्षत्राणां संस्थितिकथनं। १९शे,—सूर्य्यादीनां जम्बूद्वीपादिचारकथनं। २०शे,—ग्रहणादिनिरूपणञ्च।

---

**No. 2650.** चन्द्रप्रज्ञप्तिटीका। Substance, country-made paper, 16 × 4 inches. Folia, 316. Lines, 8 on a page. Extent, 9,796 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Chandra-pajnapti-tíká.** A commentary on the work noticed under the next preceding number. By Malayagiri.

**Beginning.** मुक्ताफलमिव करतलकलितं विश्वं समस्तमपि सततम्।
यो वेत्ति विगतकर्म्मा स जयति नमो जिनो वीरः॥
सर्व्वश्रुतपारगताः प्रतिहतनिःशेषकुपथसन्तानाः।
जगदेकतिलकभूता जयन्ति गणधारिणः सर्व्वे॥
विलसतु मनसि सदा मे जिनवाणी परमकल्पलतिकेव।
कल्पितसकलनरामराः शिवसुखफलदानदुर्ल्ललिताः॥
चन्द्रप्रज्ञप्तिमहं गुरूपदेशानुसारतः किञ्चित्।
विवृणोमि यथाशक्ति स्पष्टं स्वपरोपकाराय॥

तत्राविघ्नेन इष्टप्रसिद्ध्यर्थमादाविष्टदेवतास्तवमाह। जयइ णवणलिण। इत्यादि।

**End.** चन्द्रप्रज्ञप्तिमिमामतिगम्भीरां विवृण्वता कुशलम्।
यदवापि मलयगिरिणा साधुजनस्तेन भवतु कृती॥

**Colophon.** इति श्रीमलयगिरिविरचिता चन्द्रप्रज्ञप्तिटीका समाप्ता।

विषयः। चन्दपण्णत्तिसुत्तनामकजैनज्योतिषग्रन्थस्य व्याख्यानम्।

---

**No. 2651.** तन्दुलवैयारियपकिसम्, (तण्डुलवैचारिकप्रकीर्णम्।)
Substance, country-made paper, 14 × 6 inches. Folia, 60. Lines, 4 on a page. Extent, 752 ślokas. Character, Nágara. Date, Sм. 1915. Place of deposit, A'jimganj, Ráya Dhanapat Siṅh, Bahádur. Appearance, fresh. Prose, Magadhí Gáthá. Incorrect.

**Tandula-vaiyáriya-pakinṇa.** (Sanskrit, **Taṇḍula-vaichárika-prakírṇa**). A treatise on biology and physiology discussing various topics about conception, single and simultaneously manifold, nourishment of the fœtus, its health and disease, its gradual development, delivery, various stages of life, virtue and vice, &c. Anonymous.

**Beginning.** निज्जरिय जरामरणं वन्दित्ता जिनवरं महावीरं।
वुत्थं पइसयमिणं तन्दुलवैयालियं नाम॥
सुणह गणिए दशदिशा वाससया उस्स जह विभज्जन्ति।
संकलिए वोगसिए जंवाय सेसयं होइ॥
जत्तियमित्ते दिवसे जत्तियराइ मुहुत्तमुस्सासे।
गर्भंमि वसइ जीवो आहारविहिं च वुच्छामि॥ इत्यादि।

**End.** आहारो उस्सासो सन्धिसिराउय रोमकुवाइ।
पित्तं सहिरं सुक्कं गणियं गणियप्पहाणेहिं॥
एवं सगदसरीरं ज्याइजरामरणवेयणावहुलं।
तह घत्तहकाउंजे जहसुव्वह सव्वदुकखाणं॥

**Colophon.** इति तन्दुलवैयारियं पकिसं समत्तो।

विषयः। ग्रन्थोऽयं, तण्डुलानां वर्षशतायुष्कपुरुषप्रतिदिनभोगानां संख्याविचारेण उपलक्षितत्वात् तण्डुलवैचारिकेति नाम्ना प्रसिद्धिं गतः। अथ जीवस्य गर्भे वासकालनिरूपणं। तत्राहारनिरूपणं। अथ जीवः अष्टौ सहस्राणि त्रीणि शतं पञ्चविंशत्याधिकानि मुहूर्त्तानि यावत् गर्भे वसतीतिकथनं। एवं तस्य तत्र वासकाले निःश्वासोच्छ्वसितादिसंख्यानिरूपणं। गर्भस्थानसंस्थानादिकथनं। गर्भसञ्चारप्रक्रियाकथनं। स्त्रीणां पञ्चपञ्चाशद्वर्षपर्य्यन्तं गर्भधारणकालः। पुरुषाणान्तु सप्तसप्ततिवर्षं यावत् पुत्रोत्पादनसामर्थ्यं वर्त्तते इति निरूपणं। गर्भाधानयोग्यशुक्रादिनिरूपणं। एकत्र गर्भाधाने वहवो जीवा उत्पद्यन्ते, तेषां एको द्वौ त्रयो वा जीवन्ति, अपरेतु तत्रैव म्रियन्ते इति निरूपणं। वहूनामपि पितॄणामेक औरसः पुत्रो भवितुमर्हतीति तत्प्रक्रियाकथनं। कचिद्द्वादशवर्षपर्य्यन्तमपि गर्भधारणकाल इतिनिरूपणं। गर्भस्थस्त्रीपुरुषज्ञानोपायकथनं। नपुंसकादिलक्षणकथनं। गर्भाधानोत्तरं क्रमेण जीवस्य शरीरावयवप्रकारकथनं। आहारनिरूपणञ्च। तत्र नाभिनाडधा मातुः शारीररसादीन गर्भस्थः

पिपतीतिकथनं। भृणस्य, मातुः पितुश्चापि शारीरांशविशेषेण यद्यदङ्गमुपजायते तन्निरूपणं। गर्भस्थस्यापि धर्म्मादिपिपासा जायते इतिकथनं। प्रसवप्रकारकथनं। जीवस्य बाल्यादिदशदशाकथनं। सुखिनः दुःखिनोऽपि वा जीवस्य जिनशासनानुसारेण जीवनातिवाहनकर्त्तव्यताकथनं। अथ कलाकाष्ठामुहूर्त्तादिपरिमाणादिकथनं। जीवानां भोगरोगादिनिरूपणं। जीवानां शुभाशुभशरीरचिह्नादिनिरूपणं। मानोपपन्नशरीरनिरूपणं। जीवशरीरे अस्थ्यादिसंस्थानतत्तन्नामादिकथनं। जीवस्य आहारनिरूपणं। तत्र तण्डुलपरिमाणादिकथनञ्च। एवं जीवभोग्यलवणादिपरिमाणकथनं। अथ मासवर्षयुगादिपरिमाणकथनं। अथ शारीरविद्याकथनं। जीवस्य कामक्रोधादितारतम्यनिमित्तकथनं। पापपुण्यनिरूपणं। कर्म्मफलकथनं। स्त्रीचरित्रकथनं। भोगकथनञ्च।

---

**No. 2652.** तण्डुलवैचारिकप्रकीर्णावचूरिः। Substance, country-made paper, 12 × 6 inches. Folia, 72. Lines, 8 on a page. Extent, 1,917 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Generally correct. Sanskrit.

**Tandula-vaichárika-prakirnávachúri.** A commentary on the work noticed under the next preceding number. Anonymous.

**Beginning.** ऋषभं वृषसंयुक्तं वीरं वैरनिवारकं।
गौतमं गुणसंयुक्तं सिद्धान्तं सिद्धिदायकं॥
प्रणम्य सगुरुं भक्त्या वक्ष्ये व्याख्यां गुरुक्रमात्।
प्रकीर्णतण्डुलाख्यस्य वैराग्यरसवारिधेः॥

ननु कियन्ति प्रकीर्णानि कथं तेषाञ्चोत्पत्तिः। उच्यते नन्दी, अणुगदाराइं इवि, इच्छउ, तण्डुलवेयालियः, +द्राविजयमित्यादीनि। इत्यादि।

**End.** संयमादिकमितिशेषः। जेति पादपूरणे यथा मुच्च। केभ्यः सर्व्वदुःखेभ्यः। बलसारराज ऋषिवदिति।

**Colophon.** इति तण्डुलवैचारिकप्रकीर्णावचूरिः समाप्ता।

विषयः। तन्दुलवैयारियपकिणाभिधानप्रकरणस्य व्याख्यानम्।

---

**No. 2653.** अवचूर्णिः। Substance, country-made paper, 14 × 6 inches. Folia, 28. Lines, 19 on a page. Extent, 2,327 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Avachúrṇi**. An epitome of Somatilaka Súri's treatise on numeration. By Guṇaratna Súri.

**Beginning** श्रीवीरजिनवरेन्द्रं स+कालतमोरविं।
नत्वा नव्यलघुक्षेत्रसमासो ह्यवचूर्ण्यते॥

तत्रेदमादिमं सूत्रं सिरिनिलयं। अत्र आद्यपदचतुष्टयेन चत्वारोऽतिशयाः पूजाद्यतिशयाद्या उक्ताः। उत्तरार्द्धेन अभिधेयं चोक्तं। इत्यादि।

**End**. फूर्जाद्यद्गुणप्रकरवासितविष्टपानां
श्रीदेवसुन्दरमहत्तमसूरिराजाम्।
शिष्योऽवचूर्णिमकरोद्गुणरत्नसूरिः
संस्कारबोधविषये स्वपरार्थमेताम्।

**Colophon**. इति श्रीसोमतिलकसूरिविरचितस्य लघुक्षेत्रसमासस्य अवचूर्णिः श्रीगुणरत्नसूरिविरचिता समाप्ता।

विषयः। सोमतिलकसूरिकृतलघुक्षेत्रसमासप्रकरणस्य व्याख्यानम्।

---

**No. 2654.** लिङ्गानुशासनोद्धारः। Substance, country-made paper, 14 × 6 inches. Folia, 14. Lines, 14 on a page. Extent, 906 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Generally correct. Sanskrit.

**Liñgánuśasanoddhára**. A commentary on Hemachandra's Liñgánusásana—a dictionary of the Sanskrit language. By Jayánanda Súri.

**Beginning**. श्रीसिद्धहेमचन्द्रव्याकरणनिवेशितानि लिङ्गानि।
आचार्य्यो हेमचन्द्रो विवृणोत्यहं नमस्कृत्य॥

पुमिति। कटणथपभमयषस इत्येतदन्तं सन् पुंलिङ्गः स्यात्। काद्योऽकारान्ता गृह्यन्ते। इत्यादि।

**End**. अत्र यदुक्तं लिङ्गस्वरूपं तदङ्कलं ज्ञेयं तेन कठानां धर्म्म आम्नायो वा काठकं कालापकं। इत्यादि।

**Colophon**. इति लिङ्गानुशासनोद्धारः समाप्तः। परमगुरुभट्टारकप्रभुश्रीजयानन्दसूरिपादैर्विरचितः।

विषयः। हेमचन्द्रकृतलिङ्गानुशासनस्य व्याख्यानम्।

---

**No. 2655.** सप्ततिकावृत्तिः, वा कर्म्मविपाकविवृतिः। Substance, country-made paper, 14 × 4 inches. Folia, 280. Lines, 12 on a page. Extent, 12,972 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Saptatiká-vṛitti** ALIAS **Karmavipáka-vivṛiti.** A commentary on the Saptatiká-sútta—a treatise on future retributions of works done in this life. By Malayagiri.

**Beginning.** द्विनेश च+न चरप्रतापैरनन्तकालप्रचितं समन्तात्।
योऽशोषयत् कर्म्मविपाकपङ्कं देवो गुरु वोऽस्तु स वर्द्धमानः॥
ज्ञानादिगुणगुरूणां धर्म्मगुरूणां प्रणम्य पदकमलं।
कर्म्मविपाकविवृतिः स्मृतिवीजविवृद्धये विदधे॥

तदा चैवाभीष्टदेवतास्तवनादिप्रतिपादिकामिमां गाथामाह सिरिवीरेति। श्रिया सक-लचिभुवनजननचमत्कारकारिकाद—इत्यादि।

**End.** प्रकरणमेतद्विषमं सप्ततिकाख्यं हत्तिताकुशलम्।
यदि वापि मलयगिरिणा सिद्धिं वेनाश्नुता लोके॥
अर्हन्तो मङ्गलसिद्धान्मङ्गलसंयतानर्हम्।
आणिश्रिये जिनाख्यातं धर्म्मं परममङ्गलम्॥

**Colophon.** इति श्रीमलयगिरिविरचिता सप्ततिकाविवृतिः समाप्ता।

विषयः। सत्तरीसुत्ताभिधानजैनकर्म्मविपाकस्य व्याख्यानम्।

---

**No. 2656.** षोड़शविवरणम्। Substance, country-made paper, 14 × 5 inches. Folia, 18. Lines, 7 on a page. Extent, 305 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Sanskrit. Generally correct.

**Shoḍaśa-vivaraṇa.** A epitome of the leading doctrines of the Jain faith. Haribhadra Súri.

**Beginning.** प्रणिपत्य जिनं वीरं सद्धर्म्मपरीचकादिभावानाम्।
लिङ्गादिभेदतः खलु वच्ये किञ्चित् समासेन॥
बालः पश्यति लिङ्गं मध्यमबुद्धिर्विचारयति वृत्तम्।
आगमतत्त्वन्तु बुधः परीचवे सर्व्वयत्नेन॥
बालो ह्यसदारम्भो मध्यमबुद्धिस्तु मध्यमाचारः।

ज्ञेय इह तत्त्वमार्गेऽनुबन्धस्तु मार्गानुसारीयः ॥
बाह्यलिङ्गमसारं तत्प्रतिबद्धा न धर्म्मनिष्पत्तिः ।
धारयति कार्य्यवशतो यस्मादिड्म्बकोऽप्येतत् । इत्यादि ।

**End.** धर्म्मश्रवणे यत्नः सततं कार्य्यो बहुश्रुतसमीपेषु ।
हितकाङ्क्षितैर्द्वैसिंद्वैर्वचनं ननु हारिभद्रमिदम् ॥

**Colophon.** इति श्रीहरिभद्रसूरिकृतं षोड़शविवरणं सम्पूर्णम् ।

विषयः । संक्षेपेण जैनधर्म्मतत्त्वसारकीर्त्तनम् ।

---

**No. 2657.** दशवैयालिअसुत्तं, (दशवैकालिकसूत्रम् ।) Substance, country-made paper, 13 × 6 inches. Folia, 126. Lines, 4 on a page. Extent, 882 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Verse. Generally correct. Mágadhí.

**Daśavaiyália-sútta** (Sanskrit, **Daśavaikálika-sútra**). On the religious duties of Jains. By Sadyambhava Súri.

**Beginning.** धम्मो मङ्गलमुक्किट्ठं अहिंसा संजमो तवो ।
देवावितं नमसंति जस्सधम्मे सयामणो ।
जहा दुमस्स पुप्फेसु भमरे आवियइ रसं ।
तय पुप्फं किलामेइ सोयपीणेइ अप्पयं ॥ इत्यादि ।

**End.** अप्पाऊ खलु मययं रक्खियव्वो सव्विं दिएहिं सुसमाहि एहिं ।
अरक्खिउ जाइपहं उवेइ सुरक्खिउं सव्वदुहानमुच्च । इति ।

**Colophon.** इति दसवैयालियसुत्तं सम्मत्तो ॥

विषयः । ग्रन्थोऽयं दशभिरध्ययनैः गुम्फितत्वात् तथा ग्रन्थकारेण दशभिः दिनांशविशेषै-निर्म्मितत्वाच्च दशवैकालिकसूत्रेति नाम्ना परिचितः । अत्र विशेषेण साधुमार्गनिरूपणं । तत्र प्रथमेऽध्यायन्ते— अहिंसा-संयम-तपोरूपयतिधर्म्मनिरूपणं । यथा भ्रमरैः पुष्पान्यक्लिशित्वा मकरन्दं पीयते तथा साधुमार्गप्रवर्त्तमानैः यतिभिरपि गृहस्थाननभिक्लिश्यैव जीविका विधेया । एष हि तेषां परमो धर्म्मः । आत्मप्रदेशात् शुभाशुभकर्म्मपुद्गलानां दूरीकरणं धर्म्म इति तल्लक्षणं तत्प्रशंसाकीर्त्तनञ्च । २ये,—अधैर्य्यं न सेवनीयमितिनिरूपणं । जिनशासनमङ्गीकरणीयमित्यादिनिर्णयश्च । ३ये,—साधूनामाचारादिकथनं । ४र्थे,—जीवनिकायरक्षाविधिकथनं । जीवाजीवविभागकथनं । चारित्रधर्म्मविवेचनं । उपदेशधर्म्मफलादिकथनञ्च । ५मे,—साधूनामाहारशुद्धिनिरूपणं । ६ष्ठे,—साधूनामनाचरणीयकथनं । ७मे,—तेषां वाक्यशुद्धिनिरू-

पणं। ८मे,—आचाररूपनिधानकथनं। ९मे,—साधूनां विनयादिकथनं। १०मे,—भिक्षूणां गुणादिनिरूपणञ्च।

---

**No. 2658.** धातुमाला। Substance, country-made paper, 13 × 6 inches. Folia, 12. Lines, 12 on a page. Extent, 381 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Dhátumálá.** A vocabulary of Sanskrit roots with their meanings. By Hemachandra A'chárya.

**Beginning.** ॐनमः सिद्धार्हते।

भू सत्तायां, पा पाने, घ्रा गन्धोपादाने, ध्मा शब्दाग्निसंयोगयोः, ष्ठा गतिहत्तौ, म्ना अभ्यासे। इत्यादि।

**End.** ष्वष् प्रहसने, हिसुण् हिंसायां, गर्हण् विनिन्दने, सहण् मर्षणे। वङ्गल-मतं निदर्शनं परस्मैभाषा।

**Colophon.** इत्याचार्य्यश्रीहेमचन्द्रविरचिता धातुमाला समाप्ता।

विषयः। धातूनां गणभेदादिकथनपूर्व्वकमर्थनिरूपणम्।

---

**No. 2659.** सूयगडाङ्गसूत्तम, (सूत्रकृताङ्गसूत्रम्।) Substance, country-made paper, 14 × 4 inches. Folia, 384. Lines, 5 on a page. Extent, 4,018 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Generally correct. Mágadhí.

**Súyagaḍáñga-sútta** (Sanskrit, **Sútrakṛitáñga-sútra**). On sins and their retributions, illustrated by many stories and anecdotes.

**Beginning.** बुज्झिज्झत्तिति उठट्टिज्जा बन्धणं परिजाणिया।

किमाह बन्धणं वीरो किं वा जाणन्ति उठट्टई॥ १॥

चित्तमन्तमचित्तं वा परिगिज्झ किसामवि।

अन्नं वा अणुजाणाइ एवं दुक्खाणमुच्चइ॥ २॥

सयं निवायए पाणे अहवाऽन्नेहिं घायए।

हणन्तं वा णजाणाई वेरं वड्ढई अप्पणोः॥ ३॥

जेसिं कुले समुप्पन्ने जेहिं वा संवसे नरे।

समाइ लुप्पइ वाले अणे हि मुच्छिए॥ ४॥ इत्यादि।

**End.** भगवउ महावीरस्स अन्तिए चाउज्जामाउ धम्माउ पञ्च महव्वइयं सपडिक्कमणं धम्मं उपसंपज्जित्ताणं विहर इत्ति वेमि ॥

इति नालन्दइज्जं सत्तमं अज्झयणं सम्मत्तं ।

**Colophon.** इति सूयगड़ाङ्गबीयसुयक्खन्धो सम्मत्तो । इति सूयगड़ाङ्गसूत्तं ।

विषयः । सूत्रं स्वपरसमयसूचनं कृतं येन तत् सूत्रं तदेवाङ्गमिति सूत्रकृताङ्गमिति सूत्रं । तत्र प्रथमश्रुतस्कन्धस्य प्रथमाध्याये,—चार्व्वाककपिलकणादाक्षपादशौद्धोदनिजैमिनिशाङ्कर-प्रभृतिमतानुसारिषु कुमार्गप्रणेतृत्वं प्रसाध्य जैनमतस्य अभ्यर्हितत्वनिरूपणं । द्वितीये अध्याये,-स्वसमयगुणान् परसमयदोषांश्च ज्ञात्वा स्वसमये एव बोधो विधेय इति निरूपणं । तृतीये अध्याये,—अथ प्रतिबोधं प्राप्तस्य सम्यगुत्थानेन उत्थितस्यापि सतः कदाचिदनुकूलप्रतिकूलोपसर्गाः प्रादुर्भवेयुस्ते च उदीर्णाः सम्यक् सोढव्या इति प्रतिपादनं। चतुर्थे अध्याये,—संवृद्धेन स्त्रीप-रीषहस्य सम्यगेव सोढव्य इति प्रसङ्गेन स्त्रीणां दोषाकरत्वनिरूपणं । पञ्चमे अध्याये,—उपसर्ग-भीरोः स्त्रीवशगस्य नरकपातो भवति । तत्र च येन पापेन यादृशी नरकपीड़ा जायते तन्नर-कवर्णनं। तथा च यत्कर्म्म यादृशं पूर्व्वजन्मान्तरे कृतं तत् तादृशमेव संसारे अनुगच्छति एतान् नरकान् श्रुत्वा धीरो न हिंस्यात् कञ्चन प्राणिनमितिनिरूपणं । षष्ठे अध्याये,—एवमनु-कूलप्रतिकूलोपसर्गसहनेन स्त्रीवर्ज्जनेन च भगवान् महावीरो जेतव्यस्य कर्म्मणः संसारस्य वा पराभवेन जयमाहात्म्यतः तस्यैव वीरस्य विशेषेण गुणगणकीर्त्तनं। सप्तमे अध्याये,—अथ कुशील-स्तस्य संयमवीर्य्यान्तरायोदयात् तत्क्षयोपशमाच्च भवतीत्यतो वीर्य्यप्रतिपादननिरूपणं। वीर्य्य-ञ्च जीवस्य शक्तिविशेष इति निरूपणञ्च । नवमे अध्याये,—अथ साधुवीर्य्यं धर्म्मं प्रति उद्यमं कुरुते, तत्र यथावस्थितधर्म्मलक्षणकथनं । तत्र दुर्गतिगमनधरणलक्षणो धर्म्मः । स च क्षान्त्या-दिलक्षणो वा दशविध इति निरूपणं ! दशमे अध्याये,—स च धर्म्मः समाधौ सति अविकलो भवतीतिसमाधिनिरूपणं । स च द्रव्यक्षेत्रचारित्रादर्शनादिभेदादनेकधेतिनिरूपणं। एका-दशे अध्याये,—प्रशस्तज्ञानदर्शनतपश्चारित्ररूपो भावमार्गः । स एव मोक्षमार्ग इति निरूपणं । द्वादशे अध्याये,—स च मार्गः कुमार्गव्युदासेन सम्यग्मार्गता प्रतिपद्यते । अतः वैनयिकादिपा-षण्डमतनिराकरणकथनं । तत्र क्रमेण अक्रियावाद-अज्ञानवादादिखण्डनं। त्रयोदशे अध्याये—तत्त्वज्ञाननिरूपणं । चतुर्द्दशे अध्याये,—शिष्याणां गुणदोषकथनं । तत्र गुणसम्पदुपेतेन च विने-येन शिष्येण नित्यं गुणानुरूपगुरुकुलवासो विधेय इतिनिरूपणं। पञ्चदशे अध्याये,—मोक्षमार्ग-प्रसाधकरूपसम्यक्चरित्रनिरूपणं। षोड़शे अध्ययने,—उक्तेषु पञ्चदशस्वपि अध्ययनेषु ये अर्था अभिहिता विधिप्रतिषेधद्वारेण तान् तथैव आचरन् साधुर्भवतीतिनिरूपणं। अथ द्वितीयश्रु-तस्कन्धस्य प्रथमे अध्ययने,—शुद्धप्रयोगविद्या जिनस्यैव सिद्धा विज्ञानरूपा, नान्यस्य कस्यचित् । यया विद्यया तीर्थकरदर्शितया भव्यजनपौण्डरीकाः सिद्धिमुपगच्छन्तीति सोदाहरणनिरूपणं । तत्र पुष्करिणीपुण्डरीकदृष्टान्तेन तीर्थिकाः सम्यङ्मोक्षोपायाभावात् कर्म्मणां बन्धकाः प्रतिपा-

हिताः, साधवश्च सम्यग्दर्शनादिमोक्षमार्गप्रवृत्तत्वात् सदुपदेशदानेन अपरेषामपि मोचका इति निरूपणं। द्वितीये अध्ययने,—अथ स भिक्षुः द्वादशक्रियास्थानवर्ज्जकः अधर्म्मपक्षत्यागी धर्म्मपक्षस्थः त्रयोदशक्रियास्थानवर्त्ती आत्महितः सन् आत्मानं संयमेन संसारचक्रान्निष्क्रामय-तीतिनिरूपणं। तृतीये अध्ययने,—कर्म्मक्षपणार्थमुद्यतेन भिक्षुणा द्वादशक्रियास्थानर हितेन अन्त्यक्रियास्थानसेविना सदाहारगुप्तेन भवितव्यं। धर्म्माधारभूतस्य शरीरस्य आधारो भवत्याहारः। स च मुमुक्षुणा उद्देशकादिरहितो ग्राह्यः तथाहि यो यत्र उत्पद्यते स तच्छरी-राहारको भवति कदाहारगुप्तस्य कर्म्म आदत्ते, कर्म्मणा च नानाविधासु योनिषु अरघट्टघटी-न्यायेन पौनःपुन्येन पर्य्यटतीतिनिरूपणं। चतुर्थे अध्ययने,—यथा आत्मनोदण्डाद्युपघाते दुःख-मुत्पद्यते एवं सर्व्वेषामपि प्राणिनामित्यात्मोपमया तदुपघातान्निवर्त्तितव्यं। एष धर्म्मः सर्व्वापाय-त्राणलक्षणो ध्रुवोऽप्रच्युतानुत्पन्नस्थिरस्वभावो नित्य इतिनिरूपणं। पञ्चमे अध्ययने,— आचारादि-निरूपणं। षष्ठे अध्ययने अनाचारफलं ज्ञात्वा सदाचारे प्रयत्नः कार्य्य इति कथनमुखेन दृष्टा-न्ततया आर्द्रककुमारस्य उपाख्यानकीर्त्तनं। सप्तमे अध्ययने,—श्रावकविधिकथनं। तत्र राज-गृहनगरनिवासिनः सलेपाभिधानस्य गृहपतेर्वृत्तान्तकीर्त्तनं। प्रव्रज्याव्यतिरेकेणापि धर्म्मः अनुष्ठीयते इति कथनमुखेन रत्नशेखरस्य राज्ञ उपाख्यानकथनं।

---

**No. 2660.** त्रिषष्टिशलाकापुरुषचरितम्। Substance, country-made paper, 13 × 4 inches. Folia, 298. Lines, 8 on a page. Extent, 5,494 ślokas. Character, Nágara. Date, Sm. 1424. Place of deposit, A'jimganj, Ráy Dhanapat Siñh, Bahadur. Appearance, decayed and destroyed by worms. Verse. Sanskrit. Incorrect.

**Trishashṭi-śaláká-purusha-charita.** An epic poem on the being of sixty-three auspicious marks, *i. e.*, Jina. By Hemachandra Súri. The work comprises 12 cantos, and their contents are as follow :— I. Previous life of Neminátha Jina. II. Account of Vasudeva marrying, among others, the daughter of Jarásandha. III. Vasudeva's marriage with Kaṇakavatí. IV. His marriage with the daughters of snakes (*sarpa-kanyá*), *i. e.*, Nagas. V. Birth of Baladeva, Kṛishṇa, Nemi, and others. Destruction of Kañsa. Foundation of the city of Dváraká. Kuvera's gift of the S'árñga bow and other weapons to Kṛishṇa. VI. Kṛishṇa's marriage with Rukmiṇí and others. Origin of the Páṇḍavas. Marriage of Draupadí. Birth of Pradyumna. VII. Marriage of Sámba and Pradyumna. Destruction of Jarásandha. VIII. Rape of Ushá. The destruction of Váṇa. IX. Ordination of Nemi as a Jain hermit. Creation and emancipation. X. Rape of Draupadí by the

king of Amarakañka, an island. Her redemption by the Páṇḍavas. Story of Pálakopa. XI. Conflagration of Dváraká. Translation of Kṛishṇa and his family to their celestial abode. XII. Baladeva's ascent to heaven. Nemi's final emancipation (nirváṇá). The emancipation of the Páṇḍavas.

The changes in this work of the Hindu stories of the Harivañs'a are worthy of note. Coming from the pen of Hemachandra of the 10th or 11th century, they do not, however, justify any assumption of the stories having had a Jain origin, independently of the Hindu version.

**Beginning**. ॐनमो विश्वनाथाय जन्मतो ब्रह्मचारिणे ।
कर्म्मवल्लीवनोच्छेदनेमयेऽरिष्टनेमये ॥
श्रीनेमेरर्हतः कृष्णविष्णोः रामस्य सीरिणः ।
जरासन्धप्रतिहरेश्चरितं कीर्त्तयिष्यते ॥
जम्बूद्वीपे द्वीपेऽत्रैव क्षेत्रेऽत्रैवास्ति भारते ।
अचलायाः शिरोरत्ननाम्नाचलपुरं पुरं ॥
तत्राभूद्विक्रमधनाभिधानो वसुधाधरः ।
यथार्थनामा समरे विक्रमाक्रान्तशात्रवः ॥
कृतान्त इव दुष्प्रेक्ष्योऽसुहृदां सुहृदां पुनः ।
स नेत्रानन्दजननो निशाकर इवाभवत् ॥
कल्पद्रुमः प्रणयिनां वज्रदण्डश्च वैरिणां ।
चकासामास तस्योच्चैर्दोर्द्दण्डश्चण्डतेजसः ॥ इत्यादि ।

**End**. द्वाविंशोऽर्हन्नथ च नवमः शार्ङ्गभृत्सीरपाणि-
स्तद्वैरी चेत्यतुलमहसः कीर्त्तिताः पर्व्वणीह ।
चत्वारोऽपि प्रवचनदि + सम्यगुद्वीक्ष्य येषा-
मेकैकोऽपि श्रुतिपथगतो विस्मयाय त्रिलोक्याः ॥

**Colophon**. इत्याचार्य्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये अष्टमपर्व्वणि बलदेवस्वर्गगमने नेमिनिर्व्वाणपाण्डवनिर्व्वाणो नाम द्वादशः सर्गः । संवत् १४२४

विषयः । प्रथमे सर्गे,—नेमिजिनस्य पूर्व्वजन्मवृत्तान्तकीर्त्तनं । तत्र शङ्खभूपालादीनां विवरणकथनञ्च । २ये सर्गे,—वसुदेवस्य श्यामायुकोशलाविद्याधरीप्रभृतीनां तथा जरासन्धसुतायाः नन्दिसेनायाश्च पाणिग्रहणादिविवरणकथनं । ३ये सर्गे,—कुवेरमुखात् कनकवत्याः पूर्व्वजन्मवृत्तान्तं श्रुत्वा वसुदेवस्य तत्पाणिग्रहणकथनं । ४र्थे सर्गे,—वसुदेवस्य सर्पकन्यापरिणयकरण-विवरणकथनं । ५मे सर्गे,—बलदेव-कृष्ण-नेमिप्रभृतीनां जन्मवृत्तान्तकीर्त्तनं । कंसवधकथनं ।

द्वारकापुरीनिर्म्माणकथनं। कुवेरस्य कृष्णाय शार्ङ्गधनुरादिदानकथनञ्च। ६ष्ठे सर्गे,—श्रीकृष्णस्य रुक्मिण्यादिपरिणयवर्णनं। पाण्डवानामुत्पत्तिकथनं। द्रौपदीस्वयंवरवर्णनं। प्रद्युम्नस्य जन्मत-इपहरणादिकीर्त्तनञ्च। ७मे सर्गे,—शाम्बप्रद्युम्नयोर्व्विवाहवर्णनं। जरासन्धवधवर्णनञ्च। ८मे सर्गे,—उषाहरणविवरणकथनं। वाणवधवर्णनञ्च। ९मे सर्गे,—नेमिजिनस्य दीक्षाकथनं। कैवल्योत्पत्त्यादिकथनञ्च। १०मे सर्गे,—अमरकङ्कद्वीपाधिपहृतद्रौपदीहरणवृत्तान्तकथनं। पा-ण्डवादिकृततदुद्धारकथनं। पालकोपाख्यानकीर्त्तनञ्च। ११शे सर्गे,—द्वारकादाहवर्णनं। श्रीकृष्णादीनां स्वधामगमनवर्णनञ्च। १२शे सर्गे,—बलदेवस्य स्वर्गगमनकथनं। नेमिजिनस्य निर्व्वाणप्राप्तिकथनं। पाण्डवानां निर्व्वाणप्राप्तिकीर्त्तनञ्च।

---

**No 2661.** शान्तिनाथचरित्रम्। Substance, country-made paper, 13 × 4 inches. Folia, 315. Lines, 8 on a page. Extent, 5,587 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráy Dhanapat Siñh, Bahádur. Appearance, old. Prose. Sanskrit. Incorrect.

**S'ántinátha-charita.** Story of S'ántinátha, a Jina. By Bháva-chandra Súri.

**Beginning.** प्रणिपत्यार्हतः सर्व्वान् वाग्देवीं सद्गुरूनपि।
गद्यबन्धेन वक्ष्यामि श्रीशान्तिचरितं मुदा॥

सर्व्वे संसारिणो जीवा अनन्तशोऽनन्तकालं भवभ्रमणं कुर्व्वन्तः सन्ति। परन्तु येन प्राणिना क्षायिकसम्यक्त्वं यदा समुपार्ज्जितं तदा तस्य भवसंख्या स्यात्। यथा श्रीऋषभदेवेन धनसार्थवा-हभवे सुकृतपोनिर्म्मल.चाणां पवित्रचारित्राणां सत्पात्राणां शान्तिकं प्राज्यमाज्यदानं प्रददे। तत्पुण्यप्रभावात् त्रयोदशभवे—इत्यादि।

**End.** इत्थं शान्तिजिनेश्वरस्य मयकाः प्रोक्ता भवा द्वादश
आद्यद्वादशसंख्यसद्व्रतकथासम्बन्धनाबन्धुरं।
स चक्रायुधनामधेयगणभृद्व्याख्यानसंवर्द्धितं
व्याख्यातं सकलं चरित्रमपि तत् तस्यैव तीर्थेशितुः॥
यस्योपसर्गाः स्मरणात् प्रयान्ति विश्वे यदीयाश्च गुणा न+न्ति।
मृगाङ्कलक्ष्मीं कनकस्य कान्तिं सङ्घस्य शान्तिं स करोतु शान्तिः॥

**Colophon.** इति श्रीभावचन्द्रसूरिविरचिते गद्यबन्धे श्रीशान्तिनाथचरित्रे द्वादशभव-वर्णनो नाम षष्ठः प्रस्तावः।

विषयः। शान्तिनाथजिनस्य पुर्व्वजन्मद्वादशीयविवरणकथनपूर्व्वकं तस्य निर्व्वाणप्राप्ति वृत्तान्तकीर्त्तनं।

---

**No. 2662.** उपनयनकारिका । Substance, country-made paper, 8¼ × 4 inches. Folia, 2. Lines, 9 on a page. Extent, 21 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Upanayana-káriká.** A metrical version of the rules for the investiture of the sacred cord, or the sacrament of Upanayana. Anonymous.

**Beginning.** अथ उपनयनकारिका ।
आज्यसंस्कारपर्य्यन्तमुपलेपादि पूर्व्ववत् ।
परिधानं भवेदस्य वाससैवाहतेन तु ॥
भवेत् प्रावरणं वासः कृष्णाजिनमथापि वा ।
एवम्भूतं कुमारं तं कुर्य्याद्यज्ञोपवीतिकं॥ इत्यादि ।

**End.** अहःशेषं ततस्तिष्ठेत्सायंसन्ध्यामुपास्य च ।
पूर्णपात्रनिधानान्तमुपलेपादि पूर्व्ववत् ॥

विषयः । यज्ञोपवीतस्य इतिकर्त्तव्यताकथनं ।

---

**No. 2663.** रामायणरहस्यम्, वा रामहृदयम् । Substance, country-made, paper, 9 × 3¾ inches. Folia, 5. Lines, 13 on a page. Extent, 103 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Rámáyaṇa-rahasya** ALIAS **Rámahṛidaya.** A copy of the work noticed under No. 2288, (VII, p. 59), but the readings are different.

**Beginning.** बालावबोधकमनल्पधियामपूर्व्व-
व्युत्पत्तिहेतुमिदमन्वययोजनाभिः ।
साकाङ्क्षशब्दविहतार्थकरं महार्थं
रामायणस्य हृदयं विदधेऽग्निवेश्यः ॥
आरायणादिशिष्याणामवबोधविधित्सया ।
चक्रे रामायणेऽशेषदुर्ब्बोधपददीपिका ॥ इत्यादि ।

**End.** अग्निवेश्येन मुनिना विहितं बालबुद्धये ।
रामायणीयमखिलं रहस्यमिदमुत्तमं ॥
एकोनषष्टिश्लोकात्मसारं रामायणोद्भवं ।
यः शृणोति नरस्तस्य भुक्तिमुक्तिर्न दूरतः ॥

**Colophon.** इत्यग्निवेश्यमुनिकृतरामायणरहस्यम् समाप्तम् ।

विषयः । पञ्चदशवर्षीयो रामचन्द्रः षड्वर्षदेशीयां जानकीं परिणीतवानितिकथनं । एवंक्रमेण रामस्य सप्तविंशतिवर्षे यौवराज्याभिषेकप्रस्तावकथनं । वनगमन-पञ्चवटीवास-सीताहरण-समुद्रबन्धन-दशाननहननादिकालनिरूपणं । क्वचित् तिथिविशेषादिकथनञ्च ।

---

**No. 2664.** द्वादशाब्दादूर्द्ध्वं प्रवासादागतविधिः (प्रयोगसहितः ।) Substance, country-made, paper, $10\frac{1}{2} \times 4\frac{1}{4}$ inches. Folia, 2. Lines, 11 on a page. Extent, 49 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Text. Verse; ceremonial directions in prose. Incorrect.

**Dvádaśábdádúrdha-pravásádágata-vidhi.** Rites to be performed on return home after 12 years' sojourn in a foreign country. By Garga.

**Beginning.** अथ द्वादशाब्दादूर्द्ध्वं सुहृदवलोकनविधिः ।

दम्पती पितृपुत्रौ च स्वसारौ भ्रातरौ तथा ।
पितृव्यमातुलौ चैव दौहित्रो भागिनेयकः ।
पुत्रिकापितरौ चैव भ्रातरौ भगिनी तथा ।
द्वादशाब्दे व्यतीते तु दूरदेशं गते यदि । इत्यादि ।

**End.** इति स्तुतिः ।

इत्थं यः कुरुते विप्र तस्यानिष्टं न विद्यते ।
आयुष्कामो नरस्तेमामकृत्वा नावलोकयेत् ॥
पूर्व्वावलोकितानान्तु विधिरेष उदाहृतः ।
न चैवादृष्टपूर्व्वाणामिति प्राहुर्मनीषिणः ॥

**Colophon.** इति गर्गसंहितायां द्वादशादब्दादूर्द्ध्वं प्रवासादागतविधिः ।

विषयः । द्वादशाब्दान् यावदप्राप्तप्रवृत्तिकानां पित्रादीनां दृष्टचराणां प्रथमसन्दर्शनकाले दुरदृष्टनिवारणाय शान्तिविधिकथनं । तत्प्रयोगकथनञ्च ।

---

**No. 2665.** कौपीनपञ्चकम् । Substance, country-made, paper, $8 \times 4$ inches. Folia, 2. Lines, 6 on a page. Extent, 9 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Kaupina-panchaka**. Moral obligations of Sannyásis. By S'a ṅkara A'chárya. Asceticism in every respect is what is most insisted upon.

**Beginning**. वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः ।

निःशोकवन्तः करुणैकवन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ १ ॥ इत्यादि ।

**End**. पञ्चाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः ।

भिक्षाशिनो दिक्षु परिभ्रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ ५ ॥

**Colophon**. इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशङ्कराचार्य्यविरचितं कौपीनपञ्चकं समाप्तम् ।

विषयः । सन्न्यासिभिः सर्व्वदा वीतरागैर्भवितव्यमित्युपदेशकथनं ।

---

**No. 2666**. चमत्कारचिन्तामणिः, अन्वयार्थदीपिकासहितः । Substance, country-made paper, $10\frac{1}{2} \times 4\frac{3}{4}$ inches. Folia, 29. Lines, 8—10 on a page. Extent, 705 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Text, verse; commentary, prose. Incorrect.

**Chamatkára-chintámaṇi,** with a commentary entitled *Anvayártha-dípiká*. On horoscopy. Text, by Náráyaṇa A'chárya; commentary by Dharmeśvara.

**Beginning**. टीकायाः,—

अथ लग्नभावकुण्डलिकायां जातकोक्तभावफलज्ञानाय चमत्कारचिन्तामणिं विवक्षुर्नारायणाचार्य्यः प्रारिप्सितनिर्विघ्नसमाप्त्यर्थं श्रीकृष्णप्रणामरूपं मङ्गलाचरणं शिष्यशिक्षायै निबध्नाति लसत्पीतपट्टाम्बरं कृष्णचन्द्रं मुदा राधया--इत्यादि ।

मूलस्य,—

क्वणत्किङ्किणीजालकोलाहलाढ्यं लसत्पीतवासोवसानं चलन्तं ।

यशोदाङ्गणे योगिनामप्यगम्यं भजेऽहं मुकुन्दं घनश्यामवर्णं ॥ इत्यादि ।

**End**. मूलस्य,—

शिखी+ध्य गावो+गुह्याङ्घ्रिनेत्रे बजा पीड़नं मातुलाग्ने + + मे ।

सदा राजराजतुल्यं नरं सव्ययं तद्रिपूणां विनाशं खेऽसौ करोति ॥ इति ।

टीकायाः,—

अन्येनैव समर्था भवन्ति—इति विशेषः ।

चमत्कारचिन्तामणेश्चारटीकां चकारान्वयार्थप्रबोधप्रदीपां ।

सुदेवज्ञधर्मेश्वरो मालवीयः प्रमोदाय भूदेवविद्वज्जनानां ॥

**Colophon.** इति श्रीचमत्कारचिन्तामणेरन्वयार्थदीपिकायां ग्रहभावफलाध्यायः।

विषयः। ग्रहाणां भावविशेषेषु जातस्य शुभाशुभफलकीर्त्तनम्।

---

**No. 2667.** पवनपावनप्रयोगः। Substance, country-made paper, 8 × 4 inches. Folia, 6. Lines, 8 on a page. Extent, 82 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Pavana-pávana-prayoga.** Rules for performing the rite called *Pavana-pávana.* Anonymous.

**Beginning.** ॐ देशकालौ सङ्कीर्त्य पवनपावनसूक्तैरात्मानं पावयिष्ये। अथाचार्य्य ऋत्विग्यजमानैः सह एकविंशतिदर्भपिञ्जूलान्यादाय सप्तभिः सप्तभिः पवयति—इत्यादि।

**End.** यचेदं ब्रह्म क्रियते परिधिर्जीवनायकमपनः शोशुचदघं। पुरुषसूक्तं पठित्वा ॥

**Colophon.** इति पवनपावनः समाप्तः।

विषयः। पवनपावनशान्तिप्रयोगकथनं।

---

**No. 2668.** मेघमाला वा रत्नमाला, मयूरचित्रप्रकरणम्। Substance, country-made paper, $9\frac{1}{2}$ × 4 inches. Folia, 12 Lines, 10 on a page. Extent, 563 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Meghamálá** ALIAS **Ratnamálá,** ALIAS **Mayúrachitra-prakaraṇa.** Aeromancy, or divination from appearances in the air and clouds. Anonymous.

**Beginning.** अथातः संप्रवक्ष्यामि फलं योगसमुद्भवं।
मासवारतिथीनाञ्च सम्यग्ज्ञानप्रकाशकं ॥

प्रतिपदि रविवारश्चैत्रमासे यदि स्यान्न भवति बहुवृष्टिर्दुःखिता लोकसङ्घाः। अमृतकिरणवारो + + + वाक्पतीनां भवति ननु धरित्री शस्यतोयाभिपूर्णा। इत्यादि।

**End.** गुरुशुक्रस्तथा चन्द्रो ये ते वारा यदा भवेत्।
सुभिक्षं जायते तत्र उत्साहश्च गृहे गृहे ॥

विषयः। मासतिथिवारविशेषे मेघादिदर्शनेन भाविवर्षणादिज्ञानकथनं सुभिक्षदुर्भिक्षादिपूर्व्वलक्षणकथनञ्च।

**No. 2669.** उद्धारकोशः वा कोशध्याननिर्णयः। Substance, country-made paper, 5 × 2¾ inches. Folia, 68. Lines, 7 on a page. Extent, 526 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Uddhára-kośa** ALIAS **Kośadhyána-nirṇaya.** The secret mantras of the ten great goddesses, *Mahávidyás,* and their attendants. By Dakshiṇámúrti Muni. Secret mantras are usually divided into two classes; 1. *V'ija mantras* or mystic syllables which are alleged to have the inherent power of insuring the grace of the god or goddess to whom they are addressed; 2nd, *dhyána* or stanzas which describe the personal forms in which the divinities are to be reflected upon. Meanings of both these classes of mantras are explained in the work. This seems to be a separate recension of No. 2343 of Vol. VII, p. 114.

**Beginning.** उद्धारकोशोपयोगी उद्धारकोशोक्तो मन्त्रप्रकाशः। श्रीं० ह्रीं० क्लीं० ऐं० सौं० ॐ ह्रीं० श्रीं० क्लीं० १५४६४ सौं० ऐं० क्लीं० ह्रीं० श्रीं० इति चिपुर्य्याः। इत्यादि।

**End.** उभौ तावम्बिका देवी देवेशश्चन्द्रशेखरः।

**Colophon.** इति श्रीदक्षिणामूर्त्तिमुनिविरचिते उद्धारकोशे सकलागमसारे षोड्श-देवीसप्तकुमारनवग्रह — — — ध्याननिर्णयो नाम सप्तमःकल्पः।

विषयः। दशमहाविद्यामन्त्रोद्धारविधिकथनं। तत्सखीनां तत्परिवाराणाञ्च मन्त्रोद्धा-रादिकथनं। दशमहाविद्यादीनां ध्यानकथनञ्च।

---

**No. 2670.** केशवीशिक्षाव्याख्या, मूलसहिता। Substance, Foolscap paper, 8 × 6¼ inches. Folia, 9. Lines, 10 on a page. Extent, 156 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**Keśaví-śikshá-vyákhyá.** A commentary on the Keśaví-śikshá, a treatise on Phonology of the Mádhyandiní Sákhá of the Yajur Veda. Anonymous. The last has been noticed under No. 1238, and a commentary under No. 1340 (*ante* Vol. III. pp. 204—340).

**Beginning.** अथातो अथातः केशवीशिक्षां व्याख्यास्यामः

नत्वा गणपतिं वेदपरिभाषाङ्कसूचकं ।
उच्यते केशवेनेदं वेदाध्यायिसुखाप्तये ॥
तत्रादौ वेदपरिभाषाया अङ्कानां नवानां सूत्राणां मध्ये येन-सूत्रेण इत्यादि ।

**End.** ह्रस्वोदात्तादिभिर्भेदैर्हस्व+ स्वरलक्षणं ।
शिक्षादिभिः षडङ्गैश्च विज्ञेयं वेदपाठकैः ॥

**Colophon.** इति केशवकृतकारिका समाप्ता ।

विषयः । यजुर्वेदमाध्यन्दिनीशाखीयशिक्षायाः केशवनिर्म्मिताया व्याख्यानम् ।

---

**No. 2671.** बुधस्मृतिः । Substance, country-made paper, 8 × 7½ inches. Folia, 2. Lines, 10 on a page. Extent, 30 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Budha Smṛiti.** An original text of the Smṛitis. By Budha. Contents: Nature of religious duty, investiture with the sacred cord, investiture with the sacred cord made of deer skin, the use of the Gáyatrí, marriage, qualities of brides, the sacrament of conception, domestic duties, acceptance of alms, profession, asceticism, hermitage, and duties of kings.

**Beginning.** अथातो बुधधर्म्मशास्त्रं व्याख्यास्यामः । श्रेयोऽभ्युदयसाधनो धर्म्मः । गर्भाष्टमे ब्राह्मणो वसन्त आत्मानमुपनयेत् । एकादशे क्षत्रियो ग्रीष्मे । इत्यादि ।

**End.** गृहीत्वा देवब्राह्मणपूजनं । एवं कुर्व्वन् दृष्टमदृष्टञ्च लभेतेति ।
इति बुधप्रोक्तं धर्म्मशास्त्रम् ।

**Colophon.** इति श्रीबुधप्रोक्ता बुधस्मृतिः समाप्ता ।

विषयः । धर्म्मलक्षणकथनं । उपनयनविधिकथनं । मेखलाजिनादिधारणविधिकथनं । सावित्रीवेदव्रतादिविधिकथनं । उद्वाहविधिकथनं । कन्यानिरूपणं । गर्भाधानादिविधिकथनं । गृहस्थकर्म्मविधिकथनं । प्रतिग्रहादिविधिकथनं । वृत्तिनिरूपणं । वानप्रस्थविधिकथनं । पारिव्रज्यविधिकथनं । राजधर्म्मकथनञ्च ।

---

**No. 2672.** स्वराङ्कुशः, (सटीकः) । Substance, country-made paper, 8 × 7 inches. Folia, 13. Lines, 10 on a page. Extent, 243 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Text, verse; Commentary, prose. Incorrect.

**Svaráñkuśa,** with a commentary. A treatise on the intonation of the Ṛig Veda according to the school of A'svaláyana. By Jayanta Svámí. This work has been already noticed under No. 1235 (III, p. 202) but the commentary attached to this codex is new.

**Beginning.** हेरम्बं चण्डिकां नत्वा शम्भुं सूर्य्यं हरिं गुरुम्।
सरस्वतीं कविवरान् वक्ष्येऽहं स्वरनिर्णयम्॥
अहं जयन्तस्वामी स्वरनिर्णयं वक्ष्ये इत्यन्वयः। स्वराणां स्वरेषु स्वरैर्वा निर्णयस्तं। इत्यादि।

**End.** जयन्तस्वामिना प्रोक्ता श्लोकानामेकविंशतिः।
स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये॥
स्पष्टोऽर्थः। बह्वृचस्वरसिद्धये इत्यपि क्वचित्—तदा तु षष्ठीतत्पुरुषः कर्त्तव्यः। प्रकृत-शब्दस्याकारान्तो बोध्यः। बह्वृचा आश्वलायना इत्यर्थः। स्वरसिद्धिस्तच तत्साधनिकेति बोध्यम्।

**Colophon.** इति श्रीस्वराङ्कुशः समाप्तः।

विषयः। आश्वलायणीयऋक्संहितायां,—उदात्तानुदात्तस्वरितस्वराणामवान्तरभेदकथनपूर्व्वकं तत्तत्स्थाननिरूपणादिकथनं।

---

**No. 2673.** तर्ककौमुदी। Substance, country-made paper, 11 × 6 inches. Folia, 13. Lines, 16 on a page. Extent, 468 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Tarka-kaumudí.** Explanations of the categories of the Vaiśeshika system. By Laugákshí-bháskara. Hall's Contributions, p. 78.

**Beginning.** श्रीवासुदेवं नवनीरदाभं रमाधरालङ्कृतपार्श्वभागम्।
मत्स्यादिरूपैः कृतलोकतोषं विद्यानिदानं परमं नमामि॥
अक्षपादमुनिं नत्वा कणादञ्च ततः परम्।
लौगाक्षिणा भास्करेण तन्यते तर्ककौमुदी॥
सप्ताभिधेयाः पदार्थास्ते च द्रव्यगुणकर्म्मसमवायसामान्यविशेषाभावाः सप्तैव। तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव। इत्यादि।

**End.** विद्भास्करशर्म्मा + बालव्युत्पत्तिसिद्धये।
यथाक + दिसिद्धान्तामकरोत् तर्ककौमुदीम्॥

**Colophon.** इति तर्ककौमुदी समाप्ता।

विषयः। द्रव्यगुणकर्म्मसामान्यविशेषसमवायाभावानां वैशेषिकोक्तपदार्थानां स्वरूपादि-निरूपणम।

---

**No. 2674.** काव्यामृततरङ्गिणी, (काव्यप्रकाशखण्डनम्।) Substance, country-made paper, 10 × 4 inches. Folia, 9. Lines, 11 on a page. Extent, 365 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Kávyámrita-taranginí** ALIAS **Kávya prakáśa-khandana,** A criticism on the 7th book of Mammata Bhatta's Kávyaprakáśa, a treatise on rhetoric. The codex is incomplete, and the author's name has not been made out.

**Beginning.** (अथ काव्यामृततरङ्गिणी प्रारभ्यते।)

कमपि प्रतिबन्धमन्धंकरणमलङ्कारदत्तचित्तानाम्।
तोषाय तार्किकाणां करवेश्वरवैरिणं नत्वा॥
पररचितकाव्यकण्टकखण्डनशततांण्डवं कुर्म्मः।
कवयो + + यथा स्वैरं खेलन्तु काव्यगहनेषु।

तत्रादावनुवादपूर्व्वकं काव्यखण्डनमारभ्यते। नियतोति। नियतिरदृष्टं—इत्यादि।

**End.** अत्र जन्तुपदमदाहृत्ले प्रयुक्तं तत्र च नाभिधायकमिति। तदपि न चात्र तात्पर्य्यानुपपत्त्या लक्षणया—इत्यतः खण्डितम्।

विषयः। मम्मटभट्टकृतकाव्यप्रकाशस्य सप्तमोल्लासीयकियदंशपर्य्यन्तं दोषप्रदर्शनेन खण्डनम्।

---

**No. 2675.** विवरणप्रमेयसङ्ग्रहः। Substance, country-made paper, 14 × 3 inches. Folia, 137. Lines, 8 on a page. Extent, 3,510 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Vivarana-prameya-sangraha.** A different recension of the work noticed under No. 48, Vol. I, p. 28.

**Beginning.** आत्मा श्रोतव्य इत्यस्य विधेर्वेदान्तवाक्यतः।

विचारो विषयः साक्षात् स निरूप्योऽत्र वर्णके॥
वेदान्तव्यवधानेन ब्रह्मैक्यं विषयो विधेः।
निरूपितः स पूर्व्वस्मिन् वर्णके स प्रयोजनः॥
वेदान्ता यदि शून्याः स्युर्विषयेण फलेन च।
तदा दूरे तद्विचारोऽतस्तयोः पूर्व्वमीरणम्॥
सम्भाविते विचारेऽथ पूर्व्वमीमांसया + +।
गते न वेति सन्देहे निर्णयोऽत्राभिधीयते॥

ननु वेदाम्नानामर्थनिर्णयाय न्यायकलापोऽपेक्षितः । स च अथातो धर्म्मजिज्ञासेति सूत्रैः स + तः । न च विधिवाक्यार्थमात्रस्य तत्र निर्णयः प्रवृत्तः—इत्यादि ।

**End.** यद्विद्यातीर्थगुरोः शुश्रूषान्या न रोचते तस्मात् ।
अस्त्वेषा भक्तिफला श्रीविद्यातीर्थपादयोः सेवा ॥

**Colophon.** इति श्रीविवरणप्रमेयसङ्ग्रहे चतुर्थसूत्रे द्वितीयवर्णकं समाप्तं ।
समाप्तश्चायं विवरणप्रमेयसङ्ग्रहः ।

विषयः । (प्रथमं खण्डितम् ।) आत्मा वा अरे श्रोतव्य इत्यादिविधिविमर्शनमुखेन तत्त्व-वेदस्य विधिमात्रपरत्ववादनिरसनं । उत्तरमीमांसाया आरम्भप्रयोजनकथनप्रसङ्गेन पूर्व्वमीमांसायाः क्रमेण द्वादशाध्यायविवरणकथनं । विधिस्वरूपादिविवेचनं । वेदलक्षणादिनिरूपणं । तत्प्रामाण्यकथनं । पूर्व्वमीमांसायां शरीरेन्द्रियसाध्या विधिभेदा निरूपिताः । उत्तरमीमांसायान्तु मानससाध्यो विधिभेदो निरूपित इति तयोः पौर्व्वापर्य्यसामञ्जस्यकथनं । ब्रह्मसूत्रचतुःसूत्र्यां शाङ्करमतेन पदार्थनिरूपणञ्च ।

---

**No. 2676.** दमयन्तीकथाविवृतिः । Substance, country-made paper, 14 × 5 inches. Folia, 370. Lines, 11 on a page. Extent, 9,640 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñha, Bahádur. Appearance, old. Prose. Generally correct.

**Damayantí-kathá-vivṛiti.** A commentary on Trivikrama Bhaṭṭa's romance called Damayanti-kathá. By Guṇavinaya-Gaṇi, disciple of Jayasoma Gaṇi, who was a disciple of Pramodamáṇikya Gaṇi. See No. 68, Vol. I, p. 38, or No. 1412, Vol. IV, p. 33.

**Beginning.** ध्यात्वा सरस्वतीं देवीं विबुधानन्ददायिनीं ।
सुवर्णां पूर्णरूपां तां — — — — — तां ।
— — — — — — — — — — — — ॥
कियत्पदानां यद्यपिनिन्द्यां विवृतिं चकार ।
तथापि तच्छेषपदार्थसार्थतां प्रकाशनात् तां विवृणोमि चम्पूं ॥

क्वचित्पुरे वरेण्ये पुण्यमतिभाक् प्राक्प्रबोधितसकलशास्त्रोपनिषत्कमलो विमलो ध्वस्तसमस्ततमःप्रसर आदित्य इव नेमादित्यो द्विजो बभूव । तस्य सुतः त्रिविक्रमः समजनिष्ट गरिष्ठः अन्यदा हि स्वपितरि स्वबन्धुविवाहादिप्रयोजने वहिर्ग्रामं गते समाजगाम मतिमान् कश्चिदपरस्मात्पुरे विद्वान् । तेन + + + न्वेषिणावसरं प्राप्य नृपसदसि प्रोचे, राजन् मया सार्द्धं न कोऽपि वादं कर्त्तुमलं । यदि पुनः श्रीमतां पुरे कश्चिद् विपश्चित् स्यात् तदा मया सह सम-

ज्ञात् इतप्रतिपचवादो वाद: कार्य्यतां — — — — — — — शङ्करमेव स्तुवन्नाह—जयतीत्यादि। चन्द्रमौलिः सुधांशुशेखरः जयति। इत्यादि।

**End.** भैमीमुखपुनरवलोकने च सङ्गो विद्यते यस्यासौ उभयसङ्गी। अत इति ठनावितीनिर्मलर्थे। ग्रन्थान्तरे अतिविदग्ध इति पाठः स च स्पष्ट एव॥

**Colophon.** इति वाचनाचार्य्यश्रीमच्छ्रीप्रमोदमाणिक्यगणिशिष्यश्रीजयसोमगणितच्छिष्यपण्डितश्रीगुणविनयविरचितायां श्रीत्रिविक्रमभट्टविरचितदमयन्तीकथाविवृतौ सप्तम उच्छ्वासः समाप्तः।

विषयः। त्रिविक्रमभट्टकृतदमयन्तीकथाभिधानचम्पूकाव्यस्य व्याख्यानम्।

---

**No. 2677. क्षेत्रसमासटीका।** Substance, country-made paper, 12 × 5 inches. Folia, 174. Lines, 16—17 on a page. Extent, 9,126 ślokas. Character, Nágara. Date, Sм. 1700. Place of deposit, Ájimganj, Ráya Dhanapat Siñha, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Kshetra-samása-ṭíká.** A commentary on the *Kshetra-samása*, a treatise on mensuration by Jinabhadra Gaṇi. By Malaya Giri. This is distinct from No. 2640, *ante*, p. 101.

**Beginning.** जयति जिनवचनमवितथमसितगम्भीरार्थमखिलनयकलितं।
अजितं परतीर्थिगणैः शिवसुखफलदायि परमशिवं॥
कलिकालेऽपि यथास्थितजिनसिद्धान्तप्रकाशकरणेन।
जयति भरतैकदीपो जिणभद्रगणिः क्षमाश्रमणः॥
विवृणोमि यथाशक्ति क्षेत्रसमासं समासतः स्पष्टं।
यदवगता मन्दा अपि जायन्ते श्रुतविदः परमाः॥

इह जिनभद्रगणिः क्षमाश्रमणो मन्दमेधसामवबोधाय सकलजम्बूद्वीपप्रज्ञप्त्यादिशास्त्रसंक्षेपसमुद्दिधीर्षुकामः अविघ्नेनेष्टप्रसिद्ध्यर्थमिष्टदेवतानमस्कारं प्रेक्षवतां प्रवृत्त्यर्थमभिधेयादिकं च प्रतिपादयिषुरिदमाह नमिऊण—इति।

**End.** यदगदितमल्पमतिना जिनवचनविरुद्धमत्र टीकायां।
विद्वद्भिस्तत्सर्वैः प्रसादमाधाय तत् शोध्यं॥
इममतिगम्भीरतरं क्षेत्रसमासं विवृण्वता कुशलं।
यदवापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः॥

**Colophon.** इति श्रीमलयगिरिविरचितायां क्षेत्रसमासटीकायां पुष्करवरद्वीपसमुद्रपञ्चमोऽधिकारः समाप्तः। संवत् १७००

विषयः। जिनभद्रगणिकृतक्षेत्रसमासाभिधानग्रन्थस्य व्याख्यानम्।

**No. 2678.** नन्द्यध्ययनटीका। Substance, country-made paper, 14 × 5 inches. Folia, 78. Lines, 22 on a page. Extent, 7,672 ślokas. Character, Nágara. Date, SM. 1498. Place of deposit, A'jimganj, Ráya Dhanapat Siñha, Bahádur. Appearance, old. Prose. Generally correct.

**Nandyadhyayana-ṭíká.** A commentary on a treatise for the performance of the rite called Nandyadhyayana. By Malaya Giri.

**Beginning.** जयति जगद्दे + + + + + म + + त तिमिरं।
रविविम्ब + + + + स्थित परि + + काशं जिनेश्वचः।
इह सर्व्व+सार + + न जन्तुना नरकतिर्य्यङ्नरामरगतिनिबन्धनविविधशरीर-मानसानेकदुःखोपनिपातपीड़ितेन (पीड़ानिर्व्विद्दतः) संसारपरिजिहीर्षया जन्मजरामरण-रोगशोकाद्यशेषोपद्रवासंस्पृष्टपरमानन्दरूपनिःश्रेयसपदमधिरोढ़ुकामेन तद्वाप्तये स्वपरसम-मानसीभूय स्वपरोपकाराय यतितव्यं। तत्रापि महत्यामाशयविशुद्धौ परोपकृतिः कर्त्तुं शक्यते, इत्याशयविशुद्धिप्रकर्षसम्पादनाय विशेषतः परोपकारे यत्न आस्थेयः। परोपकारश्च द्विधा। द्रव्यतो भावतश्च। तत्र द्रव्यतो विविधान्नपानधनकाञ्चनप्रदानादिजनितः। इत्यादि।

**End.** वक्तुर्थमल्पशब्दं नन्द्यध्ययनं विवृता कुशलं।
यद्वापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः॥
अर्हन्तो मङ्गलं मे स्युः सिद्धाश्च मम मङ्गलं।
साधवो मङ्गलं सम्यक् जैनो धर्म्मश्च मङ्गलं॥

**Colophon.** इति श्रीमलयगिरिसूरिविरचिता नन्द्यध्ययनटीका समाप्ता। संवत् १४९८।

विषयः। नन्द्यध्ययनसूत्रस्य व्याख्यानम्।

---

**No. 2679.** समयसारप्रकरणम्। Substance, country-made paper, 13 × 5 inches. Folia, 9. Lines, 11 on a page. Extent, 268 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanspat Siñha, Bahádur. Appearance, new. Prose. Incorrect Mágadhí.

**Samayasára-prakaraṇa.** An epitome of Jain metaphysics. Anonymous.

**Beginning.** संघं नमोक्खमक्खंति च उवं गामि उत्तमं।
सुहंज उतिवं गामि दिट्ठं ए गतिच्चं नउ॥
धम्माउ देमणि उलोपमं जीवासमच्छिउ०।
पुग्गकम्म भरे+०ति सुद्दाभासेण गव्विया॥ इत्यादि।

**End.** लोआणदेव वंदव्व विथापउ मद्दाजिणे ॥
देवाणंद समुणद देउसयं सिवं दिउ ॥

**Colophon.** इथ आराहणाविराहणाणलणिरूवणोनाम समयसारस्म दसमो अच्काउ। इति समयसारप्रकरणं समाप्तं ।

विषयः । संचेपेण जीव-अजीव-आश्रव-सम्बर-बन्ध-निर्ज्जर-मोचरूपसप्तपदार्थनिरूपणं। तीर्थसिद्धादिनिरूपणञ्च ।

---

**No. 2680.** प्रक्रियाभूषणम् । Substance, country-made paper, 11 × 6 inches. Folia, 61. Lines, 15 on a page. Extent, 2108 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rayá Dhanapat Siñha, Bahádur. Appearance, new. Prose. Incorrect.

**Prakriyá-bhúshaṇa.** An elementary grammar of the Sanskrit language. By S'rínivásadása.

**Beginning.** श्रीशं नत्वा गुणावासं क्रियते मुग्धसंविदे ।
श्रीश्रीनिवासदासेन प्रक्रियाभूषणं गिरः ॥

अ इ उ ऋ ऌ समानाः । अनेन क्रमेणैते वर्णा ज्ञेयास्ते च समानसंज्ञाः स्युः । नैतेषु सूत्रेषु सन्धिः अविवचितत्वात् । विवचितस्तु सन्धिः स्यात् । इत्यादि ।

**End.** लोकाच्छेषस्य सिद्धिर्ज्ञेया । यथामान्तरादेः ॥
+ + रामानुजाचार्य्यसमाश्रयणशालिना ।
श्रीश्रीनिवासदासेन प्रक्रियाभूषणं कृतं ॥
मुग्धज्ञानोदयायेदं मोदाय च मणीषिणां ॥
यदत्र नास्ति विद्वद्भिस्तं लोकेष्ववगम्यतां ।

**Colophon.** इति श्रीश्रीमन्नारायणचरणनलिनद्विरेफाणां प्रतिवादीभकेशरिणां श्रीमद्वेङ्कटाचार्य्याणां चरणारविन्दभ्रमरायमाणमानसेन श्रीश्रीनिवासदासेन कृतं प्रक्रियाभूषणं समाप्तम् ।

विषयः । बालानां सुखबोधाय संचेपेण सोदाहरणव्याकरणप्रक्रियाकथनम् ।

---

**No. 2681.** शीलचम्पकमाला । Substance, country-made paper, 12 × 5 inches. Folia, 16. Lines, 8 on a page. Extent, 384 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñha Bahádur. Appearance, fresh. Verse. Incorrect Sanskrit.

**S'íla-champakamálá.** On good behaviour, illustrated by a story of one Lalitáñga, king of Vitala. Anonymous.

**Beginning.** दानं निर्द्दविणे भुन्ना नाराद्धुं किल शक्यते ।
वाह्यहेलनपेचं तत् तच्छीलं परिशीलाताम् ॥
भो भव्या भवपाथोधेः परं कूलं यदीश्वरः ।
समाश्रयत तच्छीलं पोतज्ञाननियामकं ॥ इत्यादि ।

**End.** दिव्यौदारिकभेदभ्रन्निगदितं यस्मै धनं +द्वचः
कार्यैस्तन्न करोति कारयति नो नो वानुजानाति च ।
इत्यष्टादशभेदमिन्दुविमलं यो ब्रह्म धत्ते दृढं
सोत्कण्ठं खमुखश्रिया परमया धीमांस्ततोऽन्विष्यतां ॥

**Colophon.** इति श्रीशीलचम्पकमाला समाप्ता ।

विषयः । साधुशीलस्य प्रशंसाकथनपूर्व्वकं शीलमेव परम्परया निर्व्वाणप्राप्तिनिदानमिति निरूपणं । अत्र विशालनगराधिपतेः ललिताङ्गाभिधेयस्य नरपतेरुपाख्यानकीर्त्तनं ।

---

**No. 2682.** मूत्रपरीक्षा । Substance, country-made paper, 12 × 5 inches. Folia, 2. Lines, 6 on a page. Extent, 26 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Sanskrit.

**Múttra-paríkshá.** On the diagnosis of disease by the examination of the urine of the patient, and the various processes to be followed in making such examination. Anonymous.

**Beginning.** श्रीमत्पार्श्वजिनाधीशं केवलज्ञानभास्करं ।
प्रणम्य हृदये ध्यात्वा वक्ष्ये मूत्रपरीक्षणं ॥
गृहीत्वा रोगिणो मूत्रं सूर्य्यतापेषु धारयेत् ।
तस्य मध्ये क्षिपेत् तैलं तन्मूत्रस्य परीक्षणं ।
यदा विकाशमाप्नोति तदा साध्यं विनिर्द्दिशेत् ॥
विन्दुरूपेण मध्यस्थमसाध्यं परिकीर्त्तयेत् । इत्यादि ।

**End.** मूत्रमध्ये यदा तैलं नराकारं प्रजायते ।
ग्रहदोषं विजानीयाद्देव्यादोषं तथैव च ॥
मूत्रेण दृश्यते तैलं मस्तकद्वयसंयुतं ।
+ + + तयो दोषा ध्रुवं ज्ञेया विचक्षणैः ॥

**Colophon.** इति मूत्रपरीक्षा समाप्ता ।

विषयः । मूत्रपरीक्षणेन रोगस्य साध्यासाध्यत्वादिनिरूपणम् ।

---

**No. 2683.** अजीर्णमञ्जरी, वा अजीर्णरसमञ्जरी। Substance, country-made paper, 11 × 6 inches. Folia, 6. Lines, 7 on a page. Extent, 88 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Sanskrit. Generally correct.

**Ajírṇa-manjarí** ALIAS **Ajírṇa-rasamanjarí**. A treatise on dyspepsia and its treatment. Anonymous.

**Beginning.** श्रीमदायुर्व्वेदाग्रणीं नमस्कृत्य ग्रन्थप्रारम्भे।
अजीर्णरसमञ्जरीयं वच्येऽहं लोकसुखहेतोः॥
अजीर्णप्रभवा रोगास्तदजीर्णं चतुर्व्विधं।
आमः विपक्कं विष्टब्धं रसशेषं चतुर्थकं॥
आमे च सद्य उद्गारा विपक्के उदरे व्यथा।
विष्टब्धे चाङ्गभङ्गः स्याद्रसशेषे विजृम्भिका॥ इत्यादि।

**End.** एतन्महाजीर्णविषापनोदा
जायाच्चिरायाम्रतमञ्जरीयं।
सत्यद्य + नन्दमयी + + ता
+ + इवैनामवधारयन्तु॥

**Colophon.** इत्यजीर्णमञ्जरी समाप्ता।

विषयः। अजीर्णजनितरोगविशेषकथनपूर्व्वकं तत्र तत्र भैषज्यविधानकीर्त्तनम्।

---

**No. 2684.** कालज्ञानम्, हिन्दीभाषाव्याख्यासहितम्। Substance, country-made paper, 11 × 5 inches. Folia, 20. Lines, 15 on a page. Extent, 675 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Sanskrit. Generally correct.

**Kálajnána,** with a Hindí commentary. On prognosis and forecasting the issue of disease from the appearance of the fœces and the urine of the patient, and the character of his breath. Anonymous.

**Beginning.** कालज्ञानकलायुक्तं शम्भुज्ञानञ्च भाषितं।
येन षण्मासतः पूर्व्वं ज्ञायते मृत्यू रोगिणः॥
कालः सृजति भूतानि कालः संहरते प्रजाः।
सुप्तेषु जागर्त्ति कालः कालो हि दुरतिक्रमः॥

काले देवा विनश्यन्ति काले चासुरपन्नगाः।
नरेन्द्राः सर्व्वे जीवाश्च सर्व्वं काले विनश्यति॥ इत्यादि।

End. षड्ङ्गकं धनुश्चक्रं मूत्रे तैलञ्च दृश्यते।
एकद्वित्रिचतुष्कञ्च क्रमान्मासेन मृत्युदं॥
श्वेतोत्पलं यदा मूत्रे दृश्यते परिवेष्टितं।
चिकित्सा तस्य कर्त्तव्या कथिता रुद्रजामले॥

Colophon. इति कालज्ञानं सम्पूर्णम्।

विषयः। निःश्वासमलमूत्रादिपरीक्षया रोगिणो जीवितकालं निर्णीय शुभाशुभलक्षण-कथनपूर्व्वकं चिकित्साविधानकथनं।

---

**No. 2685.** श्रीतपागच्छपट्टावलीसूत्रम्, वृत्तिसहितम्। Substance, country-made paper, 12 × 4 inches. Folia, 19. Lines, 15 on a page. Extent, 855 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, in Mágadhí verse. Commentary, in Sanskrit prose. Incorrect.

**Tapágachchha-paṭṭávalí-sútra,** with a gloss. Genealogy of the successive chief priests of the Tapágachchha sect of the Jains, from the time of Vardhamána Jina to that of the Emperor Akbar. The text is in the Mágadhí language, the gloss, by Dharmaságara Gaṇi, is in Sanskrit.

Beginning. टीकायाः,—

अथ गुरुपरिपाटीकथनाय सङ्गतिमाह सिरिमंतो त्ति। यत्तदोर्नित्याभिसम्बन्धात् येन कारणेन श्रीमान् सश्रीकः इत्यादि।

मूलस्य,—
सिरिमंतो सुहहेउ गुरुपरिवाडीइआ गउसंतो।
पज्जोसवणकप्पो वाइ जेण तो तं वुत्थं॥
गुरुपरिवाड़ीमूलं तित्थयरो वद्धमाणणामेणं।
तप्पट्टोदयपढमो सुहम्मणामेण गणसामी॥ इत्यादि।

End. मूलस्य,—
सिरि + + विजयसेनसूरिप्पमुहेहिं णेगसाहुवग्गेहिं।
परिकलिआ पुहविअले विहरंतादिसउमे भद्दं॥
टीकायाः,—

विजयसेनसूरिप्रभृत्यनेकसाधुभिः परिकलिताः पृथिवीतलविहारं कुर्व्वाणा मे मम भद्रं प्रयच्छतु।

**Colophon.** इति श्रीपट्टावलीसूत्रम्।

इति महोपाध्यायश्रीधर्मसागरगणिविरचिता श्रीतपागच्छपट्टावलीसूत्रवृत्तिः समाप्ता।

विषयः। तपागच्छसम्प्रदायानां वर्द्धमानजिनेश्वरादारभ्य तदधस्तनानाम् अकब्बरनरपतिसमसामयिकश्रीहरिविजयसूरीणां निर्व्वाणाधिगमं यावत् गुरुपरम्पराणां नामधामकर्म्मजीवितकालादिकीर्त्तनम्। तत्र तेषां क्रमेण नामानि यथा,—वर्द्धमानस्य शिष्यः सुधर्म्मास्वामी। एवं जम्बूस्वामी, प्रभवस्वामी, शय्यम्भवस्वामी, यशोभद्रस्वामी, सम्भूतविजयस्वामी, स्थूलभद्रस्वामी, आर्य्यमहागिरिः, आर्य्यसुहस्ती, इन्द्रदिन्नसूरिः, दिन्नसूरिः, सीहसूरिः, वज्रस्वामी, वज्रसेनः, चन्द्रसूरिः, सामन्तभद्रसूरिः, वृद्धदेवसूरिः, प्रद्योतनसूरिः, मानदेवसूरिः, मानतुङ्गसूरिः, वीरसूरिः, जयदेवसूरिः, देवानन्दसूरिः, विक्रमसूरिः, नरसिंहसूरिः, समुद्रसूरिः, मानदेवसूरिः, विबुधप्रभसूरिः, जयानन्दसूरिः, रविप्रभसूरिः, यशोदेवसूरिः, प्रद्युम्नसूरिः, मानदेवसूरिः, विमलचन्द्रसूरिः, उद्योतनसूरिः, सर्व्वदेवसूरिः, देवसूरिः, सर्व्वदेवसूरिः, यशोभद्रसूरिः, नेमिचन्द्रसूरिः, मुनिचन्द्रसूरिः, जितदेवसूरिः, विजयसिंहसूरिः, सोमप्रभसूरिः, जगच्चन्द्रसूरिः, देवेन्द्रसूरिः, धर्म्मघोषसूरिः, सोमप्रभसूरिः, सोमतिलकसूरिः, देवसुन्दरसूरिः, सोमसुन्दरसूरिः, मुनिसुन्दरसूरिः, रत्नशेखरसूरिः, लक्ष्मीसागरसूरिः, सुमतिसाधुसूरिः, हेमविमलसूरिः, आनन्दविमलसूरिः, विजयदानसूरिः, हीरविजयसूरिः, हरिविजयसूरिश्चेति।

---

**No. 2686.** गौतमप्रश्नावली, सुखबोधिकावृत्तिसहिता। Substance, country-made paper, 11 × 4 inches. Folia, 66. Lines, 8 on a page. Extent, 1,572 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráy Dhanapat Siñh, Bahádur. Appearance, fresh. Text, in Magadhí, verse. Commentary, in Sanskrit. Incorrect.

**Gautama-praśnávali,** with a gloss entitled *Sukha-bodhiká-vritti.* A dialogue between Vardhamána and Gautama in course of which the former explains to the latter the causes of birth, death, disease, health, prosperity, fortune and misfortune, caste, personal defects and excellences, loss of children, and all the other accidents of existence, as also the means of release from such accidents. Each topic is illustrated by one or more anecdotes. The text is by Jinaharsha Súrí. The gloss, by Matevardhana, was completed in the year, 1737.

**Beginning.** टीकायाः,—

वीरजिनं प्रणम्यादौ बालानां सुखबोधिका ।
श्रीमद्गौमतप्रश्नाख्याः क्रियते वृत्तिरद्भुता ॥

मूलस्य,—
नमिऊण तित्थणाहं जाणंतो तह गोयमो भयवं ।
अवूहाण वोहणत्थं धम्माधम्मफलं वक्खे॥ इत्यादि ।

End. मूलस्य,—
अडयालिस पुच्छत्तरेहिं गाहाणं होइ चउसट्ठी ।
संक्खेवेणं भणिया गोयम पुच्छामहा + वे ॥ इति ।
अथ टीकायाः,— — —
अतः भव्यलोकैरियं गौतमप्रश्नावली पठनीया श्रोतव्या । इति ।
श्रीजिणहर्षसूरीणाः सुशिष्याः पाठकारकाः ।
श्रीमत्सुमतिसिंहाख्य मच्छिष्यैर्मतिवर्द्धनैः ॥
पाठकपदसंयुक्तैः कृता चेयं कथालिका ।
श्रीमद्गौतमप्रश्नाख्याः सुगमा सुखबोधिका ॥
सिन्धौ रामे मुनौ चन्द्रे वर्षेऽस्मिन् मार्गशीर्षके ।
श्रीमत्यां जगतारिण्यां नगर्य्यां + शुभे दिने ॥

Colophon. इति गौतमप्रश्नावल्याः सुखबोधिका वृत्तिः सम्पूर्णा ।

विषयः । गौतमं प्रति वर्द्धमानजिनस्य उपदेशकथनं । तत्र जीवस्य नरकप्राप्ति-कारणकथनं । अत्र विविधाख्यानकीर्त्तनञ्च । एवं जीवस्य स्वर्गप्राप्तिनिदानकीर्त्तनं । अत्रापि विविधोपाख्यानकथनं । एवं परत्रापि । तस्य तिर्य्यक्त्वप्राप्तिहेतुकथनादिकं । मनुष्यत्वप्राप्ति-हेतुकथनं । पुरुषत्वप्राप्तिहेतुकथनं । स्त्रीत्वप्राप्तिहेतुकथनं । नपुंसकत्वप्राप्तिहेतुकथनं । अल्पायुष्कप्राप्तिहेतुकथनं । दीर्घायुष्कप्राप्तिहेतुकथनं । अभोगित्वप्राप्तिहेतुकथनं । भोगित्वप्राप्ति-हेतुकथनं ।बुद्धिमत्ताप्राप्तिहेतुकथनं । दुर्बुद्धिप्राप्तिहेतुकथनं । मेधाप्राप्तिहेतुकथनं । पा-ण्डित्यप्राप्तिहेतुकथनं । मूर्खत्वप्राप्तिहेतुकथनं । भीरुत्वप्राप्तिहेतुकथनं । धीरत्वप्राप्तिहेतुकथनं । विद्यावत्त्वप्राप्तिहेतुकथनं । साफल्यप्राप्तिहेतुकथनं । अर्थनाशहेतुकथनं । अर्थागमहेतुकथनं । लक्ष्मीस्थैर्य्यहेतुकथनं । पुत्रनाशहेतुकथनं । बहुपुत्रलाभहेतुकथनं । बधिरताहेतुकथनं । जन्मान्धताहेतुकथनं । अजीर्णरोगप्राप्तिहेतुकथनं । कुब्जत्वहेतुकथनं । कुष्ठरोगप्राप्तिहेतु-कथनं । दास्यप्राप्तिहेतुकथनं । दरिद्रताहेतुकथनं । ऐश्वर्य्यप्राप्तिहेतुकथनं । रोगित्वप्राप्ति-हेतुकथनं । हीनाङ्गत्वहेतुकथनं । मूकत्वहेतुकथनं । हीनचरणत्वादिहेतुकथनं । बहुवेदना-हेतुकथनं । वेदनाविमुक्तिहेतुकथनं । पञ्चेन्द्रियत्वप्राप्तिहेतुकथनं । एकेन्द्रियत्वप्राप्तिहेतु-

कथनं । संसारस्थैर्य्यहेतुकथनं । लोकसंसारत्वकथनं । कथं संसारसागरमुत्तीर्य्य जीवो सिद्धपुरं (मोक्षक्षेत्रं) प्राप्नोतीति तत्कारणकौशलञ्च ।

---

**No. 2687.** उपदेशमालाप्रकरणम् । Substance, country-made paper, 14 × 5 inches. Folia, 27. Lines, 11 on a page. Extent, 691 ślokas Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur, Appearance, fresh. Verse. Incorrect. Mágadhí.

**Upadeśa-málá-prakaraṇa.** A summary of the religious duties of Jains. In Mágadhí. Anonymous.

**Beginning.** णमिऊण जिणवरिंदे इंदन रिंदच्चिए तिलोय गुरु ।
उव एस मालमिणाम वुच्छामि गुरुवए सेणं ॥
जगचूडामणि जिणो उस भो वीरो तिलोय सिरितिलउ ।
एगो लोगा इच्चो एगोचरकु तिहुवणस्स ॥ इत्यादि ।

**End.** अक्खरमत्ताहीणं जं चिरपढ़ियं अणाण माणेणं ।
तं खमउ मज्झ सव्वं जिणवयण विणिग्गया वाणी ॥

**Colophon.** इति उपदेशमालाप्रकरणं समाप्तम् ।

विषयः । सम्यक्चारित्रदर्शनज्ञानसरूपनिरूपणपूर्व्वकं जिनवचनानां याथार्थ्यकथनं । जैनधर्म्मसंक्षेपकथनञ्च । इन्द्रभूतिनामानं गणधर—(आचार्य्यविशेषं) मुद्दिश्य वर्द्धमानजिनस्य जैनधर्म्मतत्त्वकथनं । तत्सारसङ्ग्रहेण विविधोपाख्यानयोजनपुरःसरं जैनानां कर्तव्यनिरूपणं । तत्र सर्व्वथा अहिंसैव सेवनीयेतिनिरूपणं । जीवाजीवादितत्त्वनिरूपणं । सम्यक्त्वादिकारणनिरूपणं । मोक्षमार्गोपदेशकथनञ्च ।

---

**No. 2688.** चतुर्व्विंशतिस्तुतिः । Substance, country-made paper, 14 × 5 inches. Folia, 16. Lines, 8 on a page. Extent, 344 ślokas. Character, Nágara. Date, ? Place of deposit, A'jinganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Sanskrit.

**Chaturviñśati-stuti.** Hymns in praise of the twenty-four Jinas, beginning with Ṛishabha, and ending with Vardhamána. The principal topics in the career of each of them are prominently noticed. By Chhapyabhaṭṭa Súri. The hymns are in Sanskrit.

**Beginning.** भव्याम्भोजविबोधनैकतरणे विस्तारिकर्म्मावली
रम्भासामजनाभिनन्दनमहानष्टापदाभासुरैः ।

भक्त्या वन्दितपादपद्मविदुषां सम्पादय + + ता

रम्भासामजनाभिनन्दनमहानष्टापदाभासुरैः ॥

ते वः पान्तु जिनोत्तमाः क्षतरुजो नाचिच्छिपुर्यन्मनो-

दाराविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः ।

यत्पादौ च सुरोज्झिताः सुरभयाञ्चक्रुः पतन्तोऽम्बरा-

दाराविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः ॥ (?) इत्यादि ।

End. सिंहे सिंहेलयालः जयति खरनखैर्वीतनिष्ठे तनिष्ठे

शूलो शूलोशनाशं दिशति शुभकृतो पण्डिते खण्डिते च ।

याते या तेजसाद्या तड़िदिव जलदे भाति धीरातिधीरा

पत्या पत्यापनौ + न्नुदितसमपराङ्गाधनं वा धनं वा ॥

Colophon. ऋषभदेवस्तुरिहता चतुर्विंशतिस्तुतिः समाप्ता ।

विषयः । यमकालङ्कृतश्लोकैः ऋषभदेवादारभ्य वर्द्धमानं यावत् चतुर्व्विंशतिजिनानां स्तोत्रव्याजेन गुणानुकीर्त्तनम् ।

---

**No. 2689.** सिन्दूरप्रकरणम् । Substance, country-made paper, 13 × 5 inches. Folia, 13. Lines, 9 on a page. Extent, 236 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Sanskrit.

**Sindúra-prakaraṇa.** Instructions on Jain religious duties. By Somaprabhá Áchárya.

Beginning. सिन्दूरप्रकरस्तपःकरिशिरःक्रोड़े कषायाटवी-

दावार्चिर्निचयः प्रबोधदिवसप्रारम्भसूर्योदयः ।

मुक्तिस्त्रीकुचकुम्भकुङ्कुमरसः श्रेयस्तरोः पल्लव-

प्रोल्लासः क्रमयोर्नखद्युतिभरः पार्श्वप्रभोः पातु वः ॥

सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यता

सूतेऽम्भः कमलानि तत्परिमलं वाता वितन्वन्ति यत् ।

किं वाभ्यर्थनयाऽनया यदि गुणोऽस्त्यासां ततस्ते स्वयं

कर्त्तारः प्रथनं नचेदथ यशः प्रत्यर्थिना तेन किं ॥

त्रिवर्गसंसाधनमन्तरेण पशोरिवायुर्विफलं नरस्य ।

तत्रापि धर्म्मं प्रवरं वदन्ति न तं विना यद्भवतोऽर्थकामौ ॥ इत्यादि ।

End. अभजदजितदेवाचार्य्यपट्टोदयाद्रि-

युमणिविजयसिंहाचार्य्यपादारविन्दे।
मधुकरसमतां यस्तेन सोमप्रभेण
व्यरचि मुनिपराज्ञाह्वक्तमुक्तावलीयं॥

**Colophon.** इति श्रीमद्वृहद्गच्छमण्डनश्रीसोमप्रभाचार्य्यविरचितं सिन्दूरप्रकरणाख्य-मुपदेशशास्त्रं समाप्तम्।

**विषयः।** धर्म्मसाधनस्य आवश्यकताकथनं। वैराग्यस्य अभ्यर्थितत्वकथनं। जिनार्च्चनमाहात्म्यकीर्त्तन। तत्पूजाक्रमकीर्त्तनं। गुरूपसत्तिविधिकथनं। सङ्घस्यपूजाविधिकथनं। अहिंसामाहात्म्यादिकथनं। अनृतनिन्दनं। स्तेयादिदूषणं। एवं क्रोधादिनिन्दाकीर्त्तनं। मानमायादिपरित्यागमाहात्म्यकथनं। सौजन्यप्रशंसाकीर्त्तनं। इन्द्रियदमावश्यकता। सम्पत्तेश्चञ्चलताकथनं। दानमाहात्म्यकथनं। तपोमाहात्म्यकथनं। भावनामाहात्म्यकथनञ्च।

---

**No. 2690.** सप्तव्यसनकथासमुच्चयम्। Substance, country-made paper, 13 × 6 inches. Folia, 122. Lines, 8 on a page. Extent, 2,501 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Sanskrit.

**Saptavyasana-kathá-samuchchaya.** Stories condemning indulgence in the seven vices of gambling with the dice, indulgence in flesh-meat, indulgence in spirituous drinks, whoredom, injury to others, theft and adultery. By Somakírti Áchárya, disciple of Somasena-deva Áchárya Bhaṭṭáraka.

**Beginning.** प्रणम्य श्रीजिनान् सिद्धानाचार्य्यान् पाठकान् यतीन्।
सर्व्वद्वन्द्वविनिर्म्मुक्तान् सर्व्वकामार्थदायकान्॥
ततोऽपि शारदां देवीं कल्याणावलिवल्लरीं।
जिनेन्द्रवदनोद्भूतां नत्वा भक्त्या प्रमोदतः॥
गुरूणां चरणौ नत्वा वक्ष्ये वुद्यानुसारतः।
सप्तानां व्यसनानां हि कथां भव्यहिताय वै॥
द्यूतं मांसं सुरा वेश्या पापर्द्धिचौरिकास्तथा।
परस्त्रीगमनञ्चेति सप्तैव व्यसनानि हि॥
एकैकव्यसनाभूता ये ये जीवा यथा परं।
दुःखं नानाविधं प्राप्तास्तांस्तान् वक्ष्ये विशेषतः॥ इत्यादि।

**End.** सद्रुद्रयसंख्योऽयं सप्तषष्टिसमन्वितः।
सप्तैव व्यसनाद्येषु कथासमुच्चयं ततः। ?।)

यावत् सुदर्शनो मेरुर्यावत्सागरभूधराः ।
तावन्नन्दत्वयं लोके ग्रन्थो भव्यजनार्चितः ॥

**Colophon.** इत्याचार्य्यभट्टारकश्रीसोमसेनदेवशिष्याचार्य्यश्रीसोमकीर्त्तिविरचिते सप्तव्यसनकथासमुच्चये परस्त्रीव्यसनफलवर्णनो नाम सप्तमः सर्गः ।

विषयः । द्यूतादिसप्तव्यसनानां दोषकीर्त्तनं । तत्र प्रथमे सर्गे,—द्यूतस्य नितरां हेयत्वकथनमुखेन द्यूतासक्तस्य युधिष्ठिरस्य तज्जनितक्लेशप्राप्त्यादिविवरणकथनं । द्वितीये सर्गे,—मांसभक्षणस्य निन्दितत्वनिरूपणप्रसङ्गेन तद्भक्षणशीलस्य कुशाग्रनगराधिपतिकुमारस्य वकाभिधेयस्य निरयादिप्राप्तिविवरणकथनं । तृतीये सर्गे,—सुरायां सुतरां हेयत्वप्रतिपादनमुखेन सुरापाननिरतानां यादवानां निधनप्राप्तिविवरणकथनं । चतुर्थे सर्गे,—वेश्यागमनस्य नितरां गर्हणीयत्वकथनमुखेन चम्पानगरवास्तव्यस्य चारुदत्तस्य दुर्गतिवर्णनं । पञ्चमे सर्गे,—परपीड़नादिरूपपापानुष्ठानस्य परमनिन्दितत्वकथनप्रसङ्गेन तन्निरतस्य उज्जयन्यधिपतेः ब्रह्मदत्ताभिधानस्य नरपतेः रौरवादिनरकगमनवृत्तान्तकीर्त्तनं । षष्ठे सर्गे,—चौरस्य नितरां हेयत्वकथनप्रसङ्गात् शिवभूतिनामकस्य कस्यचिद्ब्राह्मणस्य तदनुष्ठानेन दुर्दशावर्णनं । सप्तमे सर्गे,—परदारगमनस्य परमगर्हणीयत्वकथनमुखेन तदासङ्गलोलुपस्य राक्षसपतेर्दशाननस्य परमदुर्गतिप्राप्तिवृत्तान्तकीर्त्तनञ्च ।

---

**No. 2691.** गुणवर्म्मचरित्रम् । Substance, country-made paper, 14 × 5 inches. Folia, 306. Lines, 8 on a page. Extent, 6,100 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Guṇavarma-charita.** Story of Guṇavarma, a pious Jain. In eastern Hindi. By Jnánaságara Gaṇi.

**Beginning.** सुखसंपतदायक सदापायक जाससुरिंद ।
पणमुपास जिणेश + + गोमि सुरतरुकंद ॥
सासननायकसमरीये वर्द्धमानजिनवंद ।
सिद्धारथन्टपकुलतिलो + सल + । णीनंद ॥
ब्राह्मी लिपिवली प्रथमीये भयवइ अंगे जेह ।
गोतमसरिषाजसनमेडं पणसमरुतेह ॥ इत्यादि ।

**End.** न्यायसागरने सकलचंदलह्यो सेवनफले घात ।
भवीजनजीमपडंचेमन आसरे भालमे शासनपात ॥

**Colophon.** इति श्रीमदञ्चलगच्छाधिराजसकलभट्टारकचक्रचक्रमणि + + + +

समनीभालस्थलतिलकायमानपूज्यपुरन्दरपूज्यभट्टारकश्री++ विद्यासागरसूरीश्वराणां शिष्य-पण्डितश्रीज्ञानसागरगणिविरचितश्रीपूजाधिकारे गुणवर्म्मचरित्रं मासप्तम्। शुभं भवतु।

विषयः। गुणवर्म्मणो जीवनवृत्तान्तकथनं।

---

**No. 2692.** श्रवणभूषणम्। Substance, country-made paper, 12 × 4 inches. Folia, 17. Lines, 15 on a page. Extent, 651 ślokas. Character, Nágara. Date, ? Place of dedosit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**S'ravana-bhushana.** A commentary on the poem entitled *Vidagdha-mukha-mandana.* By Narahari Bhatta.

**Beginning.** हे हेरम्ब किमम्ब किं तव करे तातस्य चान्द्री कला
शत्यं किं शरजन्मनोन्नमनया इन्तान्तरं स्यादिति।
तात+-+ति गृह्यतामिति तदाकर्ण्य तदन्यां कलां
आकाशे जयति प्रसारितकरः स्मेरम+मणिः॥
यः साहित्यसुधेन्दुर्नरहरिवल्लालनन्दनः कुरुते।
स श्रवणभूषणाख्यां विदग्धमुखमण्डनव्याख्याम्॥
——————— — — ग्रन्थकृद्ग्रन्थान्तरायोपशान्तये स्वेष्टदेवतामनुस्मरणरूपं मङ्गलमाचरति सिद्धौषधानीति।

**End.** कामिनीयामिन्योः समानि विशेषणानि चतुरक्षाचरम्। इति।

**Colophon.** इति श्रीनरहरिभट्टविरचिते श्रवणभूषणे चतुर्थः परिच्छेदः। समाप्तो-ऽयं श्रवणभूषणग्रन्थः।

विषयः। धर्म्मदासकृतविदग्धमुखमण्डलग्रन्थस्य व्याख्यानम्।

---

**No 2693.** श्रीपालचरित्रम्। Substance, country-made paper, 13 × 6 inches. Folia, 75. Lines, 8 on a page. Extent, 1,480 ślokas. Character, Nágara. Date, Sm. 1882. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**S'rípála-charita.** A prose Sanskrit version of the work noticed under No. 2645, (*ante* p. 110). By Jívarája.

**Beginning.** प्रणम्य सिद्धचक्रञ्च सद्गुरुं निजमानसे।
श्रीपालचरित्रं वक्ष्ये सुगमं शिष्यहेतवे॥

जम्बूद्वीपे भरतक्षेत्रे विविधसम्यद्विभूषितसर्व्वप्रदेशे मगधदेशे गतद्रे राजगृहनगर श्रेणिको नाम राजा राज्यं करोति स्म इत्यादि ।

**End.** वक्तृणां श्रोतृणाञ्च सुखं भवतु वंशे
वृद्धिं यातु श्रीरस्तु सुखं भूयात् ।
संवत्सिद्धि(न्धु)रसाष्टकप्रमिते मार्गशीर्षके ।
मासे हि कृष्णपक्षे च दशम्यां चरितं कृतं ॥
श्रीजिनहर्षसूरीणां राज्ये रम्ये प्रवर्त्तते ।
प्राकृतात् संस्कृतं रम्यं कृतञ्च जयकीर्त्तिना ।
श्रीमत्खरतरे गच्छे कीर्त्तिरत्नाश्च सूरयः ।
तच्छाखायां सुजाता हि पाठकाः सुखलाभकाः ।
तेषां शिष्या महादक्षा जिनहंसास्तु वाचकाः ।
तेषां शिष्याः सदाचाराः श्रीलमाणिक्यमूर्त्तयः ।
महोपाध्यायपदवीधारकाश्च जितेन्द्रियाः ।
तच्छिष्या भावहर्षाश्च महाविद्याधरा वराः ॥
— — — — — — — — — ।
श्रीराजाधिराजस्य मूलराजस्य भूपतेः ।
राज्ये प्रतापसंयुक्ते पुस्तिकेयं कृता मया ।
श्रीचिन्तामणिपार्श्वेशो रक्षां करोतु नित्यशः ।
जीवराजेन रचितं श्रीपालचरितं शुभं ।
कुशलेनाशु लिखितं श्रीमद्गुरुप्रसादतः ॥

**Colophon.** इति श्रीपालचरित्रे गद्यबन्धे चतुर्थः प्रस्तावः । शं भूयात् । संवत् १८८२ ।

विषयः । वर्द्धमानाभिधानेन जिनेन्द्रेण सह प्रथमगणधरस्य गौतमस्य संवादेन सिद्धचक्रसिद्धिकामेन नव पदानि अवश्यमनुष्ठेयानि । तानि च, प्रथममर्हत्पदं, द्वितीयं सिद्धपदं, तृतीयमाचार्य्यपदं, चतुर्थमुपाध्यायपदं । पञ्चमं साधुपदं षष्ठं दर्शनपदं, सप्तमं ज्ञानपदं, अष्टमं चारित्रपदं, नवमं तपःपदमिति । तत्र सिद्धचक्रमाहात्म्यकथनमुखेन नवपदानुष्ठानविधिकीर्त्तनप्रसङ्गेन श्रीपालस्य राज्ञः जीवनीकथनं । (एतच्चरितन्तु अन्यत्र विस्तृतमित्युपेक्षितमत्र) ।

---

**No. 2694.** दानादिकुलकम्, वृत्तिसहितम् । Substance, country-made paper, 14 × 5 inches. Folia, 436. Lines, 9 on a page. Extent, 12,079 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya

Dhanapat Siñh, Bahádur. Appearance, fresh. Text, verse; commentary, prose.

**Dánádikulaka** with a gloss. A poem in praise of Jain virtues, illustrated by ancedotes of the different Jinas.

**Beginning.** टका,—

ॐ नमो नाभिभूपालसम्भवाय स्वयम्भुवे ।
विलसत्केवलालोकलोकालोकविकाशिने ॥
श्रेयसे श्रीमदिक्ष्वाकुकुलालङ्कारकारिणे ।
त्रैलोक्यकमलारामविकाशैकविवस्वते ॥ युग्मम्॥
श्रीशान्तिर्विलसत्कान्तिरजस्रं स्वजताच्छिवं ।
अभूद्विश्वत्रये शान्तिर्यस्मिन् कुक्षिमुपेयुषि ॥
नमोऽस्तु विश्वविश्वैकस्वामिने नेमिजिनार्हते ।
स्वसन्नच्छ्रीनिवासाय विनमानेकनाकिने ॥
अश्वसेनधराधीशवंशाकाशैकभास्करः ।
पान्तु पुण्यात्मनो नित्यं श्रीपार्श्वः परमेश्वरः ॥
— — — — — — — — — ।
चरमतीर्थकृतः स्तुतिरूपमङ्गलमाचरति ॥
मूलस्य,—
परिहरिय रज्जसारो उप्पाड़िय संजमियगुरुभारो ।
खं धाउ देव + सं वियरंतो जयउ वीरजिणो ॥ इत्यादि ।

**End.** स मुनिः कृताराधनो विहितानशनोऽपि तस्य गुरोः पुरतो यन्ते छिन्नः । इत्यतः खण्डितत्वात् परिसमाप्तिसूचकं वाक्यं नास्ति ॥

विषयः । अत्र क्रमेण दान-सील-तपो-भावानां माहात्म्यकीर्त्तनं । तत्र महावीरस्य षड्-विंशति पूर्व्वजन्मविवरणकथनं । सप्तविंशे तु जन्मनि जिनेन्द्रत्वेन वर्द्धमानस्य प्रादुर्भावकथनं । यथा, इहैव भरतक्षेत्रे ब्राह्मणकुण्डग्रामे ऋषभदत्तनामा कश्चिद् ब्राह्मण आसीत् । तस्य च देवानन्दा नाम पत्नी बभूव । अथ सा अन्तर्व्वत्नी संहृष्टा विविधान् शुभस्वप्नान् ददर्श । एवं काले गच्छति द्व्यशीतिदिवसेषु अतीतेषु इन्द्रो गर्भगतं भगवन्तं श्रुत्वा स्तुत्वा च एवमचिन्तयत् । अहो भगवान् कथं नीचकुले (ब्राह्मणकुले) जन्मग्रहणमिच्छति । अथ अस्माकं महाकुलेषु परिक्षेप्तुमधिकारोऽस्तीति निश्चित्य क्षत्रियकुण्डग्रामाधिपतेः सिद्धार्थक्षत्रियस्य त्रिशलाभिधानायां भार्य्यायां देवानन्दायां गर्भमाकृष्य सञ्चारयामास । तत्र च त्रिशलापि गर्भिणी आसीत् तद्गर्भञ्च देवानन्दायां निचिक्षेप । अथ त्रिशला चैत्रशुक्लत्रयोदश्यां भगवन्तं पुत्रत्वेन सुषुवे । अथ

शक्रः तत्र आगत्य स्वामिनं करपुटेन गृहीत्वा मेरुशिखरं समानीय अभिषिच्य तं कुमारं पुन-रेव मातुरङ्कं गमयामास। अथ सिद्धार्थनृपोऽपि पुत्रस्य जन्मोत्सवादिकं विधाय नानाक्रय-दानसम्मानपूर्व्वकं धनादिभिर्वर्द्धितत्वाद्वर्द्धमान इति नाम कृतवान्। तथा वज्रेणापि अक्षो-भ्योऽयं कुमार इति तस्य महावीर इति अपरञ्चाभिधानं बभूव। अथ क्रमेण लब्धसर्व्वविद्योऽसौ महावीरः समरवीरस्य राज्ञो दुहितरं यशोदानाम्नीमुपयेमे। ततस्तयोः प्रियदर्शनाभिधाना कन्या अभवत्। सा च जमालिना नाम्ना राजपुत्रेण परिणीता। अथातीते अष्टाविंशति-वर्षे महावीरः प्रव्रज्यां जिघृक्षुः नन्दिवर्द्धनं नाम्ना स्वीयभ्रातरं राजपदे प्रतिष्ठाप्य तदनुरोधेन वर्षद्वयं यावत् तत्र राज्ये अवस्थानं स्वीचकार। अथ तत्र ब्रह्मव्रतधरो भगवान् महावीरो विशुद्धध्यानमङ्गीकृत्य विविधानि दानानि ददौ। अथ समतीते वर्षद्वये असौ ज्ञानषण्डवनं प्रविश्य पञ्चमुष्टिभिः स्वीयकेशान् उत्पाटयामास। तांश्च महेन्द्रः क्षीरसागरे निचिक्षेप। अथ जन्मतः त्रिंशद्वर्षे अतीते मार्गशीर्षे मासि कृष्णदशम्यां चारित्रेण समं भगवतः तुर्य्यं मनः-पर्य्यवज्ञानं समुदपद्यत। ततः स्वामी चारित्ररथमारुह्य विहाराय प्रतस्थे। अथ मुहूर्त्तेन च कुमारग्राममनुप्राप्तः तत्र नगरवहिरुद्याने कृतासनो बभूव। समनन्तरञ्च सायं कश्चित् कृषकः सर्व्वं दिनं वृषान् वाहयित्वा तान् स्वामिसमीपे मुक्त्वा गोदोहाय गृहं जगाम। ते तु स्वैरं चरन्तो वनं प्रविविशुः। अथ कृषकः समागत्य संपृच्छ्य च स्वामिनाहं न जानामीति दत्तोत्तर-स्तेषामनुसन्धानाय रात्रावपि महावनं जगाम। अथ तत्र तानलभमानः सुतरां क्षोभमापन्नः स्थितः। ततः स्वयमागतानपि वृषान् स्वामिनः समीपे दृष्ट्वा 'अयं चौरः' इति मत्वा तं नितरां तिरस्चकार अथ ततः ब्राह्मणकुण्डग्रामादिकं पर्य्यटन् चातुर्मास्यव्रतानुष्ठायी पितुर्मित्रं कञ्चित् ब्राह्मणं दारिद्र्यनिपीड़ितं दृष्ट्वा तस्मै परिहितस्य वाससः अर्द्धं समर्प्य तोषयामास। अथ क्रमेण विहरन् स्वचरणन्यासैः पृथिवीं पावयन् जृम्भकं सन्निवेशं प्राप। तत्र ऋजुवालुकानदी-तीरे श्यामाकगृहिणः क्षेत्रे शालतरोस्तले अव्यक्तचैत्यस्य आसन्ने सिन्धुरोधसि विजये मुहूर्त्ते भगवतो वर्द्धमानस्य घनघातिकर्म्मणि त्रुटिते वैशाखशुक्लदशम्यां तस्य केवलज्ञाने समुत्पन्ने कम्पि-तासनाः सुरेन्द्रादयः तत्र समागत्य समवसरणं विदधिरे। अथ कार्त्तिकामावस्यायां पश्चिमच-यदाहणे शुक्लध्यानाभियोगात् शेषकर्म्मबन्धनानि भस्मीकृत्य स्वातिनक्षत्रे भगवान् परमं पदं प्राप। अथ विशेषेण दानमाहात्म्यकथनं। दानञ्च धर्म्मार्थकामभेदेन त्रिविधं। केवलं धर्म्मोद्दे-शेन साधुभ्यो धार्म्मिकेभ्यो वा यद्दानं तद्धार्म्मिकं। स्वार्थमुद्दिश्य स्वकीर्त्तिजनकं याचकादिभ्यो-यद्दानं तदार्थिकं। कामदानन्तु स्वकलत्रपरकलत्रादिभ्यो यद्दानं। दानफलकीर्त्तनोदाहरण-तया ऋषभनाथस्य चरित्रकथनं। अभयदानमाहात्म्यकथनं। तत्र श्रीनरपतेरुपाख्यानक-थनं। जिनधर्म्ममाहात्म्यकथनं। तत्र बलवन्मोहाभिधानस्य राज्ञ उपाख्यानकथनं। शान्ति-नाथचरित्रकथनं। साधुभ्यः अन्नादिदानमाहात्म्यकथनं। तत्र भरतस्य चक्रवर्त्तिन उपाख्यान-कथनं। मुनीभ्यः औषधदानफलकथनं। तत्र वैद्यस्य जीवानन्दाभिधानस्य उपाख्यानं। साधुभ्य

परमान्नदानमाहात्म्यकीर्त्तनं। तत्र धन्येतिविश्रुतायाः कस्याश्चित् कामिन्या उपाख्यानकथनं। घृतवस्त्रादिदानमाहात्म्यकथनं। तत्र आर्य्यरक्षितस्य कथाकथनं। शालिभद्रस्य उपाख्यानकथनं। जन्मान्तरीयदानमाहात्म्यकथनं। तत्र कृतपुण्यकस्य उपाख्यानकथनं। जिनभक्तिमाहात्म्यकथनं। अत्र उदयनस्य राज्ञ उपाख्यानकथनं। अनुकम्पाभक्तिदानमाहात्म्यकथनं। तत्र मूलदेवस्य उपाख्यानकथनं। विक्रमादित्यस्य उपाख्यानकथनं। सांवत्सरिकमहादानकथनं। तत्र श्रेयांसककथाकीर्त्तनं। चन्दनमालाया उपाख्यानं। अथ शीलमाहात्म्यकथनं। तत्र नेमिजिनस्य चरित्रकथनं। शीलप्रशंसाकीर्त्तनं। अत्र राजीमत्या उपाख्यानकथनं। शीलप्रभावकथनमुखेन रामचन्द्रस्य चरित्रकथनं। सीताचरित्रकथनं। सुभद्रायाश्चरित्रकथनं। नर्म्मदासुन्दरीवृत्तान्तकथनं। कलावतीविवरणकथनं। शीलवत्याः स्वरूपकथनं। सुलभायाः उपाख्यानकथनं। स्थूलभद्रचरित्रकथनं। वज्रस्वामिचरित्रकथनं। सुदर्शनश्रेष्ठिकथाकीर्त्तनं। सुन्दर्य्या उपाख्यानकथनं। सुनन्दाया उपाख्यानकथनं। मनोरमाया उपाख्यानकथनं। अञ्जनासुन्दर्य्या उपाख्यानकथनं। मृगावत्या उपाख्यानकथनं। अथ तपोमाहात्म्यवर्णनं। अत्र बाहुबलिकथाकीर्त्तनं। तपोऽधिकारनिरूपणं। तत्र अक्षयनिधितपोनिरूपणं। तीर्थङ्करजननीतपोनिरूपणं। गौतमस्वामिकथाकीर्त्तनं। सनत्कुमारचक्रिवृत्तान्तकीर्त्तनं। दृढ़प्रहारिकथाकथनं। नन्दिसेणतपःफलकथनञ्च। तपःप्रभाववर्णनं। अत्र विविधोपाख्यानकथनं। सुन्दरीतपःस्वरूपवर्णनं। जम्बुस्वामिचरित्रकथनं। उत्कृष्टतपोवर्णनं। बलदेवतपोवर्णनं। विष्णुकुमारतपोवर्णनं। अथ भावनानिरूपणं। तत्र पार्श्वनाथचरित्रकथनं। प्रसन्नचन्द्रराजर्षिकथाकीर्त्तनं। मृगावतीचरित्रकथनं। इलापुत्रस्य विवरणकथनं। कपिलस्य केवलिभावनाकथनं। भावनायाः परमपुरुषार्थकारणत्वप्रदर्शनं। पुष्पचूलाकथाकथनं। गौतमदीक्षितस्य पञ्चदशशतभावनाप्रदर्शनकथनं।—(इतः किञ्चित्खण्डितं।)

---

**No. 2695.** अध्यात्मकल्पद्रुमः। Substance, country-made paper, 12 × 5 inches. Folia, 61. Lines, 3—4 on a page. Extent, 477 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**Adhyátma-kalpadruma.** On asceism, its essentials and objects. By Munisundara Súri.

**Beginning.** ॐ नमः। अथायं श्रीमान् शान्तरसाधिराजः सकलागमादिसुशास्त्राणां वोपनिषद्भूतसुधारसायमान ऐहिकामुष्मिकानन्तानन्दसन्दोहसाधनतया पारमार्थिकोपदेश्यतया च सर्व्वरससारभूतत्वात् शान्तरसभावनात्माध्यात्मकल्पद्रुमाभिधानं। इत्यादि।

**End.** इममिति मतिमानधीतचित्ते रमयति विरमत्ययं भवी द्राक्।
स च नियमतो रमेत वास्मिन् स ह + + भवा विजयश्रिया शिवश्रीः॥

**Colophon.** इति षोड़शाधिकारः सम्पूर्णः ।

इति नवमशान्तरसभावनात्माध्यात्मकल्पद्रुमनामायं ग्रन्थः सम्पूर्णः ।

विषयः । शृङ्गारहास्यकरुणादिषु रसेषु शान्तरसस्यैव नृपतिसम्मितत्वकथनं । शान्तरस-माहात्म्यकीर्त्तनं । जीवस्य शान्तरससमाश्रयणे फलकथनं । जीवस्य साम्यागमकारणकथनं । चित्तस्य मैत्रीभावलक्षणादिकथनं । मदादिपरित्यागावश्यकताकथनं । आत्मनो निर्म्मलतायां शान्तरसावस्थानकथनं । अथ यथार्थज्ञानयुक्तस्य प्रमाद्वत्वकथनं । कलत्रशत्रुमित्रादिभेदज्ञान-परिहानकथनं । सर्व्ववस्तूनामनित्यत्वकथनं । जगति साम्यभाजां जीवानामल्पत्वकथनं । राग-द्वेषादीनां मिथ्यात्वकथनं । जीवस्य मृत्युपारवश्यत्वकथनं । धनादिषु सुखादिज्ञानस्य मूढ़तानि-दानत्वकथनं । य एव स्वजनास्त एव शत्रव इति निरूपणं । जीवानां पुद्गलानाञ्च नानापरि-णामप्रदर्शनेन रागद्वेषादिपरिहारकर्त्तव्यताकथनं । अथ स्त्रीणां निन्दाकथनं । तच्छरीराणां नितरामशुचित्वकथनं । कामिनीनां शरीरस्पर्शनादौ मोहजननकथनं । अत एव शान्तरसलि-प्सुना तासां सङ्गः परिहरणीय इति निरूपणं । अपत्यादिषु ममत्वपरित्यागकर्त्तव्यताकथनं । अथ धनेभ्य एव अनर्थपरम्परा जायते इति निरूपणं । तेभ्यः सुखस्य किञ्चित्करत्वं दुःखस्य च बहुत्वजनकत्वं विज्ञाय निवर्त्तितव्यमितिकथनं । परिग्रहस्य पापजनकत्वकथनं । अथ देहाभि-मानपरित्यागावश्यकताकथनं । शरीरस्य कारागृहादपि अधिकक्लेशनिदानत्वकथनं । इन्द्रि-यार्थेभ्यो प्रमादराहित्यावश्यकत्वकथनं । ऐहिकसुखस्य हेयत्वकथनं । कषायादिपरित्यागस्य मोक्षजनकत्वकथनं । एवं क्रोधलोभमानादीनां परित्यागफलकथनं । मोक्षकामेन जैनशास्त्रा-श्रयकरणावश्यकतानिरूपणं । केवलं शास्त्रपठनेन न मुक्तिर्भवति किन्तु तज्ज्ञानेनेतिकथनं । अथ अल्पाध्ययनेऽपि सत्क्रियाया उत्कर्षनिरूपणं । अथ असाधुकर्म्मानुष्ठातुः नरकतिर्य्यगादि-गतिवर्णनं । सर्व्वथा मनोवशीकरणं कर्त्तव्यमितिनिरूपणं । तत्र तपोजपादीनामुपयोगिताक-थनं । मनःसमाध्युपायकथनं । वैराग्यस्यावश्यकताकथनं । परपीड़नादिभ्य आत्मनो विरत्युपाय कथनं । पापपुण्यनिरूपणं । दानादिधर्म्मस्य मालिन्यकथनं । सर्व्वेषां कर्म्मणां भावपूर्व्वकं कर्त्तव्यतानिरूपणं । अथ धर्म्माय गुरुपसदनावश्यकताकथनं । कुगुरुनिरूपणं । यतीनां शिक्षा-विधानकथनं । यतीनां कर्म्मविशेषेण निन्द्यानिन्द्यत्वादिकथनं । संयमस्य नितरामावश्यकता-कथनं । संयममाहात्म्यकथनं । अथ सामान्यतो यतीनां गृहिणाञ्च धर्म्मकथनं । मनःकायादि-संवरणकथनं । तपःशीलादिमाहात्म्यकथनं । आत्मनः प्राधान्यकथनं । निःसङ्गेन भाव्यमिति-निरूपणं ।

---

**No. 2696.** मलयसुन्दरीचरित्रम् । Substance, country-made paper, 13 × 5 inches. Folia, 162. Lines, 8 on a page. Extent, 3,792 ślokas.

Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Malaya-sundara-charita.** Story of Malayasundarí, a Jain devotee; in eastern Hindi. By Vijaya Gaṇi.

**Beginning.** स्वस्ति श्रीसुखसम्पदापूरण परमनुदार।
आदीश्वर आनन्दनिधि प्रणमु प्रेम अपार॥
फणिमणिमण्डित नीलतनकरुणारसभरपूर।
पारसजलधरवल्लवो बोधवीज अङ्कुर॥
शासननायकसाहिवो गिरुड गुणविलसन्त।
हरि++न हियड़ेधरूं महावीर अंकुवंत॥

**End.** पाटलनगरनी संघविवेकीतस आग्रहथीसिद्धि।
तिऊं खण्डे+इ सर्व्वसंख्याइढाल एकाणूं कीधीरे॥
जे भविभावे भणस्ये पुणस्ये लहेस्यं तें जयमाल।
गुणचाली समीकहिकां ते चोथोखं चनीढालरे॥

**Colophon.** इति श्रीमलयासुन्दरीचरित्रे श्रीविजयगणिविरचिते प्राकृतप्रबन्धे सिद्धा वदाते पूर्व्वभववर्णनं नाम चतुर्थखण्डः समाप्तः।

विषयः। मलयसुन्दर्य्या जिनभक्ताया उपाख्यानकथनं।

---

**No. 2697.** लीलावतीसुमतिविलासरासः। Substance, country-made paper, 13 × 5 inches. Folia, 28. Lines, 9 on a page. Extent, 309 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Lilávatí-sumati-vilása-rása.** Story of Lilávatí and Sumati, illustrating Jain virtues; in eastern Hindi. By Udayaratna.

**Beginning.** परमपुरुष प्रभु पासजिन सरसिति सद्गुरुपायः।
वंदी गुणलीलवती वोल बुद्धिवनाय।
लीलालहिर लीलावतीसुमतिविलाससमुद्र।
दिव्यगासुंर दंपति उत्तमगुण आचुद्र॥ इत्यादि।

**End.** धन्यासीरासं सोहावीए एकवीसमीढालिजी।
उदयरत्नकहेत्माजमें कल्लीसुखसुं पतिसुरसालजी॥

**Colophon.** इति श्रीलीलावतीसुमतिविलासरास सम्पूर्ण।

विषयः। लीलावतीसुमत्योरुपाख्यानवर्णनम्।

**No. 2698.** स्मृतिचन्द्रिका । Substance, country-made paper, 12 × 5 inches. Folia, 88. Lines, 6 on a page. Extent, 1,136 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit Syámalála Duve. Prose and verse. Incorrect.

**Smṛiti-chandriká.** A summary of the Smṛitis. Author's name unknown. Although its colophon states the work as contained in the codex to be complete, it is obvious that it originally discoursed upon the whole range of the Smṛitis, and the codex comprises only one portion of it—that treating of the lunar days and the religious duties and rites appertaining thereto. Had the work been limited to the lunar days, it would have been named *Tithí-chandriká* and not *Smṛiti-chandriká.*

**Beginning.** नमस्कृत्य महेशानमज्ञानध्वान्तनाशनं ।
क्रियते बालबोधाय रम्येयं स्मृतिचन्द्रिका ॥

तत्रादौ तिथिस्वरूपनिरूपणं । तथाहि । अमादिपौर्णमास्यन्ता या एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोड़शैव वरानने ॥ इत्यादि ।

**End.** अतएव तत्र तत्र संक्रान्तिषु द्रव्यविशेषदानेन तज्जनितदोषपरीहार इति ।

**Colophon.** इति स्मृतिचन्द्रिका समाप्ता ।

विषयः । तिथिस्वरूपकथनं । पञ्चभेदव्यवस्थाकथनं । क्वचिद्रात्रियुग्मादरकथनं । युग्मेतरतिथिव्यवस्थाकथनं । विधेयकर्म्मणि पूज्यकालापेक्षाकथनं । युग्मादरस्तु दैवकृत्ये न पितृकृत्ये इति निरूपणं । अथ प्रतिपदादितिथिषु तत्तत्कृत्यविधानं । द्यूतप्रतिपन्निरूपणं । मनोरथद्वितीयाविधिः । श्राद्धद्वितीयाविधिकथनं । रम्भातृतीयाविधिः । अक्षयतृतीयाविधिः । श्राद्धचतुर्थीविधिः । वरदाचतुर्थीविधिः । नागपञ्चमीविधिः । श्रीपञ्चमीविधिः । अरण्यषष्ठीविधिः । स्कन्दषष्ठीविधिः । मनोरथसप्तमीविधिः । विजयासप्तमीविधिः । आरोग्यसप्तमीविधिः । विधानसप्तमीविधिः । रथसप्तमीविधिः । दूर्व्वाष्टमीविधिः । महाष्टमीविधिः । जन्माष्टमीविधिः । गोष्ठाष्टमीविधिः । भीष्माष्टमीविधिकथनं । अशोकाष्टमीविधिः । श्रीरामनवमीविधिकथनं । दशहराविधिकथनं । शयनैकादशीविधिः । चातुर्मास्यविधिः । पिपीतकीद्वादशीविधिः । अवणद्वादशीविधिः । गोविन्दद्वादशीविधिः । मघात्रयोदशीविधिः । सावित्रीचतुर्दशीविधिः । अघोरचतुर्दशीविधिः । अनन्तचतुर्दशीविधिः । पाषाणचतुर्दशीविधिः । शिवचतुर्दशीविधिः । मदनचतुर्दशीविधिः । महाज्यैष्ठीविधिः । कोजागरपूर्णिमाविधिः । संक्रान्तिकृत्यनिरूपणञ्च ।

---

**No. 2699.** उत्तराध्ययनवृत्तिः। Substance, country-made paper, 11 × 4 inches. Folia, 332. Lines, 13 on a page. Extent, 9,234 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Uttarádhyayana-vṛitti.** A Sanskrit commentary on the *Uttarádhyayana,* a Jain Sútra text in Mágadhí. By Nemichandra Súri.

**Beginning.** प्रणम्य विघ्नसंघातघातिनस्तीर्थनायकान्।
सिद्धांश्च सर्व्वसाधूंश्च स्तुत्वा च श्रुतदेवतां॥
आत्मनः स्मृतये वक्ष्ये जड़मतिसंक्षेपरुचिहितार्थञ्च।
एकैकार्थनिवद्धां वृत्तिं सूत्रस्य सुखबोधां॥
बह्वर्थाद्वृद्धकृताद्विवरणात् समुद्धृत्य।
अध्ययनानामुत्तरं पूर्व्वाणामेक + + गतं॥

इह अर्थान्तराणि पाठान्तराणि च सूत्रे वृद्धटीकातः बोद्धव्यानि यतोऽयं प्रारम्भो + + निकामार्थं। + + + + + तानि च षट्त्रिंशद्भवन्ति। तत्र विनमूलत्वात्(?)। इत्यादि।

**End.** योग उपधानादिव्यापारः। तदनतिक्रमेण यथायोग्यमित्यर्थः।

**Colophon.** इत्युत्तराध्ययनटीकायां षट्त्रिंशमध्ययनं समाप्तं।
— — — — — — — —।
विश्रुतस्य महापीठे वृहद्गच्छस्य मण्डनं।
श्रीमान् विहा + + + ः सूरिरुद्योतनाभिधः॥
शिष्यस्तस्याम्रदेवोऽभूदुपाध्यायः सतां मतः।
यत्रैकान्तगुणैः पूर्णे दोषैर्लेभे पदं नहि॥
नेमिचन्द्रसूरिरुद्धृतवान् वृत्तिं + +।
विनेयो मुखसोदर्य्यश्रीमन्मुनिचन्द्राचार्य्यवचनेन॥

इत्युत्तराध्ययनवृत्तिः समाप्ता।

विषयः। उत्तराध्ययनाभिधानजैनसूत्रस्य व्याख्यानम्।

---

**No. 2700.** तत्त्वमञ्जरी। Substance, country-made paper, 14 × 4 inches. Folia, 42. Lines, 7 on a page. Extent, 753 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit Syámalála Duve. Appearance, fresh. Prose and verse. Incorrect.

**Tattva-manjarí.** An epitome of Vaishṇavite philosophy. By Aniruddha. CONTENTS: Identity of the Godhead. Refutation of the

theory of the undefined. Refutation of the theory of non-duality. Refutation of the theory regarding the unity of the animal soul. Multiplicity of souls, and the true nature thereof. The relation of individual souls to the Divine Soul. The molicularity of individual souls. Refutation of the theories of the body being the soul, and of the intellect being the soul. Refutation of the theory of the soul being all-pervading. Authority of the Vedas: their characteristics. Distinction between the mandatory and the laudatory portions of the Vedas. Proof. The importance of testimony as a proof. The means of obtaining the Godhead. Faith. Knowledge. Emancipation. True enjoyment.

**Beginning.** जगदीशं हरिं नत्वा सच्चिदानन्दविग्रहं ।
अनिरुद्धस्तकारेमां भगवत्तत्त्वमञ्जरीं ॥

अथ विग्रहस्य पूर्णस्वरूपभूतत्वस्थापकप्रकरणारम्भे प्रथमतस्तावद्वेदान्तवाक्यमित्थं विचारणीयं। इत्यादि ।

**End.** ईक्षते च लोकान् ब्रह्मलोकादीन् भोगांश्च विश्वजनोपभोग्यान् धारयतीति ।

**Colophon.** इति श्रीतत्त्वमञ्जरी परिपूर्णा ।

विषयः ! भगवत्स्वरूपनिरूपणं । वेदान्तवाक्यानां निर्व्विशेषपरत्वमाशङ्क्य तत्खण्डनपूर्व्वकं सविशेषकत्वनिरूपणं । अद्वैतवादखण्डनं । एकजीववादनिरासपूर्व्वकं नानाजीववादकथनं । प्रत्यगात्मस्वरूपादिकथनं । तस्य भगवदंशत्वकथनं । अणुपरिमाणत्वकथनञ्च । अत्र देहात्मवादविज्ञानवादादिखण्डनं । आत्मनो विभुत्ववादनिरसनं । वेदप्रामाण्यकथनं । तल्लक्षणादिकथनं । विध्यर्थवादादिविवेचनं । प्रत्यक्षानुमानादिप्रमाणनिरूपणं । शब्दप्रमाणस्य सर्व्वप्रमाणापेक्षया अभ्यर्हितत्वकथनं । भगवत्प्राप्त्युपायकथनं । भक्तिस्वरूपाप्रधान्यं ज्ञानमेव तत्साधनमितिनिरूपणं । भक्तिलक्षणादिकथनं । मुक्तिनिरूपणं । भोगनिरूपणञ्च ।

---

**No. 2701.** भक्तिचन्द्रिका । Substance, country-made paper, 14 × 4 inches. Folia, 32. Lines, 8 on a page. Extent, 672 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Paṇḍit Syámalála Duve. Appearance, new. Prose and verse. Incorrect.

**Bhakti-chandriká.** Attributes of faith and the means of attaining emancipation thereby. By Dámodara.

**Beginning.** नवीननीरदश्यामं राधाविद्युल्लतान्वितं ।
वन्दे वृन्दावनाधीशं मुकुन्दं नन्दनन्दनं ॥

अथ सपरिकरभगवद्भक्तिर्निरूप्यते । तत्र शाण्डिल्यः । सा परानुरक्तिरीश्वरे । इह अनुरक्तिपदेन प्रीतिरभिधीयते । इत्यादि ।

End. ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते ।
ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः ॥

इति श्रीमुखेनोक्तेः ॥ इति

Colophon. इति श्रीदामोदरप्रणीता भक्तिचन्द्रिका परिपूर्णा ।

विषयः । भक्तिस्वरूपविवेचनं । वैधीरागानुगाभेदेन तस्या द्वैविध्यकथनं । भक्त्यङ्गनिरूपणं । स्मरणकीर्त्तनादिलक्षणकथनं । भगवद्भक्तलक्षणं । उत्तममध्यमाधमभेदेन तस्य त्रिविधत्वनिरूपणं । भगवत्स्वरूपनिरूपणं । तस्य निराकारत्ववादखण्डनपूर्व्वकं सच्चिदानन्दविग्रहत्वकथनं । जीवस्य भगवदंशत्वकथनं । संसारस्य सत्यत्वकथनं । मायावादनिन्दनं । भगवान् श्रीकृष्ण एव परब्रह्मशब्दवाच्य इति निरूपणं । श्रुत्यर्थसमन्वयकथनं । श्रीमद्भागवतस्य सर्व्वप्रमाणश्रेष्ठत्वकथनं । भक्तौ अधिकारिनिरूपणं । शान्त-दास्य-सख्य-वात्सल्यादिभावनिरूपणं । भगवद्भक्तेः रसत्वनिरूपणं । मुक्तावपि भगवद्भक्तानामनभिरुचिरितिकथनं । ज्ञानतो भक्तेः श्रेष्ठत्वकथनं । भक्तिरेव भगवत्प्राप्त्युपाय इति निरूपणं । सालोक्यसायुज्यादिनिरूपणं । भगवत्सेवाप्रकारकथनं । नामापराधनिरूपणं । प्रेमभक्तिनिरूपणञ्च ।

---

**No. 2702.** मितभाषिणी । Substance, country-made paper, 11 × 4 inches. Folia, 60. Lines, 8 on a page. Extent, 1,593 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct.

**Mitabháshiṇí.** A commentary on S'iláditya's *Sapta-padárthábhidhána,* an epitome of the Vaiśeshika categories. By Mádhava Sarasvatí, of Sauráshṭra.

Beginning. विघ्नेशादीन् नमस्कृत्य माधवाख्यसरस्वती ।
शिलादित्यकृतेष्टीकां करोति मितभाषिणीम् ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं कर्त्तव्यविषयविघ्नविघातकं परमेश्वरनमस्कारलक्षणं मङ्गलमाचरन् अर्थाद्विषयप्रयोजने दर्शयति देतव इति । ननु नमस्कारादिमङ्गलाचरणं फलप्रमाणयोरभावादयुक्तमिति चेन्न, फलं तावत् कर्त्तव्यविषयविघ्नध्वंस एव वरीवर्त्ति नत्वभीष्टसमाप्तिः । तत्र मङ्गलस्य अन्वयव्यतिरेकाभ्यां व्यभिचारात् । सतेऽपि मङ्गले कादम्बर्य्यादौ समाप्त्यभावात् — — — — — प्रयोगस्तु । नमस्कारो वेदबोधितकर्त्तव्यताकः अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शाद्याचारवत् – इति । इत्यादि ।

**End.** सौराष्ट्रदेशोऽखिलराष्ट्रवर्थ्यः सदाकरो दक्षिणभूमिनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ यत्रास्ति गोकर्णमहाविलेशः ॥
तद्देशजन्मा यतिरेकदण्डो सरस्वतीमस्तकमाधवाख्यः ।
सोऽयं शिवादित्यकृतेरकार्षीत् टीकामिमां बालसुखप्रवृत्त्यै ॥

**Colophon.** इति मितभाषिणी समाप्ता ।

विषयः । शिवादित्यकृतसप्तपदार्थाभिधानवैशेषिकन्यायप्रकरणस्य व्याख्यानम् ।

---

**No. 2703.** वीरस्तवः, व्याख्यासहितः । Substance, country-made paper, 12 × 3½ inches. Folia, 5. Lines, 22 on a page. Extent, 447 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, Mágadhí verse; Commentary, Sanskrit prose. Correct.

**Vírastava,** with a commentary. A hymn in praise of Vardhamána Jina, in Mágadhi. By Jinavallabha, with a Sanskrit commentary by Nayanasundara Gaṇi.

**Beginning.** मूलस्य,—

दुरियरयसमीरं मोहपंकोहनीरं
पणमिय जिणवीरं निज्जियाणंगवीरं ।
भवभडपडिकूलं तस्स मुक्खाणुकूलं
चरियमिह समूलं किं चिकित्तेमि थूलं ॥

टीकायाः,—

वर्द्धयतु वर्द्धमानः श्रीसिद्धान्तवचिवाचको वाचं ।
चित्तचमत्कृतिचतुरं चतुरनराणां वचो यस्य ॥

श्रीमहावीरस्य चरित्रं व्याख्यायते । तस्येदमादिमं काव्यं । दूरिय इति । कीर्त्तयामि कथयामि । कः कर्त्ता अहं । किं कर्म्मतापन्नं चरित्रं । किं कृत्वा प्रणम्य प्रकर्षेण नत्वा । इत्यादि ।

**End.** मूलस्य,—

एवं वीरजिणेसरेणेसरउमं मोहंधविद्धंसणं
भव्वं भोरुहवोहसोहजणयं दोमायरच्छेयणं ।
धावज्जं कुसलाणुवं थिकुसलं पत्तोरुकिं चीतउ
जायजा जिणवल्लहो महसया पायप्पणामो+ह ॥

इति वीरस्तवः ।

टीकायाः,—

**Colophon.** इति खरतरगच्छे श्रीजिनचन्द्रसूरिविजयराज्ये श्रीजिनराजसूरिशाखायां शिष्यश्रीजयसागरमहोपाध्यायसं+ नीयवाचनाचार्य्य+ + धूर्य्यजीवकलसगणिशिष्यनयनसुन्दरगणिविरचिता वीरस्तवव्याख्या समाप्ता ।

हे जिन तव पादे प्रणामो मम सदा वल्लभो जायतामिति ॥ अत्र शार्दूलविक्रीड़ितं छन्दः । श्रीजिनवल्लभ इति कविनाम इति इत्तार्थः ।

विषयः । स्तोत्रव्याजेन वर्द्धमानजिनस्य पवित्रचरित्रकीर्त्तनं ॥

---

**No. 2704.** अनुयोगद्वारवृत्तिः । Substance, country-made paper, 11 × 4 inches. Folia, 262. Lines, 9 on a page. Extent, 6,166 ślokas. Character, Nágara. Date, Sm. 1699. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct.

**Anuyogadvára-vṛitti.** A Sanskrit commentary on the Jain Sútra entitled *Anuyogadvára*. By Hemachandra Súri.

**Beginning.** सम्यक्सुरेन्द्रकृतसंस्तुतपादपद्म-
मुद्दामकामकविराजकठोरसिंहं ।
सद्धर्म्मदेशकवरं वरदं नतोऽस्मि
वीरं विशुद्धतरबोधनिधिं सुधीरं ॥
अनुयोगभृतां पादान् वन्दे श्रीगौतमादिसूरीणां ।
निष्कारणबन्धूनां विशेषतो धर्म्मदेष्टृणां ॥
यस्याः प्रसादमतुलं संप्राप्य भवन्ति भव्यजननिवहाः ।
अनुयोगवेदिनस्तान् प्रयतः श्रुतदेवतां वन्दे ॥

इहातिगभीरमहानीरनिधिमध्यनिपतितानर्घ्यरत्नमिवातिदुर्लभं सम्प्राप्य मानुषं जन्म ततोऽपि लब्ध्वा त्रिभुवनैकहितश्रीमज्जिनप्रणीतबोधिलाभं । इत्यादि ।

**End.** तच्छिष्यलवप्रायैरगीतार्थैरपि शिशुजनतुष्ट्यै ।
श्रीहेमचन्द्रसूरिभिरियमनुरचिता प्राकृतवृत्तिः ॥

अनुयोगद्वारवृत्तिः समाप्ता । संवत् १६९९ ।

विषयः । अनुयोगद्वाराभिधानजैनसूत्रस्य व्याख्यानम् ।

---

**No. 2705.** प्रायश्चित्तसामाचारी, व्याख्यासहितः । Substance, country-made paper, 10 × 4 inches. Folia, 8. Lines, 9 on a page. Extent, 180

ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Text, Mágadhí Gáthá; Commentary, Sanskrit. Generally correct.

**Práyaśchitta-sámáchári**. A treatise on expiations according to the ordinances of the Jains. By Tilaka A'chárya.

**Beginning**. टीकायाः,—

प्रणिपत्य जिनं वीरं श्रावकाणां विशुद्धिकृत् ।

प्रायश्चित्तं स्वगाथोक्तं व्याख्यामि सुखबुद्धये ॥

तत्रेयं नमस्काराभिधेयाभिधायिकाद्यगाथा । (मूलस्य,)—

सिरिवीरजिणं नमिउं पच्छित्तं सावयाणवोत्थामि ।

वीमं सिउणवज्झसो सामायरीउं विविहाउं ॥ इत्यादि ।

**End**. मूलस्य,—

इत्युत्तरसवणतिगं रेवइ रोहिणि पुणव्वसूणदुगं ।

अणुराहसमं भणिया सोलसा आलोयणा रिक्खा ॥

टीकयाः,—

प्रायेणैतान्यालोचनीयपदानि सम्भवन्ति तेषामेव प्रायश्चित्तसामाचारी ।

**Colophon**. इति तिलकाचार्य्यकृतप्रायश्चित्तसामाचारिटीका ।

विषयः । जैनानां प्रायश्चित्तविधिकथनं । तत्र ज्ञानातिचारविषयकथनं । दर्शनातिचारकथनं । चारित्र्यातिचारकथनं । तत्र अणुव्रतविधानं । मृषादत्तपरिग्रहादिप्रायश्चित्तकथनं । निधुवनविषयकप्रायश्चित्तकथनं । वीर्य्याचारविषयकप्रायश्चित्तकथनं । यत्र यतीनां गृहिनाञ्च विशेषकथनं ।

---

**No. 2706.** होलिकाविधिः । Substance, country-made paper, 10 × 4 inches. Folia, 3. Lines, 12 on a page. Extent, 92 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect. Sanskrit.

**Holikávidhi**. The story of Holiká, a daughter of Jayadharma, a king of Jayapura. Becoming a widow at an early age, she lived a dissolute life for some time, and then expiated her sins by entering a burning pyre. This is a Jain version of a Hindu tale which is related to account for the origin of the Holi festival. The Jains, too, have a festival of the same name. The work under notice provides the rules for the fast.

**Beginning.** होलिका फाल्गुने मासि द्विविधा द्रव्यभावतः ।
तत्राद्या धर्म्महीनानां द्वितीया धर्म्मिणां तथा ॥

अस्यायमर्थः । लोकाः इदं पर्व्वहोलिकेति वदन्ति । सा च द्विधा द्रव्यतो भावतश्चेति । इत्यादि ।

**End.** भव्यात्मभिः शुभेच्छुभिस्तन्न कर्त्तव्यं किन्तु श्रीजिनोक्तधर्म्म एव सेव्यः । स चात्र जगति जनानामिष्टार्थसाधक इति ।

**Colophon.** इति होलिकाविधिः ।

विषयः । द्रव्यभेदात् भावभेदाच्च होलिका द्विविधा । तत्राद्या जैनधर्म्मविमुखैरनुसेवनीया । द्वितीया तु तदन्यैरिति कथनं । तत्र होलिकाया उत्पत्तिकथनप्रसङ्गेन जयपुराधिपस्य जयधर्म्माभिधानस्य नरपतेः होलिकेतिनामधेया काचित् कन्या समजनि । सा च निजपूर्व्वजन्मसञ्चितदुरितपरिपाकेन अकाले विवाहितापि वैधव्यं समधिजगाम । अथ तस्याः दुश्चारित्र्यादिकीर्त्तनपूर्व्वकमग्निप्रवेशादिविवरणकीर्त्तनं ।

---

**No. 2707.** मौन्येकादशीकथा, व्याख्यासहिता । Substance, country-made paper, 12 × 4 inches. Folia, 15. Lines, 8 on a page. Extent, 315 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh Mágadhí Gáthá. Incorrect.

**Maunyekádas'í-kathá.** A Jain story about a fast on the 11th of the moon, and called Mauní-ekadas'í. This legalizes for the Jains the ordinary Hindu fast on the eleventh of the moon. Anonymous.

**Beginning.** मूलस्य,—
सिरिवीरं नमिऊणं पुच्छे सिरिगोयमो समासेणं ।
भयवं कहेसुइदिं इग्यारहमोनकरणेणं ॥
पभणइ नेमि जिणं हो पव्वाणिय पंचरम पक्खंमि ।
वीया दुविहे धम्मे सहजइणं जे भणिया ॥
व्याख्यायाः,—
श्रीमहावीरं नत्वा श्रीगोतमो गणधरः ।

तं पप्रच्छ । भगवन् एकादश्यां तिथौ मौनेन वाचंयमः भवेत् । तदा कीदृशं फलं प्राप्नोति । इत्यादि ।

**End.** मूलस्य,—
न वगं दंसणपणना न विसयपरघायं हवियं ।
भयकुच्छमिच्छसासं जिणमवतीसा अपरिखूणा ॥





व्याख्याया;—

अमुना प्रकारेण महामुनिः सुव्रतस्वामी कथानेकं श्रुत्वा ये भव्यजीवा एकादशीतप आराधयन्ति। ते जीवा इह लोके सुखिनो भूत्वा परलोके ऋद्धिदिं प्राप्नुवन्ति।

**Colophon.** इति मौन्यैकादशीकथा।

विषयः। वर्द्धमानजिनेन सह गणधरस्य गौतमस्य संवादेन द्वारकामधिष्ठितस्य कृष्णवासुदेवस्य अभ्यर्थनया प्रसन्नस्य नेमिजिनस्य मौन्यैकादशीमाहात्म्यकीर्तनम्।

---

**No. 2708.** कम्मपइदी, (कर्म्मप्रकृतिः।) Substance, country-made paper, 10 × 4 inches. Folia, 82. Lines, 6 on a page. Extent, 1,414 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Sinh, Bahádur. Appearance, fresh. Prose. Incorrect. Mágadhí.

**Kammapaidí.** The Jain theory of works (*karma*) and their fruits. Anonymous.

**Beginning.** ॐनमो वीतरागाय।

सिद्धं सिद्धत्थे सुय वन्दिय निद्दोष सव्वकम्ममलं कम्मद्दगस्स करण + गुदय सद्दानवोच्छामि। इत्यादि।

**End.** जस्स वरसासनावयवफरिसपविकसियविमलमइ किरणा। विमलं वि कम्मसद्दले सोमे सरणं महावीरो॥

**Colophon.** इति कम्मपइदी समत्तो।

विषयः। तत्र प्रथमतो बन्धन-संक्रमण-उद्वर्त्तना-अपवर्त्तना-उदीरणा-उपशमनानिधत्ति-निकाचनारूपाष्टविधकरणनिरूपणं। तत्र बन्धो नाम कर्म्म पुद्गलानां जीवप्रदेशैः सह वह्न्यशः-पिण्डवत् अन्योन्यानुगमः। तथा च बध्यते अष्टप्रकारं कर्म्म येन तद्बन्धनं। एवं संक्रम्यते प्रकृत्यादिरूपतया अध्यवसायन्ते येन तत् संक्रमणं तथा उद्वर्त्यते प्राबल्येन प्रभूतीक्रियते स्थित्यादि यया जीववीर्य्यविशेषपरिणत्या सा उद्वर्त्तना। एवमन्यत्र। करणान्यमूनि च जीववीर्य्यरूपाणीतिनिरूपणं। अथ इस्तादिषु जीवप्रदेशस्थितिनिरूपणं। तत्र अविभागप्ररूपणा-वर्गणाप्ररूपणा-अन्तरप्ररूपणादिस्वरूपकथनं। योगस्थानादिनिरूपणं। वृद्धिहानिरहितस्य जीवस्य योगस्थानावस्थितिकालनिरूपणं। अथ सूक्ष्म-बादरै-केन्द्रिय-द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रियासंज्ञि-पञ्चेन्द्रियाणां पर्य्याप्तापर्य्याप्तानां जघन्योत्कृष्टविषये अल्पबहुत्वनिरूपणं। अथ परमाणुवर्गणानिरूपणं अत्र वर्गणाशब्दः समुदयवाचीति ज्ञेयं। परमाणुस्कन्धादिनिरूपणं। मूलप्रकृतिनिरूपणं। उत्तरप्रकृतिनिरूपणं। अथ वैक्रियाहारकतैजसकार्म्मणभेदेन चतुर्व्विधशरीरनिरूपणं। आवरणी-

यमोदयीयादिस्वरूपकथनं। अथ चतुर्दश अनुयोगद्वाराणि, यथा,—अविभागप्ररूपणा, वर्गणा प्ररूपणा। स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा, कण्डकप्ररूपणा षट्स्थानकप्ररूपणा। अधस्तनस्थानप्ररूपणा, वृद्धिप्ररूपणा, समयप्ररूपणा, यवमध्यप्ररूपणा, ओजोयुग्मप्ररूपणा, पर्य्यवसानप्ररूपणा, अल्पबहुत्वप्ररूपणा चेति। तत्र तत्र परमाणूनां हीनहीनतरगुणगुणतरादिविभागकथनञ्च। आवलिकानिरूपणं। मनुष्यादीनां स्थितिनिरूपणं। अथ ज्ञानावरणीयवर्गदर्शनावरणीयवर्ग-वेदनीयवर्ग-दर्शनमोहनीयवर्ग-चारित्रमोहनीयवर्ग-लोककषायमोहनीयवर्ग नामवर्ग-गोत्रवर्ग-अन्तरायवर्गाणां स्थित्यादिनिरूपणं। अथ जीवसमुदाहारनिरूपणं। अथ विशेषेण संक्रमकरणस्वरूपादिनिरूपणं। तत अनादिमिथ्यादृष्ट्यादिनिरूपणं। पञ्चविधपतद्ग्रहस्थाननिरूपणं। पतद्ग्रहश्च एकत्रिंशत्प्रकृतिसमुदयरूपइति ज्ञेयं। मूलप्रकृतिस्थितिसंक्रमः उत्तरप्रकृतिस्थितिसंक्रमश्चेति द्विविधस्थितिसंक्रमनिरूपणं। अथ विशेषेण उद्वर्त्तनस्वरूपादिनिरूपणं। अपवर्त्तनास्वरूपादिकथनं। उदीरणास्वरूपादिकथनं। तत्र प्रकृत्युदीरणा, स्थित्युदीरणा, अनुभागोदीरणा, प्रदेशोदीरणा चेति तस्याश्चातुर्विध्यकथनं। एवं ज्ञानावरणादिषु उदीरणाभेदनिरूपणं। तत्र तत्र शुभाशुभविपाक-पुद्गलविपाक-क्रोधादिविपाकप्रभृतिनिरूपणञ्च। अथ उपशमनास्वरूपादिनिरूपणं। तथा सा करणकृता अकरणकृता चेति द्विविधा। एवम् अनुदीर्णोपशमनादिभेदनिरूपणं। सम्यग्दृष्टिमिथ्यादृष्ट्यादिस्वरूपकथनं। देशविरतिसर्व्वविरतिप्रभृतिस्वरूपकथनं। अथ निधत्तिनिकास्वरूपादिकथनं। अथ उदयनिरूपणं। तत्र प्रकृत्युदयस्थित्युदयभेदेन तस्य द्विविध्यादिनिरूपणं। अथ अनुभागसत्कर्म्मस्थानभेदादिनिरूपणञ्च।

---

**No. 2709.** कर्म्मप्रकृतिटीका। Substance, country-made paper, 11 × 5 inches. Folia, 171. Lines, 13 on a page. Extent, 7,481 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

A Sanskrit commentary on the work described under the next preceding No. By Malayagiri.

**Beginning.** प्रणम्य कर्म्मद्रुमचक्रनेमिं नमत्सुराधीशमरिष्टनेमिं।

कर्म्मप्रकृत्याः कियतां पदानां सुखावबोधाय करोमि टीकां॥

अयं गणधूर्व्विकृतः क्रमग्रो यदस्मदादिर्वदतीह किञ्चित्।

उपाधिसम्पर्कवशाद्विशेषो लोकेऽपि दृष्टः स्फटिकोपलस्य॥

इह शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमानाः सन्त इष्टदेवतानमस्कारपुरःसरमेव प्रवर्त्तन्ते। न चायमाचार्य्येण शिष्टसमयपरिपालनाय — — — — — — — — — ऽेचावतां प्रवृत्त्यर्थं प्रयोजनादिकञ्च प्रतिपिपादयिषुरादाविदमाह,—सिद्धमिति।

**End.** एनामति।.श्रीरां कर्म्मप्रकृतिं विवृण्वता कुशलं।
यद्वापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः॥
अर्हन्तो मङ्गलं मे स्युः सिद्धाश्च मम मङ्गलं।
मङ्गलं साधवः सम्यक् जैनो धर्म्मश्च मङ्गलम्॥

**Colophon.** इति श्रीमलयगिरिविरचिता कर्म्मप्रकृतिटीका समाप्ता।

विषयः। कर्म्मप्रकृतिनामकजैनसूत्रस्य व्याख्यानं।

---

**No. 2710** भरतादिकथा, वा कथाकाशः। Substance, country-made paper, 11 × 4 inches. Folia, 528. Lines, 8 on a page. Extent, 13,175 ślokas Character, Nágara. Date, Sm 1669. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect. Sanskrit and Mágadhí.

**Bharatádikathá** ALIAS **Kathákáśa.** A collection of legends, giving Jain versions of the lives of ancient personages described in Hindu and Buddhist works. The leading heroes of the Mahábhárata are noticed at considerable length. By S'ubhaśíla, disciple of Munisundara Súri.

**Beginning.** ॐ नमः सर्व्वज्ञाय।
युगादौ व्यवहाराध्वा सर्व्वो येन प्रकाशितः।
स श्रीऋषभयोगीन्द्रो दद्याद्वोऽव्ययसम्पदं॥
त्यक्ता चक्रिश्रियं सद्यो लेभो यः संयमश्रियं।
स श्रीशान्तिजिनो भूयाज्जनानां शिवशर्म्मणे॥
येन सौरावतारेण यदुवंशः पवित्रितः।
स श्रीनेमिजिनाधीशो भूयादव्ययसम्पदे॥
— — — — — — — — — —।
तपागच्छाधिपाः श्रीमन्मुनिसुन्दरसूरयः।
तच्छिष्यः शुभशीलाङ्को भरतादिकथां व्यधात्॥

तथाहि तत्र प्रथमं भरहेसर बाहुबली अभयकुमारो यंढ्ढणकुमारो सिरि उश्रखिया — — । इत्यादि।

**End.** श्रीमन्मुनीशमुनिसुन्दरसूरिराज-
शिष्योत्तमा + + इति + + +।

एतां कथां वितनुते स्म नवाम्बरेषु
चन्द्रप्रमाणसमये किलविक्रमार्कात् ॥
भरहेसरबाहुबली हत्तिः शुभशीलविबुधरचितेयं ।
शोध्या + + विद्वद्भिः सद्यैः + + प्रसारणतः ॥
— — — — — — — — — — ।

Colophon. इति श्रीमत्तपागच्छाधिराजश्रीमुनिसुन्दरसूरिशिष्यपण्डितश्रीशुभशीलविरचितकथाकोशे द्वितीयो महासत्वाधिकारः समाप्तः । शुभमस्तु । संवत् १९९९ ।

विषयः । सद्दानस्य शुभजनकत्वकथनमुखेन भरतस्य उपाख्यानकथनं । तत्र आदिजिनस्य ऋषभदेवस्य त्रयोदशजन्मविवरणकथनञ्च । जीवहिंसायाः निरतिशयपापजनकत्वकथनं । सत्पात्राय दानफलकथनं । अत्र धनसार्थवाहस्य उपाख्यानकथनं । दारिद्र्यनाशनकथनं । अत्र वज्रजङ्घस्य उपाख्यानकथनं । अथ भरतपुत्रस्य पुण्डरीकस्य उपाख्यानकथनं । अभयकुमारस्य मुक्तिप्राप्तिविवरणकथनं । द्वारकावासिमुकुन्दतनयस्य ढंढणकुमारस्य वृत्तान्तकीर्त्तनं । श्रावकस्य उपाख्यानकथनं । राजगृहनगराधिपस्य श्रेणिकस्य वृत्तान्तकथनं । पुष्पचूडस्य उपाख्यानकथनं । अन्निकापुत्रस्य उपाख्यानकथनं । विजयराजस्य उपाख्यानकथनं । मन्नाकस्य कथाकीर्त्तनं । अदत्तादानग्रहणकथाकीर्त्तनं । अत्र नागदत्तस्य उपाख्यानकथनं । स्थूलभद्रकथाकीर्त्तनं । वज्रस्वामिचरित्रकीर्त्तनं । नन्दिषेणकथाकीर्त्तनं । कुशीलस्य चरित्रकथनं । केशिगणधरस्य उपाख्यानकथनं । करकन्डूकथाकीर्त्तनं । हल्लविहल्लकथाकीर्त्तनं । सुदर्शनश्रेष्ठिकथा । शालमहाशालकथा । शालिभद्रकथा । वराहमिहिरस्य कथा । भद्रबाहुकथा । अथ अभिमानवर्ज्जनादिमाहात्म्यकथनमुखेन दशार्णभद्रराजर्षेरुपाख्यानकथनं । असारसंसारस्वरूपद्वादशभावनात्मकध्यानमाहात्म्यकथनं । तत्र यशोभद्रसूरेर्विवरणकथनं । शिवकुमारस्य वृत्तान्तकथनं । जम्बूकुमारस्य उपाख्यानकथनं । प्रभवस्वामिदीक्षावृत्तान्तकथनञ्च । इलातीपुत्रस्य उपाख्यानकथनं । युगबाहुकथा । हस्तिसूरिकथा । आर्य्यरक्षितसूरिकथा । मनककथा । सरस्वतीभ्रातुः कालिकसूरेः कथा । सत्यभामाशाम्बप्रद्युम्नादीनामुपाख्यानकथनं । मूलदेवकथा । विष्णुकुमारचरित्रकथनं । आर्द्रकुमारयतिकथा । दृढप्रहारिकथा । मेघकुमारकथा । सुन्दकसूरिकथा । धनदेवधनमित्रयोरुपाख्यानकथनं । उत्तमचरित्रराजकथा । कुटुम्बप्रियायाः कथाकीर्त्तनं । क्षपणकथा । सुलसाचरित्रकीर्त्तनं । मदनरेखाया उपाख्यानकथनं । भैमीकथा । नर्म्मदासुन्दरीकथा । ऋषिदत्ताकथा । सीताचरित्रकीर्त्तनं । तत्र सीताहरणादिदृष्टान्तकथनञ्च । सुभद्राचरित्रकथनं । अञ्जनासुन्दर्य्या उपाख्यानं । ज्येष्ठाया उपाख्यानं । मृगावत्या उपाख्यानम् । प्रभावत्या उपाख्यानम् । चेल्लनाया उपाख्यानम् । ब्रह्मसुन्दर्य्या उपाख्यानं । रेवत्या उपाख्यानं । गान्धार्य्या उपाख्यानं कुन्त्या उपाख्यानं । देवक्या उपाख्यानं । द्रौपद्या कथा । धारिणीकथा । कलावतीकथा । पुष्पचूलाकथा । रुक्मिणीकथा । शीलवतीकथा ।

नन्दयन्तीकथा । रोहिणासपत्न्यादिविवरणकथनं । रतिसुन्दर्य्या उपाख्यानं । श्रीमत्या उपाख्यानकीर्त्तनञ्च ।

---

**No. 2711.** श्रीशीलोपदेशमाला, बालावबोधसहिता। Substance, country-made paper, 10 × 4 inches. Folia, 175. Lines, 13 on a page. Extent, 58,134 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, Gáthá, Commentary, Gujaráṭí. Incorrect.

**S'ilopadeśa-málá.** With a commentary entitled *Báláavabodha.* A collection of stories in illustration of the merits of good conduct. By Jinachandra Súri; the commentary by Merusundara Upádhyáya. Sítá and other leading personages of Hindu works are noticed.

**Beginning.** मूलस्य,—

आबालबम्भयारिं नेमिकुमारं नमिउ जयसारं ।
सीलोपएसमालं वुच्छामि विवेयकरिसालं ॥

टीकायाः,—

श्रीवामे + + मयश्रीसहितं महितं गुणैः ।
प्रणिपत्य सत्यभक्त्यानन्तातिशयशालिनं ॥
श्रीजिनचन्द्रगुरूणामादेशान्मेरुसुन्दरविनेयः ।
शीलोपदेशमालां विवृणोति शिशुप्रबोधाय ॥

+ रि इष्टदेवता नमस्करी सीलोपदेशमालाना बालावबोध भणि आदिगाथाकहइ । इत्यादि ।

**End.** मूलस्य,—

इयजयसिंहमुणीसरविणयजायकित्तिणा + + + मयं ।
सीलोपएसमालं आराहइ लहवो + + फलं ॥

टीकायाः,—

— — — — — — — — — — — ।

सिद्धान्तोक्तगाथारूपप्रकरणभणतां गुणतां शुद्धशीलपालतां भावना भावउ जिम + + बीजमूं फल लहउ परम्पराइं मोक्षपणिपामिउं ॥

**Colophon.** इति श्रीशीलोपदेशमालावबोधश्रीखरतरगच्छनायकश्रीजिनचन्द्रसूरिविजय + श्रीमेरुसुन्दरोपाध्यायविरचितबालावबोध समाप्त ।

**विषयः ।** उक्तमेव शीलेनैव सम्यग्ज्ञानदर्शनचरित्रप्राप्त्या मोक्षलाभो भवतीतिकथनम्-

षेन विविधसाधुचरित्रकीर्त्तनं। तत्र साधुना शीलेनैव गुणसुन्दर्य्या मोक्षप्राप्तिरिति तद्दृष्टान्त-कथनं। शीलव्रतमाहात्म्यकथनप्रसङ्गेन ऋषीणां चरित्रकथनं। एवं विदेहाधिपतेः अभिचन्द्रस्य दृष्टान्तकथनं। नारदपर्व्वतकयोरुपाख्यानं। लीलावत्या उपाख्यानं। रिपुमर्द्दननारायणकथा। विजयपालस्य दृष्टान्तकथनं। पद्मावत्या उपाख्यानं। हरिणीकथा। द्वारकेशनारायणकथा। आर्द्रकऋषेरुपाख्यानं। अभयकुमारकथा। नन्दिषेणकथा। यशोमतीकथा। नेमिजिनस्य चरित्रकथनं। मल्लीचरित्रकथनं। मुनिभद्रस्य चरित्रकथनं। वयरस्वामिचरित्रकथनं। सुदर्शनोपाख्यानं। वङ्कचूड़ोपाख्यानं। सुभद्रोपाख्यानं। मदनरेखायाः महासत्याः उपाख्यानं। अञ्जनासुन्दर्य्या उपाख्यानं। नर्म्मदासुन्दर्य्या उपाख्यानं। रतिसुन्दर्य्या उपाख्यानं। ऋषिदत्ताया उपाख्यानं। दमयन्त्या उपाख्यानं। कमलाया महामत्या उपाख्यानं। कलावत्या उपाख्यानं। नन्दयन्त्या उपाख्यानं। रोहिण्या उपाख्यानं। कुलबालकस्य उपाख्यानं। रूपवत्या उपाख्यानं। देवदत्तस्य सुवर्णकारस्य उपाख्यानं। पण्डितस्य उपाख्यानं। दत्तदुहितुरुपाख्यानं। अगड़दत्तमुनेरुपाख्यानं। राजबालाया उपाख्यानं। जनकतनयायाः सीताया उपाख्यानं। धनश्रीकस्य उपाख्यानकथनञ्च।

---

**No. 2712.** बन्धहेतूदयत्रिभङ्गी। Substance, country-made paper, 10 × 4½ inches. Folia, 18. Lines, 4 on a page. Extent, 216 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Mágadhí.

**Bandha-hetúdaya-tribhañgí.** Jain theory of bondage and emancipation. By Harshakus'ala Gaṇi.

**Beginning.** वंधणहेउविमुक्कं वंदित्ता वद्धमाणतित्थयरं।
गुणसहिअमग्गणसु भणामि हेउदय सामित्तं॥
मिच्छे सासणमीसे अविरयदेसे पमत्त अपमत्ते।
नियट्टिअ नियट्टि सु+म वसमखीण सजोगि अजोगिगुणा॥ इत्यादि।

**End.** इअमम्गणठाणेसुं गुणवाणगजो अणेण हेउ+दउ।
भणिउ सपरहि अत्थ' सिरिसायरसूरिसीसेण॥

**Colophon.** इति श्रीबन्धहेतूदयत्रिभङ्गी सम्पूर्णा।

विषयः। प्रथमतो बन्धहेतूनां मिथ्यात्व-सासादन-मिश्र-अविरति-प्रमत्तप्रभृतीनां गुणानामुद्देशकथनं। मार्गणास्थानकथनं। योगस्थानकथनं। तत्र तत्र बन्धहेतुत्वनिरूपणं। त्रिभङ्गीयन्त्रकथनञ्च। अथ नरकद्वारनिरूपणं। तिर्य्यग्द्वारनिरूपणं। तत्र तत्र त्रिभङ्गीयन्त्रकथनञ्च। मनुष्यद्वारनिरूपणं। तत्र युगलिनरनारीणां त्रिभङ्ग्यादिकथनं। अथ देवदेवीनां त्रिभङ्गीक-

थनं। देवानां गतिनिरूपणं। इन्द्रियद्वारनिरूपणं। कायद्वारनिरूपणं। योगद्वारनिरूपणं। तत्र असत्योभयमनोवागयोगादित्रिभङ्गीकथनं। एवं वैक्रियमिश्रकाययोगादिषु तत्कथनं। पुंवेदत्रिभङ्गीकथनं। एवं स्त्रीवेदक्लीववेदत्रिभङ्गीकथनं। क्रोध-मान-माया-लोभादिषु त्रिभङ्गीकथनं। मनःपर्य्यायज्ञानत्रिभङ्गीकथनं। केवलज्ञानत्रिभङ्गीकथनं। मतिश्रुतावधित्रिभङ्गीकथनं। अथ संयमद्वारकथनं। अथ देशविरति-परिहारचारित्रादित्रिभङ्गीकथनं। चक्षुः—अवधि-केवलदर्शनत्रिभङ्गीकथनं। क्षायिकोपशमिकादित्रिभङ्गीकथनं। असंज्ञित्रिभङ्गीनिरूपणञ्च।

---

**No. 2713.** जीवविचारप्रकरणम्, वा (जीयवियारो।) Substance, country-made paper, 10 × 5 inches. Folia, 8. Lines, 6 on a page. Extent, 102 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Generally correct. Mágadhí.

**Jíyaviyáro, (Sanskrit,) Jívavichára-prakarana.** Jain biology. By S'ánti Súri.

**Beginning.** भुवणपईवं वीरं नमिउण भणामि अवोहवोहत्थं।
जीवसरूवं किं चिवि जहभणियं पुव्वसूरीहिं॥
जीवा मुत्तासंसारिणोय तस थावराय संसारी।
पुढवि जलजलणवाऊ वणस्सइ थावरा नेया॥ इत्यादि।

**End.** एसो जीयवियारो संक्खेवरुइण जाणणाहेउं।
संखित्तो उद्धरिउ रुद्दाउ सुयसमुद्दाउ॥

**Colophon.** इति श्रीजीवविचारप्रकरणं समाप्तं।

विषयः। तत्र मुक्तसंसारिभेदेन जीवानां द्वैविध्यकथनं। संसारिणोऽपि स्थावरजङ्गमभेदात् द्विविधाः। अथ मही-जल-वह्नि वायु-वनस्पतीनां स्थावरजीवत्वकथनं। तत्र स्फटिक-विद्रुम-रत्न-हरिताल-कनकादिधातु-पाषाणादिरूपपृथ्वीकायजीवभेदकथनं। एवं मेघ-तुषार वर्षोपलादिरूपजलकायजीवभेदकथनं। अङ्गार-ज्वाला-मुर्म्मुर-विद्युदादिरूपतेजःकायजीवभेदकथनं। उद्भ्रामकउत्कलिकामण्डलिप्रभृतिरूपवायुकायजीवभेदकथनं। वनस्पतिकायाः साधारणप्रत्येकभेदेन द्विधा। तत्र निगोदापराभिधानानां साधारणवनस्पतिकायजीवानाम् अनन्तभेदतया लोकप्रसिद्धा कन्द-च्छिन्नरुहादिरूपविविधकथनं। अथ पृथिव्यादयः पञ्च स्पर्श रूपैकेन्द्रियमुक्तजीवा इति निरूपणं। एवं शङ्खकृमिप्रभृतयः स्पर्शरसनारूपेन्द्रिययुक्तत्वात् द्वीन्द्रिया इति कथनं। मत्कुण-यूक-पिपीलिकाप्रभृतयः स्पर्शरसनाघ्राणेन्द्रिययुक्तत्वात् त्रीन्द्रिया इति कथनं। दंशमशकादयः स्पर्श-रसना-घ्राण-श्रवणेन्द्रिययुक्तत्वात् चतुरिन्द्रिया इति निरू-

पणं। अथ स्पर्श-रसना-घ्राण-श्रवण दर्शनेन्द्रिययुक्ताः पञ्चेन्द्रियजीवाः नारक-तिर्य्यक्-मनुष्य-देवतामेदेन चतुर्व्विधा इतिनिर्णयः। अथ नारकजीवानां पार्थिवादिभेदेन सप्तविधत्वकथनं। अथ तिरश्चां जलचरस्थलचरखेचरभेदेन त्रैविध्यनिरूपणं। तत्र तत्र संक्षेपेण जलचरादितिर्य्यग्भेदनिरूपणं। अथ मनुष्यास्तावत् त्रिविधाः। तत्र केचित् कृषिवाणिज्यादिकर्म्मप्रधानभूमिजातत्वात् कर्म्मभूमिजाः अपरे पुनः उक्तविधकर्म्मरहितायां भूमौजातत्वात् अकर्म्मभूमिजाः। केचिच्च आन्तरद्वीपजाता इतिनिरूपणं। अथ क्रमेण उत्कृष्टापकृष्टादिरूपभेदेन एकेन्द्रियादिजीवानां देहमानादिकथनं। एवं नारकतिर्य्यगादिजीवानां देहमानादिकथनं। अथ सर्व्वेषां जीवानां क्रमेण स्थितिरूपजीवितकालनिरूपणं। अथ जीवानां प्राणाः दशधा इति कथनपूर्व्वकम् एकेन्द्रियादिषु सर्व्वेषु जीवेषु विभागकथनं। जीवानां जन्ममरणयोरानन्त्यकथनं। तत्र च चतुरशीतिलक्षयोनिषु जीवानां जन्म भवतीतिकथनं। अथ मुक्तानां जन्मकर्म्मादिराहित्यकथनञ्च।

---

**No. 2714.** दशवैकालिकसूत्रवृत्तिः। Substance, country-made paper, 10 × 4 inches. Folia, 69. Lines, 13 on a page. Extent, 3,354 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Báhadur. Appearance, fresh. Incorrect. Text, in Mágadhí verse; Commentary in Sanskrit prose.

**Daśa-vaikálika-sútra-vṛitti.** A commentary on the well-known Jain text, entitled *Daśa-vaikálika-sútra.* By Vinayahañsa Yati.

**Beginning** धम्मो मंगलमुक्कट्ठं अहिंसा संजमो तवो।
देवारितं नमंसंति जस्स धम्मे सया मणो॥

धर्म्म उत्कृष्टं मङ्गलं। किं लक्षणो धर्म्मः। अहिंसा जीवदया। संयमः पञ्चेन्द्रियनिग्रहः। तपो द्वादशधा। यस्य जन्तोर्धर्म्मे मनः सदा वर्त्तते। देवा अपि तं नमस्कुर्व्वन्ति। इत्यादि।

**End.** श्रीसीमन्धरपार्श्वात् + + + + + + + भविकानां जीवानां विबोधनार्थं एते द्वे + + आनीते।

**Colophon.** इति दशवैकालिकसूत्रवृत्तिः सम्पूर्णा।
श्रीनीजराख्यनगरे विधिपक्षनाथ-
श्रीभावसागरमुनीश्वरसुप्रसादात्।
सद्दिमतां महिमरत्नसुपाठकानां
शिष्यो मुदा विनयहंसयतिः करोति॥
संवत्सरे युगलसप्ततिथिप्रमाणे
वृत्तिं विलोक्य महतीं निजशिष्यकार्थं।

इत्थिह सूत्रसहितां दशकालिकस्य
सा पड्क्तिनैर्विजयते किल वाच्यमाना ॥

विषयः । दशवैयालियसुत्ताभिधानजैनसूत्रस्य व्याख्यानम् ।

---

**No. 2715.** वीरविक्रमादित्यचरित्रम् । Substance, country-made paper, 12 × 5 inches. Folia, 114. Lines, 9 on a page. Extent, 3,065, ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Víravikramáditya-charitra.** A Jain version of the history of Vikramáditya, king of Málava, rendered into verse from an original prose redaction. By Rámchandra Súri. This is quite distinct from the Vikramáñka-charita, edited by Dr. G. Buhler.

**Beginning.** प्रणम्य जगदानन्ददायकान् जिननायकान् ।
गणेशान् गौतमाद्यांश्च गुरून् संसारनायकान् ॥
सज्जनान् शोभकारांश्च शास्त्रबोधनकारकान् ।
पञ्चदण्डातपत्रस्य कथां वक्ष्ये समासतः ॥
तथाहि मालवे देशेऽवन्त्यां श्रीविक्रमो नृपः ।
राज्यं करोति सत्त्वात्मा कर्मसाक्षीव भूतले ॥
एकदा विक्रमो राजा पाटिकायां चतुष्पथे ।
गच्छन् गान्धिकवाटस्य मध्ये सौधोपरिस्थितां ॥ इत्यादि ।

**End.** श्रीविक्रमार्को नृपतिर्मुहूर्त्ते संस्थापितो भूपवरैरसंख्यैः ।
सिंहासने कृच्युते निवेशितस्तदा महानन्दमहोत्सवैर्युतः ॥
श्रीविक्रमार्कनरेश्वरस्य श्रीपञ्चदण्डातपत्त्रचबन्धे ।
षष्ठे महाश्चर्यकरे यथोक्तधर्माभान्वितः पञ्चकतः प्रबन्धः ॥
यथा शर्करया दुग्धं वनं सिंहेन भूष्यते ।
काननं कल्पवृक्षेश्च राजहंसैः सरोवरं ॥
शातकुम्भं वरै रत्नैः सुवस्त्रैर्मानवो जनः ।
गजेन्द्रो वरघण्टाभिः शस्त्रैः शूरो नृपो दलैः ॥
— — — — — — — — — ।
श्रीसाधुपूर्णिमापक्षाः कानने कल्पपादपाः ।
श्रीमदभयचन्द्राख्याः सूरयो गुणभूरयः ॥

तेषां पादप्रसादेन मया मूर्खेण निर्म्मितः।
ग्रन्थो विद्वज्जनैः शोध्यः कृपां कृत्वा ममोपरि ॥
श्रीविक्रमार्ककालात्तु खवि + + संख्यकैः।
वर्षे माघे सिते पक्षे + + चतुर्द्दशीदिने ॥
पुष्ये रवौ स्तम्भतीर्थे श्रीरामचन्द्रेण सूरिणा।
मद्यात् पद्यमयोऽकारि प्रबन्धो जनरञ्जकः ॥

— — — — — — — — —

**Colophon.** इति श्रीमद्वीरविक्रमादित्यचरित्रं समाप्तम्।

विषयः। उज्जयनीनाथस्य वीरविक्रमादित्याभिधेयस्य राज्ञः अलौकिकवृत्तान्तभूयिष्ठतया वेतालादिसिद्धिकथनपूर्व्वकं जीवनीकथनं। असौ तु जैनधर्म्मं जग्राहेतिवर्णनञ्च।

---

**No. 2716.** षोड़शकप्रकरणम्। Substance, country-made paper, 15 × 4½ inches. Folia, 43. Lines, 3—4 on a page. Extent, 320 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Raya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Shoḍaśaka-prakaraṇa.** An enquiry into the truth of the Jaina religion, and the duties compulsory on the Jains. By Haribhadra Súri. (*f.* No. 2656.)

**Beginning.** ॐ नमः प्रणिपत्य जिनं सद्धर्म्मपरीक्षकादिभावानाम्।
बालादिभेदतः खलु वक्ष्ये किञ्चित्समासेन ॥
बालः पश्यति लिङ्गं मध्यमबुद्धिर्विचारयति वृत्तम्।
आगमतत्त्वन्तु बुधः परीक्षते सर्व्वयत्नेन ॥
बालो ह्यसदारम्भो मध्यमबुद्धिस्तुः मध्यमाचारः।
ज्ञेय इह तत्त्वमार्गे बुधस्तु मार्गानुसारी यः॥ इत्यादि।

**End.** एते प्रवचनतः खलु समुद्धृता मन्दमतिहितार्थन्तु।
आत्मानुस्मरणाय च भावाभवविरहसिद्धिफलाः॥
धर्म्मश्रवणे यत्नः सततं कार्य्यो बहुश्रुतसमीपे।
हितकाङ्क्षिभिर्न्दसिंहैर्वचनं + + हारिभद्रमिदम्॥

**Colophon.** इति षोड़शकप्रकरणम्॥

विषयः। सद्धर्म्मरूपजैनधर्म्मपरीक्षाविधिकथनं। तत्र उत्तम-मध्यमबालभेदेन परीक्षकस्य त्रैविध्यकथनं। तेषां प्रत्येकं व्यापारकथनं। अथ बालस्य बाह्यधर्म्मपरीक्षाधिकारित्वमात्रमिति निरूपणं। मध्यमस्य चारित्ररूपधर्म्माधिकारित्वनिर्णयः। अथ आत्मनश्चैतन्यरूपत्वव्यवस्थापनं।

तस्य परिणामित्वादिकथनञ्च । अथ गुरोर्बालादीन् प्रति धर्म्मदेशनाविधिकथनं । आगमग्रह-णस्य गुर्व्वधीनत्वादिकथनं । अथ चित्तमेव रागादिमलापगमेन पुष्टिशुद्धिद्वयसमन्वितं धर्म्म इति-धर्म्मलक्षणकथनं । तत्र चित्तस्य उपचीयमानता पुष्टिः । शुद्धिस्तु पापक्षयेण । पापञ्च ज्ञानावर-णीयादिसम्यग्ज्ञानादिगुणविघातहेतुरिति कर्म्म उच्यते । तथा च पुष्टिशुद्धिद्वयेऽस्मिन् प्रत्यक्षी भवे सति क्रमेण आनुपूर्व्व्या पुण्योपचयपापक्षयाभ्यां प्रवर्द्धमानाभ्यां तस्मिन् जन्मनि जन्मान्तरे वा प्रकृष्यमाणवीर्य्यस्य जीवस्य मुक्तिः सर्व्वकर्म्मक्षयलक्षणेतिनिरूपणं । धर्म्मान्तरायरूपविघ्नजय-विधिकथनं । औदार्य्यदाक्षिण्यादीनां धर्म्मलक्षणत्वकथनं । धर्म्माय महादानादिविधिकथनं । देवार्च्चनविधिकथनं । जिनभवननिर्म्माणविधिकथनं । जिनबिम्बनिर्म्माणविधिकथनं । तत्-प्रतिष्ठाविधिकथनं । तत्पूजाविधिकथनं श्रुतज्ञानलिङ्गकथनं । धर्म्मशुश्रूषामाहात्म्यकथनं । तत्र श्रुतमयज्ञानलक्षणकथनं । चिन्तामयज्ञानलक्षणकथनं । भावनाज्ञानलक्षणं । ज्ञानविपर्य्ययादि-लक्षणकथनं । दीक्षाविधिकथनं । अथ निष्पन्नयोगानां मैत्र्यादिरूपचित्तपरिणामकथनं । अथ सालम्बननिरालम्बनभेदेन द्विविधयोगनिरूपणं । तत्र विक्षेपादिपरीहारावश्यकताकथनं । ध्यानविधिकथनमुखेन जिनेन्द्रमूर्त्तेः ध्येयत्वकथनं । केवलज्ञानस्वरूपकथनं । परतत्त्वस्वरूपकथ-नं । तत्र वैशेषिकबौद्धादिमतखण्डनञ्च ।

---

**No. 2717.** षोड़शकविवरणम् । Substance, country-made paper, 14 × $4\frac{1}{2}$ inches. Folia, 58. Lines, 9 on a page. Extent, 1,566 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Shoḍasáka-vivaraṇa.** A commentary on the work noticed under the next preceding No. By Yaśobhadra Súri. This is distinct from the work noticed under Nos. 2656 and 2716, (*ante*, pp. 118, 170.).

**Beginning.** अमृतमिवास्तमनघं जगाद जगतो हिताय यो वीरः ।
तस्मै मोहमहाविषविघातिने स्तान्नमः सततम् ॥
यस्याः संस्मृतिमात्राद्भवन्ति मतमः सुदृष्टपरमार्थाः ।
वाचश्च बोधविमलाः सा जयति सरस्वती देवी ॥

इह जलधिनिमग्नसत्त्वाभ्युज्जिहीर्षाभ्युद्यतेन स्वहितसम्पादननिपुणेन गुरुलाघवचिन्तावता व्याकरणसमर्थेन विदुषा सद्धर्म्मपरीक्षायां यत्नो विधेयः । सा च परीक्षकमन्तरेण न सम्भवति तदविनाभावित्वात् परीक्षायाः । — — — — — हरिभद्रसूरिस्तस्य चादावेव मङ्गलप्रयोजनाभिधेयसम्बन्धप्रतिपादनार्थमिदमार्य्यासूत्रमाह । प्रणिपत्येत्यादि ।

**End.** कृत्वा विवरणमेतत् पुण्यं यदवापि तेन भव्यजन ।
अध्यास्तां षोड़शकलाशशिमण्डलभास्वरं स्थानम् ।

कृतिरियं श्रीश्वेतपटाचार्य्यस्य यशोभद्रसूरेरिति ।

**Colophon.** इति षोड़शकविवरणम् ।

विषयः । हरिभद्रसूरिकृतषोड़शकप्रकरणस्य व्याख्यानम् ।

---

**No. 2718.** गुणस्थानक्रमारोहः लोकनालवृत्तिसहितः। Substance, country-made paper, 10 × 5 inches. Folia, 6. Lines, 9 on a page. Extent, 148 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect. Text, Mágadhí verse; Commentary, Sanskrit prose.

**Guṇasthána-kramároha,** with a commentary entitled **Loka-nála-vṛitti.** On the gradation of Jain virtues. By Jinabhadra Súri. The comment is by the author himself.

**Beginning.** मूलस्य ।

जिणदंसणं विणाजं लोअं पूरंति जम्ममरणेहिं ।
भमइ जिओणंतभवे तस्स सरूवं किमवि वुत्थं ॥
रइसाहठाण सिंअपय कड़ित्थकरजुगनराणिइ लोगो ।
उप्पत्तिनासधुयगुण षआइयइय पड़िपुणो ॥

टीकायाः जिणदंसणं इति । जिनदर्शनं विना यल्लोकं चतुर्दशरज्वात्मकं जन्ममरणे पूरयन्—इत्यादि ।

**End.** मूलस्य,—

इय पयरणिहियवण्णिय संवड्डियलोगसारसुवलय ।
सुयघम्मकित्तिअं तह जयइ जहा भमहनइ हविसं ॥
टीकायाः—

— — — — — — — —।

लोकनालयन्त्रं हस्ते (कृत्वा) रटहोत्वा। एषा एव अवचूरि विलोक्या ॥

**Colophon.** इति श्रीजिनभद्रसूरिकृता लोकनालवृत्तिः समाप्ता ।

विषयः ! निजकृतगुणस्थानक्रमारोहसूत्रस्य व्याख्यानम् ।

---

**No. 2719.** गुणस्थानक्रमारोहः । Substance, country-made paper, 10 × 5 inches. Folia, 19. Lines, 5 on a page. Extent, 220 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Generally correct. Sanskrit.

**Guṇasthana-kramároha.** On the gradation of Jain virtues. By Ratnaśekhara Súri. Fourteen virtues are reckoned, and their character, and the way in which devotees ascend from one to the next in order are described at length.

**Beginning.** गुणस्थानक्रमारोहहतमोहं जिनेश्वरं ।
नमस्कृत्य गुणस्थानस्वरूपं किञ्चिदुच्यते ॥
चतुर्दशगुणश्रेणीस्थानकानि तदादिमं ।
मिथ्यात्वाख्यं द्वितीयन्तु स्थानसासादनाभिधं ॥
तृतीयं मिश्रकं तूर्य्यं सम्यग्दर्शनमव्रतं ।
श्राद्धत्वं पञ्चमं षष्ठं प्रमत्तश्रमणाभिधं ॥ इत्यादि ।

**End.** नात्यन्ताभावरूपा न च जड़िममयी व्योमवद्व्यापिनी नो
न व्यावृत्तिं दधाना विषयसुखघना नेष्यते सर्व्वविद्भिः ।
सद्रूपात्मप्रसादादृगवगमगुणौघेन संसारसारा
निःसीमात्यक्षसौख्योदयवसतिरनिः पातनी मुक्तिरुक्ता ॥
इत्युद्धृतो गुणस्थानरत्नराशिश्रुतार्णवात् ।
पूर्व्वर्षिसूक्तिनावैव रत्नशेखरसूरिभिः ॥

**Colophon.** इति श्रीगुणस्थानक्रमारोहः सम्पूर्णः ।

विषयः । ग्रन्थेऽस्मिन् भव्यजीवानां सिद्धिसौधाधिरोहणार्थं चतुर्दशगुणश्रेणीरूपनिःश्रेणि-परम्परया क्रमेण गुणान्तरप्राप्तिकथनं । तत्र चतुर्दशगुणा यथा,—प्रथमं मिथ्यात्वं नाम गुण-स्थानकं । एवं द्वितीयं सासादनं । तृतीयं मिश्रं । चतुर्थं सम्यग्दर्शनं । पञ्चमं देशविरतिः । षष्ठं प्रमत्तसंयमः । सप्तमं प्रमत्तं । अष्टमं अपूर्व्वकरणं । नवमं विरतिवादरं । दशमं सूक्ष्मसम्प-रायं । एकादशं उपशान्तमोहं । द्वादशं क्षीणमोहं । त्रयोदशं संयोगः । चतुर्दशं अयोग इति । तत्र मिथ्यात्वलक्षणकथनपूर्व्वकं तद्दूषणादिकथनं । अस्य स्थानादिनिरूपणं । सासादनस्वरूपा-दिकथनं । एवमन्यान्यगुणस्थानानां स्वरूपादिकथनं । तत्र एकादशगुणस्थाने योगनिरूपणं । ध्यानादिनिरूपणं । आसनादिनिरूपणं । प्राणायामलक्षणादिकथनं । तत्र तत्र पूरककुम्भकादि-लक्षणकथनं । प्राणायामेन पवनजये सति मनोजयस्य अवश्यम्भाविताकथनं । शुक्लध्यानादि-भेदनिरूपणं । सवितर्कादिध्याननिरूपणं । तीर्थकृन्माहात्म्यकथनं । सूक्ष्मयोगनिरूपणं । अथ योगी चरमे समये या द्वासप्ततिसंख्याः प्रकृतीः क्षपयति तत्कर्म्मप्रकृतिकथनं । तद्यथा,—देहपञ्चकं, बन्धनपञ्चकं, संघातपञ्चकं, अङ्गोपाङ्गत्रयं, संस्थानषट्कं, वर्णपञ्चकं, रसपञ्चकं, संहननषट्कं, स्पर्शाष्टकं, गन्धद्वयं, नीचैस्त्वं, अनादेयत्वं, दुर्भगत्वं, अगुरुलघुत्वं, उपघातत्वं परा-घातत्वं, निर्माणत्वं, अपर्य्याप्तत्वं, उच्छासत्वं, अयशस्त्वं, विहायोगतिद्वयं । शुभाशुभद्वयं, स्थैर्य्या-

स्थैर्य्यद्वयं, देवगतिः, देवानुपूर्व्वी, प्रत्येकनाम, सुखरदुःखरद्वयं, वेद्यश्चेति । इमाः सर्व्वाः प्रकृतयः मुक्तिमार्गार्गलरूपा इति निरूपणं । सिद्धानां स्थितिनिरूपणं । तेषां ज्ञानदर्शनादिविषयकथनं । मुक्तिस्वरूपकथनञ्च ।

---

**No. 2720.** गुणस्थानक्रमारोहवृत्तिः । Substance, country-made paper, 10 × 5 inches. Folia, 20. Lines, 10 on a page. Extent, 624 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Generally correct.

**Guṇasthána-kramároha-vṛitti.** A commentary on the work described in the next preceding No. By Ratnaśekhara Súri, the author of the text.

**Beginning.** अर्हत्पदं हृदि ध्यात्वा गुणस्थानविचारिणां ।
अनुष्टुभामियं वृत्तिर्लिख्यते ह्यवचूर्णिवत् ॥
तत्र मङ्गलार्थमभीष्टदेवतानमस्कारस्य सम्बन्धाविर्भावकमाद्यपद्यमाह, गुणस्थान इति । यत्र यत्र पूर्व्वाप्राप्तगुणविशेषाविर्भावो भवति । इत्यादि ।

**End.** स्वपरोपकाराय प्रकरणरूपतया प्रकटित इत्यर्थः ।
लिखितेयं गुणस्थानोद्धारस्तोकावचूर्णिका ॥
बुधाश्विरेन्दु + + त्रौ रत्नशेखरसूरिभिः ॥

**Colophon.** इति नागपुरीयतपागच्छमण्डनश्रीरत्नशेखरसूरिकृता गुणस्थानक्रमारोहवृत्तिः समाप्ताः ।

विषयः । निजकृतगुणस्थानक्रमारोहसूत्रस्य व्याख्यानम् ।

---

**No. 2721.** स्मृतिनिबन्धः । Substance, country-made paper, 14 × 5. inches. Folia, 248. Lines, 8 on a page. Extent, 6,444 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**Smṛiti-nibandha.** An elaborate digest of the Hindu Smṛitis. By Nṛisiñha Bhaṭṭa.

**Beginning.** नमस्कृत्य महेशानं गिरिजाईमनोहरं ।
निबन्धः क्रियते सम्यक् स्मृतिशास्त्रे महाद्भुतः ॥
अथादौ धर्म्मस्वरूपं विविच्यते । तत्र भगवान् जैमिनिः । चोदनालक्षणोऽर्थो धर्म्मः । अत्र शवरः । इत्यादि ।

**End.** अत एव युगपत्पापानुष्ठानादपि तत्र न प्रायश्चित्ताधिक्यमिति ।

**Colophon.** इति मीमांसकश्रीन्द्रसिंहभट्टविरचिते स्मृतिनिबन्धे प्रायश्चित्तनिरूपणं ।

विषयः । धर्म्मलक्षणादिनिरूपणं । विधिनिषेधार्थवादादिनिरूपणं । संकल्पादिलक्षण-निरूपणं । चतुराश्रमसामान्यधर्म्मकथनं । विशेषेण गार्हस्थ्यधर्म्मकथनं । गृहस्थानां (बह्वृचानां) आश्वलायनगृह्योक्तविधानेन कर्म्मानुष्ठानविधिकथनं । तत्र दारकृत्यनिरूपणमुखेन विवाहविधिकथनं । सापिण्ड्यादिनिरूपनं । विवाहयोग्यकन्यादिलक्षणकथनं । अधिवेदनादिविधिकथनं । स्त्रीपुंसधर्म्मकथनं । अग्न्याधानादिविधिकथनं । गर्भाधानविधिकथनं । पुंसवनादिविधिकथनं । जातकर्म्मादिविधिकथनं । नामकरणान्नप्राशनविद्याचूडोपनयनवेदारम्भादि-विधिकथनं । गुरुदक्षिणादिविधिकथनं । आह्निककृत्यनिरूपणं । तत्र प्रातःस्नानकालादिनिरूपणं । गायत्रीजपादिविधिकथनं । सन्ध्याविधिकथनं । अग्निहोत्रादिविधिकथनं । तर्पणादिविधिकथनं । वैश्वदेवादिविधिकथनं । विशेषेण पञ्चयज्ञविधिविवेचनं । भक्ष्याभक्ष्यनिरूपणं । तत्र तत्र विहिताविहितादिद्रव्यनिरूपणं । मुमूर्षुकृत्यनिरूपणं । दाहादिविधिकथनं । अशौचनिरूपणं । दशपिण्डदानादिविधिकथनं । एकादशाहकृत्यनिरूपणं । वृषोत्सर्गविधिकथनं । श्राद्धविधिकथनं । तत्र अधिकारादिनिरूपणं । मासिकसपिण्डनादिकालविवेचनं । अपकर्षादिविधिकथनं । स्त्र्युविशेषाशौचादिविधिकथनं । पर्णनरदाहविधिकथनं । आत्मघाते नारायणबलिविधिकथनं । दायभागनिरूपणं । प्रायश्चित्तविधिनिरूपणञ्च ।

---

**No. 2722.** शोभनस्तुत्यवचूरिः । Substance, country-made paper, 10 × 4 inches. Folia, 16. Lines, 13 on a page. Extent, 884 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Incorrect. Sanskrit.

**S'obhanastutyavachúri.** A gloss on Sobhana's twenty-four hymns in praise of Jina. Anonymous.

**Beginning.** तत्रादौ युगादिजिनस्तुतिमाह । भव्याम्भोज इति । हे नाभिनन्दन त्वं महान् उत्सववान् । विदुषां सम्पादय इति सम्बन्धः । भव्याम्भोजानि भव्या एवाम्भोजानि कमलानि तेषां विबोधने एकोऽद्वितीयस्तरणिः सूर्य्यः । इत्यादि ।

**End.** अम्बिके नीहारतारावलक्षे सिंहे + संस्थिते सुतरां त्वं भयलोकमवेति सः ।

**Colophon.** इति श्रीशोभनस्तुत्यवचूरिः ॥

विषयः । शोभनानकृतचतुर्व्विंशतिजिनस्तोत्ररूपस्य यमकालङ्कृतिमयकाव्यस्य व्याख्यानम् ।

---

**No. 2723.** **एकवीसठाणम्, (एकविंशतिस्थानम्।)** Substance, country-made paper, 10 × 4 inches. Folia, 12. Lines, 5 on a page. Extent, 118 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Mágadhí.

**Ekabísaṭhána** (Sk. **Ekbiñsati-sṭhána**). Brief biographical notes on the name, birth-place, father's name, mother's name, the name of the Nakshatra and the zodiacal sign presiding at birth, asylum, height of body, duration of life, complexion, place of death, place of initiation, place of hermitage, rules of mendicancy, the place where supreme knowledge was obtained, number of successive teachers and followers, both male and female, previous births, heavens, and the place where perfection was achieved, by each of the 24 Jinas. By Siddhasena Súri.

**Beginning.** चवणविमाणा नयरी जणया जणनीश्रो रिक्खरासीश्रो।
लंवण पमाण श्राउ वर्ण अंतर दीक्खतवभिक्खा॥
नाणठाणगणहरमुणि अज्‌जिय संक्ख जक्ख देवीउ।
सिद्धट्टाणं च कमेण साहिमो जिणवरिं दाणं॥ इत्यादि।

**End.** नवहिंसएं हिंसंति कहिं सचहिं परि+ड्डो विमलो।
उसहद्दसत्तणंतो सिसाउ सहस्स परिवारो॥
इय इक्कवीसठाणा उद्दरिया सिद्दसेण सूरिहिं।
चउवीस जिणवरानं असेससाहारणा भणिया॥

**Colophon.** इति श्रीएकवीसठाणं सम्पूर्णम्।

**विषयः।** ऋषभदेवादारभ्य बर्द्धमानपर्य्यन्त चतुर्विंशतिजिनानां क्रमेण विमाननामकथनं। जन्मनगरीनामकथनं। पितृनामकथनं। मातृनामकथनं। जन्मनचत्रनामकथनं। राशिनामकथनं। लम्बनकथनं। देहपरिमाणकथनं। आयुः कथनं। वर्णकथनं। अन्तरकालकथनं। दीचास्थानकथनं। तपस्थास्थानकथनं। भिचाविधिकथनं। ज्ञानस्थानकथनं। गणधरसंख्याकथनं। साधुसंख्याकथनं। साध्वीसंख्याकथनं। जन्मान्तरकथनं। (पूर्व्वजन्म)। देवीसंख्याकथनं। सिद्धस्थानकथनञ्च।

---

**No. 2724.** **आलोचनास्तवः।** Substance, country-made paper, 10 × 5 inches. Folia, 6. Lines, 4 on a page. Extent, 57 ślokas. Character, Nágara Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Sanskrit.

**Álochaná-stava.** A hymn in praise of Jina and prayer for his grace. By Ratnákara Súri.

**Beginning.** श्रेयः श्रियां मङ्गलकेलिसद्म नरेन्द्रदेवेन्द्रनताङ्घ्रिपद्म ।
सर्व्वज्ञ सर्व्वातिशय प्रधान चिरं जय ज्ञानकलानिधान ॥
जगत्त्रयाधार कृपावतार दुर्व्वारसंसारविकारवैद्य ।
श्रीवीतराग त्वयि मुग्धभावाद्विज्ञ प्रभो विज्ञपयामि किञ्चित् ॥ इत्यादि ।

**End.** दीनोद्धारधुरन्धरस्त्वदपरो नास्ते यदन्यः कृपा-
पात्रं नात्र जने जिनेश्वर तथाप्येतां न याचे श्रियं ।
किन्त्वर्हन् जिनमेव केवलमहो सद्बोधिरत्नं शिवं
श्रीरत्नाकरमङ्गलैकनिलयं श्रेयस्करं प्रार्थये ॥

**Colophon.** इति श्रीमदालोचनास्तवः समाप्तः ।

विषयः । वैषयिकसुखादेः नश्वरत्वमकिञ्चित्करत्वञ्चेति समालोच्य जिनेन्द्रस्तुतिव्याजेन तत्पुरतः वैराग्यप्रार्थनं ॥

---

**No. 2725.** आलोचनास्तवावचूरिः । Substance, country-made paper, 10 × 5 inches. Folia, 12. Lines, 10 on a page. Extent, 315 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Álochaná-stavávachúri.** A gloss on the work noticed under the next preceding No. Anonymous.

**Beginning.** प्रणम्य श्रीमदर्हन्तमिष्टसिद्धिविधायकं ।
श्रेयः श्रियां मङ्गलस्य वृत्तिं कुर्व्वे शिशूचितां ॥
श्रेय इति । हे नरेन्द्रदेवेन्द्रनताङ्घ्रिपद्म
नरेन्द्राश्चक्रवर्त्त्यादयः देवेन्द्राश्च । इत्यादि ।

**End.** एवेति निश्चये प्रार्थये याचे । कथं केवलमद्वितीयं शिवश्रीरत्नाकरेति-
सम्बोधनं कथयता स्तोचकर्त्ता स्वनाम सूचितं श्रीरत्नाकरसूरिरिति ।

विषयः । रत्नाकरसूरिकृतालोचनाख्यस्तवस्य व्याख्यानम् ।

---

**No. 2726.** प्रवचनसारोद्धारवृत्तिः । Substance, country-made paper, 11 × 4½ inches. Folia, 286. Lines, 14—17 on a page. Extent, 17,998 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Correct.

**Pravachana-sároddhára-vritti.** A gloss on the Jain work called *Pravachana-sároddhára.* By Siddhasena Súri.

**Beginning.** यन्नदैरपि यत् नमोभिरखिलैर्न स्पृश्यते कुत्रचित्
अश्वत्कालकलाभिरप्यनकलं यन्नीयते न क्षयं ।
तेजोभिः स्फुरितैः परैरपि हठाद्दाक्रम्यते य + +
तज्जैनं + + जगत्प्रकाशनपटु ज्योतिः परं नन्दतु ॥
यो ध्यानेन निमूलकाषमकषद्द्वेषादिविद्वेषिणो
यल्लोक्यविलोकनैक + + कं ज्योतिः किमथ्या + + + ।
यः सद्भूतमशेषमर्थमवद + + दुर्वादिविचासनं
+ + र्थः सविता निर + स विभुः श्रीवर्द्धमानः सतां ॥
स्वगुरूणामादेशं चिन्तामणिसोदरं समाप्य ।
श्रेयःकृते करोमि प्रवचनसारस्य वृत्तिमिमां ॥

इह विशिष्टाः क्वचिदभीष्टशास्त्रप्रकरणवस्तुनि प्रवर्त्तमानाः श्रेयस्कामतया विशिष्टाभीष्टदेवतानमस्कारपुरस्कारेणैव प्रवर्त्तन्ते इत्यादि ।

**End.** अयं प्रवचनसारोद्धारो ग्रन्थो बुधैस्तत्त्वावबोध + + + + पठ्यमानो-नन्दतु शिष्यप्रशिष्यपरम्परा + + + + रूपां समृद्धिमासादयतु ।

**Colophon.** इति श्रीसिद्धसेनसूरिविरचिता प्रवचनसारोद्धारवृत्तिः समाप्ता ॥

विषयः । प्रवचनसारोद्धारनामकजैनसूत्रस्य व्याख्यानम् ।

---

**No. 2727.** वाक्यमञ्जरी । Substance, country-made paper, 10 × 5 inches. Folia, 5. Lines, 14 on a page. Extent, 150 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Vákya-manjarí.** A few concise rules on Sanskrit composition and conversation in Sanskrit. Anonymous.

**Beginning.** नत्वा जिनेश्वरं देवमनन्तं परमं महः ।
रच्यते बालकबुद्धिसिद्धये वाक्यमञ्जरी ॥

कुत्रत्या + गता भवन्तः । कस्मादागताः । कां दिशमलङ्कुर्वन्ति स्म । कां दिशम [illegible]-मीहते । कुत आगताः । कर्णाटदेशादागताः । इत्यादि ।

**End.** अस्मान् मुक्त्वा न गन्तव्यं । अत्यन्तं प्रीतिकारिणो भवन्तः । सन्ति प्राघुणि-का + + । पश्यन्ति ग्रहे । इति

**Colophon.** इति वाक्यमञ्जरी समाप्ता ।

विषयः । बालानां संस्कृतवाक्यप्रयोगपाठवाय तद्वाक्यविन्यासप्रकारकथनं ।

---

**No. 2728.** बन्धहेतूदयत्रिभङ्गीटीका । Substance, country-made paper, 10 × 5 inches. Folia, 21. Lines, 16—17 on a page. Extent, 903 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Bandha-hetúdaya-tribhańgí-ṭíká** A commentary on Harshakus'ala Gaṇí's treatise on the cause of bondage, entitled *Bandha-hetúdaya-tribhańgí*. By Ṛishivánara.

**Beginning.** जयति जगत्त्रयनाथचिंतितत्वविस्तृतप्रभावमणिरश्मिः ।
ब्राह्मणवाटकमुकुटः श्रीवीरेश्वरस्वरमतीर्थपतिः ॥

— — — — — — — ।

तत्रादौ समुचितेष्टदेवतानमस्कारपूर्व्वकं शास्त्रं प्रस्तावयति बन्धन इति । बन्धनं कर्म्माणूनां जीवप्रदेशैः सह चीरनीरन्यायेन । इत्यादि ।

**End.** तपगणपुष्करतरणिश्रीमदानन्दविमलसूरीणां ।
शिष्येणेयं टीका विहिता गणिविजयविमलेन ।

— — — — — — — ।

**Colophon.** इति श्रीविजयदानसूरिविजयमानराज्ये श्रीमदानन्दविमलसूरिशिष्यानुशिष्येण ऋषिवानरेण इयं बन्धहेतूदयत्रिभङ्गीटीका समर्थिता ।

विषयः । हर्षकुशलगणिविरचितबन्धहेतूदयत्रिभङ्गीनामकजैनसूत्रस्य व्याख्यानम् ।

---

**No. 2729.** लघुसङ्ग्रहणी । Substance, country-made paper, 10 × 4½ inches. Folia, 6. Lines, 3 on a page. Extent, 37 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Mágadhí.

**Laghu-sańgrahaṇí.** An abridgment of a work by Chandra Súri entitled *Sańgrahaṇí* or *Vṛihat-sańgrahaṇí* on Jain Geography. By Haribhadra Súri.

**Beginning.** नमिय जिणं सव्वणुजयपुज्जं जगगुरुमहावीरं ।
जंबूदीवपयत्थे वुत्थं सुत्ताय परहेउ ॥

खंडा जोयणवासा पव्वय कुडायतित्य।
सेढ़िउ विजयद्दह मलिलाउ पिंडेसि होइ संघयणी॥ इत्यादि।

**End.** खंडाई गाहाई दसेहिं दारेहिं जंबुद्दीवस्स।
संघयणीसमत्ता रइआ हरिभद्दसूरिहिं॥

**Colophon.** इति श्रीलघुसङ्ग्रहणी समाप्ता।

विषयः। इहत्सङ्ग्रहण्याः सारकथनं। अत्र जम्बुद्वीपीयखण्ड-योजन-क्षेत्र-पर्व्वत-कूट-तीर्थ-श्रेणी-विजय-द्रहा-सलिलरूपद्वारकथनं।

---

**No. 2730.** कल्पलता। Substance, country-made paper, 10 × 5 inches. Folia, 181. Lines, 15 on a page. Extent, 8,631 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Sinh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Kalpalatá.** A commentary on the well-known Kalpa-sútra. By Samayasundara Upádhyáya. There are several commentaries extant on the text.

**Beginning.** प्रणम्य परमं ज्योतिः पञ्चापि परमेष्ठिनः।
दीक्षाज्ञानगुरूंश्चापि ममोपकृतिकारकान्॥
वक्ष्येऽहं कल्पसूत्रस्य व्याख्यानानि नवस्फुटं।
सुगमानि सुबोधानि नानाग्रन्थानुसारतः॥
न सूत्रं नावचूरिश्च न वृत्तिर्नान्य+च+।
ग्राह्यं व्याख्यानवेलायां पुस्तकेऽस्मिन् करिष्यते॥
— — — — — — — ।

वंदामि भद्दवाहुमिति। अर्हन्तः भगवन्तः। उत्पन्नदिव्यविमलज्ञाना महावीरस्वामिनः। इत्यादि।

**End.** सामाचारी साधून् प्रतीत्य विधिप्रतिषेधरूपा। कर्त्तव्येति। तदभिधेय-योगात् अध्ययनमपि पर्य्युषणाकल्पः। रत्नपरीक्षागजशिक्षादिवत्। इति व्याख्यातं कल्पसूत्रं।

**Colophon.** इति सुन्दरोपाध्यायकृता कल्पलता समाप्ता।

विषयः। जैनकल्पसूत्रस्य व्याख्यानम्।

---

**No. 2731.** गणितनाममाला। Substance, country-made paper, 10 × 4 inches. Folia, 8. Lines, 9 on a page. Extent, 180 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Paṇḍit Syámalála Duve. Appearance, fresh. Prose and verse. Incorrect.

**Ganita-námamálá.** A glossary of astronomical technical terms. By Haridatta.

**Beginning.** गणितस्य नाममालां वक्ष्ये गुरुप्रसादतः ।
बालानां सुखबोधाय हरिदत्तो द्विजाग्रणीः ॥
अश्विनीदस्रभं दस्रं नासत्यं तुरगं हयं ।
भरणी यमभं याम्यं प्रोक्तमन्तकमान्तकं । इत्यादि ।

**End.** इति स्वग्रहोच्चसंज्ञा ।
कण्डुलज्ञातिविप्रेण हरिदत्तेन धीमता ।
नाममाला कृता श्रेष्ठा गुरोः प्रसादतो मया ॥

**Colophon.** इति गणितनाममाला समाप्ता ।

विषयः । अश्विन्यादिनक्षत्राणां पर्य्यायक्रमेण नामकथनं । एकादित्रयस्त्रिंशत्पर्य्यन्तमङ्कानां नामकथनं । नक्षत्राणां सामान्यतः संज्ञाकथनं । एवं पर्य्यायक्रमेण राशीनां नामकथनं । द्वादशभावनामकथनं । केन्द्रत्रिकोणादिनामकथनं । ग्टहस्य नामकथनं । सूर्य्यनामकथनं । चन्द्रनामकथनं । भौमनामकथनं । बुधनानकथनं । बृहस्पतिनामकथनं । शुक्रनामकथनं । शनैश्चरनामकथनं । राहुकेतुनामकथनं । सामान्यतो ग्रहाणां नामकथनं । सामान्यतो माससंज्ञाकथनं । सावनचान्द्रसौरनाक्षत्रमासनामकथनं । घटिकासंज्ञाकथनं । प्रहरसंज्ञाकथनं । रात्रिसंज्ञाकथनं । दिननामकथनं । पूर्व्वाह्णापराह्णादिसंज्ञाकथनं । अहोरात्रसंज्ञाकथनं । पक्षसंज्ञाकथनं । ऋत्वयनवर्षसंज्ञाकथनं । तिथिनामकथनं । राश्यंशकलादिसंज्ञाकथनं । सप्तवर्गसंज्ञाकथनं । दिशां नामकथनं । चरस्थिरद्विस्वभावनामकथनं । दक्षिणायनोत्तरायणनामकथनं । संक्रान्तिनामकथनं । नृ-चतुष्पद-जलकीट-सरीसृपनामकथनं । पापादिगणग्रहसंज्ञाकथनं । सूर्य्यादीनामुच्चनीचादिसंज्ञाकथनं । सूर्य्यादीनां मूलत्रिकोणसंज्ञाकथनं । स्वग्रहोच्चसंज्ञाकथनञ्च ।

---

**No. 2732.** नन्दिपदच्छन्दः । Substance, country-made paper, 11 × 4 inches. Folia, 4. Lines, 13 on a page. Extent, 146 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Prákṛita.

**Nandipadachhanda.** On Prákṛit metres with illustrations. Anonymous.

**Beginning** नमिऊण चलणजुअलं नेमिजिणंदस्स भावओपयओ ।
गाहालक्खणमेयं वुच्छामि गुरुवएसेणं ॥
गहअलडक्खराणं वेयत्थं मादूयंश्च वुच्छामि ।

पुव्वायविषयकयाणं पाइय कव्वोवउगीणं ॥ इत्यादि ।

**End.** पासेउ पंचमो चक्की सोलसोने जिणोजसं ।

चक्कंच धम्मचक्कंच जस्सायवुच सेयउ ॥

**Colophon.** इति श्रीनन्दिपदच्छन्दः समाप्तं ।

विषयः। प्राकृतकाव्योपयोगिनां गाथास्कन्धकादिवृत्तानां लक्षणनिरूपणपूर्व्वकम् उदाहरणकथनं ।

---

**No. 2733.** पुद्गलषट्‌त्रिंशिकावृत्तिः। Substance, country-made paper, 12 × 4 inches. Folia, 12. Lines, 10 on a page. Extent, 308 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimgaṇj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Generally correct.

**Pudgalashaṭtriñśiká-vṛitti.** A gloss on Abhayadeva Súri's Pudgalashaṭtriñśiká or thirty-six verses on matter. By Ratnasiñha Súri.

**Beginning.** यथास्थितागुजीवादिपदार्थगणदेशकं ।

सर्व्वज्ञं त्रिदशस्तुत्यं नत्वा वीरजिनेश्वरं ॥

पुद्गलानां निगोदानां सतत्त्वप्रतिपादिकाः ।

गाथाः किञ्चिद्विविच्यन्ते भगवत्यङ्गवृत्तितः ॥

अथ प्रज्ञप्याख्यपञ्चमाङ्गस्य विवरणे पञ्चमशते सप्तमोद्देशके पुद्गलवचनप्रस्तावोत्तार्थविवरणरूपा गाथा नवाङ्गवृत्तिकृद्भिः पूज्यश्रीमदभयदेवसूरिभिर्लिखिताः किञ्चिद्विवृतास्च तासां सम्प्रदायगम्यो गुरूपदेशात् कश्चिदर्थलवो लिख्यते ॥ तास्च खित्ता गाऊण इत्यादि । इह पुद्गलानां चेत्रे अवगाहनाय इत्यादि ।

**End.** अच लचसंख्यया पुद्गलानामल्पबहुत्वविचारणमव्युत्पन्नमतिशिष्यव्युत्पादनाय परमार्थतस्तु पुद्गलाननन्तानजिताभिहितान् जानीयादिति ।

**Colophon.** इति श्रीरत्नसिंहसूरिविरचिता पुद्गलषट्‌त्रिंशिकावृत्तिः समाप्ता ।

विषयः। अभयदेवसूरिविरचितायाः पुद्गलषट्‌त्रिंशिकायाः व्याख्यानम् ।

---

**No. 2734.** नीतिशतकवृत्तिः। Substance, country-made paper, 9 × 4 inches. Folia, 18. Lines, 16 on a page. Extent, 864 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimgaṇj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Níti-śataka-vṛitti.** A gloss on Bhartrihari's Nítiśataka, a century of moral maxims. By Ghanasára. The text has been noticed under No. 1823 (Vol. IV, p. 40). It has also been repeatedly published.

**Beginning.** युगादिदेवोऽप्ययुगादिदेवः पुरा द्वितीयोऽपि सदाद्वितीयः।
स पञ्चशाखोऽपि सहस्रशाखः सोऽमङ्गलोऽपि मङ्गलमातनोतु ॥
सर्व्वातिशयसंयुक्तं पञ्चाचारपरायणं।
श्रीवीरं गिरि + + रमभिवन्दे महात्मभिः ॥
नत्वार्हतं गुरुं देवीं सारदां कविसारदां।
श्रीमद्भर्तृहरिकृतव्याख्यानं विरचाम्यहं ॥

तत्रेष्टदेवताप्रणिधानसमाधानविधानपूर्व्वमभीष्टदेवतासंस्मरणं विधाय भूपतिभर्तृहरि-विरचितनीतिशृङ्गारवैराग्यभावभावितकठिनकवितार्थसंसूचणं किमप्युदाहरणविवरणप्रपञ्चं देवगुरुभारतीप्रसादान्निवेदयिष्यामि। तथा च सूत्रं यां चिन्तयामीति। पुरा कदाचिदुज्जयिन्यां नगर्यां भर्तृहरिभूपतिः राजमण्डलीसंसेव्यमानः + + + + + तत्र विप्रैकः करकलितविल्वफल आजगाम। इत्यादि।

**End.** श्रीसिद्धसूरिगुरुसन्निहितप्रतापा-
च्छ्रयत् कवित्वमतिमाप्य विचारदृष्ट्या।
रम्येह भर्तृहरिकाव्यवरस्य टीका
श्रीपाठकेन विदधे धनसारनाम्ना ॥

**Colophon.** इति नीतिशतकस्य वृत्तिः समाप्ता।

विषयः। भर्तृहरिनीतिशतकस्य व्याख्यानम्।

---

**No. 2735.** वर्द्धमानजिनस्तुतिः। Substance, country-made paper, 11 × 4 inches. Folia, 8. Lines, 11 on a page. Extent, 248 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Sinh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Varddhamána-jinastuti.** A hymn in praise of Varddhamána Jina. Author's name unknown.

**Beginning.** भव्याम्भोजविबोधनैकतरणे विस्तारकर्म्मावली
रम्भासामजलाभिनन्दनमहानष्टापदाभासुरैः।
भक्त्या वन्दितपादपद्मविदुषां सम्पादयप्रोज्झिता
रम्भासामजनाभिनन्दनमहानष्टापदाभासुरैः ॥
ते वः पान्तु जिनोत्तमाः चतरुजो ना + चिपुर्यन्मनो
दाराविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः।
यत्पादौ च सुरोपिताः सुरभयाश्चक्रुः पतन्त्योम्बरा

द्राविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः ॥ इत्यादि ।

**End.** सरभसनतनाकिनारीजनो + + पीठालुठ-

तारहारस्फुरद्गुमिसारक्रमाम्भोरुहे,

परमम्ब सुतरां गजार + वसन्नाश्रितारातिभाराजिते

भासिनीहारताराबलक्षेमदा ।

सतबचिरो वचेव + टा सङ्कटोत्तुङ्ग

कष्ठोम्भटे संश्रिते भव्यलोकं त्वमम्बाम्बिके,

परमम्ब सुतरां गजारावसन्नाश्रितारातिभाराजिते

भासिनीहारताराबलक्षेमदा ॥

**Colophon.** इति वर्द्धमानजिनस्तुतिः ।

**विषयः ।** स्तोत्रव्याजेन वर्द्धमानाभिधानजिनस्य माहात्म्यादिकीर्त्तनं ।

---

**No. 2736.** पन्नवणाटीका, (टव्वा ।) Substance, country-made paper, 10 × 4 inches. Folia, 572. Lines, 14 on a page. Extent, 29,029 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Pannavaṇá-ṭíká.** A Gujaráṭi gloss on the Jaina text called *Pannavaṇá*, (Prajnápaná). By Vanavimala. Glosses in Gujaráti on the Mágadhi scriptutres of the Jains have the generic name of *Ṭabbá*, and this is accordingly called a Ṭabbá.

**Beginning.** प्रणम्य श्रीमहावीरं नत्वाशेषसुरेश्वरं ।

प्रज्ञापनाख्यसूत्रस्य वक्ष्येऽर्थं लोकवार्त्तया ॥

सन्ति सूरिहृततट्टीकाद्या ग्रन्था मनोहराः ।

तथापि स्वप्रशिष्याणां विनोदार्थं करोम्यहं ॥

नमो । नमस्कारहुश्रो । अरिहन्तने अरिकं । वैरि अष्टकर्म्मरूं । हण्याच्छे जिणे तथा अशो कादिकअष्टमता प्रातिहार्जे करे शोभित—इत्यादि ।

**End.** श्रीमत्तपागणविभासनतापनाभो

भव्या+ मङ्गृदयकैरवराजिरत्नः ।

आसीद्गुरुर्विमलसोमगण+राजः

सौन्दर्य्यधैर्य्यगुणमण्डल + + राशिः ॥

गच्छे तत्र विशालसोमगुरवः श्रीसूरयः साम्प्रतं

वर्त्तन्ते महिमण्डले गणपदं प्राप्ता प्रतिष्ठास्पदं ।

नानावाङ्मयसागराम्बुतरणे सद्बुद्धिना + चित
चारित्राचरणेन दुष्करतपःश्रीस्थूलभद्रोपमाः ॥
— — — — — — — —।
तच्छिष्यसेवकः साधुर्वनविमलनामतः ।
प्रज्ञापनाख्यसूत्रस्य वृत्तिं चक्रे मनोहरां ॥

**Colophon.** इति श्रीपन्नवणाटीका समाप्ता ।

विषयः । प्रज्ञापनाख्यजैनसूत्रस्य (गुर्ज्जरभाषया) व्याख्यानम् ।

---

**No. 2737.** सङ्ग्रहणीवृत्तिः। Substance, country-made paper, 10 × 4 inches. Folia, 112. Lines, 13 on a page. Extent, 3,968 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Sañgrahaṇí-vṛitti.** A gloss on Chandra Súri's *Sañgrahaṇí*, a work on Geography. By Devabhadra Súrt (Vide No. 2743, p. 192.)

**Beginning.** अत्यद्भुतं योगिभिरप्यगम्यं विधूतनिःशेषतमोवितानं ।
अचिन्त्यमाहात्म्यमजं निरञ्जनं ज्योतिर्जयत्येकमनन्तमव्ययं ॥
यस्यास्तैर्वचोभिर्जीवत्यद्यापि भव्यलोकोऽयं ।
स जयत्यागमजलधिर्जिनभद्रगणिः क्षमाश्रमणः ॥
प्रसन्नगम्भीरपदा हितक्रमा मिताक्षरा वर्ज्जितपौनरुक्त्या ।
यैर्निर्म्मिता संग्रहणीयम + + नमेनस्तत्पदपङ्कजेभ्यः ॥

इह तावत् शास्त्रादौ संक्षिप्तरुचिनापि प्रायः शिष्टसमयानुवृत्तये विघ्नोपशान्तये च परम-मङ्गलालयोऽभीष्टदेवतास्तवः क्रियते, — — — — शास्त्रकारः सार्द्धं गाथामाह, नमिउ इति ।

**End.** वेदद्वारमपि प्राक् प्रपञ्चितमेव। तदेवं व्याख्याता चतुर्विंशतिद्वारात्मिका संक्षिप्ततरा सङ्ग्रहणी ।

**Colophon.** इति श्रीहर्षपुरीयगच्छालङ्कार + + धारिश्रीमदभयसूरिपट्टरत्नश्रीहेमचन्द्रसूरिशिष्यश्रीचन्द्रसूरिचरणाम्बुजचञ्चरीकेण श्रीमुनिचन्द्रसूरिभ्यो लब्धप्रतिष्ठेन श्रीदेवभद्रसूरिणा विरचिता स्वगुरुप्रणीतसङ्ग्रहण्या वृत्तिः समर्थिता ।
अङ्गान्युपाङ्गानि तथापराणि विलोक्य शास्त्राणि गुरूपदेशात् ।
विनिर्म्मिता वृत्तिरियं तथापि शोध्यं यदि स्याद्विबुधैर्विशोध्यम् ॥

विषयः । चन्द्रसूरिकृतसङ्ग्रहणीप्रकरणस्य व्याख्यानम् ।

---

**No. 2738.** वैराग्यशतकवृत्तिः । Substance, country-made paper, 9 × 4 inches. Folia, 17. Lines, 16 on a page. Extent, 714 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimgaṉj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Vairágya-śataka-vṛitti.** A gloss on Bhartṛihari's century of verses on asceticism. By Dhanasára, a Jain.

**Beginning.** दिक्कालाद्यनवच्छिन्नानन्तविज्ञानमूर्त्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥

तस्मै शान्ताय तेजसे परब्रह्मणे नमः । किं विशिष्टाय शान्ताय तेजसे । स्वानुभूत्येकमानाय स्वकीयायाः अनुभूतेः अनुभवात् । इत्यादि ।

**End.** + केशगच्छगगनाङ्गनदीप्तभानोः
श्रीसिद्धसूरिसुगुरोर्महिमाधिकस्य ।
शिष्येण तस्य धनसारवरेण रम्या
टीकेयमप्य + + भर्त्तृहरेर्व्यधायि ॥

**Colophon.** इति वैराग्यशतकस्य वृत्तिः समाप्ता ।

विषयः । भर्त्तृहरिकृतवैराग्यशतकस्य व्याख्यानम् ।

---

**No. 2739.** स्वोपज्ञशब्दार्थचन्द्रिकोद्धारः । Substance, country-made paper, 9 × 4 inches. Folia, 14. Lines, 9 on a page. Extent, 386 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimgaṉj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Svopajṇa-śabdártha-chandrikoddhára.** A commentary on the introductory verses of the *Sárasvata-chandriká* of Anubhútisvarúpa. By Kañsavijaya Gaṇi.

**Beginning.** ॐ नमः परमज्योतिःशालिने परमात्मने ।
त्रिजगत्पूजिताय श्रीपार्श्वनाथाय योगिने ॥
वर्द्धमानजिनः सिद्धो वर्द्धमानसरोदयः ।
स्यात् सिद्धार्थधराधीशवंशाकाशदिवाकरः ॥
शारदा वरदा दद्याद्विद्यादानं + + नना ।
कर्पूरपूर्णेन्दुकुन्दजैत्रयशोभरा ॥

श्रीमत्तपागच्छ + स्य सुरशैलसुरद्रुमं ।
सर्व्वाभीष्टार्थसंसिद्धिनिर्व्विघ्नवरवेषसम् ॥
स्तुत्वा श्रीविजयानन्दगुरुं गुरुगुणैर्गुरुं ।
स्वोपज्ञचारुशब्दार्थचन्द्रिकोद्धार उच्यते ॥

इह किल निःशेषसविशेषस्फूर्जद्दर्थ्यपदार्थसार्थपरमार्थजिज्ञासूनां शिशूनां सम्यक् शब्द व्युत्पत्तिबोधाय श्रीसारस्वतशब्दानुशासनादिमवृत्तद्वितयस्य व्याख्या संहितादिभेदेन षोढा प्रस्तूयते । इत्यादि ।

End. निपातनाद्वैरत्वं कथमिति अव्ययं सिद्धं ।

इति सारस्वतद्वितीयपद्यस्य साधनिका प्रारब्धपद्धतिः ।

Colophon. इति श्रीमत्तपागच्छाधिराजश्रीगौतमगणधरोपमगणसमाजसकलभट्टारकवृन्दवृन्दारकवृन्दारकराजभट्टारकश्रीविजयानन्दसूरीश्वरशिष्यभुजिष्यपरमहंसविजयगणिस— मर्थिते स्वोपज्ञपव्दार्थचन्द्रिकोद्धारे श्रीसारस्वतशब्दानुशासनद्वितीयवृत्तार्थलेशः सम्पूर्णः ।

विषयः । अनुभूतिस्वरूपाचार्य्यकृतसारस्वतचन्द्रिकाभिधव्याकरणस्यारम्भीयपद्य स्य संहिता-पद-पदार्थ-पदविग्रह-चालना--प्रत्यवस्थानरूपषडङ्गप्रदर्शनपुरःसरं सोदाहरणव्याख्यानम् ।

---

**No. 2740** मेघदूतटीका । Substance, country-made paper, 9 × 4 inches. Folia, 28. Lines, 17 on a page. Extent, 1,368 ślokas. Character, Nágara. Date, Sm. 1753. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Meghadúta-ṭíká**. A commentary on the Meghadúta of Kalidása. By S'aśvata.

Beginning. श्रीमत्कृपामदरसोल्लसदच्छिकोण-
मुद्दामकन्दलितकान्तिमुखं मुनेर्वः ।
अस्खलचटुल + शुलयुग्मिताङ्ग-
नीलं विलोकितुमभीप्सितुमादधातु ॥
अस्मादृशां क नु कथा ननु कालिदासे
यद्दन्तभप्रभृतयः स्वयमुल्लसन्ति ।
यत्रैव किन्तु सरसीं न सरन्ति नागा-
स्तत्रैव चापलपराः शफराः स्फुरन्ति ॥
सदलङ्कृतिकृतहृदया वहिरुपचारेषु शतसंख्याः ।

द्विधा + + गभीरे हृदि कविवाचां तथा स्त्रीणां ॥
मध्यस्थैरवधीयेत मेघदूते स शाश्वतः ।
करोति ललितामेनां टीकामनतिविस्तरां ॥

इदं हि किल श्रूयते सकलनाकिलोकाभिलच्यमाणवैभवो भगवद्भवानीश्वरसुहृन्निर्विशेषः कुसुमस्तवकाध्यवासितनिखिलकिन्नरवर्गोत्तमाङ्गो राजराजः कदाचित् । इत्यादि ।

**End.** ईप्सितार्थस्य सम्प्रणयेषु अभिमतप्रयो-
जनस्य क्रियेव करणं सम्पादनमे ।
असमर्थः मेघस्याचेतनत्वा + + + सन्देशे
+ + भिधानेऽपि मूकत्वमिति स्वरूपं ॥

**Colophon.** इति शाश्वतविरचिता मेघदूतटीका समाप्ता संवत् । १७५३ ॥

विषयः । कालिदासकृतमेघदूतस्य व्याख्यानम् ।

---

**No. 2741.** तत्त्वप्रकाशः । Substance, country-made paper, 12 × 4 inches. Folia, 136. Lines, 8 on a page. Extent, 3510 ślokas. Character, Nágara. Date, Sm. 1492. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Verse. Generally correct. Sanskrit.

**Tattva-prakáśa.** A poem in 11 cantos on the pre-eminence of the Jain system of religion. By S'ílaratna Súri, desciple of Munisiñha Súri. It treats both of the esoteric and of the exoteric doctrines of the system, and gives a deal of information about geography, the gods of the Hindus, and different leading systems of philosophy current in India.

**Beginning.** अर्हं नौमि प्रकृष्टं सुविदितविनतं सर्व्वदा मङ्गलानां
सर्व्वेषामादिभूतं सुखजयमहोदार्य्यहेदार्ह्यं त्वहेतुं ।
स्वस्तिश्रीवल्लिमालोन्नसनजलधरं बन्धुरं बन्धुतुल्यं
प्रीणाय प्राणभाजां चिदमलकमले राजहंसोपमानं ॥
सर्व्वाण्णीवाहनस्यप्रबलमृगपतिस्फूर्जद्दुर्जस्विनादं
श्रुत्वा श्रुत्वा सकोपेऽशपदशरणतो निःसरन्तं वृषं तं ।
श्राम श्रामश्च भग्न निजचरणमतं वीक्ष्य चाङ्केन नाम्ना
यस्तदुःखापहोऽभूत्स भवतु वृषभो भव्यकल्याणकर्त्ता ॥
— — — — — — — —।
नानार्थयुक्तं नवतत्त्वमञ्जुलं सुदृष्टिभिः सत्त्वगुणैर्निरीक्षितं ॥
तत्त्वप्रकाशाह्वयशास्त्रमुत्तमं प्रारभ्यते स्वान्यसुबोधहेतवे ॥ इत्यादि ।

**End.** जिनचरणसरोजस्थायिनी सारलक्ष्मी-
भेवति जगति रम्या सर्व्वकल्याणमाला ।
इह भवपरलोकद्वन्द्वनिर्द्वन्द्वसौख्यो-
दयसमुदयदात्री श्रेयसे सर्व्वसिद्धिः ॥

**Colophon.** इति श्रीआगमिकश्रीमुनिसिंहसूरिशिष्यश्रीशीलरत्नसूरिविरचिते महाकाव्ये जिनचरणाङ्के तत्त्वप्रकाशे एकादशः सर्गः । शुभं भवतु ।

लक्ष्मीस्थापितवंशमौक्तिकसमः श्रेष्ठीप्रसिद्धोऽभवद्-
धन्यः सज्जनपालनामविदितः सुश्रावकः सद्गुणः ।
पत्नी शीलयुतास्य धर्म्मचतुरा लूड़ीतिनाम्ना तयोः
पुत्राः षट् निपुणा इतीव भुवने पाण्डोस्तनूजा इव ॥
— — — — — — — ।
मन्त्री महणसिंहाख्यः श्रीदेवी तस्य वल्लभा ।
तयोः पुत्राश्च चत्वारो मूर्त्तिमन्तो वृषा इव ।
— — — — — — —।
तृतीयः शसणो मन्त्री राजराजिषु + + + ।
अभूत्तुर्य्यः स्फुरत्तेजास्तेजाख्यः सचिवाग्रणीः ॥
महीपप्रमुखैराद्यसोदरैः+ स्तिरादरात् ।
कारितं पुस्तकारूढं काव्यं तत्त्वप्रकाशकं । संवत् । १४९२ ॥

विषयः । प्रथमे सर्गे,—मगधदेशाधिपस्य महीचन्द्रस्य गुणसेननामा कश्चित् तनयः आसीत् । तस्य शिक्षाविवरणप्रसङ्गेन संक्षेपतः सौगतमतकथनं शैवमतकथनं न्यायमतकथनं वैशेषिकमतकथनं मीमांसकमतकथनं वेदान्तमतकथनं सांख्यमतकथनं चार्व्वाकमतकथनं जैनमतस्य श्रेष्ठत्वकनञ्च । द्वितीये सर्गे,—अथ विशेषेण जैनमतकीर्त्तनं । तत्र दया, सत्यं अस्तेयं दानं,सुशीलता चेति पञ्च धर्म्मा इति निरूपणं । जीवाजीव-पुण्य-पापाश्रव-संवर-निर्ज्जर-बन्ध-मोक्षरूपनवतत्त्वकथनं । अथ जीवाजीवस्य चतुर्द्दशभेदकथनं । पुण्यस्य द्विचत्वारिंशद्भेदकथनं । पापस्य द्वाशीतिप्रकारभेदकथनं । आश्रवस्य द्विचत्वारिंशत्प्रकारभेदकथनं । संवरस्य सप्तपञ्चाशत्प्रकारभेदकथनं । निर्ज्जरस्य द्वादशविधभेदकथनं । बन्धस्य चतुर्व्विधत्वकथनं । मोक्षस्य च एकविधत्वकथनं । अथ ज्ञानापरपर्य्यायचेतनारूप एव जीव इति तल्लक्षणकथनं । तद्विपरीतोऽजीव इति अजीवलक्षणकथनं । यस्य परिणामेन शुभं भवति तत् पुण्यं । यस्य च परिणामेन अशुभं जायते तत्पापं । कर्म्मोपार्ज्जननिदानमाश्रवः । अशुभानां कर्म्मणां निवारणहेतुः संवरः । कर्म्मणां विनाशकारणं निर्ज्जरा । कर्म्मसंयोग एव बन्धः । कर्म्मवियोग एव मोक्ष इति

जीवादीनां लक्षणकथनं। अथ एकेन्द्रियादिपञ्चेन्द्रियपर्य्यन्त जीवानां इन्द्रियादिसंख्यातद्भेदादिकथनं। अथ सूक्ष्मवादरभेदेन एकेन्द्रियजीवस्य द्वैविध्यकथनपूर्व्वकं तस्य अवान्तरभेदनिरूपणं। तत्र तेषां गन्धरसस्पर्शनादिशरीरात्मकत्वकथनं। तृतीये सर्गे,—वादरजीवस्य पृथिवीकायत्वकथनं। अथ सुकुमार-कठोरभेदेन तस्य द्विविधत्वकथनं। तत्र कृष्ण-नील-पीत-रक्त-शुक्ल-पाण्डुर-पनका (मृत्तिकाविशेषः) भेदेन सुकुमारस्य सप्तविधत्वकथनं। तथा शर्करा-वालुका-पाषाण-शिला-लवण-क्षार-लोह-ताम्र-स्वर्ण-रौप्य-हरिताल-मनःशिला--पारदाञ्जनप्रवालादिभेदेन कठोरकायस्य चत्वारिंशद्विधत्वप्राधान्यविशेषकथनं। एवं तेजःकायवादरजीवनिरूपणं। तत्र तत्र चन्द्रसूर्य्यमेघविद्युद्वृष्टिप्रभृतिनिरूपणं। उद्भिज्जादिभेदनिरूपणं। तत्र उद्भिज्जानां श्रेणीविभागकथनं। सजीवनिर्जीववीजादिकथनं। एवं द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रियजीवभेदादिकथनं। चतुर्थे सर्गे,—नारक-तिर्य्यक्-मानव-देवभेदात् पञ्चेन्द्रियाणां चतुर्व्विधत्वनिरूपणं। तत्र रत्नप्रभ-शर्कराप्रभ-वालुकाप्रभ-पम्पकप्रभ-धूमप्रभ-तमःप्रभ-महातमःप्रभभेदेन नारकाणां सप्तविधत्वकथनपूर्व्वकं तेषां देहपरिमाणस्थानादिकथनं। अद्भुतनरकस्थानवर्णनं। तत्र तत्र जीवानां वेदनादिवर्णनञ्च। अथ तिर्य्यग्जीवनिरूपणं। तत्र जलस्थलनभश्चरादिभेदकथनपूर्व्वकं अतिसूक्ष्मदृष्ट्या तेषामवान्तरजातिप्रकृत्यादिनिरूपणं। भाविमहाप्रलये जीवानां गतिनिरूपणं। अथ आर्य्यानार्य्यभेदेन मनुष्याणां द्वैविध्यनिरूपणं। तत्र मगध-राजगृह-चम्पापुर-वङ्ग कलिङ्ग-सिन्धुदेशादयः पञ्चविंशतिः आर्य्यदेशा इति निरूपणं। अनार्य्यदेशादि कथनञ्च। अथ भवनपति-व्यन्तरदेव-ज्योतिःस्थ-विमानस्थभेदेन देवानां चतुर्व्विधत्वनिरूपणं। एषामवान्तरभेदादिनिरूपणं। देवायुःपरिमाणादिकथनञ्च। अथ जीवानां गत्यादिकथनं। पापपुण्यफलकथनञ्च। मनुष्याणां भोजपेयादिविधिकथनं। मनुष्याणां शरीरतत्त्वकथनं। पञ्चमे सर्गे,—जीवरूपं द्रव्यं विहार-धर्म्माधर्म्म-नभः-काल-पुद्गलरूपपञ्चविधा अजीवद्रव्यकथनञ्च। धर्म्मास्तिकायादिनिरूपणं। पुद्गलादिस्वरूपकथनं। तत्र स्कन्धसंघातादिभेदनिरूपणं। कालादिपरिमाणतद्भेदादिलक्षणकथनं। षष्ठे सर्गे,—पुण्यपापविवरणकीर्त्तनं। तत्र पुण्येन शुभागतिर्भवतीतिनिरूपणं। पुण्यप्रकृतिकथनं। तपःप्रभावकथनं। पापप्रकृतिकथनं। तदवान्तरभेदकथनं। मोहणीयावरणीयादिकथनं। सप्तमे सर्गे,—आस्रवनिरूपणं। मनोवाक्यकायभेदेन त्रिविधयोगकथनं। अथ कायिकी-आधिकरणिकी-प्राद्वेषिकी-पारिग्रहणिकीप्रभृतिपञ्चविंशतिविधाशुभहेतुक्रियानिरूपणं। अथ संवरस्वरूपादिकथनं। तत्र ज्ञानदर्शनचारित्ररूपरत्नत्रयनिरूपणं। परीषहादिनिरूपणं। गृहस्थादीनां स्नानभोजनादिकालनिरूपणं। वसत्यादिनिरूपणञ्च। अष्टमे सर्गे,—निर्ज्जरास्वरूपादिनिरूपणं। तत्र रसत्याग-अनशन-वृत्तिसंक्षेपादिरूपद्वादशविधकायक्लेशनिरूपणं। प्रायश्चित्तादिकथनं। बन्धनिरूपणं। मिथ्याज्ञानादिनिरूपणं। नवमे सर्गे,—मोक्षोपायकथनं। तत्स्वरूपादिकथनं। योगविधानं। सिद्धिकथनं। संयमादिफलकथनं। औदयिक-औपशमिकादिनिरूपणं। सिद्धानां स्थानादिकथनञ्च। दशमे सर्गे,—

कालस्वभाव-नियति-पूर्व्वकर्म्म-पुरुषकारविवरणकथनं। तत्र विशेषेण कालमाहात्म्यकथनं। स्वभाववर्णनं। एकादशे सर्गे,—जीवादिविषये केषाञ्चित् विप्रतिपत्तिकथनपूर्व्वकं तत्समाधानकथनं।

---

**No. 2742.** आचारकौमुदी। Substance, country-made paper, 14 × 4 inches. Folia, 102. Lines, 8 on a page. Extent, 2,424 ślokas. Character, Nágara. Date, Sm. 1782. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**A'chára-kaumudí.** A Vaishṇavite treatise on good conduct and adoration of Vishṇu. By Rájaráma Bhaṭṭa.

**Beginning.** प्रणम्य परमात्मानं सच्चिदानन्दविग्रहं।
राजारामः सतां प्रीत्यै करोत्याचारकौमुदीं॥

अथ सर्व्वस्यैव हि धर्म्मस्याचारमूलतया सप्रपञ्चोऽयं निरूप्यते। तथाहि,—आचारप्रभवो धर्म्मो धर्म्मस्य प्रभुरच्युत इति। इत्यादि।

**End.** तेन च सर्व्वथा भगवानेव उपास्यः, अन्यान्यदेवतास्तु तत्परिकरत्वेन उपास्या इति।

**Colophon.** इति मीमांसकश्रीभट्टसोमेश्वरसूनुभट्टराजारामकृताचारकौमुदी समाप्ता। संवत् १७८२।

विषयः। सर्व्वस्यैव हि धर्म्मस्य सदाचारमूलत्वनिरूपणं। आचारलक्षणादिकथनं। धर्म्मलक्षणादिकथनं। वेदादिप्रामाण्यनिरूपणं। विधिविवेचनं। तद्भेदादिनिरूपणं। सात्त्विक-राजसादिभेदेन आचारभेदकथनं। अधिकारिभेदेन तद्व्यवस्थानिरूपणं। वैष्णवाचारनिरूपणं। प्रातःस्नानादिविधिकथनं। पुष्पतुलसीचयनादिविधिकथनं। प्रातःसन्ध्यादिविधिकथनं। भगवद्गृहमार्ज्जनादिविधिकथनं। तिलकविधिकथनं। गोपीचन्दनादिना तिलककरणे फलाधिक्यकथनं। तुलसीमाल्यधारणविधिकथनं। वैष्णवैस्तु सर्व्वथा माला धारणीयेति कथनं। भगवत्पूजाविधिकथनं। तत्र भगवद्विग्रहनिरूपणं। गोपालमूर्त्त्यादिपूजनमाहात्म्यकथनं। पूजाप्रयोगकथनं। नैवेद्यादिनिरूपणं। स्तोत्रादिकथनं। जपविधिकथनं। नाममाहात्म्यकीर्त्तनं। तुलसीमाहात्म्यकथनं। आरात्रिकविधिकथनं। परिक्रमविधिकथनं। हरिवासरमाहात्म्यादिकथनं। उपवासादिविधिकथनं। विशेषतो जन्माष्टम्यादिव्रतविधिकथनं। नामापराधनिरूपणं। भगवद्भक्तिनिरूपणं। तत्स्वरूपादिनिरूपणं। भक्तिरेव तत्प्राप्त्युपाय इति निर्णयः। वैष्णवैस्तु भगवान् नन्दनन्दन एव उपास्यः, अन्यान्यदेवताः तत्पूजाङ्गत्वेन अर्च्चनीया इति निरूपणं।

---

**No. 2743.** सङ्ग्रहणीप्रकरणम्। Substance, country-made paper, 10 × 4 inches. Folia, 40. Lines, 6 on a page. Extent, 614 ślokas. Character, Nágara. Date, ? Plece of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new Prose. Incorrect. Mágadhí.

**Saṅgrahaṇí-prakaraṇa.** On Jain geography of the universe, the different regions it comprises, and the character of their inhabitants. The part devoted to the geography of India is of course the fullest. By Chandra Súri. (Cf. *ante*, p. 179.)

**Beginning.** नमिउ अरिहन्ताइ विहिभवणोगाहणायपत्तेयं।
सुरनारयाण वुत्थं नरतिरियाणं विणाभवणं॥
उववायचरण विरहं सखं इगसमयं समागमुणे।
दसवाससहस्साइं भवणवइणं जहणठिइ॥ इत्यादि।

**End.** मलहारहेमसूरीण सीसलेसेण हरिणा रइयं।
संघयणरयणमेयं नंदउजा वीरजिणतित्थं॥

**Colophon.** इति संग्रहणीप्रकरणं समाप्तं॥

विषयः। सुर-नर-तिर्य्यक्-नारकाणां जीवननिरूपणं। तेषां भवनादिरूपस्थाननिरूपणं। भवनपतीनामुत्कृष्टजीवनकथनं। भवनवासिदेवदेवीनां जघन्योत्कृष्टोभयरूपजीवनकथनं। एवं व्यन्तरलोकवासिदेवादीनां जीवनकथनं। चन्द्रादिग्रहनक्षत्रतारकरूपदेवादीनां जघन्यादिजीवनकथनं। वैमानिकदेवीनामुत्कृष्टजीवनकथनं। सौधर्म्मादिषु उत्कृष्टस्थितिकथनं। वैमानिकदेवानां जघन्यस्थितिकथनं। एवं चतुरेन्द्राणां प्रधानमहिषीणां संख्यादिकथनं। सौधर्म्मादिप्रतराणां (ग्रहभूमिकाराणां) संख्याकथनं। शेषदेवलोकवासिनां स्थितिकथनं। अथ असुर-नाग-सुपर्ण-विद्युपदिरूपभवपतीनां नामकथनं। दक्षिणोत्तरदिग्विभागेन भवनसंख्याकथनं। दशविधासुरनिकायानां चिह्नकथनं। असुराणां वर्णादिकथनं। अथ भवनपतीन्द्राणां स्थित्यादिकथनं। अथ व्यन्तरलोकस्य नगरपरिमाणतन्नामादिकथनं। तत्र पिशाचीनां चर्य्यादिकथनं। अथ व्यन्तरलोकस्य नगरपरिमाणतन्नामादिकथनं। तत्र पिशाचीनां वर्णकथनं। अथ चन्द्रादिविमानकथनं। तत्र तदवस्थानविभागकथनञ्च। अथ मनुष्यलोके चलस्थिरभेदेन द्विविधज्योतिश्चक्रस्थितिनिरूपणं। चन्द्रादिविमानसंस्थानकथनं। तेषां परिमाणकथनं। अथ मेरोः प्रादक्षिण्येन भ्रमतां चन्द्रादीनां गतितारतम्यकथनं। चन्द्रादीनां परिवारसंख्याकथनं। राहुनिरूपणं। अथ जम्बूद्वीपस्थताराविमानानामन्तरालादिनिरूपणं। मनुष्यक्षेत्रान्तर्वर्त्तिनां चन्द्रार्काणां प्रतिदिनमपरापरमण्डलेषु परिभ्रमणतोऽनवस्थितान्तरत्वाच मनुक्षेत्राद्बहिः घटाकारावस्थितानां तेषामन्तरालप्रमाणकथनं। जम्बूद्वीपे द्वौ चन्द्रौ द्वौ सूर्य्याविति च कथनं। अथ चन्द्रात् चन्द्रस्य सूर्य्यात् सूर्य्यस्य च

परस्परमन्तरनिरूपणं। एवमन्यान्यद्वीपेषु समुद्रेषु च चन्द्रादिसंख्याकथनं। द्वीपोदधीनां स्वरू-पकथनं। तेषां नामकथनञ्च। तत्र जम्बूप्राची-पुष्करादयः सर्व्वे एव द्वीपाः प्रत्येकं एकैकेन समुद्रेण वेष्टिता इति कथनं। प्रतिद्वीपं प्रतिसमुद्रञ्च चन्द्रादिगतिकथनं। मनुष्यचेत्रे चन्द्रादीनां पङ्क्तिक्रमेण भ्रमणकथनं। तत्र मण्डलादिनिरूपणं। द्वीपोदधिषु ग्रहनक्षत्रताराणां संख्याज्ञा-नोपायकथनं। चन्द्रादिविमानस्वरूपकथनं। कल्पभेदेन चन्द्रादीनां विमानवृत्तादिभेदनिरू-पणं। चतुर्दशरज्ज्वात्मकस्य लोकस्य विभागकथनं। सुरनरादीनां गतिविवेचनं। देवादीना-मुपभोगादिकथनं। देवादीनां वर्णविभागादिकथनं। अथ एकस्मिन् मुहूर्त्ते अहोरात्रे च प्राणा नां संख्याकथनं। आहारोच्छासयोः कालमानकथनं। अनाहारसाहारभेदेन द्विविधजीवनि-रूपणं। अथ नरकादिनिरूपणं। तत्र वेदनादिनिरूपणं। नारकादिगतिभ्य आगतानां सिद्ध्यु-पायकथनं। अथ तिर्य्यग्लोकनिरूपणं। जीवानां गतिनिरूपणं।

---

**No. 2744.** रूपसेनकुमारकथा। Substance, country-made paper, 11 × 4 inches. Folia, 52. Lines, 8 on a page. Extent, 1,256 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect. Sanskrit, interspersed with Mágadhí quotations.

**Rúpasena-kumára-kathá.** The religious duties of Jains illustrated by the story of Rúpasena, a prince of Rájagṛiha. By Jina Súri.

**Beginning.** श्रीमन्तं विदुरं शान्तं लक्ष्मीराज्यजयप्रदं।
वीरं नत्वाद्भुतां पुण्यां कथां काञ्चिल्लिखाम्यहं॥
आरोग्यभाग्याभ्युदयं प्रभुत्वं सत्त्वं शरीरे च जने महत्त्वं।
तत्त्वञ्च चित्ते सदने च सम्पत्सम्पद्यते पुण्यवशेन पुंसां॥
भो भो भव्याः श्रीजिनागमवाणी श्रोतव्या। यतः,
सुच्चा जाणइ कल्लाणं सुच्चा जाणइ पावगं।
उभयं पि जाणइ सुच्चाणं ठेयं तं समायरे। इत्यादि।

**End.** ये पालयन्ति नियमान् परिपूर्णान् नृपतिरूपसेन इव।
ते सुखलक्ष्मीभाजः पदे पदे सज्जनश्लाघ्याः॥
विशालराजसूरीशसुधाभूषणसद्गुरोः।
शिष्येण जिनसूरिणा सुकृता कथिता कथा॥

**Colophon.** इति रूपसेनकुमारकथा सम्पूर्णा॥

विषयः। जैनधर्म्मप्रशंसाकीर्त्तनं। अहिंसादिमाहात्म्यकीर्त्तनं। दानमाहात्म्यादिकथनं।

धर्म्मानुष्ठानस्य आवश्यकताकथनं। अथ प्रत्यहं गुरुवन्दन-धर्म्मोपदेशश्रवण-तद्वचनाराधनानां कर्त्तव्यताविधानं। धर्म्मस्यैव सुखहेतुत्वनिरूपणं। जैनधर्म्मसदृशोऽन्यः कोऽपि यथार्थो धर्म्मो नास्तीतिकथनमुखेन रूपसेननामकस्य राजगृहनगराधिपतिमन्मथाभिधाननरपतेः कुमारस्य विवरणकथनं। तत्र एकदा वर्षाकाले शीतलाभिधानायां तन्नगरोपकण्ठे विराजमानायां कस्याञ्चित् सरिति विहरतस्तस्य नरपतेः मन्मथस्य पुरतः केवलं नरमस्तकयुगलं किमपि तद्-वदानं भासमानं पश्यति भयेन तत्तीरवासिनः कस्यचित् जैनगुरोर्दीक्षाग्रहणकथनं। अथ तन्माहात्म्येन राज्ञः पुत्रद्वयलाभविवरणकथनं। तत्र ज्येष्ठकुमारस्य रूपसेनस्य विवेकविवरण-कथनं। तस्य विविधनगराटवीषु अटाद्यमानस्य विविधाद्भुतपदार्थसन्दर्शनादिदृष्टान्तकीर्त्तनं। प्रसङ्गात् नीतितत्त्वनिरूपणञ्च। विशेषेण जैनमाहात्म्यकथनं।

---

**No. 2745.** अनुष्ठानविधिः, वा षड़ावश्यकवृत्तिः। Substance, country-made paper, 14 × 4 inches. Folia, 94. Lines, 9 on a page. Extent, 3,576 ślokas. Character, Nágara. Date, Sm. 1478. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose and verse. Incorrect.

**Anusṭhána-vidhi** alias **Shaḍávaśyaka-vṛitti.** The six essential duties of Jain householders. This includes the whole circle of domestic duties appropriate for Jains who do not betake to a monastic life. Anonymous.

**Beginning.** वन्दारुवृन्दारकवृन्दवन्द्यं प्रणम्य वीरं जितमारवीरं।
उपासकानामुपकारहेतोर्वक्ष्याम्यनुष्ठानविधिं सुबोधं॥

इहैव तावत् श्रावकेणापि प्रत्यहं त्रीन् पञ्च सप्त वारान् दर्शनविशुद्ध्यर्थं चैत्यवन्दना विधेया॥ यदाह,—

साहूण सत्त वारा होइ अहोरत्त मज्झयारम्मि। गिहिणो पुण तिइ वंदण तिय पञ्च सात्तया वारा॥ तथा वन्दनकं चाष्टौ कारणान्याश्रित्य गुणवत्प्रतिपत्तये गुरूणां दातव्यं। इत्यादि।

**End.** इत्येवमल्पमतिसत्वविबोधनाय
श्राद्धप्रतिक्रमणसूत्रविवृत्तिरेषा।
किञ्चिन्मया प्रकटिताच तु विस्तरार्था
ज्ञेया वृहद्विवृतितो वरचूर्णितश्च॥

**Colophon.** इति श्रीषड़ावश्यकवृत्तिः सम्पूर्णा। ग्रन्थ २०१०। सं०१४७८॥

विषयः। गृहस्थानां चैत्यवन्दनाद्यनुष्ठानप्रकारकथनं। तत्र प्रत्यहं श्रावकेण (गृहस्थेन)

क्रमेण त्रीन् पञ्च सप्त वारान् सत्त्वविशुद्ध्यर्थं चैत्यवन्दनं विधेयमितिनिरूपणं। गुरूपसंदर्शनस्यावश्यकताकथनं। अर्हद्विम्बनमस्कारविधिकथनं। तथाहि शक्रादिकृतां पूजां सिद्धिगमञ्च अर्हन्तीति अर्हन्तः। एवमन्यच। अथ अर्हद्विम्बनमस्कारमाहात्म्यकीर्त्तनं। तत्र पुलिन्दमिथुनस्य उपाख्यानकथनं। चण्डपिङ्गलस्य उपाख्यानकथनञ्च। अथ चैत्यवन्दनविधिकथनं। तत्त्रैविध्यनिरूपणं। अस्यानुष्ठानेन च सम्यक् मिथ्यादुष्कृतकर्त्तुस्तत्क्षणादेव अशेषमपि कर्म्म चीयते—इति निरूपणं॥ अत्र मृगावत्या उपाख्यानकथनं। भगवन्त एव विवेकिभिः स्तोतव्या नान्ये इति निरूपणं। अत्र राजगृहमाश्रितस्य भगवतो वर्द्धमानस्य मेघाभिधानं कमपि श्रेणिककुमारं प्रत्युपदेशदानकथनं। इन्द्रकृतजिनस्तवकथनं। अथ सर्व्वत्र भगवद्वन्दनादौ श्रद्धाभक्त्यादियुक्तेन भवितव्यमितिनिरूपणं। भावसमाधिगुणाविर्भावकथनमुखेन जिनदत्तस्य उपाख्यानकथनं। जाति-जरा-मरण-शोकप्रणाशनश्रुतधर्म्ममाहात्म्यकथनं। अत्र गङ्गाकूलनिवासिनां ब्राह्मणां वृत्तान्तकीर्त्तनं। अथ मुमुक्षूणां कौण्डिन्यादीनां तपस्विनां वृत्तान्तकथनं। अर्हद्गुणस्तवनमाहात्म्यकथनमुखेन शीतलाचार्य्यस्य उपाख्यानकथनं। क्षुल्लकाचार्य्यकथाकीर्त्तनञ्च। गुरुशुश्रूषाविधिकथनं। ज्ञानदर्शनचारित्रनिरूपणं। वन्दनादीनां कालनिरूपणप्रसङ्गेन पूर्व्वाह्णकालादिलक्षणकथनं। भोजनकालादिनिरूपणं। अत्र धम्मिलस्य उपाख्यानकथनं। अथ प्रतिक्रमणविधिकथनं। तत्र अनशन-मौन-वृत्तिसंक्षेपण-रसत्याग-कायक्लेश-संलीनतारूपषड्विधवाह्यतपःकथनं। तथा प्रायश्चित्त-ध्यान-वैयावृत्त्य-विनय-अथोत्सर्ग-स्वाध्यायरूपषड्विधाभ्यन्तरतपःकथनञ्च। अत्र महापरिग्रहनिवृत्त्वनिवृत्त्योः फलकथनमुखेन नासिक्यनगरवासिनो वणिज उपाख्यानकथनं। सम्यग्दर्शनादिमाहात्म्यकथनं। तत्र नववर्म्मण उपाख्यानकथनं। यज्ञदेवस्य उपाख्यानकथनं। काञ्चनपुराधिपस्य उपाख्यानकथनं। प्राणातिपातव्रतानुव्रतादिविधिकथनं। अत्र विविधसंवादकथनं। मोक्षलाभहेतुकथनञ्च।

---

**No. 2746.** पुद्गलषट्त्रिंशिका। Substance, country-made paper, $10\frac{1}{2} \times 4$ inches. Folia, 3. Lines, 8 on a page. Extent, 42 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Mágadhí.

**Pudgala-shaṭtriñśiká.** On the Jain theory of atoms. By Abhayadeva Súri.

**Beginning.** खित्तोगाहण दव्वे भावद्वाणाउ अप्पबहुअत्ते।
थोवा असंखगुणिआ तिन्नि विसेसा कहं नेया॥
खित्तामुत्तत्ताउ तेन समं बंधपच्चया भावाः।
वी पोग्गलाणथोवो खित्तो बद्धाणकालोउ॥ इत्यादि।

**End.** एवमि जहा संभव यथोवयणं करिह रासीणं ।
सवभावजय जाणिउ ते याणं ते जिणाभिहियं ॥

**Colophon.** इति श्रीअभयदेवसूरिविरचिता पुद्गलषट्त्रिंशिका समाप्ता ।

विषयः । पुद्गलानां (परमाणुविशेषरूपाणां) अप्रदेशसप्रदेशभेदेन द्वैविध्यकथनपूर्व्वकं तेषां संघातभेदलक्षणादिकथनं । विभिन्नानां परमाणूनामेकपुद्गलस्कन्धतया परिणमनं संघातः तथा एकद्रव्यात् परमाणूनां विघटनं भेद इति निरूपणं । अथ चेत्रस्थानावगाहनस्थान-द्रव्यस्थान-भावस्थानभेदेन तेषां सप्रदेशाप्रदेशपरिणामकथनं । तत्र तत्र गुणपरिणामादि-निरूपणं । द्व्यणुकादिस्कन्धनिरूपणं । परमाणूनां बहुत्वनिरूपणं । असंख्येयत्वकथनञ्च ।

---

**No. 2747.** बालबोधिनी । Substance, country-made paper, 10 × 4 inches. Folia, 10. Lines 6 on a page. Extent, 183 ślokas. Character, Nágara. Date, ? Place of doposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sanskrit.

**Bálabodhiní.** A gloss on Kálidása's S'rutabodha, a primer on versification. By Hañsarája.

**Beginning.** शुभजननसमयादिनाथस्य पादा-
वसुरसुरमनुष्यैर्भूरिवन्द्यौहि नत्वा ।
ललितपदसुरम्यां श्रुतबोधस्य टीकां
मुनिरहमिह कुर्व्वे हंसराजो विचित्रां ॥
सुगुरुवचनदीपैर्दर्शितं तत्स्वरूपं
मम हृदयघटस्थं तेऽनुग्रहाद्यत्तदेव ।
अभ्यसमहमभिधास्ये बालबोधिप्रसन्नं
निजपठननिमित्तं बालबोधाय चैव ॥

छन्दसां लक्षणमिति । अहं कविः कालिदासः तत् श्रुतबोधं श्रुतबोधनामधेयं अविस्तरं विस्तारातिरिक्तं कथयिष्यामि । इत्यादि ।

**End.** कविना अतः परं ग्रन्थः प्रोक्तः । इति ।
पूज्यः श्रीनानकाख्यो निखिलगुणगणैर्युक्त आत्मीयगच्छे
स्वामी जीमूतनादो विहरति भुवने साम्प्रतं तत्त्ववेत्ता ।
शाचस्तस्यास्ति हंसः पटुगुरुवचनस्थापनाचारुबुद्धि-
टीका तेनाभिरामा जयति विरचिताबोधबोधस्य स्वद्वी ॥

**Colophon.** इति श्रीकविकालिदासकृतश्रुतबोधटीका बालबोधिनी समाप्ता ।

विषयः । कालिदासकृतश्रुतबोधाख्यच्छन्दोग्रन्थस्य व्याख्यानम् ।

---

**No. 2748.** तत्त्वदीपनम् । Substance, country-made paper, 16 × 4 inches. Folia, 22. Lines, 6 on a page. Extent, 354 ślokas. Character, Bengali. Date, ? Place of deposit, Háñsapukura-grám, Post Kálná, Zillá Varddhamána, Hemachandra Chaṭṭopádhyáya. Appearance, new. Prose. Correct.

**Tattvadípana.** A treatise on the existence of the Deity, founded on the adual theory of the Vedántists and the eternity of the Vedas, and refutations of the doctrines of the other schools of Indian philosophy, including those of the Bauddhas. By Jagannátha Sarasvatí.

**Beginning** सर्व्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ।

गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहं ।

कर्म्मादिकण्ठालङ्कारं सारं वेदान्तवारिधेः ।

रचयत्यमलं ग्रन्थं तत्त्वदीपननामकं ।

तत्रेश्वरे अनुमानमेव प्रमाणमिति तार्किकसमयः । तत्र जन्यं सकर्तृकं कार्य्यत्वात् घटादिवदित्याकारकं । न च वेदस्यापि ईश्वरे प्रमाणत्वसम्भवेन कथमनुमानमेवेति । इत्यादि ।

**End.** जिताहारो जितक्रोधो जगन्नाथसरस्वती ।

तेनायं रचितो ग्रन्थस्तत्त्वदीपनसंज्ञकः ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यहरिहरसरस्वतीप्रियशिष्यश्रीजगन्नाथसरस्वतीविरचितं तत्त्वदीपनं समाप्तं ।

विषयः । ईश्वरतत्त्वनिरूपणं । तत्र ईश्वरे प्रमाणकथनं । तत्र नैयायिकादिमतोपपादनपुरःसरं तत्खण्डनं । सांख्यमतखण्डनं । पातञ्जलमतखण्डनं । बौद्धमतखण्डनं । शैवमतखण्डनं । वैष्णवमतखण्डनं । वेदस्य स्वतः प्रामाण्यनिरूपणं । विधिनिषेधार्थवादादिविवेचनं । पूर्व्वमीमांसामतखण्डनं । प्रपञ्चस्य मिथ्यात्वकथनं । व्यवहारिकप्रमाणकथनं । तत्र प्रत्यक्षानुमानोपमानार्थापत्त्यनुपलब्धिरूपप्रमाणनिरूपणं । अपवर्गनिरूपणं । मुमुक्षुलक्षणादिकथनं । जीवन्मुक्तलक्षणादिकथनञ्च ।

---

**No. 2749.** संक्रान्तिकौमुदी । Substance, palm-leaf, 12 × 1½ inches. Folia, 15. Lines, 4 on a page. Extent, 217 ślokas. Character, Bengali. Date, Sk. 1540. Place of deposit, Háñsapura-grám, Post Kálná, Zillá

Varddhamána, Dvárkánátha Bhaṭṭáchárya. Appearance, decayed. Prose and verse. Correct.

**Sañkránti-kaumudí**. An enquiry into the true nature of *Sañkránti* or the passage of the sun from one Zodiacal sign to another, and the religious duties appropriate on such an occasion. By Siddhánta-vágísa Bhaṭṭáchárya.

**Beginning.** गोविन्दचरणद्वन्द्वं नत्वा ध्यात्वा गुरोः पदं ।
संक्रान्तिकौमुदी यत्नाद्वागीशेन वितन्यते ॥

तत्र ज्योतिषे । अयने विषुवे द्वे च चतस्रः षड्शीतयः । चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः । इत्यादि ।

**End.** काव्यकैरवपूर्णेन्दोस्तर्कपङ्कजभास्वतः ।
वागीशस्य कृतिः प्रीतिं करोतु कृतिनां सदा ॥

**Colophon.** इति महामहोपाध्यायजगद्गुरुश्रीसिद्धान्तवागीशभट्टाचार्य्यविरचिता संक्रान्तिकौमुदी समाप्ता । शाके १५४० ॥

विषयः । संक्रान्तिलक्षणतद्भेदादिनिरूपणं । संक्रान्तिविशेषे पुण्यकालादिविवेचनं । तत्र तत्र कृत्यविशेषनिरूपणञ्च ।

---

**No. 2750.** दानवृहस्पतिस्मृतिः । Substance, palm-leaf, 12 × 2 inches. Folia, 6. Lines, 5 on a page. Extent, 47 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, decayed. Verse. Incorrect.

**Dána-vṛihaspati-smṛiti.** On religious benefactions and the rules for their consecration. By Vṛihaspati.

**Beginning.** वृहस्पतिमतं पुण्यं प्रवक्ष्यामि विशेषतः ।
यच्छ्रुत्वा तु नरो राजन् सर्व्वपापैः प्रमुच्यते ॥
इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणं ।
भगवान् ज्ञानिनां श्रेष्ठं पर्य्यपृच्छद्वृहस्पतिं ॥
भगवन् केन दानेन सर्व्वतः सुखमेधते ।
यदक्षयमहार्थञ्च तन्मे ब्रूहि पितामह ॥
एवमिन्द्रेण पृष्टोऽसौ देवदेवपुरोहितः । इत्यादि ।

**End.** एतेषु चैव यद्दत्तं दानं विप्रेषु शक्तितः ।
कुलान्युद्धरते पुंसां दश पूर्व्वान् दशापरान् ॥

**Colophon.** इति दानहस्त्यतिस्मृतिः समाप्ता ।

विषयः । दानविधिकथनं । तत्र तत्र भूमिसुवर्णादिदाने पात्रादिविशेषे च फलविशेष-कथनं ।

---

**No. 2751.** व्याख्यामृतम् । Substance, palm-leaf, 14 × 2 inches. Folia, 168, Lines, 6 on a page. Extent, 5,511 ślokas. Character, Bengali. Date, ? Place of deposit, Hāñspura-grám, Post Kálná, Zillá Varddhamána, Hemachandra Chaṭṭopádhyáya. Appearance, old. Prose. Incorrect.

**Vyákhyámrita.** A commentary on the well-known Amarakosha. By S'ríkara Áchárya. The codex is incomplete. It begins with the chapter on Vegetables.

**Beginning.** वनमरण्यमासान्ये । षटा गन्तारो वयः पक्षिणोऽस्यां । कृदिकारादिति ङिषि अटवी । अर्थ्यते विपिनत्वेन श्वापदैरित्यरण्यं । इत्यादि ।

**End.** तस्य प्रमाण इति लुकि । तालप्रमाणे तालः । तालं हस्तमस्य तालहस्तकं । शेषलक्षणे कप् ।

**Colophon.** इति महामहोपाध्यायश्रीश्रीकराचार्य्यविरचिते व्याख्यामृते मनुष्यवर्ग-विवरणं ।

विषयः । अमरकोषस्य वनौषधिवर्गादारभ्य मनुष्यवर्गान्तं व्याख्यानम् ।

---

**No. 2752.** वृहद्व्यासस्मृतिः । Substance, palm-leaf, 10 × 2 inches. Folia, 16. Lines, 5 on a page. Extent, 205 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, old. Prose. Correct.

**Vrihadvyása-smriti.** An amplified recension of the Institutes of Vyása. It comprises three chapters, of which the first treats of the duties of Vedic students; the second of the duties of women, of wives, and of duty to husbands; and the third of the daily duties of householders.

**Beginning.** वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिं ।
पप्रच्छुर्मुनयोऽभ्येत्य धर्मान् वर्णव्यवस्थितान् ॥
स पृष्टः स्मृतिमान् व्यासः स्मृतिं वेदार्थगर्भितां ।

उवाचाथ प्रसन्नात्मा मुनयः श्रूयतामिति ।
यत्र स्वभावतोऽरण्ये कृष्णसारो मृगः सदा ।
दृश्यते तत्र वेदोक्तो धर्म्मो भवितुमर्हति ॥
श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणं स्यात् तयोर्द्वैधे स्मृतिर्वरा ॥ इत्यादि ।

**End.** ब्राह्मे मुहूर्त्ते चोत्तिष्ठश्चिन्तयेद्धितमात्मनः ।
शक्तितो मतिमान् नित्यं कृत्नमेतत् समाचरेत् ॥

**Colophon.** इति श्रीवेदव्यासोपदिष्टायां स्मृतौ गृहस्थाह्निको नाम तृतीयोऽध्यायः । वृहद्व्यासस्मृतिः समाप्ता ।

विषयः । प्रथमाध्याये ब्रह्मचर्य्यविधितद्व्रतादिनिरूपणं । द्वितीयाध्याये,—स्त्रीणां कृत्यनिरूपणं । दाम्पत्यधर्म्मकथनं । पतिव्रताधर्म्मकथनञ्च । तृतीयाध्याये,—गृहस्थस्य आह्निककृत्यनिरूपणं ।

---

**No. 2753.** व्याख्योदाहृतिः, वा संज्ञातन्त्रप्रकाशिका । Substance, country-made paper, 16 × 4 inches. Folia, 68. Lines, 7 on a page. Extent, 1,645 ślokas. Character, Bengali. Date? Place of deposit, Brahmaśásana, Zillá Nadíyá, Akshayachandra Ghoshála. Appearance, fresh. Prose. Correct.

**Sanjná-tantra-prakáśiká** ALIAS **Vyákhyodáhṛiti.** A gloss on the chapter on terminology in Nílakaṇṭha's digest of astrology entitled *Tájika.* By Viśvanátha Daivajna, son of Divákara Daivajna. *Vyákhyodáhṛita* or "explanations and illustrations" appears to be the comprehensive name of the entire commentary on the *Tájika,* but different parts of it having been separately published each has obtained a distinctive subordinate name.

**Beginning.** चण्डीकुण्डलमाकलय्य कुतुकाद्दण्डाभशुण्डाग्रगं
कृत्वा ताण्डवडम्बरे पशुपतेः खेलन् खलूत्कुण्डलं ।
चण्डांशोरिव मण्डलं तदपरं सन्दर्शयन्नम्बरे
हेरम्बो जगदम्बिकां विहसयन्वः श्रेयसे गर्ज्जतां ॥
दिवाकरो नाम बभूव विद्वान् दिवाकराभो गणितेषु मन्ये ।
स्वकल्पितैर्येन विदृहन्देर्वेदं जगद्दर्शितविश्वरूपं ॥
तस्यात्मजा-पञ्च समा बभूवुः पञ्चेन्द्रकल्पा गणितागमेषु ।
पञ्चानना वादिगजेन्द्रभेदे पञ्चाग्निकल्पा द्विजकर्म्मणा च ॥

अजनिष्ट कृष्णनामा ज्येष्ठस्तेषां कनिष्ठानां ।

विद्यानवद्यवाचां वेत्ता जगतः सदाचारी ॥

तस्माज्जातः कनिष्ठो विबुधबुधगणश्रेष्ठतां प्राप्य जायज्ज्योतिःशास्त्रेण शश्वत्प्रकटितविभवा यस्य शिष्यप्रशिष्याः ।

विष्णुर्ज्योतिर्व्विदुर्व्वीपतिविदितगुणो भूमिदर्व्वीकरेन्द्रो ग्रन्थव्याख्यानखर्व्वीकृतविबुधगुरुगर्व्वेद्धा गर्व्वभाजां ॥

— — — — — — —।

तस्यानुजः सम्प्रति विश्वनाथो विष्णुप्रसादाद्गुणमात्रजिष्णुः ।

सर्व्वज्ञदैवज्ञविलासविज्ञो न्दसिंहकः साधितसर्व्वविद्यः ॥

गोदावरीतीरस्थगोलाभिधपुरवसतिः पार्थदेशैकभूषा

संज्ञातन्त्रस्य टीकां व्यदधदभिनवां गद्यपद्यानवद्यां ।

शश्वद्विश्वोपकृत्यै विशदतरतया दैवविद्विश्वनाथो

ग्रन्थोग्रग्रन्थिभेदां ग्रहगणितविदामग्रगण्योऽप्यगर्व्वः ॥

निर्व्विघ्नग्रन्थसमाप्त्यर्थं मङ्गलमाचरन् चिकीर्षितं प्रतिजानीते प्रणम्येति ।

**End.** पुनः कथम्भूतं विद्वच्छिवप्रीतिकरं पण्डितशिवस्य प्रीतिदं ॥

**Colophon.** इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचितायां व्याख्योदाहृतौ संज्ञातन्त्रं समाप्तं ।

अकारि विश्वनाथेन संज्ञातन्त्रप्रकाशिका ।

टीका टीकाकृतिं कुर्य्यात् सज्जालज्जानुबन्धनं ॥

इति संज्ञातन्त्रप्रकाशिका समाप्ता ।

विषयः । नीलकण्ठकृतताजिकाभिधानफलितज्योतिर्निबन्धस्य संज्ञातन्त्रप्रकरणस्य व्याख्यानम् ।

---

**No. 2754.** व्याख्योदाहृतेः वर्षतन्त्रप्रकाशिकाभिधानखण्डं । Substance, country-made paper, 16 × 4 inches. Folia, 58. Lines, 6—7 on a page. Extent, 1,365 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmasásana, Zillá Nadíyá, Akshayachandra Ghoshála. Appearance, fresh. Prose. Correct.

**Vyákhyodáhṛiti.** This codex contains the second part of the commentary on the Tájika; it treats of the astrology of the year. Its specific name is *Varsha-tantra-prakás'iká*. The first part has been noticed under the next preceding No.

**Beginning.** यत्पादपद्मं सुरसिद्धदैत्या अभीष्टसिद्ध्यै प्रणमन्ति नित्यं।
तं विघ्नराजं मनसा स्मरामि भक्तप्रियं नागमुखं गणेशम्॥
गोदावरीतटे भाति गोलग्रामोऽतिसुन्दरः।
तत्रावसन् पूर्व्वजामे सिद्धान्ताम्बुजभानवः॥
अनेकविद्याकुशलैर्द्विजेन्द्रैः संसेवितो भूमितले प्रसिद्धः।
दिवाकरो वेदविदां वरिष्ठो वेदान्तशास्त्राभिरुचिर्बभूव॥
तस्मात्मजाः पञ्च गुणैरुपेता जाता अमीषां प्रथमस्तु कृष्णः।
दैवज्ञवर्य्यः सकलागमज्ञः विश्वेशपादाब्जरतो नितान्तं॥
— — — — — तत्र ग्रन्थारम्भे निर्व्विघ्नसमाप्त्यर्थं कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति स्वश्लेति॥

**End.** मूलत्रिकोणस्थलग्नस्थे सति पितृगेहे भोजनं। अन्यदासमाप्ति स्पष्टं।

**Colophon.** इति श्रीदिवाकरदैवज्ञात्मजश्रीविश्वनाथदैवज्ञविरचितायां व्याख्योदाहृतौ वर्षतन्त्रप्रकाशिका समाप्ता।

विषयः। नीलकण्ठकृतताजिकाभिधानफलितज्योतिर्ग्रन्थस्य वर्षतन्त्रप्रकरणस्य व्याख्यानम्।

---

**No. 2755.** नीलकण्ठस्तोत्रम्। Substance, palm-leaf, 12 × 2 inches. Folia, 12. Lines, 5 on a page. Extent, 165 ślokas. Character, Bengali. Date, ? Place of deposit, Hāñspura-grám, Post Kálná, Zillá Burdwan, Hemachandra Chaṭṭopádhyáya. Appearance, old. Verse. Correct.

**Nílakaṇṭha-stotra.** That part of the story of the churning of the ocean in which S'iva swallows the poison churned up. It concludes with a hymn in praise of S'iva. It appears very like an extract from a Puráṇa.

**Beginning.** व्यास उवाच।
कथं समुत्थितं घोरं विषं सूर्य्यायुतप्रभं।
कथं पीतं भगवता शङ्करेणामितौजसा॥
कथञ्च देवदेवस्य कण्ठे कुन्देन्दुसंप्रभे।
नीलो वर्णः समुत्पन्न एतदिच्छामि वेदितुं॥
सनत्कुमार उवाच।
प्रवृत्ते ज्योतिषां चक्रे मध्यं प्राप्ते दिवाकरे।
देवता नियमात्मानः सर्व्वे तिष्ठन्ति तां कलां॥

नियमाश्च समाप्यन्ते तस्मिन् काले दिवौकसां ।
तेषां मध्यगतो वायुः प्राणिनां जीवितोऽद्गरः ॥
नमस्ते नीलकण्ठाय इत्युवाच सदागतिः ।
तच्छ्रुत्वा भावितात्मानो मुनयः संश्रितव्रताः ।
बालखिल्या इतिख्याताः पतङ्गसहचारिणः ॥ इत्यादि ।

**End.** यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः ।
अचय्यमन्नपानं वै पितृभ्यश्चोपतिष्ठते ॥
मनसा चिन्तितं यच्च यच्च वाचाप्युदाहृतं ।
सर्व्वं सम्पद्यते तस्य स्तवस्यास्यानुकीर्त्तनात् ॥
...त् परमं गुह्यं येऽपि स्युः पापयोनयः ।
स्त्रियः शूद्राश्च ये चेह रुद्रलोकं व्रजन्ति ते ॥

**Colophon.** इति नीलकण्ठस्तोत्रं सम्पूर्णं ॥

विषयः । समुद्रमन्थनकाले नीलकण्ठस्याविर्भाववृत्तान्तकथनपूर्व्वकं तत्स्तोत्रव्याजेन गुण-माहात्म्यादिकथनं ।

---

**No. 2756.** पदार्थादर्शः । Substance, country-made paper, 17 × 5 inches. Folia, 88. Lines, 8 on a page. Extent, 2,522 ślokas. Character, Bengali. Date, ? Place of deposit, Hāñspura-grám, Post Kálná, Zillá Burdwan, Hemachandra Chaṭṭopádhyáya. Appearance, old. Prose. Incorrect.

**Padárthádarśa.** A gloss on Kavindra Ácbárya's poem entitled *Kavichandrodaya*. By S'ivánandanátha *alias* Kás'ínátha.

**Beginning.** नमामि कामेश्वरपादपङ्कजं
करोमि कामेश्वरपूजनं सदा ।
वदामि कामेश्वरनाम निर्म्मलं
स्मरामि कामेश्वरतत्त्वमव्ययम ॥
अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरं ।
शास्त्रवल्लीजलधरं स्फुरत्कीर्त्तिकरं परं ॥
अनाद्यायाखिलाद्याय मायिने गतमायिने ।
नीरूपाय सरूपाय दक्षिणामूर्त्तये नमः ॥

वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीं ।
मातृरूपेण सततं सहस्रारेऽखिलेश्वरीं ॥
कविचन्द्रोदये काव्ये गुरूणामुपदेशतः ।
पदार्थादर्शटीकेयं काशीनाथेन तन्यते ॥

तत्र भवान् कविचन्द्राभिधानो महाकविः स्वकृतकोषकाव्यप्रारम्भे निजेष्टदेवतां नमस्करोति पुण्डरीकाक्षेति । इत्यादि ।

**End.** श्रीमत्त्रिपुरसुन्दर्य्याः प्रीत्यर्थं लिखिता मया ।
कृता टीका गुरुप्रीत्यै प्रीयतां जगदीश्वरः ॥

**Colophon.** इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारीणभट्टोपाख्यजयरामभट्टात्मजवाराणसीगर्भसम्भवकाशीनाथाख्यशिवानन्दनाथविरचितायां पदार्थ[illegible]यां कविचन्द्रोदयटीकायां कविचन्द्राचार्य्यप्रशंसा । समाप्तोऽयं ग्रन्थः ।

विषयः । कविन्द्राचार्य्यकृतकविचन्द्रोदयाभिधानकोषकाव्यस्य व्याख्यानम् ।

---

**No 2757.** तर्कानुभाषा । Substance, country-made paper, 17 × 4½ inches. Folia, 68. Lines, 6 on a page. Extent, 1,198 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇapura, Zillá Nadiyá. Rájívalochana Gañgopádhyáya. Appearance, old. Prose. Incorrect.

**Tarkánubháshá.** A gloss on Kes'ava Mis'ra's treatise on the terminology of the Nyáya entitled *Tarkabháshá*. By Govardhana. The text has been noticed under No. 1110, (*ante*, III, p. 72) and a different commentary on it under No. 2483, (*ante* VII, p. 240).

**Beginning.** यत्तर्कभाषामनुभाषते स्म गोवर्द्धनस्तर्ककथासुधीरः ।
तेनानवद्येन सुधांशुगौरी कीर्त्तिर्गुरूणामस्रताधिकास्तु ॥
विजयश्रीतनूजन्मा गोवर्द्धन इति श्रुतः ।
तर्कानुभाषां तनुते विविच्य गुरुनिर्म्मितिम् ॥
श्रीविश्वनाथानुजपद्मनाभानुजो गरीयान् बलभद्रजन्मा ।
तनोति तर्कानधिगत्य सर्व्वान् श्रीपद्मनाभाद्विदुषो विनोदान् ॥

शिष्यप्रवृत्तये अभिधेयं प्रतिजानीते बालोपीति । मया एषा संक्षिप्ता युक्त्यङ्कितितर्कभाषा प्रकाश्यते । तर्काः षोड़शपदार्थाः । इत्यादि ।

**End.** शक्तिग्रहणाहितसंस्कारतया तस्यां दशायां तज्जन्यस्मरणं वेति ।

**Colophon.** (इतःपरं खण्डितत्वात् परिसमाप्तिवाक्याभावः ।)

विषयः । केशवमिश्रकृततर्कभाषाया व्याख्यानम् ।

**No. 2758.** रत्नमाला। Substance, country-made paper, 14 × 3½ inches. Folia, 17. Lines, 7 on a page. Extent, 430 ślokas. Character, Bengali. Date, ? Place of deposit, Hañsapura-grám, Post Kálná, Zillá Burdwan, Hemachandra Chaṭṭopádhyáya. Appearance, old. Prose. Incorrect.

**Ratnamálá.** A gloss on S'ilhana Mis'ra's S'ánti-s'ataka. Anonymous.

**Beginning.** अलिकुलमण्डितगण्डं प्रत्यूहव्यूहतिमिरमार्त्तण्डम्।
सिन्दूरारुणशुण्डं देवं वेतण्डतुण्डमवलम्बे॥
सत्सम्प्रदायप्रथनाय तिष्ये शिष्यैश्चतुर्भिः सह योऽवतीर्णः।
उक्तो हर...मतन्त्रराजे श्रीशङ्कराचार्य्यगुरुं तमीडे॥

इह यद्यपि स्वर्गापवर्गसाधनतया विविधदेवताराधनक्रियाः श्रूयन्ते तथापि तत्त्वज्ञानसाधनत्वेन परवैराग्यमेव परं श्रेयःसाधनमिति मनसि कृत्वा परमकारुणिकः श्रीशिल्हनाचार्य्यः शान्तिशतकनामानं ग्रन्थं प्रारिप्सुः शिष्टाचारपरिपालनाय मङ्गलमाचरति। नमस्याम इति।

**End.** अनेन तत्त्वज्ञानसाधनत्वेन तदेवाश्रयणीयमिति सूचितमिति।

**Colophon.** इति शान्तिशतकरत्नमालाटीकायां चतुर्थः परिच्छेदः। समाप्तोऽयं ग्रन्थः।

विषयः। शिल्हणमिश्रकृतशान्तिशतकस्य व्याख्यानम्।

---

**No. 2759.** समयनिर्णयः। Substance, palm-leaf 18 × 2 inches. Folia, 81. Lines, 4 on a page. Extent, 1,194 ślokas. Character, Bengali. Date, Sk. 1602. Place of deposit, Brahmaśásana, Zillá Nadíyá, Paṇḍit Kálíprasanna Vidyáratna. Appearance, decayed. Prose and verse. Correct.

**Samaya-nirṇaya.** On times meet for religious rites and ceremonies. By Ananta Bhaṭṭa.

**Beginning.** शिवां शिवं गणेशञ्च प्रणम्य परया मुदा।
निर्णयः क्रियते सुष्ठु समयेऽनन्तशर्म्मणा॥

तत्र निर्णयस्तावद्विप्रतिपन्नानां परस्परविरोधपरीहार इति। विप्रतिपत्तिश्च बहुधा। इत्यादि।

**End.** श्रुत्वा माहात्म्यमीशस्य संसारं तरतेऽञ्जसेति स्कान्दोक्तेरिति।

**Colophon.** इति श्रीमदनन्तभट्टकृतौ समयनिर्णयः समाप्तः। समाप्तोऽयं ग्रन्थः। शकाब्दाः १६०२।

विषयः। निर्णयलक्षणकथनं। विप्रतिपत्तिभेदकथनपूर्व्वकं प्रत्येकं तत्स्वरूपनिरूपणं। कालस्य भगवत्स्वरूपत्वकथनं। महाकालादिलक्षणकथनं। लवक्षणमुहूर्त्तादिलक्षणं। चन्द्रकलाक्रियैव काल इतिमतकथनं। तिथिस्वरूपकथनं। मासनिरूपणं। तत्र मुख्यगौणचान्द्रसौरादिभेदकथनं। कार्य्यविशेषे मासविशेषनियमनं। मलमासादिलक्षणकथनं। तत्र तत्र कर्त्तव्यकर्म्मविधानञ्च। कालाशुद्धिविवेककथनं। विवाहकालादिनिरूपणं। द्विरागमनकालादिकथनं। गर्भाधानकालादिविधानं। पुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणनिष्क्रमणान्नप्राशनकर्णवेधचूड़ोपनयनकालनिरूपणं। विद्यारम्भकालकथनं। अनध्यायादिनिरूपणं। समावर्त्तनादिकालनिरूपणं। कृषिवाणिज्यगृहारम्भप्रवेशकालादिनिरूपणं। [illegible]ादिनिरूपणं। वृषोत्सर्गकालनिरूपणं। सपिण्डीकरणकालनिरूपणं। पुराणादिश्रवणकालनिरूपणं। पुराणश्रवणमाहात्म्यकीर्त्तनञ्च।

---

**No. 2760.** आचारप्रदीपः। Substance, palm-leaf, 14 × 2 inches. Folia, 102. Lines, 4 on a page. Extent, 1,670 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmaśásana, Zillá Nadíyá, Paṇḍit Kálíprasanna Vidyáratna. Appearance, decayed. Prose and verse. Incorrect.

**A'chára-pradípa.** A digest of the Smṛiti rules for the duties included under the term A'chára. By Kes'ava Bhaṭṭa. He is the author of several Smṛiti works which bear the generic title of *Pradípa.*

**Beginning.** नन्दसूनुं नमस्कृत्य बालानां बोधसिद्धये।
आलोच्य धर्म्मशास्त्राणि सदाचारो निरूप्यते॥

तत्राचारप्रशंसायां महाभारतं।
आचारप्रभवो धर्म्मो धर्म्मस्य प्रभुरच्युतः॥

इत्यनेनाचारस्य सर्व्वधर्म्ममूलतया अभ्यर्हितत्वादादौ तन्निर्णयः प्रसूयते। इत्यादि।

**End.** ते यान्ति परमं पदमिति परम्परया मोक्षजनकत्वमिति। इति।

**Colophon.** इति महामहोपाध्यायभट्टश्रीकेशवविरचिताचारप्रदीपः परिपूर्णः। समाप्तोऽयं ग्रन्थः।

विषयः। तत्रादौ सदाचारप्रशंसाकीर्त्तनं। आचारस्य धर्म्ममूलत्वकथनं। धर्म्मलक्षणादिविवेचनं। विधिनिषेधपरिसंख्यादिविवेचनं। आचारहीनस्य निन्दादिकथनं। शयनादुत्थानविधिकथनं। मूत्रपुरीषाद्युत्सर्गविधिः। शौचविधिः। प्रातःस्नानविधिः। तत्कालनिरूपणं। संकल्पविवेचनं। प्रातःसन्ध्याविधिः। गोग्रासदानविधिः। पूजाविधिः। तत्र पुष्पादिविवेचनं।

नैवेद्यादिनिरूपणं। हरिहरदुर्गादिपूजाविधिः। जपविधिः। तिलकविधिः। मध्याह्नस्नानविधिः। तर्पणविधिः। वैश्वदेवविधिः। नित्यहोमविधिः। नित्यश्राद्धविधिः। आतिथ्यविधिः। भोजनविधिः। भक्ष्याभक्ष्यविधिः। पेयापेयविधिः। मत्स्यमांसादिभोजनविधिविवेचनं। भक्ष्याभक्ष्यनिरूपणं। सायंसन्ध्याविधिः। शयनविधिः। दारोपगमनविधिः। आचारात् मोक्षप्राप्तिकथनञ्च।

---

**No. 2761.** प्रायश्चित्तप्रदीपः। Substance, palm-leaf, 14 × 2 inches. Folia, 122. Lines, 4 on a page. Extent, 1,769 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmaśásana, Zillá Nadíyá, Pándit Kálíprasanna Vidyáratna. Appearance, old. Prose and verse. Correct.

**Práyaśchitta-pradípa.** A digest of the Smṛiti rules for performing expiatory rites. By Kes'ava Bhaṭṭa.

**Beginning.** जगदीशं हरिं नत्वा बालानां बोधहेतवे।
आलोच्य धर्म्मशास्त्राणि प्रायश्चित्तं विविच्यते॥

तत्र प्रायश्चित्तस्वरूपं। प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तं प्रचक्षते। इति हारीतोक्तेः—इत्यादि।

**End.** अनेन च अनुष्ठातुः प्रत्यवायाधिक्यं भवतीति। इति।

**Colophon.** इति महामहोपाध्यायभट्टश्रीकेशवकृतः प्रायश्चित्तप्रदीपः परिपूर्णः। समाप्तोऽयं ग्रन्थः।

विषयः। प्रायश्चित्तस्वरूपनिरूपणं। तन्त्रप्रसङ्गविवेचनं। प्रायश्चित्तानुष्ठाननिरूपणं। पापनिष्क्रमणादिकथनं। पापोद्देशकथनं। अतिपातकमहापातकानुपातकादिनिरूपणं। ब्रह्महत्याप्रायश्चित्तकथनं। सुरापानप्रायश्चित्तकथनं। सुवर्णस्तेयप्रायश्चित्तं। गुर्व्वङ्गनागमनप्रायश्चित्तं। गुर्व्वङ्गनानिरूपणं। पतितसंसर्गप्रायश्चित्तं। संसर्गप्रकारनिरूपणं। पतितोत्पन्नप्रायश्चित्तं। अनुपातकप्रायश्चित्तं। उपपातकप्रायश्चित्तं। गोवधप्रायश्चित्तं। तत्र रोधादिनिमित्तभेदनिरूपणं। क्षत्रियादिवधप्रायश्चित्तं। स्त्रीवधप्रायश्चित्तं। गर्भनाशनादिप्रायश्चित्तं। गजाश्वादिवधप्रायश्चित्तं। मार्ज्जारादिवधप्रायश्चित्तं। पक्षिवधप्रायश्चित्तं। वृक्षादिच्छेदनप्रायश्चित्तं। अभक्ष्यभक्षणप्रायश्चित्तं। भक्ष्याभक्ष्यनिरूपणं। वृथामांसादिभक्षणप्रायश्चित्तं। हंसादिभक्षणप्रायश्चित्तं। लशुनादिभक्षणप्रायश्चित्तं। सूतकान्नादिभक्षणप्रायश्चित्तं। अपेयपानादिप्रायश्चित्तं। उच्छिष्टभोजनादिप्रायश्चित्तं। शवदूषितादिजलपानप्रायश्चित्तं। अपेयक्षीरपानप्रायश्चित्तं। रजतधान्यगुडादिस्तेयप्रायश्चित्तं। स्वैरिणीगमनादिप्रायश्चित्तं। रजस्वलादिगमनप्रायश्चित्तं। पर्व्वसु स्त्रीगमनादिप्रायश्चित्तं। अन्त्यजस्त्रीगमनादिप्रायश्चित्तं। तिर्य्यग्योनिगमनादिप्रायश्चित्तं। व्रात्यप्रायश्चित्तं। परिवेदनादिप्राय-

श्चित्तं । अनाश्रमित्वप्रायश्चित्तं । शूद्रयाजनप्रायश्चित्तं । असत्प्रतिग्रहप्रायश्चित्तं । अविक्रेयविक्रया-दिप्रायश्चित्तं । निन्दितदेशादिगमनप्रायश्चित्तं । मिथ्याभाषणादिप्रायश्चित्तं । व्रतभङ्गप्रायश्चित्तं । जातिभ्रंशकरप्रायश्चित्तं । सङ्करीकरणादिप्रायश्चित्तं । प्रकीर्णकप्रायश्चित्तं । रहस्यप्रायश्चित्तं । प्राजापत्यादिव्रतविधानं । धेनुमूल्यनिरूपणं । प्रायश्चित्तोत्तरकर्म्मविधानञ्च ।

---

**No. 2762.** कृत्यप्रदीपः । Substance, palm-leaf, 13 × 2 inches. Folia, 89. Lines, 4 on a page Extent, 1,593 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmaśásana, Zillá Nadíyá, Paṇdit Kálíprasanna Vidyáratna. Appearance, decayed. Prose and verse. Incorrect.

**Kṛitya-pradípa.** A digest of the Smṛiti [illegible] the performance by householders of domestic and periodical rites and ceremonies. By Keśava Bhaṭṭa.

**Beginning.** प्रणम्य कमलाकान्तं श्यामसुन्दरविग्रहं ।
बालानां सुखबोधाय कृत्यदीपो विधीयते ॥
तत्रादौ वैशाखकृत्यमाह पद्मपुराणं । तुलामकरमेषेषु प्रातःस्नानं विधीयते । इत्यादि ।

**End.** अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते पान्तु मे सुतं ॥
इति गन्धपुष्पाभ्यां संपूज्य ब्राह्मणान् भोजयित्वा दक्षिणां दद्यादिति । इति ।

**Colophon.** इति महामहोपाध्यायभट्टश्रीकेशवविरचितकृत्यप्रदीपः समाप्तः । समाप्तोऽयं ग्रन्थः ॥

विषयः । वैशाखस्नानविधिकथनं । तत्र प्रयोगकथनं । (एवं परत्र ।) अक्षयतृतीयाविधिकथनं । यवश्राद्धविधिकथनं । ज्यैष्ठकृत्यकथनं । तत्र सावित्रीव्रतविधिकथनं । दशहराविधिकथनं । स्नानयात्राविधिकथनं । आषाढकृत्यकथनं । तत्र नवोदकश्राद्धविधिकथयं । रथयात्राविधिकथनं । चातुर्मास्यव्रतारम्भकथनं । हरिशयनविधिकथनं । श्रावणकृत्यनिरूपणं । तत्र मनसापूजाविधिकथनं । भाद्रकृत्यकथनं । तत्र जन्माष्टमीव्रतविधिकथनं । जयन्तीनिरूपणं । पारणकालादिकथनञ्च । पार्श्वपरिवर्त्तनकृत्यकथनं । चतुर्थ्यां चन्द्रदर्शनप्रायश्चित्तकथनं । अघोरचतुर्द्दशीविधिकथनं । कुक्कुटीव्रतविधिकथनं । दूर्व्वाष्टमीव्रतविधिकथनं । तालनवमीव्रतविधिकथनं । अनन्तव्रतविधिकथनं । अगस्त्यार्घदानविधिकथनञ्च । आश्विनकृत्यनिरूपणं । तत्र अपरपक्षश्राद्धविधिकथनं । मघाश्राद्धविधिः । नवरात्रपूजाविधिकथनं । कोजागरकृत्यनिरूपणं । कार्त्तिककृत्यनिरूपणं । तत्र प्रातःस्नानविधिकथनं । दीपदानविधिकथनं । भूतचतुर्द्दशीविधिकथनं । दीपान्विताकृत्यनिरूपणं । सुखरात्रिपूजाविधिकथनं । द्यूतप्रतिपद्विधिकथनं ।

भाद्रद्वितीयाविधिकथनं । विष्णूत्थानविधिकथनं । मार्गशीर्षकृत्यनिरूपणं । नवान्ननिरूपणं । अष्टकाविधिकथनं । पौषकृत्यनिरूपणं । तत्र पूपाष्टकादिविधिकथनं । माघकृत्यनिरूपणं । प्रातःस्नानविधिकथनं । रटन्तीविधिकथनं । यमतर्पणविधिकथनं । श्रीपञ्चमीविधिकथनं । माघसप्तमीविधिकथनं । विधानसप्तमीविधानकथनं । आरोग्यसप्तमीविधानकथनं । भीष्माष्टमीविधानकथनं । फाल्गुणकृत्यनिरूपणं । शिवरात्रिविधिकथनं । गोविन्दद्वादशीविधिकथनं । दोलयात्राविधिकथनं । चैत्रकृत्यनिरूपणं । तत्र षष्ठाकर्णपूजाविधिकथनं । वारुणीनिरूपणं । अशोकाष्टमीविधिकथनं । श्रीरामनवमीविधिकथनं । मदनत्रयोदशीविधिकथनं । मदनचतुर्दशीविधिकथनं । जन्मतिथिकृत्यनिरूपणं । विद्यारम्भादिकथनं । गृहप्रवेशादिविधिकथनं । सूतिकाषष्ठीपूजाविधानञ्च ।

---

**No. 2763.** शुद्धिप्रदीपः, वा शुद्धिदीपिका । Substance, palm-leaf, $13\frac{1}{2} \times 2\frac{1}{4}$ inches. Folia, 84. Lines, 4 on a page. Extent, 722 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmaśásana, Zillá Nadíyá, Pandit Kálíprasanna Vidyáratna. Appearance, decayed. Prose and verse. Correct.

**S'uddhi-pradípa.** A digest of the Smriti rules for mourning and purifications. By Kes'ava Bhatta.

CONTENTS :—Purification defined. Concremation. Impurity of the person defined. Sapinda defined. Conjunction of mourning. Impurity resulting from following a corpse, &c. Funeral ceremony. Collection of bones after cremation. Advantages of dying near the Ganges, &c. Mourning for infants, &c. Female impurities. Rules of purification. Persons fit to apply the fire-brand to a funeral pile. Symbolical cremation. Mourning for persons destroyed by accident. Ditto for suicides. Ceremonies to be observed for a suicide before performing his śráddha, &c. Persons fit to perform śráddhas. Advantages of sons in this connexion. Praise of gold. Purification of articles of offering. Observances and ceremonies fit at the time of death.

**Beginning.** नवीननीरदश्यामं कामदं काममोहनं ।
प्रणम्य जानकीकान्तं क्रियते शुद्धिदीपिका ॥

तत्र । शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन मासेनैकेन पादजः । इत्यादि वचनपर्य्यालोचनया वेदबोधित + + + + + + कर्म्मानर्हत्वमित्यादि ।

**End.** ततश्च सुमूर्षुनापि तदशौचमध्ये दानादिकं कर्त्तव्यमिति । इति ।

**Colophon.** इति महामहोपाध्यायभट्टश्रीकेशवविरचितशुद्धिप्रदीपः परिपूर्णः । समाप्तोऽयं ग्रन्थः ।

विषयः। तत्रादौ शुद्धिरूपकथनं। सहमरणानुमरणादिविवेचनं। अशौचनिरूपणं। सापिण्ड्यनिरूपणं। अशौचसङ्करकथनं। शवानुगमनाशौचादिकथनं। अन्त्येष्टिविधिकथनं। अस्थिसञ्चयविधिकथनं। गङ्गादिमरणफलकथनं। बालाद्यशौचकथनं। स्त्र्यशौचकथनं। शोकविधिकथनं। दाहाधिकारिनिरूपणं। पर्णनरदाहविधिकथनं। व्याघ्रसर्पादिहतानामशौचविध्यादिकथनं। आत्मघाते अशौचाभावकथनं। तत्र नारायणबलिविधानपूर्व्वकं तत्श्राद्धादिकर्त्तव्यतानिरूपणं। श्राद्धाधिकारिनिरूपणं। पुत्रप्रशंसा। स्वर्णप्रशंसा। द्रव्यादिशुद्धिनिरूपणं। समर्षकृत्यनिरूपणञ्च।

---

**No. 2764.** शुद्धिकौमुदी। Substance, country-made paper, 16 × 4 inches. Folia, 48. Lines, 6 on a page. Extent, 936 s'lokas. Character, Bengali. Date, ? Place of deposit, Brahmaśásana, Zillá Nadíyá, Paṇḍit Kálíprasanna Vidyáratna. Appearance, new. Prose and verse. Incorrect.

**S'uddhi-kaumudí.** A treatise on mourning and purifications. By Mahes'vara.

The contents are closely similar to those of the work noticed above.

**Beginning.** ब्रह्मानन्दमयीं नत्वा श्रीमहेश्वरशर्म्मणा।
क्रियते सुखबोधाय रम्येयं शुद्धिकौमुदी॥

अथ सहमरणं तत्राङ्गिराः।
मृते भर्त्तरि या नारी समारोहेद्धुताशनम्।
साऽरुन्धतीसमाचारा स्वर्गलोके महीयते॥ इत्यादि।

**End.** सर्व्वथा समानोदकतानिवृत्तेः। स्नानमात्रमिति स्नात्वा शुद्ध्यन्ति गोत्रजा इत्युक्तेरिति।

**Colophon.** इति श्रीमहेश्वरकृता शुद्धिकौमुदी समाप्ता।

विषयः। सहानुगमनविधिकथनं। अशौचविधिकथनं। अशौचसङ्करकथनं। सपिण्डतादिनिरूपणं। सपिण्डाद्यशौचनिरूपणं। गर्भस्रावाशौचनिरूपणं। स्त्र्यशौचनिरूपणं। बालाद्यशौचनिरूपणं। विदेशस्थाशौचनिरूपणं। मृत्युविशेषाशौचनिरूपणं। सद्यःशौचविधिकथनं। शवानुगमनाद्यशौचनिरूपणं। अन्त्येष्टिविधिकथनं। मुमूर्षुकृत्यनिरूपणं। अस्थिसञ्चयनादिविधिकथनं। पर्णनरदाहविधिकथनं। उदकादिदानविधिकथनं। शोकापनोदनादिविधिकथनं। पिण्डोदकादिदानविधिकथनं। वृषोत्सर्गविधानकथनं। प्रेतक्रियाधिकारिनिरूपणं। पुत्रप्रशंसाकथनं। द्रव्यशुद्धिकथनञ्च।

---

**No. 2765.** प्रतिष्ठानिर्णयः । Substance, country-made paper, 18 × 4 inches. Folia, 42. Lines, 5 on a page. Extent, 630 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmaśásana, Zillá Nadíyá, Paṇḍit Kálíprasanna Vidyáratna. Appearance, old. Prose and verse. Correct.

**Pratisṭhá-nirṇaya.** A manual of rituals for consecrations of various kinds. By Gañgádhara.

**Beginning.** नमस्कृत्य गणेशानं जगतामेकसाक्षिणम् ।
गङ्गाधरबुधस्तन्त्रे प्रतिष्ठानिर्णयं महत् ॥
समाहृत्यान्यतन्त्राणि विविच्य च पुनः पुनः ।
सिद्धान्तरत्नं सङ्गृह्य निर्म्मितोऽयं यथाविधि ॥

तत्र प्रतिष्ठाकालमाह, स्कान्दे – इत्यादि ।

**End.** अनन्तं वेदपारगे,—इत्यभिधानात् तत्र तत्र फलाधिक्यमिति ।

**Colophon.** इति श्रीगङ्गाधरविरचितः प्रतिष्ठानिर्णयः समाप्तः ।

विषयः । प्रतिष्ठाकालादिकथनं । आचार्य्यलक्षणं । प्रासादानां सूत्रपातादिविधिः । भूमिपरीक्षाविधिकथनं । भूमिशुद्धिविधिः । शुल्वरीत्या दिङ्निर्णयकथनं । वास्तुपूजाविधिकथनं । भूमिखननविधिः । शिलान्यासविधिः । प्रासादारम्भविधिः । तत्र अधिवासविधिः । प्रयोगकथनञ्च । सर्व्वदेवप्रतिष्ठाविधिकथनं । कलसारोपणविधिकथनं । वापीकूपतड़ागादिप्रतिष्ठाकालादिकथनं । मण्डपकरणविधिः । कुण्डलक्षणं । वेदिकालक्षणं । मण्डपादौ देवतास्थापनविधिकथनं । द्वारतोरणादिविधिकथनं । लिङ्गस्थितिकादिविधिकथनं । महास्नानविधिः । चतुर्थीकर्म्मविधिः । ध्वजारोपणविधिकथनं । जीर्णोद्धारविधिकथनं । आरामादिप्रतिष्ठाविधिकथनं । दानविधिकथनं । दानमाहात्म्यकीर्त्तनञ्च । (अत्र सर्व्वत्र प्रयोगोऽस्तीति ज्ञेयम् ।)

---

**No. 2766.** व्यवस्थादर्पणः । Substance, country-made paper, 17 × 5⅓ inches Folia, 89. Lines, 7 on a page. Extent, 2,405 ślokas. Character, Bengali. Date, Sk. 1703. Place of deposit, Bráhmaṇapura, Zillá Nadíyá, Rájívalochana Gañgopádhyáya. Appearance, decayed. Prose and verse. Correct.

**Vyavasthá-darpaṇa.** *Responsa prudentum* regarding various questions of Smṛiti rules, rites and observances. By A'nanda S'armá, son of Ráma S'armá.

**Beginning.** श्रीरामं पितरं नत्वा श्रीमदानन्दशर्म्मणा ।
क्रियते बालबोधाय व्यवस्थादर्पणः शुभः ॥

**End.** तत्र तिथिस्वरूपमाह सूर्य्यसिद्धान्तः। अर्क्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी। भागैर्द्वादशभिस्तद्वत्तिथिश्चान्द्रमसं दिनं। इत्यादि।

अत एव तत्र तत्र स्वयमूह्यं सुधीभिरेतत् प्रमाणन्तु मत्कृते कृत्यदर्पणे द्रष्टव्यमिति।

**Colophon.** इति श्रीश्रीरामशर्म्मसूनुश्रीमदानन्दशर्म्मविरचितो व्यवस्थादर्पणः समाप्तः। शकाब्दाः १७०३।

विषयः। तिथिस्वरूपकथनं। मासादिलक्षणतद्भेदकथनं। मलमासादिविवेककथनं। सामान्यतिथिव्यवस्थाकथनं। युग्मादितिथिव्यवस्थाकथनं। सर्व्वासु तिथिषु कृत्यकथनं। विशेषेण जन्माष्टमीव्यवस्थादिकथनं। युगाद्यादिनिरूपणं। मन्वन्तरादिनिरूपणं। संक्रान्तिनिरूपणं। अम्बुवाचीनिरूपणं। नवान्ननिरूपणं। कार्त्तिकपूजानिरूपणं। विवाहादिसंस्कारनिरूपणं। अष्टविधविवाहलक्षणं। कन्यादातृनिरूपणादिकं। मुमूर्षुकृत्यकथनं। सहमरणानुमरणादिविधिकथनं। अशौचव्यवस्थाकथनं। अशौचान्तद्वितीयदिनकृत्यनिरूपणं। पर्णनरदाहविधिकथनं। वृषोत्सर्गविधिकथनं। षोड़शश्राद्धविधानं। सपिण्डनादिविधिकथनं। पार्व्वणश्राद्धादिव्यवस्थाकथनं। तीर्थश्राद्धादिविधिकथनं। आमश्राद्धविधिकथनं। अष्टकाश्राद्धादिनिरूपणं। महागुरुनिपाते कर्त्तव्यकर्म्मकथनं। पिण्डदानाधिकारिनिरूपणं। दायविभागप्रकारकथनं। दायानधिकारिनिरूपणं। क्लीवादिलक्षणकथनं। प्रायश्चित्तविधिकथनं। तत्र महापातकानुपातकोपपातकादिषु प्रत्येकं व्यवस्थाकथनं। गोमूत्रादिनिरूपणं। अद्भुतकथनं। अद्भुतशान्तिकथनञ्च।

---

**No. 2767.** साधनचन्द्रिका। Substance, country-made paper, 16 × 4½ inches. Folia, 38. Lines, 7 on a page. Extent, 1,525 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇapura, Zillá Nadíyá, Rájíva-lochana Gaṅgopádhyáya. Appearance, new. Prose and verse. Incorrect.

**Sádhana-chandriká.** A summary of the duties, rites, fasts and observances of Vaishṇavas. By Keśavendra Svámí.

**Beginning.** ज्ञानातीतं हरिं नत्वा तस्य भक्तिप्रसिद्धये।
रच्यते केशवेन्द्रेण हरिसाधनचन्द्रिका॥

अथ भक्तिस्वरूपं। सा परानुरक्तिरीश्वरे। अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतं। आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमेति। इत्यादि॥

**End.** अपि च भगवद्भक्तस्यापि कृपया तज्ज्ञायते नान्योपायान्तरेणेति।

**Colophon.** इति श्रीमत्केशवेन्द्रस्वामिनिर्म्मिता साधनचन्द्रिका समाप्ता।

विषयः। भक्तिस्वरूपकथनं। भगवद्भक्तस्य परमपुरुषार्थत्वनिरूपणं। दीक्षाग्रहणावश्यकता। गुरुलक्षणादिकथनं। अवलिप्तादिगुरुपरित्यागविधिकथनं। शिष्यलक्षणादिकथनं। मन्त्रोद्धार-

कथनं। दीचास्वरूपतत्कालादिकथनं। गुरुसेवनविधिकथनं। मन्त्रदानमाहात्म्यादिकथनं। ऊर्द्धपुण्ड्रतिलकादिविधिकथनं। शङ्खचक्रादिचिह्नधारणावश्यकताकथनं। तुलसीमाल्यधारणावश्यकताकीर्त्तनं। श्रीकृष्णार्च्चनमाहात्म्यकीर्त्तनं। शालग्रामशिलार्च्चनमाहात्म्यकथनं। शालग्रामादिलचणकथनं। वैष्णवादिलचणकथनं। श्रीमूर्त्तिसेवाप्रकारकथनं। भच्याभच्यनिरूपणं। तुलसीपूजादिकथनं। विहिताविहितपुष्पनिरूपणं। श्रीमद्भागवतमाहात्म्यकीर्त्तनं। भगवत्कथाश्रवणादिमाहात्म्यकथनं। चतुःषष्ट्युपचारेण भगवत्पूजाविधिकथनं। शरणागतिलचणं। एकादशीव्रतनित्यताकथनं। उपवासविधिकथनं। तदशक्तौ अनुकल्पविधिकथनं। शुद्धापूर्णादिषु उपवासव्यवस्थाकथनं। द्वादशीकृत्यविधानं। महाद्वादशीनिरूपणं। वसन्तपञ्चमीकृत्यनिरूपणं। शिवरात्रिव्रतविधिकथनं। दोलोत्सवविधिकथनं। नृसिंहचतुर्द्दशीविधिकथनं। शयनमहोत्सवविधिकथनं। जन्माष्टमीव्रतविधिनिरूपणं। श्रवणद्वादशीविधिकथनं। कार्त्तिकव्रतादिनिरूपणं। तत्र स्नानविधिकथनं। गोवर्द्धनपूजाविधिकथनं। भगवन्नामजपादिविधिकथनं। विष्णोरपराधाः। भगवद्भक्तमाहात्म्यकीर्त्तनञ्च।

---

**No. 2768.** समयप्रकाशः। Substance, country-made paper, 18 × 5 inches. Folia, 113. Lines, 6 on a page. Extent, 2,610 ślokas. Character, Bengali. Date, Sk. 1682. Place of deposit, Bráhmaṇapura, Zillá Nadíyá, Rájívalochana Gaṅgopádhyáya. Appearance, old. Prose and verse. Incorrect.

**Samaya-prakáśa.** On times meet for the performance of religious rites and ceremonies. By Bhaṭṭa Rámachandra Yajva.

**Beginning.** शिवाशिवपदं नत्वा रामचन्द्रेन यज्वना।
समयप्रकाशनामाऽयं निबन्धोऽयं निबध्यते॥

अथ नित्यखण्डभेदेन कालस्य द्वैविध्येन प्रथमतो नित्यकालमाह,—अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः। इत्यादि॥

**End.** इह लोके सुखं भुक्त्वा परत्र त्रिदिवं व्रजेत्। इतिस्वरसात् मरणकालेऽपि तत्सम्बन्धे पुण्यातिशय इति शं।

**Colophon.** इति भट्टश्रीरामचन्द्रयज्वविरचितसमयप्रकाशः परिसमाप्तः।

विषयः। नित्यखण्डभेदेन कालस्य द्वैविध्यकथनं। सामान्यतः पर्व्वतिथिनिरूपणं। सम्पूर्णाखण्डादितिथिव्यवस्थाकथनं। मासनिरूपणं। अयननिरूपणम्। संवत्सरनिरूपणं। मलमासादिनिरूपणं। विधिविशेषे कृत्यविशेषनिरूपणं। विशेषेण जन्माष्टमीनिरूपणं। एकादश्युपवासनिरूपणं। हरिशयनादिनिरूपणं। नवव्रतादिनिरूपणं। चातुर्मास्यविधिकथनं। शिवरात्रिव्रतनिरूपणं। एकभक्तादिव्रतनिर्णयः। उपाकर्म्मनिरूपणं। नानातिथिसाध्यव्रतनिर्णयः। नवरात्र-

तिथिनिर्णयः । कुमारीपूजाविधिः । होलिकोत्सवनिरूपणं । दृष्टिविषये पर्व्वनिरूपणं । प्रकृतिनिरूपणं । विकृतिनिरूपणं । श्राद्धकालनिरूपणं । अपरपक्षश्राद्धनिरूपणं । सपिण्डीकरणादिकालनिरूपणं । प्रेतश्राद्धेषु निषिद्धकालनिरूपणं । अमावस्यानिर्णयः । संक्रान्तिनिर्णयः । ग्रहणकालनिर्णयः । नक्षत्रोपवासनिर्णयः । आधानकालादिनिर्णयः । दीक्षाकालनिर्णयः । गृहारम्भकालनिर्णयः । देवप्रतिष्ठाकालादिनिर्णयः । वापीकूपतड़ागादिप्रतिष्ठाकालनिरूपणं । गर्भाधानपुंसवनादिकालनिरूपणं । अभ्यङ्गकालादिनिरूपणं । स्नानादिकालनिरूपणं । गङ्गामाहात्म्यकीर्त्तनं ।

---

**No. 2769.** वैष्णवसिद्धान्ततत्त्वं । Substance, country-made paper, 16 × 5 inches. Folia, 42. Lines, 6 on a page. Extent, 752 ślokas. Character, Bengali, Date, ? Place of deposit, Bráhmaṇapura, Zillá Nadíyá, Rájívalochana Gaṅgopádhyáya. Appearance, new. Prose and verse. Incorrect.

**Vaishṇava-siddhánta-tattva.** On the philosophy of Vaishṇava duties, and the supreme divinity of Krishṇa. Anonymous.

**Beginning.** नत्वा कृष्णपदद्वन्द्वमरविन्दं भवच्छिदं ।
तत्त्वं वैष्णवसिद्धान्ते क्रियते परमादरात् ॥
श्रीमुकुन्दपदद्वन्द्वं कन्दमानन्दसन्ततेः :
तनोतु मयि कारुण्यं स्वमात्रैकगतौ सकृत् ॥

तत्र । ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः । अनादिरादिर्गोविन्दः सर्व्वकारणकारणम् । इत्यादि ।

**End.** अत एव भक्तेरेव सर्व्वत्र प्राधान्यश्रवणात् सात्वतैः सैव सेवनीयेति शम् ।

**Colophon.** इति श्रीमद्वैष्णवसिद्धान्ततत्त्वं समाप्तम् ।

विषयः । भगवान् नन्दनन्दन एव परब्रह्मपदवाच्य इतिनिरूपणं । भक्तिलक्षणं । प्रेमलक्षणं । भावलक्षणं । रागलक्षणं । अनुरागलक्षणं । पूर्व्वरागलक्षणं । समर्थाया रतेर्वैलक्षण्यलक्षणं । निसर्गस्वरूपप्रकाशनं । समञ्जसारतिस्वरूपादिकथनं । समर्थारतिस्वरूपकथनं । कामानुगास्वरूपकथनं । साधकरूपतटस्थरूपभेदकथनं । भगवल्लीलानिरूपणं । रागमार्गस्य शुद्धतानिरूपणं । साधनचतुष्टयनिरूपणं । अवकरभेदनिरूपणं । भगवल्लीलाया नित्यत्वकथनं । श्रीकृष्णस्य सर्व्वोत्कर्षकथनं । भक्तलक्षणादिकथनं । भक्तिमाहात्म्यकीर्त्तनञ्च ।

---

**No. 2770.** सेतुः । Substance, palm-leaf, 16 × 2 inches. Folia, 158. Lines, 5 on a page. Extent, 4,337 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇapura, Zillá Nadíyá, Rájívalochana Gaṅgopádhyáya. Appearance, old. Prose and verse. Correct.

**Setu.** A commentary on the Addhyátma-rámáyaṇa section of the Brahmáṇḍa Puráṇa. By Ráma Varmá, son of Himmat Varmá.

**Beginning.** विसेनवंशजलधौ पूर्णः शीतकरोऽपरः ।
पूजाह्लादकरो विष्णुभूषणः कौस्तुभोऽपरः ॥
नाम्ना हिम्मतिवर्म्माऽभूद्धैर्य्येण हिमवानिव ।
रूपेण जितकन्दर्पः क्षमायां क्षमया समः ॥
— — — — — — — — ।
तस्माज्जातो रामदत्तश्चन्द्राचन्द्र इवापरः ।
मित्रानाञ्च रिपूणाञ्च मानदः प्रथितः प्रभुः ।
— — — — — — — ।
तेन श्रीरामभक्तेन सर्व्वविद्याप्रजानता ।
— — — — — — — ।
भट्टनागेशशिष्येण बध्यते रामवर्म्मणा ।
प्रणम्य जानकीजानिं रामं कामातिसुन्दरं ।
चापबाणधरं देवं मायामानुषविग्रहं ॥
सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ ।
सुशब्दमणिभिः सर्व्वैः प्रीयतां तेन राघवः ॥

अथ श्रीमता वाल्मीकिना लोकोद्धाराय कृते रामचरित्रवर्णने — — — — अवतरतो भगवतो लीलावतारस्य स्वरूपं गुप्तमेव । तदेतत्परमदयालुर्भगवान् साक्षाद्वेदव्यासो लोकानां स्फुटं बोधयितुं नारदब्रह्मसम्वादरूपेण ब्रह्माण्डपुराणे अध्यात्मरामायणाख्यां संहितां चक्रे ।—इत्यादि ।

**End.** श्रोतुः लेखयितुश्च अतिप्रसन्नः सन् सदा समीपे स्थितो भूत्वा प्रियमातनोत्यन्वयः ।

**Colophon.** इति श्रीमत्सकलराजविपदुद्धारणसमर्थत्यादिविरुदावलीविराजमानस्य हिम्मतिवर्म्मणः पुत्रस्य श्रीरामवर्म्मणः कृतौ अध्यात्मरामायणस्य सेतौ उत्तरकाण्डे नवमः सर्गः ।

विषयः । ब्रह्माण्डपुराणीयाध्यात्मरामायणस्य व्याख्यानम् ।

---

**No. 2771.** व्रतपद्धती । Substance, country-made paper, 18 × 5 inches. Folia, 58. Lines, 6 on a page. Extent, 1,047 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇapura, Zilla Nadíyá, Rájívalochana Gaṅgopádhyáya. Appearance, decayed. Prose and verse. Correct.

**Vrata-panjí.** A calendar of optional fasts and observances. By Navarája, of the Drona family.

**Beginning.** द्रोणवंशसमुत्पन्नो देवसिंहतनूद्भवः ।
धर्म्मकर्म्मरतः श्रीमान् नवराजो विराजते ॥
श्रीमता नवराजेन सर्व्वपापप्रणाशनी ।
क्रियते व्रतपञ्जीयं कलौ गङ्गेव निर्म्मला ॥
तत्रादौ व्रतानुष्ठानं । देवलः ।
अभुक्त्वा प्रातराहारं स्नात्वा चैव समाहितः ।
सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥ इत्यादि ।

**End.** जानन्तु विष्णुदैवत्यं यदनुक्तं विशेषतः ।
इतिस्मरणात् सर्व्वत्रैवानुक्तदेवतायां विष्णुरेव देवतेति शम् ।

**Colophon.** इति द्रोणवंशसमुद्भवश्रीनवराजविरचिता व्रतपञ्जी समाप्ता ।

विषयः । व्रतानुष्ठानविधिकथनं । व्रतलक्षणादिकथनं । व्रतलोपे निन्दाकथनं । व्रतग्रहण-प्रतिष्ठादिकालनिरूपणं । व्रतिनो नियमादिकथनं । नित्यकाम्यादिव्रतभेदकथनं । उपवासविधि-कथनं । पारणविधिकथनं । अनुकल्पविधिकथनं । प्रतिनिधिनिरूपणं । तिथिविशेषे व्रतविशेष-विधिकथनं । प्रतिपदादिपञ्चदशतिथिषु प्रत्येकं व्रतविशेषकथनं । तत्र एकादशीजन्माष्टमीशिव-रात्रिव्रतेषु विशेषनिरूपणं । मासव्रतनिरूपणं । नक्षत्रव्रतनिरूपणं । योगव्रतनिरूपणं । वारव्रत-निरूपणं । संक्रान्तिव्रतनिरूपणं । ऋतुव्रतनिरूपणं । अयनव्रतनिरूपणं । वार्षिकादिव्रतनिरूपणं । द्रव्यदेवतानिरूपणञ्च ।

---

**No. 2772.** सम्बन्धगणपतिः । Substance, country-made paper, 18 × 4½ inches. Folia, 24. Lines, 5 on a page. Extent, 316 ślokas. Character, Bengali, Date, ? Place of deposit, Bráhmanapura, Zilla Nadíyá, Rájíva-lochana Gangopádhyáya. Appearance, decayed. Prose and verse. Incorrect.

**Sambandha-ganapati.** On auspicious times for marriage. By Rávana Ganapati, son of Hariśankara Súri.

**Beginning.** श्रीमत्या कल्पवल्लेव हैमवत्या निरत्ययः ।
जयन्त्यालिङ्गितः कल्पद्रुमः सत्फलदः शिवः ॥
प्रणम्य पितरौ भक्त्या बालानां बोधहेतवे ।
तनोति परया युक्त्या सम्बन्धेषु विनिर्णयम् ॥
तत्र आश्वलायनः । उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चूडोपनयगोदानविवाहाः इत्यादि ।

**End.** श्रीरामदासजनुषो हरिशङ्करस्य
श्रीरावणस्य तनयो विनयोपपन्नः ।
सम्बन्धपूर्व्वगणपत्यभिधं विधत्ते
ग्रन्थं बुधो गणपतिर्गणितागमज्ञः ॥

**Colophon.** इति श्रीमदग्निहोत्रिचातुर्मास्ययज्ञसमासादितसकलपुरुषार्थदेवयज्ञवर्य्यरावण-हरिशङ्करसूरिसूनुरावणगणपतिकृतौ सम्बन्धगणपतिः परिपूर्णः ॥

विषयः । विवाहस्य शुभकालादिनिरूपणं । तत्र कालाशुद्धिविवेचनं । विवाहतिथिनिरूपणं । वारनियमादिकथनं । नक्षत्रनिरूपणं । वर्णकथनं । गणकथनं । राजयोटकादिकथनं । द्विर्द्वादशादिकथनं । षडष्टकादिकथनं । युतवेधयामित्रवेधादिकथनं । सप्तशलाकाकथनं । विवाहलग्नादिनिरूपणं । कन्यालक्षणादिकथनं । वरलक्षणादिकथनं । विवाहयोग्यकन्यानिरूपणं । सापिण्ड्यनिरूपणं । कन्यादानाधिकारिणः । ब्राह्मादिविवाहभेदकथनं । अनाश्रमस्थितिनिन्दा-कीर्त्तनञ्च ।

---

**No. 2773. प्रयोगदर्पणः ।** Substance, country-made paper, 18 × 4 inches. Folia, 102. Lines, 6 on a page. Extent, 1,856 ślokas. Character, Bengali. Date, ? Place of deposit, Brahmasásana, Zillá Nadíyá, Pandit Kálíprasanna Vidyáratna. Appearance, decayed. Prose and verse. Correct.

**Prayoga-darpana.** Rituals for the daily religious duties of householders. By Ramánátha Vidyáváchaspati.

**Beginning.** प्रणम्य परमात्मानं सच्चिदानन्दमव्ययम् ।
प्रयोगदर्पणं रम्यमाह्निकेषु विरच्यते ॥

अथ सर्व्वत्र प्रायः प्रमाणकदम्बमात्रगुम्फनतया प्रयोगतत्त्वजिज्ञासूनामुपकाराय मयाऽय-मारभ्यते । तत्र प्रातःकृत्यमाह हेमाद्रिधृतस्कन्दपुराणीये इत्यादि

**End.** अनेनैव प्रकारेण पञ्चायतनी पूजापि ज्ञेयेति शम् ।

**Colophon.** इति महोपाध्यायश्रीयुतरमानाथविद्यावाचस्पतिविरचितप्रयोगदर्पणः समाप्तः ।

विषयः । प्रातःकृत्यप्रयोगकथनं । दन्तकाष्ठप्रयोगकथनं । प्रातःस्नानसन्ध्यादिविधिप्रयोग-कथनं । वेदाभ्यासप्रयोगकथनं । कुशग्रहणादिप्रयोगकथनं । देवपूजासामान्यप्रयोगः । विष्णुपूजा-प्रयोगः । शिवपूजाप्रयोगः । दुर्गापूजाप्रयोगः । एवं गणेशसूर्य्यादिपूजाप्रयोगकथनं । मध्याह्नसन्ध्या-प्रयोगकथनं ॥ तर्पणप्रयोगकथनं । वैश्वदेवादिप्रयोगः । नित्यश्राद्धप्रयोगः । आतिथ्यप्रयोगः । भोजनप्रयोगः । आपोशानादिप्रयोगः । सायंसन्ध्याप्रयोगः । रात्रिकृत्यप्रयोगः । विविधदानप्रयोगः । पञ्चायतनपूजादिप्रयोगकथनञ्च ।

---

**No. 2774.** व्यवहारदर्पणम्। Substance, country-made paper, 16 × 5 inches. Folia, 61. Lines, 6 on a page. Extent, 1,112 ślokas. Character, Bengali. Date, Sk. 1648. Place of deposit, Háñsapukura-grám, Post Kálná, Zillá Varddhamána, Dvárakánátha Bhaṭṭáchárya. Appearance, fresh. Prose and verse. Correct.

**Vyavahára-darpaṇa.** A digest of the Smṛiti laws regarding jurisprudence and judicature. By Rámakṛishṇa Bhaṭṭa.

**Beginning.** प्रणम्य परमात्मानं सच्चिदानन्दविग्रहं।
क्रियते रामकृष्णेन व्यवहारेषु दर्पणः॥
तत्र राजधर्म्ममाह मनुः।
राजधर्म्मान् प्रवक्ष्यामि यथा हत्तो भवेन्नृपः
सम्भवश्च यथा तस्य सिद्धिश्च परमा मता॥
अराजके + लोकेऽस्मिन् सर्व्वतो विद्रुते भयात्। इत्यादि।

**End.** पूर्व्वोत्तरक्रियायुक्तं निर्णयान्तं तदा नृपः।
प्रदद्यात् जयिने लेख्यं जयपत्रं तदुच्यते॥

**Colophon.** इति दृहस्पत्युक्तेरिति शम्।
इति महामहोपाध्यायभट्टश्रीरामकृष्णविरचितं व्यवहारदर्पणं परिपूर्णं।

विषयः। राजधर्म्मकथनं। राजकार्य्यनिरूपणं। सभासन्निरूपणं। सभ्यानांफलश्रुतिकथनं। तदुपदेशकथनं। धर्म्मशास्त्रार्थशास्त्रादिविरोधे मीमांसाकथनं। शिष्टाचारस्य प्रामाण्यकथनं। महाजनलक्षणं। व्यवहारस्वरूपनिरूपणं। व्यवहारकालनिरूपणं। व्यवहारस्य चतुष्पात्त्वकथनं। तत्र भाषापादकथनं। भाषापत्रलेखनविधिकथनं। प्रतिज्ञापत्रादिनियमकथनं। उत्तरपादनिरूपणं। विचारकारणकथनं। मिथ्योत्तरादिस्वरूपकथनं। प्रत्यवस्कन्दनविधिकथनं। उत्तरशङ्करविधिकथनं। प्राङ्न्यायोत्तरविधिकथनं। हीनवादिलक्षणं। उत्तराभासनिरूपणं। सभ्यनिरूपणं। ग्राह्यक्रियानिरूपणं। साक्षिलक्षणादिकथनं। साक्षिभेदलक्षणादिकथनं। साक्ष्यदानविधिकथनं। साक्ष्यानर्हनिरूपणं। स्वयमुक्तिनिरूपणं। स्मृतान्तरविवेचनम्। साक्षिद्वैधनिरूपणं। साक्ष्यदानफलादिकथनं। लिखितविधिकथनं। राजशासनविधिकथनं। लेखनविधिकथनं। सदोषलेख्यनिरूपणं। उपाधिनिरूपणं। सन्दिग्धलेख्यशुद्धिकथनं। लेख्यसत्त्वे दिव्यादिनिषेधकथनं। लेख्यकालनिरूपणं। भुक्तिनिरूपणं। जयपत्रविधिकथनञ्च।

---

**No. 2775.** गङ्गाभक्तितरङ्गिणी। Substance, country-made paper, 18 × 5 inches. Folia, 112. Lines, 6 on a page. Extent, 1,736 ślokas. Character, Bengali. Date, Sk. 1632. Place of deposit, Háñsapukura-grám, Post Kálná, Zillá, Varddhamána, Dvárakánátha Bhaṭṭáchárya. Appearance, old. Prose and verse. Correct.

**Gaṅgá-bhakti-taraṅgiṇí.** The religious merits of the Ganges; the sacred spots on its banks from its rise on the Himálayá to its confluence with the sea; religious rites and ceremonies to be observed at each of those spots; and the merits thereof. By Chaturbhuja A'chárya. This work is quite distinct from one of the same name noticed under No. 1867 (vol. V. p. 182), though treating of the same subject.

**Beginning.** नत्वा भगवतीं गङ्गां गङ्गाभक्तितरङ्गिणीं।
श्रीमच्चतुर्भुजाचार्य्यस्तनोति बुधतुष्टये॥

तत्र यमः। श्रद्धा भक्तिश्च काम्यानां वृद्धिक्षेमकरे हि ते। इत्यनेन सर्व्वत्रैव कर्म्मणि भक्तिश्रद्धयो-रावश्यकत्वमुक्तं। इत्यादि।

**End.** तावत्कालं वसेत् स्वर्गे यावदाभूतसंप्लवं। इत्युक्तेरिति।

**Colophon.** इति महोपाध्यायश्रीयुतचतुर्भुजाचार्य्यविरचिता गङ्गाभक्तितरङ्गिणी समाप्ता।

विषयः। सर्व्वस्मिन् कर्म्मणि भक्तिश्रद्धयोरावश्यकत्वकथनं। गङ्गामाहात्म्यकीर्त्तनं। गङ्गानाम-स्मरणकीर्त्तनादिमाहात्म्यकथनं। तीर्थयात्राविधिकथनं। यात्रापूर्व्वदिने केशवपनादिकर्त्तव्यता-कथनं। श्राद्धविधानादिकथनं। गङ्गास्नानमाहात्म्यकथनं। दर्शनमाहात्म्यकथनं। स्पर्शननमस्का-रादिमाहात्म्यकथनं। गङ्गागर्भनिरूपणं। अवगाहनादिविधिकथनं। गङ्गापूजाविधिकथनं। तत्र पूजाकालादिनिरूपणं। पुण्यकालस्नानविधिकथनं। तिथिविशेषे स्नानमाहात्म्यकथनं। युगाद्या-स्नानविधिकथनं। विविधयोगदशहरादिस्नानविधिकथनं। संक्रान्तिग्रहणादौ स्नानविधिकथनं। तर्पणविधिकथनं। मृत्तिकाविधिकथनं। पार्थिवशिवपूजाविधिकथनं। गङ्गाक्षेत्रे दानादिमाहात्म्य-कीर्त्तनं। गङ्गास्तोत्रकथनं। दशहरागङ्गापूजाविधिकथनं। गङ्गाजलपानमाहात्म्यकीर्त्तनं। गङ्गायां देहत्यागमाहात्म्यकीर्त्तनं। गङ्गासागरमाहात्म्यकीर्त्तनं। प्रयागमाहात्म्यकीर्त्तनं। तत्र मुण्डनादि-विधिकथनं। हरिद्वारमाहात्म्यकीर्त्तनञ्च।

---

**No. 2776.** मन्त्रवल्लरी। Substance, country-made paper, 19 × 6 inches. Folia, 208. Lines, 7 on a page. Extent. 4,347 ślokas. Character, Bengali, Date, ? Place of deposit, Háñsapukura-grám, Post Kálná, Zillá, Varddhamána, Dvárakánátha Bhaṭṭáchárya. Appearance, decayed. Prose. Incorrect.

**Mantra-vallarí.** A commentary on the Mantra-mahodadhi of Mahidhara. By Gaṅgádhara, son of Sadáśiva Súri, and grandson of Vireśvara Bhaṭṭa Agnihotri. *cf.* Nos. 1256 (III, p. 246), 1713 and 1714 (IV, pp. 295, 296) for the text and other commentaries.

**Beginning.** नमस्कृत्य शिवं शान्तं पद्माकारं गुरोः पदं।
भवानीं विघ्ननाशञ्च दण्डपाणिञ्च भैरवं॥

सदाशिवतनूजन्मा वत्सर्षिकुलसम्भवः ।
गङ्गाधर इति ख्यातो भगवद्भक्तकिंकरः ॥
शास्त्रसारं समालोच्य बुधानां तोषहेतवे ।
सिद्धान्तोक्तिपलाशाढ्यां मीमांसाकुसुमान्वितां ॥
अपवर्गफलां रम्यां भगवत्पादलम्पटां ।
उक्तियुक्तिविशेषेण कुर्व्वेऽहं मन्त्रवल्लरीं ॥

अथ साधकानां हितचिकीर्षुर्भगवान् महीधराचार्य्यः निष्प्रत्यूहप्रारिप्सितपरिसमाप्तये शिष्टाचारपरिपालनाय च ग्रन्थारम्भे समुचितेष्टदेवतां नमस्करोति ।

प्रणम्य लक्ष्मीनृहरिं महागणपतिं गुरुं ।
मन्त्राण्यनेकान्यालोक्य वक्ष्ये मन्त्रमहोदधिं ॥ इत्यादि ।

**End.** अनेन गोपालसुन्दर्य्याः पूजनेन ब्रह्मसायुज्यमपि लभ्यत इति सूचितं ।
चिन्तालवालसम्भूता विवेकोदकसेचनैः ।
सतां तुष्ट्यै सदा भूया ममेयं मन्त्रवल्लरी ॥

**Colophon.** इति श्रीमन्महायुकरोपनामकवीरेश्वरभट्टाग्निहोत्रिसूरिसूनुसदाशिवभट्टात्मजभगवद्भक्तकिङ्करगङ्गाधरविरचितायां मन्त्रवल्लर्य्यां मन्त्रमहोदधिटीकायां द्वाविंशस्तरङ्गः । समाप्तश्चायं ग्रन्थः ।

विषयः । महीधरकृतमन्त्रमहोदधिनामकमन्त्रशास्त्रस्य व्याख्यानम् ।

---

**No. 2777.** सुबोधिनी । Substance, country-made paper, 18 × 5 inches. Folia, 202. Lines, 7 on a page. Extent, 4,202 ślokas. Character, Bengali. Date, ? Place of deposit, Hāṅsapukura-grám, Post Kálná, Zillá, Varddhamána, Dvárakánátha Bhaṭṭáchárya. Appearance, old, Prose. Incorrect.

**Subodhinī.** A commentary on the Bhaṭṭi-kávya. By Rámachandra Váchaspati. *cf.* Nos. 1636 and 1637, vol. IV, p. 209.

**Beginning.** पातु नो चण्डिकाचण्डकोदण्डखण्डनिःस्वना ।
दुरितौघतमस्काण्डखण्डनैकान्तपण्डिता ॥
नमामि यामिनीकान्तकान्तभालस्थलं विभुं ।
विभूतिभूषिताङ्गञ्च व्योमकेशं सदाशिवं ॥
व्याख्यानानि च शास्त्रज्ञैः कृतानि बहुशो यदि ।
तथापि क्रियते भट्टौ टीका सुबोधिनी मया ॥

अथ तत्र भगवान् महाकविर्भट्टिनामा कश्चिद्ब्राह्मणः महाकाव्यगुम्फनव्याजेन सर्व्वेषां व्याकरणप्रक्रियाणामुदाहरणानि दिदर्शयिषुः वस्तुनिर्द्देशपूर्व्वकं ग्रन्थारम्भं प्रतिजानीते । अभू-

दिति। दशरथ इत्युदाहृतः दशरथेतिनाम्ना नितरां ख्यातिमापन्नः नृपः अभूत् आसीत्। यद्यपि परोक्षे लिट्। इति सूत्रेण लिटा भवितव्यमित्यादि।

**End.** अनेन च श्रीधरसेनन्दपतेर्लब्धप्रसादेन कविना तत्पुर्य्यां वलभ्यामेव काव्यमिदं विरचितमिति सूचितं।

**Colophon.** इति श्रीरामचन्द्रवाचस्पतिविरचितायां सुबोधिन्यां भट्टिटीकायां द्वाविंशतितमः सर्गः। समाप्तोऽयं ग्रन्थः।

**विषयः।** भट्टिकाव्यस्य व्याख्यानम्।

---

**No. 2778.** सुबोधिनी। Substance, country-made paper, 14 × 4½ inches. Folia, 19. Lines, 6 on a page. Extent, 413 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇapura, Zillá, Nadíyá, Rájívalochana Gaṅgopádhyáya. Appearance, new. Prose. Incorrect.

**Subodhiní.** A commentary on the *Rámagitá* section of the Adhyátma-rámáyaṇa. By Apyájí Bhaṭṭa. *cf.* No. 555 of Vol. II, p. 20.

**Beginning.** यतो जातं जगत् सर्व्वं येन जीवन्ति जन्तवः।
विशन्ति यत्र तन्नित्यं ज्योतिर्मयं नमामि तम्॥
अप्याजीभट्टमेधावी वसन् वीरपुराभिधे।
भोलानन्देन गुरुणा प्रेरितस्तस्य वै मुदे॥
विवृतिं रामगीतायास्तनोति च विबोधिनीं।
कुर्द्दे विद्वच्चकोराणां चन्द्रिकां सुविबोधिनीं॥
श्रीमहादेव उवाच।

ततो जगन्मङ्गलेति। अथ सकरुणो भगवान् महादेवः रामलक्ष्मणसंवादव्याजेन परतत्त्वमुपदेष्टुमाह, तत इति। जगतां स्थावरजङ्गमात्मकानां यानि मङ्गलानि त्रिविधदुःखनिवृत्तिपूर्व्वकमभ्युदयाः। इत्यादि।

**End.** वेदान्तैरुपनिषद्वाक्यैर्वेद्यं चरणं जगज्जन्मादिविलक्षणं कर्म्म यस्येति।
अतनोद्रामगीतोपनिषद्बोधसुबोधिनीं॥
अप्याजीभट्टः प्रीयतां ज्ञानानन्दोऽनया गुरुः।

**Colophon.** इति श्रीरामगीताटीकायामप्याजीभट्टविरचितायां सुबोधिन्यां पञ्चमप्रकरणम्।

**विषयः।** अध्यात्मरामायणान्तर्गतरामगीताया व्याख्यानम्।

---

**No 2779. उपासकदशकविवरणं।** Substance, country-made paper, 11 × 4½ inches. Folia, 30. Lines, 12 on a page. Extent, 810 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**Upáśaka-daśaka-vivaraṇa.** A commentary on the Jain work called Upásakadśa. Anonymous.

**Beginning.** श्रीवर्द्धमानमानस्य व्याख्या काचिद्विधीयते।
उपाशकदशादीनां प्रायो ग्रन्थान्तरेक्षिता॥

तत्त्वोपासकदशाः। सप्तमभङ्गमिह — — — — चायमभिधानार्थः उपासका-दीनां श्रमणोपासकानां सम्बन्धिनोऽनुष्ठानस्य प्रतिपादिका। इत्यादि।

**End.** व्याख्यानमुपयुक्तेन निरूप्यावसेयमिति।
सर्व्वस्यापि स्वकीयं वचनमभिहितं प्रायसः स्याज्जनस्य
ये तु स्वस्यापि सर्व्वग्रहिविहितरुचिः स्यात् कथं तत् परेषां।
चित्ताह्लासात् कुतश्चित् तदपि निगदितं किञ्चिदेवं मयैवं
युक्तं यच्चात्र तस्य ग्रहममलधियः कुर्व्वतां प्रीतये मे॥ (१)॥
समाप्तमुपासकदशकविवरणम्।

**विषयः।** उपासकदशकाभिधानजैनधर्म्मप्रकरणस्य व्याख्यानम्।

---

**No. 2780. गुणमाला, व्याख्यासहिता।** Substance, country-made paper, 12 × 6 inches. Folia, 72. Lines, 11 on a page. Extent, 2,210 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit and Prákṛit.

**Guṇamálá.** Detailed descriptions of the characteristics of Jinas, Siddhas, S'rávakas and other orders of the Jain sect. Anonymous.

**Beginning.** प्रत्यक्षीकृत्य शुक्तविव शुचिरुचिरं मौक्तिकं येन लोके
मध्ये लोकं समस्तैर्वसुभिरुपचितो दर्शितस्वारदग्भ्यः।
नित्ये भव्याब्धनौनावलिरस्तपदं येन वाङ्मात्रतोऽपि
स श्रीसिद्धार्थसूनुस्त्रिजगदधिपतिर्मानसं मे पुनातु॥

स सिद्धार्थसूनुः सिद्धार्थराजपुत्रः त्रिजगदधिपतिः त्रिभुवननायकः मे मम मानसं चित्तं पुनातु पवित्रीकरोतु। इत्यादि।

**End.** परेषामिङ्गितैः चेष्टाभिश्च तन्मनोगतभावान् जानातीति।

**Colophon.** इति गुणमाला समाप्ता।

विषयः। तत्र जिनानां प्रातिहार्य्याष्टकयुक्तत्वेन चतुर्व्विधमूलातिशयभूषितत्वेन च द्वादश-गुणा इति निरूपणं। किञ्च अशोकवृक्षः, सुरपुष्पवृष्टिः, दिव्यध्वनिः, चामरं, आसनं, भामण्डलं, दुन्दुभिः, आतपत्रञ्चेति प्रातिहार्य्याणि। अथ मूलातिशया-ज्ञानातिशयः, पूजातिशयः, वागतिशयः, अपायापगमातिशयाश्चेति। तत्र तावद्भगवन्तो मातुर्गर्भगता अपि ज्ञानत्रययुक्ता नियमतो भवन्ति। अथ गार्हस्थ्यानन्तरं प्रव्रज्याग्रहणे मनःपर्य्यायज्ञानमपि नियमत उत्पद्यते। तदनन्तरं जिनपदप्राप्तौ केवलज्ञानमुत्पद्यते। तत्र सञ्जाते केवलज्ञाने पूर्व्वोक्तानि चत्वार्य्यपि ज्ञानानि विनीयन्ते। केवलज्ञानञ्च परमात्मनः स्वरूपमेव, तच्च लोकालोकप्रकाशकमिति ज्ञानातिशयत्वेन व्यपदिष्टं अथ पूजातिशयः। स च एवं,—भगवतो हि शरीरं निरामयं सर्व्वसुरासुरनरेभ्योऽपि उत्कृष्टतमं गलाधस्तात् नाभिं यावत् अष्टाधिकसहस्रलक्षणोपेतं स्वेदमलरहितं भवति। उच्छ्वासनिःश्वासाभ्याञ्च सुगन्धिरनुभूयते। आहारविहारविसर्गाश्च लोकैरदृश्या एव। अतः भगवतः सर्व्वपूज्यत्वेन पूजातिशयः। अथ वागतिशयः, तत्र च पञ्चत्रिंशद्गुणविशेषा भवन्ति। क्रमेण यथा,—(१), जिनानां वाणी अर्द्धमागधी भाषा मय्यपि संस्कारोपेता, अत एव प्रथमतः संस्कारवत्त्वमेव गुणः। (२), उदात्तस्वरयुक्तत्वं। (३), ग्राम्यताहीनत्वं। (४), गम्भीरत्वं। (५), प्रतिशब्दोपेतत्वं। (६), (दक्षिणत्वं) सरलता। (७), उपनीतरागत्वं (८), परिपुष्टार्थत्वं। (९), अव्याहतपौर्व्वापर्य्यत्वं (पूर्व्वापरवाक्याविरोधः)। (१०), शिष्टत्वं। (११), असन्दिग्धत्वं। (१२), अपाकृतान्योत्तरत्वं। (१३), हृदयग्राहित्वं। (१४), प्रस्तावौचित्यं। (१५), तत्त्वानुरूपत्वं (विवक्षितवस्त्वनुसारिता)। (१६), अप्रकीर्णप्रसृतत्वं (सम्बन्धाधिकारपरिमितता)। (१७), अन्योन्यपरिगृहीतत्वं (पदानां वाक्यानाञ्च परस्परं सापेक्षता)। (१८), अभिजातत्वं (तत्त्वं यथा विवक्षितं तथैव कथनशीलता)। (१९), अतिस्निग्धमधुरत्वं। (२०), अपरमर्म्मवेधित्वं (परमर्म्माद्यनुद्घाटनशीलता)। (२१), अर्थधर्म्माभ्यासानपेतत्वं। (२२), उदारत्वं। (२३), अस्वश्लाघान्यनिन्दता (परनिन्दया आत्मोत्कर्षेण च विहीनत्वं। (२४), अपगतश्लाघत्वं। (२५), अपनीतदोषत्वं (कारककालवचनादिव्यत्ययरूपवचनदोषापेतता)। (२६), चित्रकृत्त्वं (श्रोतृषु स्वविषयाद्भुतविस्मयकारिता)। (२७), अद्भुतत्वं। (२८), अनतिविलम्बित्वं। (२९), विभ्रमादिवियुक्तता। (३०), अनेकजातिवैचित्र्य (सुरासुरनरतिर्य्यग्भाषानुयायिता। (३१), आहितविशेषत्वं। (३२), साकारत्वं (विविक्तपदवाक्यता)। (३३), सत्त्वप्रधानत्वं (ओजस्विता)। (३४), अपरखेदत्वं (अप्रयासिता)। (३५), प्रमेयता चेति। अथ अपायागमातिशयः,—भगवतामुपदेशदानकाले परस्परं विरोधिनामपि सुरासुरनरतिर्य्यग्गतानां सङ्कीर्णताव्याघातेन उपद्रवनाश इति ज्ञेयः। अथ अन्यच्च निर्द्दिष्टानां धर्म्मचक्रचलनधर्म्मध्वजचलनादिरूपचतुस्त्रिंशद्विधानामतिशयानामत्रैवान्तर्भाव इति निरूपणं।

अथ सिद्धानां परमात्मपदगतानाम् अष्टविधगुणयुक्तत्वकथनं। ते च गुणा, यथा,—अनन्तज्ञानत्वं, अनन्तदर्शनत्वं, अव्याबाधनत्वं सम्यक्त्वं, अक्षयत्वं, अरूपित्वं, अगुरुलघुत्वं, अनन्तवी-

ग्धत्वश्चेति। तत्र तीर्थङ्करा अपि सर्व्वदा सिद्धस्वरूपमालम्ब्यैव तिष्ठन्ति। तेन प्रव्रज्यावसरे नमः सिद्धेभ्य इति पठ्यते। किञ्च मातृकापाठेऽपि ॐनमः सिद्धमिति। सिद्धानां हि स्वावगाहनया स्वसत्तया च नर्व्वेषां भिन्नत्वेऽपि स्वरूपेणैक्यं तेन सिद्धमित्येकवचनं। अनेनैवाशयेन लोके एक एव परमेश्वर इति व्यपदेशः। अथ सर्व्वोऽप्यात्मा निश्चयनयतः परमेश्वर एव। सङ्ग्रहनयेन स च एक एव। अपि च सोऽयं मायाव्यपदेशेन व्यवहारमाश्रित्य गत्यागतिरूपं संसारं करोति। अत एव शब्दनयेन परमेश्वरो जगत्सृष्टिकर्त्तेति व्यपदिश्यते। अत्र हि मिथ्यादृशां मोहाद्भूयसी भ्रान्तिरस्ति, सम्यग्दृष्टीनान्तु विवेकेन न कोऽप्यस्मिन् विषये सन्देह इति निरूपणं।

अथ आचार्य्याणां षट्त्रिंशल्लक्षणगुणयुक्तत्वकथनं। ते च गुणाः क्रमेण यथा,—(१) आर्य्यदेशोत्पन्नत्वं (गुणमालाया विवरणम्।) (२), आर्य्यकुलोत्पन्नत्वं। (३), शुद्धजातित्वं। (४), रूपवत्त्वं। (५), दृढ़संहननत्वं (बलवत्त्वं। (६) धैर्य्यवत्त्वं। (७), अनाशंसित्वं। (८), अविकथनत्वं। (९), अमायित्वं। (१०), स्थिरपरिवा(पा)टीकत्वं। ( ) (११), ग्रहीतवाक्यत्वं। (१२) जितपरिषत्त्वं। (१३), जितनिद्रत्वं। (१४), मध्यस्थत्वं। (१५), देशज्ञत्वं। (१६), कालज्ञत्वं। (१७), भावज्ञत्वं। (१८), आसन्नलब्धप्रतिभत्वं। (१९), नानाविधदेशभाषाज्ञत्वं। (२०). पञ्चविधाचारयुक्तत्वं। (मति-श्रुत-अवधि-मनःपर्य्याय-केवलाभिधेषु—पञ्चसु ज्ञानेषु निष्णातत्वं)। (२१), दर्शनाचारयुक्तत्वं (सम्यग्दर्शनतत्त्वेषु प्रतीतत्वं)। (२२), चारित्राचारयुक्तत्वं। (२३), तपआचारयुक्तत्वं। (२४), वीर्य्याचारयुक्तत्वं। (वीर्य्यं मनोबलादि)। (२५) सूत्रार्थाभिज्ञत्वं। (२६), आहरणनिपुणत्वं (आहरणं दृष्टान्तः, स च चतुर्व्विधः। यथा, अपायः, उपायः, स्थापनाकर्म्मा, प्रत्युत्पन्नविनाशी चेति। तत्र अपायोऽपि चतुर्व्विधः। यथा,—द्रव्यापायः, क्षेत्रापायः, कालापायः. भावापायश्चेति)। (२७), हेतुनिपुणत्वं। (२८), उपनयनिपुणत्वं। (२९), नयनिपुणत्वं (नयाश्च सप्तविधाः क्रमेण यथा,—नैगमः, संग्रहः, व्यवहारः, ऋजुसूत्रं, शब्दः, समभिरूढ़ः, एवम्भूतश्चेति)। (३०), ग्रहणाकुशलत्वं (ग्रहणा च परहितोपदेशदाने शक्तिः)। (३१) स्वसमयज्ञत्वं। (३२), परसमयज्ञत्वं (समयः सिद्धान्तः)। (३३), गाम्भीर्य्यं। (३४), दीप्तिमत्त्वं। (३५), शिवत्वं (उपद्रवविनाशकत्वं)। (३६), सौम्यदर्शनत्वञ्चेति। अपि च आचारसम्पदादयो गुणास्त्वेव अन्तर्भवन्ति।

एवमुपाध्यायानां श्रुतज्ञानादिपञ्चविंशतिविधगुणकथनं। तथा साधूनामपि प्राणातिपातविरमणादिसप्तविंशतिगुणकथनं। अपि च श्रद्धालूनां श्रावकाणां सन्तोषादिरूपैकविंशतिविधगुणकथनमिति।

---

**No. 2781.** गुणकरण्डगुणावली चउपइ। Substance, country-made paper, 11 × 4 inches. Folia, 32. Lines, 8 on a page. Extent, 634 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Hindi.

**Guṇakaraṇḍa-guṇávalí, Chaupayi.** A Hindi poem in praise of Jaina merits. Anonymous.

**Beginning.** इच्छासंपतिसुखदायक सरसप्रणमुं श्रीजिनपास ।
तीर्थं करते वीरा+अविरलपूरण आस ॥
वसे सरस्वतीवीणउं वाणी अरथवरदाय ।
कहिसुं पुणउपरिकथासांभलता सुखथाय ॥ इत्यादि ।

**End.** निरमलगुणभरियावड्डग्यानमुनिवरश्रीवृधमानजी ।
शिष्यतेह नो + +म दीपेसुग्यानघरै सदा गुणध्यानजी ॥
गुणगिरुवाराजे इमगावै प+ +नवनिधपावैजी ।
अविरलवुधत्यां घटमै आवै थिरसंपतजसयावैजी ॥

**Colophon.** इति गुणकरण्डगुणावलीचउपइ समाप्ता ।

विषयः । पुणमेव इहामुत्रपरमसुखसाधनमितिकथनप्रसङ्गेन गुणकरण्डगुणावलीविवरणकथनं ।

---

**No. 2782.** रात्रिभोजन, चउपइ। Substance, country-made paper, 11 × 4 inches. Folia, 24. Lines, 8 on a page. Extent, 470 ślokas. Character: Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect.

**Rátribhojana, Chaupayi.** On the impropriety of eating at night on the part of Jains, illustrated by many anecdotes and stories. By Jayanáráyaṇa. In Hindi quatrains.

**Beginning.** सुबुद्धिलवधिनवनिधि सदापारीजे श्रीकार
पारसनाथ पयपणमतां बाधै जराविस्तार ।
श्रीसद्गुरुन्यानि+लहीरयणीभोजनपाप
कहि स शास्त्रविचारथी भगवंत भाख्यो आप ॥
रातै भोजनकरै अविचार माणराढ़ोर नही यवि+र ।
रातदिवसजे चरतेरहै राचसणीते उपलमलहै ॥ इत्यादि ।

**End.** विमलजिणेसरप्रसादे श्रीजयतारण सुभसादेजी ।
ऋद्धिवृद्धिसदाआणंदे
संघसकलचिरनंदे जी ॥

**Colophon.** इति श्रीरात्रिभोजनचउपइ सम्पूर्णा ।

विषयः। जैनानां रात्रौ भोजननिषेधकथनपूर्व्वकं तदकुर्व्वतां माहात्म्यकथनमुखेन धर्म्मघोषादीनां विवरणकथनं।

**No. 2783.** मह्वीपालचरित्रम्, वा मह्वीपालकथा। Substance, country-made paper, 11 × 5 inches. Folia, 96. Lines, 8 on a page. Extent, 2,342 ślokas. Character, Nágara. Date, SM. 1881. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Mágadhí.

**Mahípála-charitra.** The story of Mahipála, a banker, *(S'reshṭhí,)* who was noted for his munificence. The object of the work is to praise the merit of Jaina duties, and to illustrate each subject with an anecdote or a story. By Víradeva Gaṇi.

**Beginning.** णमिऊण रिसहणाहं केवलवरनाणदंसणसहियं।
विहियं सुरासुरसेवं कणयव्वसया निरुवलेवं॥ १॥
सुरगिरिसारसुधीरो संपन्नभवो दहिस्स परतीरो।
कंचणवन्नसरीरो सोजयो जिणेसरो वीरो॥ २॥
पणयजणपूरियासे चिंतामणिकप्परुक्खसंकासे।
अजियाइवावीसे णमिऊण जिणे तिहुयणेसे॥ ३॥ इत्यादि।

**End.** सिरिचंदगच्छगयणे जाउ सिरिदेवभद्दसूरिकखी।
पट्टिय पसत्थसत्थो चित्तं जंसो न सत्तासो॥
तसिस्सो सिरिसिद्दसेणसूरी समग्गगुणगणगविउ।
मुनिचंदसूरिपवरो तिलोयंमि विक्खाउ॥
सिरिमुणिचंद गुरुणं पयपंकयरायहं ससारित्थो।
पंडिय तिलओआसी सुपसिद्दो वीरदेवगणी॥
तेणं एसारइया महिवालकहाविसट्ठमणहरणा।
निम्मलपयत्थकलिया नियय गुरूणं पसाएणं॥

**Colophon.** इति श्रीमह्वीपालकथा सम्पूर्णा। संवत् १८८१।

विषयः। ग्रन्थेऽस्मिन् दान-शील-तपो-भावनात्मकधर्म्ममाहात्म्यकीर्त्तनं। तत्र प्राधान्येन दानमाहात्म्यकीर्त्तनमेवास्य प्रयोजनं। अथ दानमाहात्म्यकीर्त्तनमेवास्य प्रयोजनं। अथ दानमाहात्म्येनैव मह्वीपालाभिधानः कश्चित् श्रेष्ठी रत्नसञ्चयाभिधानपुरस्य आधिपत्यं समधिजगामेति विस्तरेण तच्चरित्रवर्णनं। प्रसङ्गाच्च क्रोधमानमायालोभानां निन्दितत्वकथनमुखेन विविधोपाख्यानकथनपूर्व्वकं सम्यक्त्वनिरूपणं।

**No. 2784.** अन्तकृतदशाविवरणम्। Substance, country-made paper, 12 × 5 inches. Folia, 11. Lines, 11 on a page. Extent, 319 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sanskrit.

**Antakritadaśá-vivarana.** A commentary on the *Antakrita-daśá,* a treatise on Jain duties.

**Beginning.** अथ अन्तो भवान्तः कृतो विहितो यैस्ते अन्तकृताः। तद्वक्तव्यताप्रतिबद्धा दशा दशाध्ययनरूपाः ग्रन्थपद्धतय इति। अन्तकृतदशाः, इह चाष्टै वर्गा भवन्ति। इत्यादि।

**End.** ज्ञाताधर्मकथाविवरणादवसेयं।
समाप्तमन्तकृतदशाविवरणं।
अनन्तगमपर्य्यये जिनवरोदिते शासने
यदेह समयानुगा गमनिका किल प्रोच्यते।
गमान्तरमुपैति सा तदपि सद्भिरस्यां कृता
बहुद्गमशोधनं ननु विधीयतां सर्व्वथा॥

**Colophon.** इति अन्तकृतदशाविवरणं समाप्तं।

**विषयः।** अन्तकृतदशकाभिधेय जैनधर्म्मप्रकरणस्य व्याख्यानम्।

---

**No. 2785.** अणुत्तरोववाइ दसाउ, (अनुत्तरोपपातिदशा।) Substance, country-made paper, 11 × 5 inches. Folia, 11. Lines, 7 on a page. Extent, 194 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Mágadhí.

**Anuttarovaváidasá (Sanskrit, Anuttaropapáti-daśá.)** On the circumstances which prohibit hermitage.

**Beginning.** तेणं कालेणं तेणं समयेणं रायगिहे णयरे अज्जसुहम्मस्स समोसरणं परिसणिग्गया जावजम्बूपज्जुवासंति। एवं वयासी जतिणं भंते समणेणं जावसं पत्तेणं। इत्यादि।

**End.** तत्थ पढ़मवग्गे दसउद्देसगावीयवग्गे तेरसउद्देसगातइयवग्गे दसउद्देसगा सेसं जहाधम्मकहाणं तहाणेयव्वं। एवं तत्तियवग्गस्स दसअज्झयना।

**Colophon.** इति अणुत्तरोववाइ दसाउ समत्ताउ।

**विषयः।** यन्त्येऽस्मिन् सर्व्वोत्तमेषु विमानविशेषेषु गृहीतजन्मनां जीवानां केषाञ्चिद्

वचरणकथनं। तच विशेषेण स्वतनयस्य प्रव्रज्याग्रहणाय कृतसंकल्पस्य पुरस्तात् मूर्च्छामापन्नाया मातुः जलसेचनादिना च संप्राप्तसंज्ञायाः तस्यापि परस्परं प्रव्रज्याग्रहणप्रतिषेधतत्समर्थनहेतोरुक्तिप्रत्युक्तिकथनं।

---

**No. 2786.** अवयन्तीसुकमालचउपइ। Substance, country-made paper, 11 × 5 inches. Folia, 9. Lines, 8 on a page. Extent, 176 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Hindi.

**Avayantí-sukamála.** A moral story inculating Jain duties. In Hindu quatrains.

**Beginning.** मुनिवर आर्य्य सुहस्तिकिणदिक अवसरे नयर उजेणीसमोसह्या।
चरणकरणव्रतधार गुणमणि आगरवडपरिवारे परिवह्या॥ इत्यादि।

**End.** अवयन्तीसुकमालसहलावेमधुरसुरमणगावेरे।
तेजिनहर्षततै वड्दावे शान्तिहरषसुखपावेरे॥

**Colophon.** इत्यवयन्तीसुकमाल चउपइ समाप्ता।

विषयः। सम्यक्चारित्रेणैव परमशान्तिसुखमधिगम्यते इति कीर्त्तनप्रसङ्गेन अवयन्तीसुकमालकथाकीर्त्तनं।

---

**No. 2787.** षडशीतिटीका। Substance, country-made paper, 11 × 5 inches. Folia, 103. Lines, 19 on a page. Extent, 5,600 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Margin destroyed, and writing smudged in some places. Prose. Incorrect.

**Shaḍaśíti-tiká.** A commentary on the *Shaḍaśíti-prakaraṇa*—a treatise on Jain transmigration, and the causes which lead to particular forms of life. By Devendra Súri.

**Beginning.** (प्रथमतः षट्पंक्तयो विलुप्ताः।) श्रीवर्द्धमानस्वामिनं वन्दित्वा विशुद्धमानसप्रणिधानसमन्वितेन वाग्योगेन स्तुत्वा काययोगेन च प्रणम्य + + + + + + + योरितिवचनात्। एतेन मङ्गलार्थमभीष्टदेवतायाः स्तुतिरुक्ता। क्त्वाप्रत्ययस्य चोत्तरक्रियासापेक्षत्वात्। इत्यादि।

**End.** तदनु सुधर्म्मस्वामी जम्बूप्रभवाद्यो मुनिवरिष्ठाः।
श्रुतजलनिधिपारीणा भूयांसः श्रेयसे सन्तु॥

ततः प्रातस्तपाचार्य्येत्यभिख्या भिचुनायकाः ।
+ + + + कुलचा + श्रीजगचन्द्रसूरयः ॥
जगत्प्रतीतबोधानां तेषां शुद्धचरित्रिणां ।
विनेयाः समजायन्त श्रीमद्देवेन्द्रसूरिणा ।
षड्शीतिकटीकेयं सुखबोधाय निर्म्ममे ॥
विबुधवरधर्म्मकीर्त्तिश्रीविद्यानन्दसूरिमुख्यबुधैः ।
स्वपरसमयैककुशलैस्तदेव संशोधिता चेयं ॥
— — — — — — —।

Colophon. इति श्रीषड्शीतिटीका समाप्ता ।

विषयः। षड्शीतिप्रकरणात्मकस्य जैनकर्म्मविपाकसूत्रस्य व्याख्यानम् ।

---

**No. 2788.** समवायाङ्गसुत्तम्। Substance country-made paper, 11 × 4 inches. Folia, 81. Lines, 8 on a page. Extent, 773 ślokas. Character, Nágara. Date ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Mágadhí.

**Samaváyáñga Sútta.** Jain cosmogony, biology and metaphysics. It is one of the principal text-books of the Jains. As a part of their scriptures, it bears no author's name.

Beginning. सुयं मे आउसंतेणं भगवया एवमरकायं । इह खलु समणेणं भगवया महावीरेणं आदिगरेणं तित्थगरेणं सयं संबुद्धेणं पुरिसत्तमेणं—इत्यादि ।

End. सुतसंमासे इवासुखखंधे इवा समए
तिवासंखेति वा संमत्तमंगसक्खायं
अज्भायणं त्ति वेमि समवायंगचउत्थमंगं ।
समत्तं समवायांगसुत्तं ।

Colophon. इति श्रीसमवायाङ्गसूत्रं समाप्तं ॥

विषयः। ग्रन्थेऽस्मिन् जीवाः अजीवाः जीवाजीवाः. लोकः अलोकः लोकालोकः, स्वसमयः परसमयः स्वसमयपरसमयः, कूटाः, शिखरिणः, नद्यः, ह्रदाः, कुण्डानि, आकराः, ह्रदाश्च निरूप्यन्ते । तत्रायं क्रमः, एक आत्मा कथञ्चिदिति गम्यते,—तत्र देशार्थतया असंख्यातप्रदेशोऽपि जीवो द्रव्यार्थतया एकः । अथ वा प्रतिचणं पूर्व्वस्वभावापरस्वरूपोत्पादयोगेन अनन्तभेदोऽपि कालत्रयानुगामिचैतन्यमात्रापेचया एक आत्मा । अथ वा प्रतिसन्तानं चैतन्यभेदेन-अनन्तत्वेऽपि आत्मनां सङ्ग्रहतया आश्रितसामान्यरूपापेचया एकत्वमात्मन इति। तथा न आत्मा अनात्मा घटादिपदार्थः, सोऽपि प्रदेशार्थतया असंख्येयानन्तप्रदेशोऽपि तथाविधैकपरि-

ज्ञामरूपद्रव्यार्थापेक्षया एक एव । एवं सन्तानापेक्षयापि तुल्यरूपापेक्षया अनुपयोगलक्षणैकत्व-भावयुक्तत्वात् कथञ्चिद्भिन्नस्वरूपाणामपि धर्म्मास्तिकायादीनामनात्मनामेकत्वमवसेयं । एवमन्य-च एकत्वमवसेयमिति । अथात्मपरिणामादिनिरूपणम् ।

---

**No. 2789.** समवायाङ्गवृत्तिः । Substance, country-made paper, 11 × 5 inches. Folia, 128. Lines, 10 on a page. Extent, 3,507 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Generally correct. Sanskrit.

**Samaváyáñga-vṛitti.** A gloss on the treatise described under the next preceding No. By Abhayadeva Súri.

**Beginning.** श्रीवर्द्धमानमानम्य समवायाङ्गवृत्तिका ।
विधीयतेऽन्यशास्त्राणां प्रायः समुपजीवनात् ॥
दुःसम्प्रदायादसदूहन + + भणिष्यते यद्वितथं मयेह ।
तद्धीधनैर्मामनुकम्पयद्भिः शोध्यं मतार्थक्षतिरस्तु मैवं ॥

इह स्थानाख्यतृतीयाङ्गानुयोगादनन्तरं क्रमप्राप्त एव समवायाभिधानः चतुर्थाङ्गानुयोगो भवति । सोऽधुना समारभ्यते । तत्र च फलादिद्वारचिन्ता स्थानाङ्गानुयोगवदवसेया । इत्यादि ।

**End.** इह वचसि विरोधो नास्ति सर्व्वज्ञवाक्यात्
क्वचन तदवभासो यः समां + + ङेः ।
वरगुरुविरहाद्वातीतकालो मुनीश्चै-
र्गणधरवचनानां वस्तसंघातनाद्वा ॥
व्याख्यातं यद्यपीदं प्रवरकविवचः पारतन्त्र्येण दृष्टं
सम्भाव्योऽस्मिंस्तथापि क्वचिदपि मनसो मोहतोऽर्थादिभेदः ।
किन्तु श्रीसंघबुद्धेरनुसरणविधेर्भावशुद्धेश्च दोषः
स मेऽभूदल्पकोऽपि प्रशमपरमनाशाच्च देवीश्रुतस्य ॥
निःसम्बन्धविहारिहारिचरितान् श्रीवर्द्धमानाभिधान्
सूरीन् ध्यातवतोऽपि तीव्रतपसो ग्रन्थप्रणीतिप्रभोः ।
श्रीमत्सूरिजिनेश्वरस्य जयिनो द+यसां वाग्मिनां
तद्बन्धोरपि बुद्धिसागर इतिख्यातस्य सूरेर्भुवि ॥
शिष्येणाभयदेवाख्यसूरिणा विवृतिः कृता ।
श्रीमतः समवायाख्यतुर्य्याङ्गस्य समासतः ॥

एकादशसु शतेष्वथ विंशत्यधिकेषु विक्रमसमानां ।
अनहिलपाटकनगरे रचिता समवायटीकेयं ॥
प्रत्यचरं निरूप्यास्या ग्रन्थमानं विनिश्चितं ।
चौणि श्लोकसहस्राणि पादन्यूना च षट्शती ॥

विषयः । समवायाङ्गाभिधानजैनसूत्रस्य व्याख्यानम् ।

---

**No. 2790.** सम्यक्त्वकौमुदी । Substance, country-made paper, 10 × 4 inches. Folia, 90. Lines, 8 on a page. Extent, 1,557 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose, with a few metrical quotations. Incorrect. Sanskrit.

**Samyaktva-kaumudí.** A collection of eight stories illustrating the eight principal duties of the Jains. The heroes of the stories are 1, S'reṇika, king of Rájagṛiha; 2, Sañgrámaśúra, a king; 3, Bhubhoga, king of Kurujáñgala; 4, Rajitanjaya, king of Kausámbí; 5, Jivári, king of Váráṇasí; 6, Dháḍiváhana, king of Champá; 7, Rájan, king of Ujjayiní; 8, Sudanḍa, king of Kausámbí.

**Beginning.** श्रीवर्द्धमानमानस्य जिनदेवं जगत्प्रभुं ।
वक्ष्येऽहं कौमुदीह + सम्यक्त्वगुणहेतवे ॥

अथ जम्बूद्वीपे भरतक्षेत्रे मगधविषये सततप्रवृत्तोत्सवं प्रभूतवरजिनालियं जिनधर्म्माचारोत्सवं सहितश्रावकं घनहटपरमण्डितसवितनषण्डमण्डितं भोगावतीचन्द्रं राजगृहनगरस्ति । इत्यादि ।

**End.** अन्याभिश्च उदयश्रीप्रवर्त्तिनीसमीपे व्रतं गृहीतं । उग्रं तपः कृत्वा ते सर्व्वे स्वर्गं गताः । यतः

धर्म्मेण गमनमूर्द्धं गमनमधस्ताद्भवत्यधर्म्मेण ।
ज्ञानेन चापवर्गो विपर्य्ययादिष्यते बन्धः ॥

**Colophon.** इति सम्यक्त्वकौमुदी समाप्ता ।

विषयः । तत्र प्रथमकथानके,—राजगृहनगरे श्रेणिको नाम कश्चित् नरपतिरासीत् । स चैकदा कश्चिद् रनप्रदेशं समधिगम्य तत्र मृगमृगेन्द्रमयूरभुजङ्गादीनां परित्यक्तवैराणां परस्परं क्रीड़नमाकलय्य च विस्मितो बभूव । अथ तत्र भगवतो महावीरस्य माहात्म्यादेव तेषामन्योन्यं सौहार्द्दं समजनीति निश्चित्य भगवत्समवसरणमुद्दिश्य प्रचलितोऽयं लब्धतद्दर्शनजनितपरमानन्दः सानन्दं गौतमस्वामिनं सम्यक्त्वकथां पप्रच्छ । स चाह । उत्तरमथुरायां कुमा-

रः अर्हद्दासो नाम्ना कश्चित् श्रेष्ठिकुमार आसीत् । तस्य मित्रश्रीः, चन्दनश्रीः, विष्णुश्रीः, नागश्रीः, पद्मलता, कनकलता, विद्युल्लता, कुन्दलता चेति अष्टौ भार्य्या आसन् । तस्मिन्नेव समये खलु उदितोदयाभिधानो कश्चिन्नरपतिस्तामेव पुरीं समलंकुर्व्वन् तस्थौ । स खलु कार्त्तिकपूर्णिमायां प्रतिवर्षं वनमध्ये कौमुदीमहोत्सवं कारयति । तत्र विस्तरेण तद्वृत्तान्तकथनपूर्व्वकं जैनधर्म्ममाहात्म्यकीर्त्तनं । द्वितीयकथानके,—सम्यग्दृष्टिकारणकथनमुखेन संग्रामशूराभिधानस्य नरपतेरुपाख्यानकथनं । तत्र जैनधर्म्मानुष्ठानविधानकथनं । तृतीयकथानके,—कुरुजाङ्गलदेशीयहस्तिनापुरवास्तव्यस्य भूभोगनामकस्य नरपतेः तत्पत्न्याः भोगवत्याः गुणपालसंज्ञकस्य श्रेष्ठिनश्च उपाख्यानकथनं । तत्र जीवहत्यायाः नितरां निन्दितत्वकथनं । चतुर्थकथानके,—कौशाम्बीनगराधिपतेरजितञ्जयाभिधेयस्य राज्ञ उपाख्यानकथनं । तत्र दानमाहात्म्यकथनं । पञ्चमे कथानके,—वाराणसीपुरीपतेः सोमवंशतिलकस्य राज्ञो जितारिनामकस्य उपाख्यानकथनं । तत्र श्रावकव्रतमाहात्म्यकीर्त्तनं । षष्ठे कथानके,—चम्पापुराधिपतेः धाड़िवाहननामकस्य नृपतेः तदङ्गनायाः पद्मावत्याः वृषभदासाभिधानस्य श्रेष्ठिनश्च उपाख्यानकथनं । तत्र वैराग्यप्रशंसादिकीर्त्तनं । सप्तमे कथानके,—उज्जयिनीनगरीनाथस्य राज्ञो नाम्ना नरपालस्य तत्पत्न्या मदनवेगायाः मन्त्रिणो मदनदेवस्य श्रेष्ठिनः समुद्रदत्तस्य च उपाख्यानकथनं । तत्र सत्सङ्गादिमाहात्म्यकथनं । अष्टमे कथानके,—कौशाम्बीनगरीपतेः नाम्ना सुदण्डस्य नरपते राज्ञ्याः विजयायाः मन्त्रिणः श्रेष्ठिनश्च सूरदेवस्य नाम्ना उपाख्यानकथनं । तत्र सद्वृत्तमाहात्म्यादिकथनं ।

---

**No. 2791.** शीलालङ्कारकथा । Substance, country-made paper, 12 × 5 inches. Folia, 28. Lines, 8 on a page. Extent, 660 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Sanskrit.

**S'íláláñkára-kathá.** A story illustrating the merits of good behaviour according to Jain canons. The hero of the story is Chitrasena, of Vasantapur.

**Beginning.** नत्वा जिनपतिमाद्यं पुण्डरीकगणाधिपं ।
शीलालङ्कारसंयुक्तां साश्चर्य्यां तत्कथां ब्रुवे ॥
तथाहि,—
इहैव भरतक्षेत्रे देशे नाम्ना कलिङ्गके ।
धनधान्यसमाकीर्णं वसन्तपुरपत्तनं ॥
प्रासादमन्दिराकीर्णमारामसरःशोभितं ।
श्रेष्ठिनो बहवो यत्र वसन्ति धनदोपमाः ॥ इत्यादि ।

**End.** नागलोकाभिधासौख्यं न्टसौख्यं देवसौख्यकं ।
शीलप्रभावतो ज्ञेयं प्राप्यते परमं पदं ॥
इगे युग्मे खरवाणचन्द्रे संवत्सरे चाश्विनमासकेन ।
चयोदशीज्ञयशनैश्वरेण कथा क्वता शीलसमुद्रेन ॥ ? ॥
श्रीधर्म्मसूरिरसदनुक्रमेण श्रीमूलपट्टक्रममागतेन ।
श्रीपद्मसूरिस्तगुरोसु संघे दद्याच्छ्रियं श्रीमहिचन्द्रसूरिः ॥
शिष्यस्तदीयो महिमानिधानं चारित्रपाचं खगुणैः प्रधानः ।
पद्मावतीशीलगुणस्य कीर्त्तिकथामकार्षीद्गणिराजवल्लभः ॥

**Colophon.** इति श्रीशीलालङ्कारकथा समाप्ता ।

विषयः । शीलप्रभावेणैव पुरुषार्थो लभ्यते इति कथनं । तत्र वसन्तपुरवास्तव्यस्य चित्रसेनस्य उपाख्यानकीर्त्तनं ।

---

**No. 2792.** श्राद्धगुणसङ्ग्रहः । Substance, country-made paper, 11 × 4 inches. Folia, 110. Lines, 7, 8 on a page. Extent, 3,078 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Sanskrit and Mágadhí.

**S'ráddhaguṇa-sañgraha.** Duties appropriate to Jain householders. By Jinamaṇḍana Gaṇi, disciple of Somasundara Súri. The word S'ráddha in the title is used in the sense of faith, or attachment, and the duties include marriage and other domestic rites and ceremonies. The work is a counterpart of that part of the Hindu Smriti which bears the title of *A'chára,* and is written in the Mágadhi dialect.

**Beginning.** प्रणम्य श्रीमहावीरं केवलज्ञानभास्करं ।
वच्मि कञ्चन सुश्राद्धधर्म्मं शर्म्मैककारकं ॥
यतः ।
जयश्रीसिद्धिदः साध्वी गुरुतामृद्धमन्त्रवित् ।
सान्वर्थः सात्त्विकैर्धर्म्मविवेकिश्रावकोत्तमैः ॥
तत्रादौ श्रावकशब्दार्थमाह ।
परलोयहियं सम्मं जो जिणवयणं सुणेइ उव उत्तो ।
अइ तिव्वकम्मविगमा सुक्को सो सावगो एत्था ॥ इत्यादि ।

**End.** प्रथमे त्रिजगत्पूज्या ध्यायोज्ञानक्रियावतां ।
अजायन्त तपोमच्छे श्रीजमचन्द्रसूरयः ॥

श्रीदेवेन्द्रगुरवस्तेषां पट्टेऽभूवन्नीतमप्रभः ।
विद्यानन्दगुरुस्तस्मादाविरासीद्युगोत्तमः ॥
श्रीधर्मघोषसूरीन्द्रस्ततोऽभूद्भुवनाद्भुतः ।
श्रीसोमप्रभ इत्यासीत् तस्मात् सूरिवराग्रणीः ॥
श्रीसोमतिलकः श्रीमान् गुरुः कल्पतरुः सतां ।
सूरिर्भूरियशा जज्ञे ततः श्रीदेवसुन्दरः ॥
युगोत्तमसमस्तस्य शिष्योऽभूत् चितिविश्रुतः ।
विश्वातिशायिसौभाग्यसूरिः श्रीसोमसुन्दरः ॥
श्रीजिनमण्डलस्तस्य विनेयः श्रुतभक्तितः ।
व्यधात् श्राद्धगुणश्रेणीसङ्ग्रहग्रन्थमात्मवित् ॥
अणहिल्लपत्तननगरे नानाविधशास्त्रसारमादाय ।
अनुनन्दाष्टकवर्षे ग्रन्थोऽयं निर्मितश्चिरं नन्द्यात् ॥

**Colophon.** इति श्रीसोमसुन्दरसूरिशिष्यश्रीजिनमण्डनगणिपादैः प्रणीतः श्राद्धगुणसङ्ग्रहः समाप्तः ।

विषयः । श्रद्धालुतां श्राति वा जिनशासनं शृणोति वा श्रवन्ति यस्य पापानीति वा श्रावकः । स च धर्म्मः सुदेवत्वसुमानुषत्वयतिधर्म्मप्राप्त्यादिक्रमेण मोक्षसौख्यदायकत्वेन नितरामुपादेयः । अथ योग्यैरपि विशेषधर्म्मार्थिभिः पूर्व्वं सामान्यगृहस्थधर्म्मानुष्ठाने यतितव्यं तत्र जैनधर्म्मे नितरां श्रद्धावान् गृहस्थः श्राद्ध इत्युच्यते। तेन च पञ्चविंशतिगुणयुक्तेन भवितव्यं। क्रमेण यथा,—तत्र प्रथमतः श्राद्धेन न्यायसम्पन्नविभवेन भाव्यं । यतः न्यायोपार्जितवित्तव्ययं कुर्व्वाणेन केनापि न कदाचित् किञ्चिदभिशङ्क्यते । एवञ्च अव्याकुलचेतसः प्रशस्तपरिणतेरिह-लोकेऽपि महान् सुखलाभः, सर्व्वत्र यशःप्रशंसाप्राप्तिश्च ।अपि च न्यायागमवित्तस्य सत्पात्रादिषु विनियोगेन पुण्यानुबन्धिहेतुत्वात् परलोकहितानुष्ठानञ्च भवति। अत्र कस्यचिद्ब्राह्मणस्य उपाख्यानकथनं। अथ अन्यायार्ज्जितधनस्य निन्दितत्वादिकथनं । तत्र मरुस्थलीवासिनोः काकुयाताकाभिधानयोः सोदरयोरुपाख्यानकथनं । एवं वञ्चकश्रेष्ठादीनामुपाख्यानकथनञ्च। अथ द्वितीयः सदाचारः । स च लोकापवादभीरुता-दीनाभ्युद्धरणादरकृतज्ञतादिरूपः । अयं हि धर्म्मबीजाधानतया प्रेत्य परमपदहेतुर्भवति। अत्र कौशाम्बीपुरीवास्तव्यस्य चोरस्य उपाख्यानादिकथनं। अथ तृतीयो गुणः समकुलशीलविभवकुटुम्बित्वं। तत्र विभवादिवैषम्ये सति कन्या महतः स्वपितुरैश्वर्य्यादल्पविभवं भर्त्तारमवगणयति। वरोऽपि तथा चेत् कन्यापितुर्विभव-विकलत्वेन तामवजानाति। तत्र क्रमेण ब्राह्माद्यष्टविधविवाहलक्षणकथनं। कन्यावरयोर्वयो-निरूपणादिकथनञ्च । अत्र वसन्तपुरवासिनो जितशत्रोरुपाख्यानादिकथनं। विशेषेण गार्ह-स्थ्यधर्म्मानुष्ठानप्रकारकथनञ्च ।एवं विस्तरेण पापभीरुत्वरूपचतुर्थगुणकथनं। (५) देशाचार-

समाचारगुणकथनं। (६) राजादिषु यथावर्णवादित्वरूपगुणकथनं। (७) अनतिगुप्तव्यक्तिस्थाने विवर्ज्जितनिकेतनत्वकथनं। (८) सदाचारासक्तिकथनं। (९) मातापितृशुश्रूषाकथनं। (१०) उपप्लुतस्थानत्यागकथनं। (११) गर्हिताप्रवृत्तिकथनं। (१२) आयानुरूपव्ययकथनं। (१३) विभवानुकूलवेषताकथनं। (१४) शुश्रूषाश्रवणग्रहणाद्यष्टविधधीगुणयुक्तता। (१५) जैनधर्म्म-श्रवणपरायणता। (१६) अजीर्णभोजनत्यागः। (१७) यथाकालभोजनशीलता। (१८) परस्पर-रमप्रतिबन्धेन धर्म्मार्थकामसेवनं। (१९) साधुदीनक्षीणादीनामुपचारपरायणता। (२०) अन-भिनिविष्टत्वं। (२१) गुणेषु पक्षपातः। (२२) निषिद्धदेशकालाचर्य्या। (२३) स्वस्य परस्य च बला-बलपरिज्ञानः। (२४) वृत्तस्थज्ञानवृद्धादीनां पूजनं। (२५) पोष्यवर्गपोषकत्वं। (२६) दीर्घदर्शि-ता। (२७) विशेषज्ञता। (२८) कृतज्ञता। (२९) लोकरञ्जनता। (३०) सलज्जता। (३१) सद-यता। (३२) सौम्यदर्शनता। (३३) परोपकृतिपरायणता। (३४) अन्तरङ्गारिषड्वर्गपरीहार-परतन्त्रता। (३५) वशीकृतेन्द्रियग्रामता चेति। एवंविधविशेषधर्म्मशोभापोषकसामान्यगुणगु-म्फितो हि मनुष्यो गार्हस्थ्यधर्म्माय प्रभवति। तथा सम्यक्त्वादिद्वादशव्रतरूपविशेषधर्म्माय चाधि-कारी भवतीति शिवम्।

---

**No. 2793. संवत्सरप्रकरणम्।** Substance, country-made paper, 11 × 5½ inches. Folia, 30. Lines, 12 on a page. Extent, 694 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Correct.

**Samvatsara-prakaraṇa.** Astrological conjunctions, auspicious or otherwise, for marriages and other rites and ceremonies. By Káśinátha.

**Beginning.** भासयन्तं जगद्भासा नत्वा भास्वन्तमद्वयं।
क्रियते काशीनाथेन शीघ्रबोधाय सद्ग्रहः॥
रोहिण्युत्तररेवत्या मूलं स्वातिर्मृगो मघा।
अनुराधा च हस्तश्च विवाहे मङ्गलप्रदाः॥ इत्यादि।

**End.** चन्द्रे वेदे च दुर्भिक्षं सुभिक्षं युग्मवाणयोः।
रामे रसे मध्यमश्च शून्ये शून्यं प्रकीर्त्तितं॥

**Colophon.** इति श्रीकाशीनाथकृतौ संवत्सरप्रकरणं समाप्तं।

विषयः। विवाहनक्षत्र-मासादिनिरूपणं। वारवेला-भद्रा-दग्धादिकथनं। अथ वर्ग-प्रीति-गणप्रीति-वर्णप्रीति-नक्षत्रप्रीति-वश्यप्रीति-योनिप्रीतिप्रभृतिनिरूपणं। रविबल-चन्द्रब-लादिकथनं। यामित्रादिनिरूपणं। क्रान्तिसाम्यकथनं। होलाष्टककथनं। दिनलग्नज्ञानक-

थनं। मागचक्रादिकथनं। द्विरागमनादिकालकथनं। नववस्त्रपरीधान-नवान्न-विद्यारम्भ-व्रतबन्ध-कर्णवेधादिकालकथनं। देवालयवापीकूपाद्युत्सर्गकालादिकथनं। दिक्शूलादिनिरूपणं। मुहूर्त्तकुलिकादिनिरूपणं। आनन्दादियोगकथनं। नक्षत्रतारासंख्याकथनं। नक्षत्र-तिथिवारशुभाशुभयोगादिचक्रकथनं। ग्रहाणां गोचरादिफलकथनं। पशुविक्रयादिकालनिरूपणं। संवर्त्तकयोगादिकथनं। प्रश्नादिकरणे शुभाशुभफलनिरूपणं। ग्रहशान्तिविधिः।

---

**No. 2794.** संथारापइन्नं, अवचूरिसहितम्। Substance, country-made paper, 11 × 4 inches. Folia, 34. Lines, 12 on a page. Extent, 1,020 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, Mágadhí verse; Commentary, prose Sanskrit.

**Sañghárápainna.** On the funeral rites of the Jains. By Víra-bhadra Gaṇi. In Mágadhi, with an anonymous Sanskrit gloss.

टीकायाः,—

**Beginning.** अथेह सर्व्वेषां जीवानां नवहस्तकुन्तस्याग्रस्येव सकलायुषोऽन्त्यावस्थाराधनस्यैव सारत्वात्।

मूलस्य,—

देसि क्क देसविरउ सम्मद्दिट्ठीमरिज्जजो जीवो।
तं होइ बालपंडिअमरणं जिनसासणे भणियं॥
पंचय अणुव्वयाणिं सत्तउ सिक्खाउ देसजइधम्मो।
सव्वेण विदेसेण वितेणज्जउ होइ देसजइ॥ इत्यादि।

**End.** मूलस्य,—

एवं मए अभिथुया संथारगइंद खंधमारूढा।
सुसमणनरिंद चंदा सुह संकमणं सयादिंतु॥

टीकायाः,—

नरेन्द्रा हि प्रौढ़ाः गजेन्द्रमारोहन्ति। सुखस्य मुक्तिसुखस्य शुभस्य वा संक्रमणं संसारदुःखात् विनिःसृत्य प्राप्तिं मम ददतु॥ इत्यवचूरिः।

**Colophon.** इति संथारापइन्नं समाप्तं।

विषयः। श्रावकाणां अन्त्यावस्थाराधनस्वरूपकथनं। तत्र बालपण्डितादिभेदेन पञ्चविधमरणभेदनामकथनं। अथ तेषु मिथ्यादृशां बालमरणं। अविरतसम्यग्दृष्टीनां बालमरणं।

देशविरतानां बालपण्डितमरणं। यतीनां पण्डितमरणं। केवलिनां पण्डितमरणञ्चेति-निरूपणं। तत्र तत्र अणुव्रत-शिक्षाव्रत-गुणव्रतभेदेन द्वादशविधकथनपूर्व्वकं तत्तदनुष्ठानेन जीवस्य देशादिविरतिर्भवतीतिकथनं। अथ परीषहादिनिरूपणञ्च।

---

**No. 2795.** संविभागव्रतकथा। Substance, country-made paper, 11 × 5 inches. Folia, 28. Lines, 8 on a page. Extent, 632 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect. Sanskrit.

**Samvibhága-vrata-kathá.** Directions for the observance of a fast entitled—*Samvibhága-vrata.* The bulk of the work is made up of a story of which a prince Chandrabala, son of Yasodhabala, king of Chandrapura in Káśmir, is the hero. He was versed in the science of divination, and could interpret the meaning of signs, and the voices of animals. By Máṇikyasundara Súri, disciple of Merutuñga Súrindra.

**Beginning.** अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया।
नेत्रमुन्मीलितं येन तस्मै श्रीगुरवे नमः॥
चतुःपर्व्वीकथा प्रोक्ता पोषधव्रतहेतवे।
संविभागव्रतस्याथ रुचिरा प्रोच्यते कथा॥

तत्र इह भरतक्षेत्रे काश्मीरदेशे चन्द्रपुरं नाम नगरं। यत्र,—
गृहारम्भं परित्यज्य नरा नार्य्योऽपि सर्व्वदा।
प्रातरुत्थाय उच्चैस्त्वं धावन्ति धर्म्मसद्मसु॥ इत्यादि।

**End.** श्रीदत्तपुत्रं राज्ये स्थापयित्वा संयमश्रिया सिद्धिसौख्यं सिषेवे॥
श्रीमेरुतुङ्गसूरीन्द्रशिष्यो माणिक्यसुन्दरः।
सूरिरेतां करोति स्म संविभागव्रते कथां॥
यावन्मेरुर्मही यावद् यावच्चन्द्रदिवाकरौ।
वाच्यमाना जनैस्तावत् कथासौ लभतां+थां॥

**Colophon.** इति संविभागव्रतकथा समाप्ता।

विषयः। काश्मीरविषये चन्द्रपुरं नाम नगरमस्ति। तत्र यशोधवलाभिधानः कश्चित् नरपतिरासीत्। तस्य नाम्ना यशोमती राज्ञी हृदयेश्वरी बभूव। तत्कुक्षिसमुद्भूतः निखिल-गुणगणरत्नाकरः कुमारः नाम्ना चन्द्रबलो विशेषतः शकुनशास्त्रे नितरां विख्यातो बभूव। एकदासौ कुमारः निशायां खट्टे सुप्तः शिवाशब्दं शुश्राव विचिन्तयामास चासौ शिवेयं महान्तं लाभं निवेदयतीति। अथायं गृहीतशस्त्रः तच्छब्दानुसरणेन महाश्मशानमधिगम्य चग्नि-

कुण्डमध्ये प्रज्वलन्तं सुवर्णमेकं ददर्श। ततः कुमारः सरोवरात् सलिलमानीय तेन सुवर्णपुरुषं सिक्ता वहिरानीय भूमौ च निक्षिप्य पुनः स्वस्थानमागत्य सुष्वाप। अथ प्रभातकाले तत्कृत्यानि विधाय कृतपितृचरणवन्दनोऽसौ कुमारः सभां प्रययौ। अचान्तरे प्रतीहारेणैवं विज्ञापितो राजन् स्वामिन् राजद्वारे कोऽपि पुरुषः स्वशिरसि रजः क्षिपन् मुषितोऽस्मीति विलपति। अथ तेन राजाज्ञया प्रवेशितोऽयं पुरुषः सुवर्णपुरुषप्राप्तिनिदानं जिज्ञासितस्तद्धिगमवृत्तान्तं सप्रपञ्चं प्रपञ्चयामास। तत्र विशेषेण धर्मदत्तस्य उपाख्यानकथनं। संविभागव्रतविधिकथनं। जैनधर्ममाहात्म्यकीर्त्तनञ्च।

---

**No 2796.** ताजिकसारः। Substance, country-made paper, 12 × 4 inches. Folia, 32. Lines, 9 on a page. Extent, 437 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**Tájika-sára.** An abridgment of the Tájika, a work on astrology and interpretation of prognostics. By Hari Bhaṭṭa.

**Beginning.** श्रीरामस्य पदारविन्दयुगलं नत्वाथ वागीश्वरीं
हेरम्बं तपनादिकं + + + + यशोदासुतं।
वक्ष्ये ताजिकसारमल्पसुगमं रम्यं सुबोधप्रदं
नानाताजिकतो विलोक्य रचितं दैवज्ञहर्षप्रदं॥
यत् पूर्व्वार्ज्जित + + देहजनितं दैवं शुभं वाशुभं
तत् सर्व्वं हि विपाकमेति नियतं वर्षादिके निश्चितं।
सर्व्वैः सम्मतमच जन्मनि परं जन्तोः स्फुटं सूरिभि-
स्तस्मात् तत् परिचिन्त्य वर्षजनितं वक्ष्ये फलं स्फूर्त्तिमत्॥ इत्यादि।

**End.** आलोक्य नानामुनि + + तानि
सम्यक् कृतं ताजिकसारमेवं।
स्वल्पं विचित्रं हरिणा सुखार्थं
ज्योतिर्व्विदां तद्विविधैः सुपद्यैः॥

**Colophon.** इति श्रीहरिभट्टविरचिते ताजिकसारे दिनप्रवेशकरणं समाप्तं। सम्पूर्णोऽयं ग्रन्थः।

विषयः। अहर्गणादिसाधनविधिः। तस्मादिष्टवर्षादिसाधनविधिः। ग्रहस्वरूपादिकथनं। भावस्वरूपादिकथनं। ग्रहसाधनविधिः। लग्नसाधनविधिः। दृष्टिसाधनविधिः। नवांशादिनिरूपणं। द्वादशवर्गनिरूपणं। हर्षस्थानादिनिरूपणं। वर्षेशफलकथनं। रिष्टिनिरूपणादि-

र्वं। राजयोगनिरूपणादिकं। मित्रभावफलकथनं। तनुभावफलकथनं। धनभावफलकथनं। बलनिर्व्वलादिनिरूपणं। दशाक्रमकथनं। अन्तर्दशादिनिरूपणं। दिनप्रवेशसमयसाधनविधिः। चर्य्यायां शुभाशुभज्ञाननिरूपणं। भोजनचिन्तनं। स्वप्नदर्शनशुभाशुभनिरूपणं।

---

**No. 2797.** ताजिकसारटीका। Substance, country-made paper, 12 × 4½ inches. Folia, 39. Lines, 14 on a page. Extent, 1,569 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Tájikasára-ṭíká.** A gloss on the work noticed under the next preceding No. By Sumatiharsha Gaṇi. A different commentary has been noticed under No. 1354, (vol. III, p. 348).

**Beginning.** श्रीसूर्य्यचन्द्रारबुधेन्दुपूज्यान्
शुक्रार्किमुख्यान् प्रणिपत्य खेटान्।
+ + + + + + + सुबोधपद्म-
प्रबोधने तीग्मकरांश्च साधून्॥
+ + + शरदिन्दुशुभ्रं
तेजो + वा ध्वान्त इवैकदीपं।
निधाय चित्ते विदृणोति ताज-
सारस्य तन्त्र + करान् पदार्थान्॥

इह शिष्टा इष्टे वस्तुनि प्रवर्त्तमाना अभीष्टदेवतानमस्कारपूर्व्वमेव प्रवर्त्तन्ते इति शिष्टसमयप्रतिपालनाय। श्रेयांसि बहुविघ्नानि भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः॥ इति। इत्यादि।

**End.** एवमुक्तमनुक्तञ्च स्वधिया ज्ञेयमलं विस्तरेण।
— — — — — — — — — — —।

**Colophon.** इत्याश्चलेकमहामहोपाध्यायश्रीउदयराजगणि + + + + शिष्योपाध्यायश्रीहर्षरत्नगणिशार्द्दूलानांशिष्यपाश्चादिराजश्रीसुमतिहर्षगणिकृता ताजिकसारटीका सम्पूर्णा।

विषयः। हरिभद्रकृतताजिकसारस्य व्याख्यानम्।

---

**No. 2798.** ज्योतिःसारः। Substance, country-made paper, 14 × 4 inches. Folia, 32. Lines, 8 on a page. Extent, 660 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**Jyotih-sára** ALIAS **Nárachandríya**. A primer of Jain astrology. By Narachandra. The work noticed under Nos. 226 (vol. I, p. 119) and 1128, (vol. III, p. 83) are quite distinct.

**Beginning.** श्रीअर्हन्तं जिनं नत्वा नरचन्द्रेण धीमता ।
सारमुद्ध्रियते किञ्चिज्ज्योतिषः क्षीरनीरधेः ॥

तत्र तिथिवारयोगराशिशशितारकाबलभद्राकुलिकोपकुलिककण्टकार्द्धप्रहराः । इत्यादि ।

**End.** षष्ठश्चैव तृतीयस्य एकादशो विशेषतः ।
शरीरे पुष्टिकर्त्ता च शनिः प्रोक्तो न संशयः ॥

**Colophon.** इति श्रीनारचन्द्रीये ज्योतिःसारे प्रकीर्णकं सम्पूर्णम् ।

विषयः । क्रमेण तिथिवारनक्षत्रयोगादिनिरूपणं । तत्र तिथ्यादियन्त्रकथनं । सिद्धियोगयन्त्रकथनं । मृत्युयोगयन्त्रकथनं । राशिभोगयन्त्रकथनं । तेषां वक्रातीचारयन्त्रकथनं । राशीनां शुभाशुभविवेचनं । चन्द्रबलादिविवेचनं । कर्कयोगादिनिरूपणं । स्थिरयोगयन्त्रादिकथनं । सामान्यदिनशुद्धिनिरूपणं । योगिनीचक्रयन्त्रादिनिरूपणं । वत्सरस्वरूपयन्त्रनिरूपणं । नाडीवेधयन्त्रादिकथनं । समविषमचन्द्रोदययन्त्रनिरूपणं । वस्त्रादिधारणविधिकथनं । विषुवादिसंक्रमणयन्त्रनिरूपणं । ग्रहणराहुफलादिनिरूपणं । गृहारम्भादिविधिकथनं । ग्रहचारफलकीर्त्तनं ।

---

**No. 2799.** उत्तराध्ययनबृहद्वृत्तिकथा । Substance, country-made paper, 11 × 4 inches. Folia, 144. Lines, 12 on a page. Extent, 5,148 ślokas. Character, Nágara. Date, Sм. 1648. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Uttarádhyáyana-vṛihatvṛitti-kathá.** A Sanskrit translation of a Mágadhi commentary on the *Uttarádhyáyana Sútra*. It is a collection of twenty-five tales illustrating Jain morals and duties. By Padmaságara Gaṇi, disciple of Vimalaságara Gaṇi.

**Beginning.** प्रणम्य श्रीमहावीरं नत्वाखण्डलमण्डलं ।
आरभ्यन्ते कथाः कर्त्तुमुत्तराध्ययनस्थिताः ॥

तत्रैकस्य आचार्य्यस्य क्षुल्लकोऽविनीतः, तमाचार्य्यः शिक्षार्थं ताड़यति । स क्षुल्लको रोषं वहति । अन्यदा आचार्य्यः तेन क्षुल्लकेन समं सिद्धशैलं वन्दितुं गतः । ततः उत्तरत आचार्य्यस्य वधाय तेन दुष्टेन क्षुल्लकेन शिला मुक्ता आयान्ती आचार्य्येण दृष्टा । इत्यादि ।

**End.** अहो संसारस्य असारता यो यस्य प्रभवति सति + + + कृतान्तः पुनः

सर्व्वानपि ग्रसति। अतोऽत्र धर्म्म एव सर्व्वव्यसनरचक इति चिन्तयन्नेव प्रतिबुद्धः गङ्गामुनीर्य्य साधुसमीपे प्रव्रजितः। अयमुर्थः सम्बन्धः सूत्र एव प्रोक्तोऽस्तीति पञ्चविंशाध्ययनकथा समाप्ता।

Colophon. इति पण्डितप्रकाण्डश्रीविमलसागरगणिशिष्यपण्डितश्रीपद्मसागरगणिना कृता उत्तराध्ययनवृहद्वृत्तिकथा सम्पूर्णा। संवत् १६४८।

विषयः। उत्तराध्ययनसूत्रस्य वृहद्वृत्तिगतानां मागधीभाषामयकथानां संस्कृतभाषया-वतारणम्। तत्र कुलवालकस्य विवरणकथनेन अविनीतस्य निन्दितत्वकथनं। चण्डरुद्रस्य उपाख्यानकथनेन स्तुतिनिन्दादौ साधुर्न रागद्वेषवान् भवतीतिनिरूपणं। चौरयोरुपाख्यानक-थनेन रात्रिभोजनव्रतानुष्ठानेन रसनेन्द्रियदमनकथनं। गजानामुपाख्यानकथनेन आचार्य्यो-पघाती न स्यादितिकीर्त्तनं। मित्रश्रेष्ठिन उपाख्यानकथनेन चुधादृष्टपरीषहः सोढव्यइति निरूपणं। जितशत्रोरुपाख्यानकथनेन चारित्रशुद्धिमाहात्म्यकथनं। पाटलीपुत्रनगराधिपतेः नन्दस्य उपाख्यानकथनेन मद्यपानादीनां निन्दितत्वकथनं। राजगृहपरवासस्य उपाख्या-नकथनेन आक्रोशादिरहितेन भवितव्यमितिनिरूपणं। स्कन्धकाचार्य्यस्य उपाख्यानेन जीवब-न्धस्य निन्दनीयत्वकथनं। कृष्णबलदेवसात्यकिप्रभृतीनामुपाख्यानकथनेन अलाभपरीषहकी-र्त्तनं। मथुराधिपतेरुपाख्यानकथनेन रोगपरीषहनिरूपणं। कालिकाचार्य्यादीनामुपाख्यान-कथनेन प्रज्ञादर्शनपरीषहादिकथनं। अथ मनुष्यजन्मनो दुर्ल्लभताकथनव्याजेन काम्पिल्लनग-राधिपतेरुपाख्यानकथनं। तत्र चन्द्रगुप्तादीनामुपाख्यानकथनञ्च। अथ सप्तविधनिह्नवकथन-मुखेन आर्य्यरचितादीनामुपाख्यानकथनं। वैराग्यमाहात्म्यकथनप्रसङ्गेन अगडदत्तादीनामुपा-ख्यानकथनं। धर्म्मार्थिना संयमलाभहेतुकं जीवितं रचणीयमिति कथनमुखेन मूलदेवा-दीनामुपाख्यानकीर्त्तनं। दुःशीलतया नरकमेव गच्छति जीव इति निरूपणं। तत्र पशुपा-लादीनामुपाख्यानकीर्त्तनं। जैनधर्म्ममाहात्म्यकीर्त्तनप्रसङ्गेन द्विमुखनरेन्द्रादीनामुपाख्यानक-थनं। संयमेनैव केवलज्ञानं लभ्यते—इतिकथनप्रसङ्गेन प्रत्येकबुद्धानामुपाख्यानकथनं। गौतमं प्रति महावीरस्य उपदेशकथनं। हरिकेशीकथाकथनं। क्रोध एव सर्व्वधर्म्मशत्रुरिति निरूपणं। तत्र धनसार्थवाहादीनामुपाख्यानकथनं। मोचस्य केवलज्ञानसाध्यताकथनं। तत्र कुमारयोरु-पाख्यानकथनं। भिचामात्रावलम्बनस्य भिचोः सौभाग्यमवश्यम्भावीतिनिरूपणं। तत्र चक्रिण उपाख्यानादिकथनं। ब्रह्मचर्य्यमाहात्म्यकथनमुखेन भरतस्य उपाख्यानकीर्त्तनं। सगरादीना-मुपाख्यानकथनञ्च। संयममाहात्म्यकथनप्रसङ्गेन सनत्कुमारादीनामुपाख्यानकथनं। यथा आत्मनः प्राणाः प्रियतमाः तथा जीवानामपि अतः सर्व्वथा अहिंसायां समाधिर्विधेय इति निरूपणं। तत्र सत्यभामादीनामुपाख्यानकथनं। ध्वंसताचरणप्रत्यवायकथनं। तत्र महा-पद्मचक्रवर्त्त्यादीनामुपाख्यानकथनं। प्रव्रज्याग्रहणमाहात्म्यकथनं। तत्र दशार्णभद्रादीनामुपा-ख्यानकथनं। विशेषतो जैनधर्म्मदीचामाहात्म्यकथनं। तत्र नेमिजिनपार्श्वजिनादीनां विवरणकथनं।

**No. 2800.** राजप्रश्नीयम्। Substance, country-made paper, 11 × 4 inches. Folia, 34. Lines, 16 on a page. Extent, 924 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Incorrect. Mágadhí.

**Rájapraśníya.** Questions and answers on Jain duties. The questions are set by a king named Pradeśi, and the answers are given by a S'ramaṇa of the name of Keśikumára. Author's name not given.

**Beginning** तेणं कालेणं तेणं समएणं आमलकप्पानामनयरे भयवां विहरद्दित्थ-रिद्दत्थिमिच समिद्धा जीवपासाइया दरिसणिज्जा अभि वापडिरूवा—इत्यादि।

**End.** गिरिकं दरमज्जीणे मेहावेहइं सुत्तपड़ि वोहिचताइ नव सुत्ताइं सत्तसं अस तव सुचरिय फलनिव्वाणमग्गेण मणो माणसियं सि खइयं ति परिसेवियं ति।

**Colophon.** इति राजप्रश्नीयं समाप्तं।

विषयः। तत्र प्रदेशिनामा कश्चिद्भूपालः भगवतः केशिकुमारस्य श्रमणस्य समीपे यान् जीवविषयान् प्रश्नान् अकार्षीत्। यानि च तस्मै केशिकुमारश्रमणः गणभृद्व्याकरणान् व्याकृतवान्। यच्च व्याकरणं सम्यक्परिणतिभावतो बोधिमासाद्य श्रामण्यं शुभानुशयोगतः प्रथमे सौधर्म्मनाम्नि नाकिलोके विमानमाधिपत्येन अध्यतिष्ठत्। यथा च विमानाधिपत्यप्राप्त्यनन्तरं सम्यगवधिज्ञानाभोगतः वर्द्धमानस्वामिनं भगवन्तमालोक्य भक्त्यतिशयपरीतचेताः सर्व्वस्वसामग्रीसमेतः तत्रावतीर्य्य भगवतः पुरस्तात् द्वात्रिंशद्विधनाट्यमनरीनृत्यत्। तेन च यथायुष्कं दिवि सुखमनुभूय ततो विश्लिष्य यत्र समागम्य च यथा मुक्तिपदं प्राप। तदेतत् सर्व्वमस्मिन् उपाङ्गे वर्णितं। अत एव राज्ञः प्रश्नमधिकृत्य गुम्फितत्वाद्ग्रन्थोऽयं राजप्रश्नीयेति समाख्यातः।

---

**No. 2801.** राजप्रश्नीयविवृतिः। Substance, country-made paper, 11 × 4 inches. Folia, 61. Lines, 10 on a page. Extent, 1,830 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Generally correct. Sanskrit.

**Rájapraśníya-vivriti.** A Sanskrit gloss on the work described under the next preceding No. By Malayagiri.

**Beginning.** प्रणमत वीरजिनेश्वरचरणयुगं परमपाटलच्छायं।
अधरीकृतनतवासवमुकुटस्थितरत्नचिचक्रं॥
राजप्रश्नीयमहं विवृणोमि यथागमं गुरुनियोगात्॥
तत्र च शक्तिमशक्तिं गुरवो जानन्ति का चिन्ता॥
अथ कस्मादिदमुपाङ्गं राजप्रश्नीयाभिधानमिति उच्यते। — — — — — — — —

— राजप्रश्नेषु भवं राजप्रश्नीयं । अथ कस्याङ्गस्य इदमुपाङ्गं तदुच्यते । सूत्रकृताङ्गस्य । कथं तदुपाङ्गतेति । इत्यादि ।

End. निन्दनानि परोक्षे जुगुप्साभाषणानि + सनानि धिक्मुण्डेत्यादिवाक्यानि । तर्ज्जनानि अङ्गुल्या निःक्षेपपुरःसरं निर्भर्त्सनानि । ताड़नानि कशाघाताः ॥

Colophon. इति मलयगिरिविरचिता राजप्रश्नीयविवृतिः समाप्ता ।

विषयः । सूत्रकृताङ्गाभिधानजैनसूत्रस्य उपाङ्गतया प्रख्यातस्य राजप्रश्नीयाभिधेयस्य सन्दर्भस्य व्याख्यानम् ।

---

**No. 2802.** प्रद्युम्नचरितम् । Substance, country-made paper, 12 × 4 inches. Folia, 192. Lines, 8 on a page. Extent, 6,112 ślokas. Character, Nágara. Date, Sm. 1883. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Generally correct. Sanskrit.

**Pradyumna-charita.** A poem giving a Jain version of the story of Pradyumna, son of Krishṇa. The story is said to have been related by the Jina Vardhamána to S'reṇika, king of Magadha. The work comprises 16 cantos. Contents: I, Introduction. II, Descriptions of the Yadu race, and of the attributes of Krishṇa. III, Nárada's visit to Krishṇa and praise of Neminátha, the Jina, who appears on the scene. Nárada, offended by Satyabhámá, incites Krishṇa to carry away Rukmiṇí. IV, Destruction of S'iśupála, and marriage of Krishṇa with Rukmiṇí. V, Birth of Pradyumna; kidnapping of Pradyumna by a Datya; his miraculous escape and sojourn with Sambarakeśa. VI, The grief of Rukmiṇí. Account of the former lives of Pradyumna. VII, VIII, Pradyumna's acceptance of the Jain religion, in one of his former lives. IX, Nárada informs Pradyumna of his parentage. X, Pradyumna carries away Rukmiṇí, who recognizes him as her son. XI, Pradyumna's war with the Yadus and subsequent reconciliation; his marriage. XII, Story of Garuḍaketu. XIII, Krishṇa overcome by Neminátha in a wrestling match. XIV, A picnic of Neminátha with the ladies of the Yadu race, his marriage, hermitage, Jainism, and preachings. XV, Neminátha's lecture to Balabhadra on Jainism, and the acceptance of Jainism by the eight wives of Pradyumna and their final deliverance. XVI, Asceticism of Pradyumna and others.

This is an amplified version of the work of Mahásena noticed under No. 2623, *ante*, p. 82.

Beginning. श्रीमतिं सन्मतिं नत्वा नेमिनाथं जिनेश्वरं ।
विश्वजेतापि मदनो बोधितुं न शशाक यं॥
वर्द्धमानं जिनं नत्वा वर्द्धमानं सतामिह ।
यद्रूपदर्शनो जातः सहस्रनयनो हरिः ॥
प्रणम्य भारतीं देवीं जिनेन्द्रवदनोद्गतां ।
कृष्णपुत्रस्य चरितं वक्ष्ये सूत्रानुसारतः ॥
यदुक्तञ्चात्र विद्वद्भिर्महसेनादिसूरिभिः ।
तत्कथं शक्यते नूनं मया बालेन भाषितुं ॥
तथापि तत्क्रमाम्भोजप्रणामार्ज्जितपुण्यतः ।
श्रीप्रद्युम्नाभिधं ग्रन्थं प्रवक्ष्यामि श्रमेण हि ॥ इत्यादि ।

End. यावन्मेरुर्महीतले + विदितो यावद्ध्रुवे मण्डलं
यावद्भूवलयः परं ग्रहगणो यावत् सतां चेष्टितं ।
तावन्नन्दतु शास्त्रमेतदवलं श्रीशान्तिचैत्यालये
भक्त्या येन विनिर्म्मितं सुखकरं तस्यास्तु वै सर्व्वदा ॥
यावन्मेरुर्महो यावत् यावच्चन्द्रार्कतारकाः ।
तावन्नन्दत + + नूनं चरित्रं पापनाशनं ॥
चतुःसहस्रसंख्यातः सार्द्धं चाष्टशतैर्युतः ।
भूतले सततं जीवात् श्रीसर्व्वज्ञप्रसादतः ॥

Colophon. इति श्रीप्रद्युम्नचरिते श्रीसोमकीर्त्याचार्य्यविरचितः षोड़शः सर्गः ॥ संवत् १८८३ । इति समाप्तिः ।

विषयः । प्रथमसर्गे,—वर्द्धमानजिनेन्द्रेण सार्द्धं मगधदेशाधिपतेः नाम्ना श्रेणिकस्य संवादकथनं । अथ श्रेणिकस्य प्रार्थनया जिनेन्द्रस्य प्रद्युम्नचरित्रकीर्त्तनं । द्वितीये सर्गे—यदुवंशवर्णनं । श्रीकृष्णस्य विभूतिवर्णनञ्च । तृतीये सर्गे,—जिनधर्म्मनिष्णातस्य नारदस्य श्रीकृष्णस्य पुरतः आकाशमार्गेण आगमनवर्णनं । तत्र नेमिजिनस्य आगमने नारदकृततत्स्तुतिकीर्त्तनं । सत्यभामां प्रति सञ्जातरोषस्य नारदस्य चेष्टया रुक्मिणीहरणार्थं कृष्णबलदेवादीनां कुण्डिलपुरगमनवर्णनञ्च । चतुर्थे सर्गे—शिशुपालवधवर्णनं । श्रीकृष्णेन सह रुक्मिण्याः परिणयादिवर्णनं । सत्यभामाविड़म्बनञ्च । पञ्चमे सर्गे,—प्रद्युम्नस्य जन्मोत्सववर्णनं । दैत्यकृततद्धरणकथनं । दैत्येन शिलायां निक्षिप्तस्यापि प्रद्युम्नस्य जीवनलाभकथनं । मेघकूटजनपदनाथस्य कालसम्बरस्य पुत्रत्वेन तस्य प्रद्युम्नस्य अवस्थितिवर्णनञ्च । षष्ठे सर्गे,—रुक्मिण्याः विलापादिवर्णनं । प्रद्युम्नस्य पूर्व्वजन्मादिवृत्तान्तकीर्त्तनं । अग्निभूतिवायुभूतिप्रभृतीनां स्वर्गगमनविवरणकथनञ्च । सप्तमे अष्टमे च सर्गे,—प्रद्युम्नस्य बहुविधजन्मविवरणकथनप्रसङ्गेन तृतीयजन्मनि मणिभद्रादिनामकथनं, जैनधर्म्मश्रवणं, सौधर्म्मगमनञ्चेति सविस्तरवर्णनं । नवमे सर्गे—नारदेन सह संवा

देन श्रीकृष्णस्यैव तनयत्वमिति प्रतिबोधितस्य प्रद्युम्नस्य सविनयं कालसम्बरस्य पुरतः निजवृत्तान्तकथनपूर्व्वकं विदायप्रार्थनावर्णनं। दशमे सर्गे,—नारदस्य उपदेशेन मातेयमिति विजानतोऽपि विक्रमप्रदर्शनार्थं यदूनां पुरस्तात् प्रद्युम्नस्य रुक्मिणीहरणवृत्तान्तवर्णनं। रुक्मिण्याः पुत्रोऽयमिति प्रद्युम्नं प्रति प्रत्यभिज्ञानकीर्त्तनञ्च। एकादशे सर्गे,—यदुभिः सार्द्धं प्रद्युम्नस्य सङ्कुलयुद्धवर्णनं। अनन्तरं स्वजनसङ्गात् आनन्दोत्सववर्णनं। प्रद्युम्नस्य विवाहोत्सववर्णनञ्च। द्वादशे सर्गे,—प्रद्युम्नस्य पुण्यफलकथनप्रसङ्गेन गरुड़केतोरुपाख्यानकीर्त्तनं। त्रयोदशे सर्गे,—मल्लयुद्धे नेमिनाथात् श्रीकृष्णस्य पराजयवर्णनं। चतुर्द्दशे सर्गे,—एकदा वसन्तसमये कृष्णकामिनीभिः सह नेमिनाथस्य वनविहारादिवर्णनं। नेमिनाथस्य विवाहवर्णनं। वैराग्यकथनं। जैनदीक्षाकथनं। धर्म्मदेशनादिकथनञ्च। पञ्चदशे सर्गे,—बलभद्रस्य पुरतो नेमिनाथस्य जैनधर्म्मतत्त्वकथनं। प्रद्युम्नस्य अष्टमहिषीदीक्षाकीर्त्तनञ्च। षोड़शे सर्गे,—प्रद्युम्नादीनां तपस्यादिवर्णनं। तेषां निर्व्वाणप्राप्तिवर्णनञ्च।

---

**No. 2803.** नमस्कारस्तवव्याख्या, वा परमेष्ठिस्तवव्याख्या, मूलसहिता।
Substance, country-made paper, 10 × 4 inches. Folia, 6. Lines, 18 on a page. Extent, 272 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Text, Mágadhí. Commentary. Sanskrit.

**Namaskárastava-vyákhyá** ALIAS **Parameshṭistava-vyákhyá.** A commentary on a hymn entitled *Namaskárastava,* explaining principally its astrological character. By Jinakírti Súri.

**Beginning.** टीकायाः,—

जिनं विश्वत्रयीवन्द्यमभिवन्द्य विधीयते।
परमेष्ठिस्तवव्याख्या गणितप्रक्रियान्विता॥

तत्रादावभिधेयगर्भां समुचितेष्टदेवतानमस्काररूपमङ्गलप्रतिपादिकां गाथामाह। परेति। परमेष्ठिनः अर्हदादयः, तेषां नमस्कारः श्रुतस्कन्धादिरूपः नवपदाष्टसंपदष्टषष्ठ्यक्षरमयो महामन्त्रः तं भक्त्या—

मूलस्य,—
परमिट्ठिनमक्कारं थुणामि भत्तीइ तन्नवपयाणं।
पच्छरभंग संखा नट्ठ उद्दिट्ठाकहणेन॥ इत्यादि।

**End.** मूलस्य,—
पंचनमक्कारथयं एयं सेयं करंति संजमवि++।
जो+एइलहइ सिरि जिनकित्तिय महिम सिद्दिसुहं॥
टीकायाः,—
ऐहिकपारलौकिकस्वाभिमतार्थसिद्धये यथा श्रीगुर्व्वाम्नायो ध्यातव्यः।

श्रीमत्तपागणनभस्तरणेर्विनेयः श्रीसोमसुन्दरगुरोर्जिनकीर्त्तिसूरिः ॥
स्वोपज्ञपञ्चपरमेष्ठिमहास्तवस्य वृत्तिं यथाज्जलधिनन्दमनुप्रमेऽब्दे ॥

**Colophon.** इति श्रीजिनकीर्त्तिसूरिविरचिता नमस्कारस्तवव्याख्या ।

विषयः । परमेष्ठिस्तवाभिधाननष्टोद्दिष्टादिप्रकरणस्य गणितप्रक्रियाप्रदर्शनपुरःसरं व्याख्यानम् ।

---

**No. 2804.** दशबलकारिका । Substance, foolscap paper, 10 × 3 inches, Folia, 5. Lines, 6 on a page. Extent, 68 ślokas. Character, Nágara. Date, Sm. 1992. Place of deposit, Jápbarganj, Baḍa. Ákhaḍá; Post Naśípura, Zilá Murshidábád, Gopáladása Mahanta, another copy at Zilá Virbhuma; Gopálapura, Vámanadása Kavirája. Appearance, new. Verse. Correct.

**Daśabala-káriká.** The different forms which the same roots assume when conjugated in different classes. By Daśabala.

**Beginning.** ये धातवः सन्ति गणान्तरेषु
वर्णार्थनिर्देशपदैरभिन्नाः ।
विभिन्नशब्दप्रतिपादनार्थं
रूपाणि तेषां समुदाहरिष्ये ॥
भूवादिषूभयपदी बुधबोधनेऽस्ति
रूपद्वयं बुध्यति बोधते च ।
दैवादिकोऽपि स बुधिः कथितोऽनुदात्तो
रूपं तृतीयमपि बुध्यत इत्यमुच ॥ इत्यादि ।

**End.** प्रबलगुणनिकायैर्नाहता सर्व्वदै +
दशबलकृतिरेषा धातुरूपैकसारा ।
विरचितपदभावा शास्त्र + + कतारा
जयति विषमकाव्ये संशयोच्छेदहेतुः ॥

**Colophon.** इति दशबलकारिका समाप्ता । शुभमस्तु सम्वत् १९९२ ।

विषयः । एकरूपार्थानां धातूनां गणभेदेन रूपभेदादिनिरूपणं ।

---

**No. 2805.** स्तोत्रभाष्यम् । Substance, country-made paper, 9 × 4 inches. Folia, 151. Lines, 9 on a page. Extent, 3,010 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharganj, Baḍa. Ákhaḍá, Post Naśípura, Zillá Murshidábád, Gopaladása Mahanta. Appearance, old. Prose. Correct.

**Stotra-bháshya.** A gloss on Yámuna A'chárya's hymn in praise of the Yamuná River. By Veñkaṭanátha.

**Beginning.** श्रीमान् वेङ्कटनाथार्य्यः कवितार्किककेशरी ।
वेदान्ताचार्य्यवर्य्यो मे सन्निधत्तां सदा हृदि ॥
श्रीमद्‌यामुनमुनिना नाथसहायेन नाथवानस्मि ।
यद्वदनचन्द्रजनिता स्तोत्रसुधा भवति सुमनसां भोग्या ॥
प्राप्यप्रापकभूते भगवति यामुनमुनेरयं प्रस्तुतः ।
दुरितानि हरति जगतां + + नु सन्धानसिन्धुपरिवाहः ॥
विमलममृतोज्ज्वलरसं विगाह्य निविशति वेङ्कटेशकविः ।
यदुपतिचरणार्हमिदं यमनातीर्थमिव यामुनस्तोत्रं ॥
यद्यप्यत्र न सन्दृष्टं परार्थप्रतिपादनं ।
तथापि तादृग्रूपत्वं परसङ्कल्पतः स्थितं ॥
स्तोत्ररत्नमिदं न्यस्तमाचार्य्यस्तुतिसम्पुटे ।
निधानमिव निःसीमं निविशन्ति विपश्चितः ॥ इत्यादि ।

**End.** स्तकमिह हरितत्त्वं यामुनस्तोत्रहत्त्या
व्यष्टणुत निगमान्ताचार्य्यको वेङ्कटेशः ॥
स्वगषि जगति सद्भिर्यैः समस्तासहस्रैः
कविकथकमृगेन्द्रः सर्व्वतन्त्रस्वतन्त्रः ॥

**Colophon.** इति श्रीकवितार्किकसिंहस्य सर्व्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य कृतिषु व्याख्यासु स्तोत्रभाष्यं समाप्तं ।

विषयः । यामुनाचार्य्यप्रणीतयामुनस्तोत्रस्य व्याख्यानं ।

---

**No. 2806.** प्रदीपिका । Substance, country-made paper, 9 × 3 inches. Folia, 312. Lines, 8 on a page. Extent, 9,952 ślokas. Character, Nágara. Date, Sᴍ. 1766. Place of deposit, Jápharaganj, Baḍa. A'khadá, Post Naśípura, Zillá Mursidábád, Gopáladása Mohanta. Appearance, old. Prose. Correct.

**Pradípiká.** A commentary on Bháravi's epic poem, the *Kirátárjuníya.* By Dharmavijaya Gaṇi.

**Beginning** स्वस्ति श्रीकैरविणीकैरवबन्धुः समस्तजनबन्धुः ।
करुणासुधैकसिन्धुः श्रीमान् वीरो जिनो जयतु ॥
तपगणगनभोदिनेशो जज्ञे श्रीविजयदानसूरिर्यैः ।

वसतिः शशधरमहसां यशसां पयसामिव पयोधिः॥
श्रीराजविमलनाम्नस्तस्य विनेयस्य वाचकवरस्य।
शिष्यः सद्गुणसद्मं वाचकमुनिविजयनामासीत्॥
वैराग्यसुभगमूर्त्तिस्त्रिभुवनविख्यातकीर्त्तिविस्फूर्त्तिः।
श्रीदेवविजयवाचकवृषभस्तस्याभवच्छिष्यः॥
यद्गुणगणनस्य मानं + तस्य पारे परार्द्धमसमर्थः।
कर्त्तुं वाचस्पतिरपि वाचस्पत्यं जहाति स्म॥
प्रणिपत्य तस्य सुगुरोः श्रीविजयविधायकचरणयुगलं।
कुर्व्वे किरातकाव्यप्रदीपिकां बालबोधाय।

इहालङ्कारालङ्कृतवचनरचनाचतुरः + + भारविनामाकविः + + ——*——
काव्यमुखं समुपन्यस्यति श्रिय इति।

**End.** तेषामशेषसमयार्थविदां वराणां
शिष्येण धर्म्मविजयेन विनिर्म्मितायां
इत्तौ सदर्थपदभाजिकिरातकाव्य-
स्याष्टादशः परिसमाप्तिमवाप सर्गः॥

**Colophon.** इति महोपाध्यायश्रीश्रीदेवविजयगणिपादपयोजचञ्चरीकश्रीधर्म्मविजयगणिविरचितायां श्रीभारविकृतस्य किरातार्ज्जुनीयनाम्नो महाकाव्यस्य प्रदीपिकाभिधानायां इत्तौ घसलाभनामाष्टादशः सर्गः समाप्तः। संवत् १७६६।

विषयः। भारविकृतकिरातार्ज्जुनीयनामकमहाकाव्यस्य व्याख्यानं।

---

**No. 2807.** तत्त्वत्रयचलुकार्थसङ्ग्रहः। Substance, country-made paper, 9 × 4 inches. Folia, 32. Lines, 6 on a page. Extent, 395 ślokas. Character, Nágara. Date, Sm. 1828. Place of deposit, Jápharaganj, Baḍa. Ákhaḍá, Post Naśípura, Zillá Mursidábád Gopáladása Mahanta. Appearance, fresh. Prose. Correct.

**Tattva-traya-chulukártha-saṅgraha.** An essay on the three categories, matter, life, and soul, from a Vedánta standpoint. By Varadanátha *alias* Vedántácharya.

**Beginning.** श्रीमत्त्रय्यन्तसिद्धान्तगुरुपुञ्चेण वर्ण्यते।
सत्त्वोत्तरप्रसादार्थं तत्त्वत्रयनिरूपणं॥
यतिपतिमतनिष्ठान् यामुनार्य्यप्रबन्धै-
रधिगतपरमार्थानास्तिकान् प्रीणयिष्ठाम्।

चिद्‌चिद्‌धिपतीनां चिन्तनाय प्रबन्धं
व्यतनुत वरदार्य्यः सर्व्वतन्त्रस्वतन्त्रः ॥

श्रीमतो नारायणस्य चरणावुपायत्वेनोपेयत्वेन चाधिगच्छतां प्रथमं प्रकृत्यात्मभ्रमादिनिवृत्त्यर्थं तत्त्वत्रयनिरूपणं कर्त्तव्यमेव । इत्यादि ।

**End.** चिद्‌चिदीश्वरतत्त्वनिरूपणं
वरदनायकसूरिनिगुम्फितं ।
परमपूरुषभक्तिपरायणाः
प्रतिपदं परिपश्यत सूरयः ॥

**Colophon.** इति श्रीनिखिलकविताकिंकचूड़ामणिना सर्व्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनाथापरनाम्ना वेदान्ताचार्य्येण विरचितग्रन्थेषु तत्त्वत्रयचुलुकार्थसङ्ग्रहः समाप्तः। संवत् १८९८ ।

विषयः। अचेतनं जीव ईश्वरश्चेति तत्त्वत्रयं। तच्च सामान्यतो द्विविधं। द्रव्यमद्रव्यञ्च। द्रव्यञ्च जड़ाजड़भेदेन द्विविधं। जड़ं पुनरव्यक्तं कालश्चेति द्विधा भवति। अजड़ञ्च प्रत्यक् पराक् चेति द्विविधं। ईश्वरः जीवश्चेति प्रत्यग्वस्तुद्वैविध्यं। पराग्वस्तु पुनः धर्म्मभूतज्ञानं नित्यविभूतिश्चेति द्वैविध्यमधिगच्छति। द्रव्यपदार्थाद्भिन्नं सर्व्वमद्रव्यमिति विभागकथनं। क्रमेण अव्यक्तादीनां स्वरूपादिकीर्त्तनं। अव्यक्तमहदादीनामुत्पत्तिकथनं। एतेषां महदादीनामुत्पत्तिसमये वैशेषिकादिवद्‌द्रव्यान्तरोत्पत्तिर्नास्ति अनुपलम्भात्। केवलं तालीपलाशताटङ्कन्यायेन अवस्थान्तरापत्तिरेव भवति। अतः पूर्व्वावस्थाविशेषसम्बन्धमात्रेण कार्य्यकारणभेदव्यवहार इति निरूपणं। शुद्धसत्त्वरूपस्य भगवतः ज्ञानात्मकत्वकथनं। जीवादीनां लक्षणकथनं। भगवान् नारायणः सूक्ष्मचिद्‌चिद्विशिष्टवेशेन जगदुपादानमितिविशिष्टाद्वैतवादस्वरूपकथनं। मोक्षोपायादिनिरूपणञ्च ।

---

**No. 2808.** हारितस्मृतिः। Substance, country-made paper, 11 × 4 inches. Folia, 112. Lines, 10 on a page. Extent, 3,191 ślokas. Character, Nágara, Date, ? Place of deposit, Jápharagaṉja, Baḍa Ákhaḍá, Post Nasípur, Zillá Murshidabád, Gopáladása Mahanta. Appearance, fresh. Verse. Incorrect.

**Hárita Smriti.** The Institutes of Hindu law expounded by Hárita at the request of Ambarísha. Unlike the Sañhitás of Manu, Yájṉavalkya, Nárada and others, it is intensely sectarial, and is devoted to the worship of Vishṇu and to the duties of Vaishṇavas. This work is singular, too, as being totally different from the *Hárita Smṛiti* published

severally by Bhavánicharaṇa Vandyopádhyáya, and the Serampur Missionaries. The latter is strictly in keeping with the character of the other original Smṛiti texts, and is the one which is largely quoted by the authors of law digests. The work under notice is apparently spurious.

**Beginning.** श्रीमते रामानुजाय नमः।
यस्य द्विरदवक्त्राद्याः पारिषद्याः परःशतं।
विघ्नं निघ्नन्ति भजतां विष्वक्सेनं तमाश्रये॥
हरिरुवाच।
अम्बरीषस्ततो गत्वा हारीतस्याश्रमं नृपः।
ववन्दे तं महात्मानं बालार्कसदृशप्रभं॥
संपृष्टकुशलस्तेन पूजितः परमासने।
उपविष्टस्ततो विप्रमुवाच नृपनन्दनः॥
भगवन् सर्व्वधर्म्मज्ञ सर्व्ववेदविदां वर।
पृच्छामि त्वां महाभाग परमं धर्म्ममव्ययं॥
कथं वर्णाश्रमाणान्तु नित्यनैमित्तिकी क्रिया।
कर्त्तव्या मुनिशार्द्दूल नारीणाञ्च नृपस्य च॥ इत्यादि।

**End.** परमं वैष्णवं शास्त्रमेतत् + + वमुत्तमं।
ज्ञात्वैव परमैकान्ती पूजयेद्विष्णुमीश्वरं॥

**Colophon.** इति हारीतस्मृतौ विशिष्टधर्म्मशास्त्रे वृत्यधिकारो नाम अष्टमोऽध्यायः। शुभमस्तु। समाप्तोऽयं ग्रन्थः।

विषयः। अम्बरीषेण सह हारीतस्य संवादकथनं। केवलं दास्यमेव भगवत्प्राप्त्युपाय इति निरूपणं। दास्यलक्षणकथनं। विप्रस्य तप्तमुद्राधारणावश्यकताकीर्त्तनं। पञ्चसंस्कारकीर्त्तनं। तत्र प्रथमतः अङ्गविशेषे चक्रादिधारणविधिकथनं। आचार्य्यलक्षणं। ऊर्द्धपुण्ड्रधारणावश्यकता। तद्धारणविधिकथनं। पुण्ड्रधारणविधिकथनं। नामकरणविधिकथनं। मन्त्रसंस्कारविधिकथनं। मन्त्रयोगविधिकथनं। तत्र सर्व्वेषामधिकारकथनं। प्राणायामविधिकथनं। प्रणवमाहात्म्यादिकथनं। व्याहृतीनामुत्पत्त्यादिकथनं। नारायणशब्दनिर्व्वचनं। न्यासविधिकथनं। अष्टाक्षरद्वादशाक्षरषड्क्षरादिमन्त्रनिरूपणं। एवं वैष्णवमन्त्रकथनपूर्व्वकं राघवकृष्णनृसिंहादिमन्त्रकथनं। तत्र तत्र ध्यानादिकथनञ्च। सामान्यतः विष्णोराराधनविधिकथनं। आचमनविधिकथनं। प्रस्तुताप्रस्तुतभेदात् क्रमेण दर्भकुशनामधेयत्वकथनं। सन्ध्योपासनविधिकथनं। भगवदाराधनयोग्यपुष्पधूपदीपनैवेद्यादिनिरूपणं। सङ्करजातीनामुत्पत्तिनिरूपणं। दानप्रतिग्रहविधिकथनं। विप्रस्य वृत्तिनिरूपणं। आपद्यपि सेवावाणिज्यादिवर्ज्जं

नावश्यकताकीर्त्तनं। महाभागवतभक्तलक्षणं। सर्व्वेषां वर्णानां वृत्तिनिरूपणं। राजधर्म्मकथनं। दण्डनीत्यादिकथनं। सत्यालक्षणं। विद्यालक्षणं। ऋणदानादिविधिकथनं। दायाधिकार्य्यादिनिरूपणं। परमधर्म्मकथनं। पाषण्डलक्षणं। हरिं विहाय इतरदेवार्च्चने लोकायतिकत्वमितिकथनं। विकर्म्मस्थ-नास्तिकादिलक्षणं। गार्हस्थ्यब्रह्मचर्य्य-वानप्रस्थसन्न्यासधर्म्मनिरूपणं। भगवत्प्रसादेन देवानां पितॄणाञ्च पूजनावश्यकतानिरूपणं। वैष्णवस्य अन्यदेवतानैवेद्यादिभोजनवर्ज्जनावश्यकताकथनं। जलाग्निहृदयादिषु हरिपूजनस्थानकथनं। होमविधिकथनं। द्विजानामेव शालग्रामशिलापूजायामधिकार इति निरूपणादिकं। वर्णविशेषे भगवतो मूर्त्तिविशेषपूजानियमकथनं। षोड़शोपचारप्रक्रियादिकथनं। आतिथ्याविधानकथनं। भोजनविधिकथनं। कार्त्तिकमासे विष्ण्वर्च्चनविधिकथनं। एकादश्यादिव्रतविधिकथनं। संक्रान्तौ ग्रहणादौ च हरिपूजादिविधिकथनं। जन्माष्टमीविधिकथनं। एवं श्रीरामवामनादिजन्मतिथिषु पूजाविधिकीर्त्तनं। महोत्सवानुष्ठानकर्त्तव्यताकथनं। महोत्सवविधिकथनं। नित्योत्सवविधिकथनं। वैष्णवस्य और्द्ध्वदेहिकक्रियाविधानं। तत्र नारायणबलिविधानकथनञ्च। महापातकोपपातकादिनिरूपणं। प्रायश्चित्तविधिकथनं। भगवत्प्रतिमाया अमेध्यादिस्पर्शे अभिषेकादिविधिकीर्त्तनं। हरिनारायणेष्टिविधिकीर्त्तनं। वासुदेवेष्टिविधिकथनं। वैष्णवेष्टिविधिकथनं। वैयूहेष्टिविधिकथनं। एवं वैभवी-पार्थी-सौदर्शनीप्रभृतीनामिष्टीनां विधानकथनञ्च। विशेषेण विष्णुपूजाविधिकथनप्रसङ्गेन प्रातःकृत्यादिनिरूपणं। तत्र शौचादौ वैष्णवानां मन्त्रविशेषकथनं। स्नानतर्पणादिविधिकीर्त्तनं। भूतबलिविधिः। नारीणां नित्यकृत्यविधानकथनं। तत्र दन्तधावनमङ्गलस्नानादिविधिकथनं। गृहकर्म्मविधिकथनं। अर्च्चनमन्त्रपठनध्यानादिनवविधेज्यानिरूपणं। वेदोदितं धर्म्ममवज्ञाय भगवदर्च्चने दोषकीर्त्तनं। साध्वीकृत्यनिरूपणं। सहमरणानुमरणविधिकथनं। विधवाकृत्यकीर्त्तनं। मृतपत्नीकस्य अग्निहोत्रिणः कुशमयीं पत्नीं विधाय पञ्चयज्ञाद्यनुष्ठानावश्यकताकथनं। गृहस्थस्य वनस्थस्य च आश्रमहीनतया अवस्थाने दोषकथनं। मन्त्रदीक्षाविधिः। विष्णुपूजानन्तरं आवरणरूपेण देवतान्तरार्च्चनस्य विधेयताकथनं। वैष्णवकर्त्तव्यनिरूपणञ्च।

---

**No. 2809.** नैम्बव्रतसिद्धान्तज्योत्स्ना। Substance, country-made paper, 11 × 5 inches. Folia, 70. Lines, 7 on a page. Extent, 1,242 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharaganja, Baḍa A'khaḍá, Post Nasípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose and verse. Correct.

**Naimbavrata-siddhánta-jyotsná.** The fasts and festivals appropriate for Vaishṇavas as enjoined by Nimbárka. By Dhaniráma.

**Beginning.** श्रीमतीं गौरवर्णाङ्गीं श्यामां श्यामललामिकां ।
श्यामाङ्गभूषणं वन्दे कृष्णं नैम्ब्यसुखाश्रयं ॥
नमस्कृत्य जगद्वन्द्यं निम्बादित्यं जगद्गुरुं ।
पूर्व्वसिद्धान्तवाक्येन वर्षकृत्यं प्रतन्यते ॥

इह खलु प्रचण्डोद्दण्डकालोत्प्रेक्षणनष्टव + विविधमनोरथानां शीतोष्णादिद्वन्द्वप्रचुर-बहुलतरश्रमजनिर्व्वृति + + द्वेजितचेतसां श्रीमन्निम्बार्कसम्प्रदायस्थो दुस्तर + + दिकृता-र्थपञ्चकादिनिबन्धानां बहुलतरत्वात् तल्लेखनविचारविधिपरमालसानां सुवैष्णवानां हिताय निर्णीतसिद्धान्तवाक्येन वर्षकृत्यं विशदयति । इत्यादि ।

**End.** कृष्णक्रीड़ान्वितां लीलां यः करोति नृपोत्तम ।
स याति परमाख्यानं स्थानं द्रष्टानुमोदकः ॥
सुधियः क्षम्यतां सन्तो मम धाष्ट कृपालवः ।
सङ्गृहः स्वप्रबोधार्थं कृतो नानानिबन्धतः ॥

**Colophon.** इति श्रीमत्परमवैष्णवाचार्य्यश्रीमन्निम्बादित्यमतानुयायिश्रीमत्तुलाशर्मी-भिधाविदितचरणचिह्नकेन धनीरामेण कृतायां नैम्ब्यव्रतसिद्धान्तज्योत्स्नायां द्वादशमासव्रतो-त्सवविशेषविधिर्नाम द्वितीयोल्लासः सम्पूर्णः ।

विषयः । १प्रथमे उल्लासे,—वैष्णवलक्षणं । वैष्णवैस्तु सदाचारोक्तविधिना व्रताद्यनुष्ठान-कर्त्तव्यमिति सदाचारनिरूपणं । व्रतानुष्ठानविधिर्हि द्विविधः । पूर्व्वविद्धाचरणरूपः उत्तरवि-द्धाचरणरूपश्च । तत्र सर्व्वैः वैष्णवैः पूर्व्वस्त्याज्यः उत्तरो ग्राह्य इति निरूपणं । एकादशीव्रतवि-धिनिर्णयः । तत्र स्पर्श-सङ्ग-शल्यवेधभेदेन दशमीवेधस्य चतुर्व्विधत्वनिरूपणं । हरिवासरल-क्षणं । उन्मीलन्याद्यष्टविधमहाद्वादशीनिरूपणं । उपवासदिने भगवत्प्रसादभोजनादिनिषेध-कीर्त्तनं । एकादशीदिने श्राद्धादिनिषेधकथनं । हविष्यान्ननिरूपणं । दशमीकृत्यकथनं । एका-दशीकृत्यनिरूपणं । उपवासस्वरूपादिकथनं । द्वादशीकृत्यनिरूपणं ।

२ये उल्लासे,—कार्त्तिकमासकृत्यनिरूपणं । तत्र दीपदानादिविधिः । परान्नादिवर्ज्जना-वश्यकताकथनं । शौचविध्यादिकथनं । स्नानादिविधिकथनं । कृष्णत्रयोदश्यां सन्ध्याकाले धर्म-राजाय दीपदानविधिकथनं । कृष्णचतुर्दशीकृत्यनिरूपणं । अमावस्याकृत्यनिरूपणं । निम्बा-र्कानुयायिनां विशेषकृत्यकथनं । उत्थानद्वादशीकृत्यं । तप्तमुद्राधारणविधिः । मार्गशीर्षकृत्य-निरूपणं । तत्र महोत्सवविधिकथनं । पौषकृत्यनिरूपणं । माघकृत्यनिरूपणं । तत्र स्नानविधि-कीर्त्तनं । तिलद्वादशीकथनं । अर्द्धोदययोगकथनं । भीष्मतर्पणं । वसन्तरागेण सङ्गीतालापवि-धिः । फाल्गुनमासकृत्यनिरूपणं । तत्र शिवरात्रिव्रतविधिः । दोलोत्सवविधिः । चैत्रकृत्यनि-रूपणं । तत्र कृष्णप्रतिपद्यपि दोलोत्सवविधिकथनं । वारुणीविधिः । रामनवमी । पुष्पदोलो-

त्सवविधिः। वैशाखकृत्यं। शुक्लतृतीयायां परशुरामावतरणविधिः। चन्दनोत्सवविधिः। चतुर्दश्यां नृसिंहावतरणविधिः। ज्यैष्ठकृत्यं। दशहराविधिः। स्नानयात्राविधिः। आषाढ़कृत्यं। रथयात्राविधिः। शयनोत्सवविधिः। पौर्णमास्यां गुरुपूजाविधिः। श्रावणकृत्यकथनं। तत्र दोलोत्सवविधिः। पवित्रारोपणविधिः। भाद्रकृत्यं। जन्माष्टमीविधिः। राधाष्टमीकृत्यं। कटिदानविधानं। वामनोत्सवविधिः। अनन्तोत्सवविधिः। आश्विनकृत्यनिरूपणं। अपरपक्षश्राद्धविधिः। शुक्लसप्तम्यां सरस्वतीस्थापनविधिकीर्त्तनं। विजयादशमीकृत्यं। पूर्णिमायां रासोत्सवविधानकीर्त्तनञ्च।

---

**No. 2810.** भरद्वाजसंहिताटीका। Substance, country-made paper, 10 × 4 inches. Folia, 68. Lines, 12 on a page. Extent, 3,025 ślokas. Character, Nágara. Date, Sm. 1833. Place of deposit, Jápharaganja, Baḍa Ákhaḍá, Post Nasípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, old. Prose. Correct.

**Bharadvája-sañhitá-ṭíká.** A commentary on the Bharadvája Sañhitá. The name of the author is not given. It is a treatise on emancipation through Yoga observances.

**Beginning.** रङ्गेश्वरं नमस्कृत्य मुनिं सुदर्शनं तथा।
रामानुजं वेङ्कटञ्च श्रीनिवासं समाश्रये॥

अथ तत्र भगवान् भरद्वाजो महामुनिः संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनेच्छया सकलवेदान्तेषु प्रतिपन्नं न्यासाख्यं योगं सकलधर्मोपदेशानन्तरं उपनिषत्कल्पेन संहिताशेषेण उपादिशत्। तत्र सम्यगुपसन्नानां शिष्याणां महर्षीणाञ्च प्रश्नकालप्रतीक्षाणां तादृशोपायश्रवणकौतूहलवतां प्रश्नश्लोकोऽयं।

श्रुत्वा तु सकलान् धर्मान् सिद्धिमेषाञ्च शाश्वतीं।
भूय एव मुनिश्रेष्ठमिदमूचुर्महर्षयः॥

इत्याद्यः श्लोकः। धर्मशब्दः अलौकिकश्रेयःसाधनपरः॥ इत्यादि।

**End.** इति सन्तोऽनुभूयेमामनुरूपामिहात्मनः।
परत्र चानुमोदन्ते परमेण विपश्चिता॥

**Colophon.** इति श्रीभरद्वाजसंहितायाः टीकायां चतुर्थोऽध्यायः। संवत् १८३३।

विषयः। भरद्वाजसंहिताया व्याख्यानं।

---

**No. 2811.** दीपिकाप्रकाशः। Substance, country-made yellow paper, 9 × 3¼ inches. Folia, 240. Lines, 8 on a page. Extent, 4,660 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharaganja, Baḍa Ákhaḍá, Post Nasípur, Zillá Murshidábad, Gopáladása Mahanta. Appearance, new. Prose. Correct.

**Dípiká-prakáśa.** A gloss on a commentary called *Dípiká* on the Vaiśeshika treatise called *Tarka Saṅgraha.* By Ráya Narasiṅha Paṇḍita. Hall's Contributions, pp. 68, 69.

**Beginning.** वन्दे रामानुजमुनिं वन्दारुजनकल्पकं।
अनन्तसरसीतीरदिव्यनित्यकुटुम्बिनं॥
ध्यात्वा श्रीभाट्टपादाब्जे दीपिकायाः प्रकाशिका।
श्रीरायनरसिंहेन पण्डितेन चिकीर्ष्यते॥

तच प्रारिप्सितग्रन्थविरामविरोधिविघ्नव्यूहविध्वंसनविचक्षणां विश्वनाथादिविनतिं शिष्यशिक्षार्थमादौ निबध्य शिष्यावधानाय प्रारिप्सितं प्रतिजानीते विश्वेश्वरमित्यादिना। विश्वस्य प्रपञ्चस्य ईश्वरं स्रष्टादिकर्त्तारमित्यर्थः। एतेन ईश्वरे अनुमानप्रमाणं सूचितं। तथाहि कार्य्यं कृतिजन्यं कार्य्यत्वात्। घटवदित्यादि।

**End.** तद्घटितरजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वरूपाप्रमात्वविषयकत्वस्य सुतरामसम्भवादिति दिक्।

**Colophon.** इति श्रीरायनरसिंहपण्डितविरचिते दीपिकाप्रकाशे शब्दपरिच्छेदः समाप्तः।

**विषयः।** तर्कसङ्ग्रहाभिधानवैशेषिकप्रकरणग्रन्थस्य दीपिकानाम्नी या टीका, तस्या व्याख्यानं॥

---

**No. 2812.** विरोधपरिहारः। Substance, country-made paper, 10 × 4 inches. Folia, 100. Lines, 7 on a page. Extent, 1,418 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharaganja, Baḍa Ákhaḍá, Post Nasípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose. Correct.

**Virodha-parihára.** Reconciliations of the different Vaishṇava theories regarding emancipation. By Vardácharya.

**Beginning.** श्रीमद्वेङ्कटनाथार्य्यनन्दनान् नन्दयाम्यहं।
शेषशायिपदाम्भोजशेषत्वज्ञाननिर्मलान्॥

आविष्कृतः श्रुतिगणैरविरोधवृत्त्या
काले कदा विरचयन् रजनौं दिवापि ।
भक्तं भुजङ्गमविहङ्गमभूपतिभ्यां
पादाम्बुजं दिशतु पाण्डवसारथिर्मे ॥

अहं खलु — — वरदाचार्य्यैः श्रीमद्वेदान्ताचार्य्यैरस्मत्तातपादैरगस्त्यभाषया प्रणीतम-ध्यात्मविद्भिरवधार्य्यं रहस्यत्रयसारार्थं विरोधपरिहारं — — — संस्कृतभाषया सम्यगनुकथ-यामि। तथा हि मुमुक्षूणामवश्यं ज्ञातव्येष्वर्थेषु प्रतीयमानानां विरोधानामप्रशमने—"ज्ञानेन-हीनः पशुभिः समान" इत्यवस्था भवेदित्यादि ।

End. मुक्तिं शिष्यकरस्थयामि मुरभिद्भक्तिं व्यवस्थापये तद्भक्तेषु च कारयामि नियतां भक्तिं समस्तं जनं। राजन्यानपि रञ्जयामि समये रामानुजार्य्योक्तिभिः सार्व्वारीनपि मोहयामि विजयी धिक्चर्करीमित्थितौ ॥

Colophon. इति विरोधपरिहारः समाप्तः ।

विषयः । ननु अनादिकालानुवृत्तसंसारदुःखसहितान् जीवान् सर्व्वज्ञत्वादिगुणसद्भावे-ऽपि अनुद्धरन् कथमीश्वरः सर्व्वरक्षक इति चेन्न द्विविधं खलु भगवतः सर्व्वज्ञत्वं । सर्व्वविषयस-ृष्ट्यादिसंरक्षणरूपमेकं नित्यं निरपेक्षं संसारिविषयेऽपि अनिष्टनिवारणादिरूपमपरन्तु कादा-चित्कं किञ्चिद्व्याजसापेक्षं । अतः सर्व्वक्षेत्रज्ञविषयानिष्टवारणादिरूपरक्षणयोग्यत्वस्य अनादि-सिद्धत्वात् भगवतः सर्व्वरक्षकत्वमुपपन्नमिति निरूपणं । स्वतःसिद्धसर्व्वैश्वर्य्यविशिष्टत्वमेव ईश्व-रस्य सर्व्वोत्कर्षनिदानमितिप्रमाणतर्काभ्यां निर्गुणवादखण्डनं । मुक्तावस्थायामपि जीवानामी-श्वरपारतन्त्र्यमितिनिरूपणं । भगवद्दासत्वस्वरूपनिरूपणं । जीवेश्वरयोरुभयोरपि विभुत्वमणु-त्वञ्च प्रमाणेषु दृश्यते तत्र कथं जीवस्यैवाणुत्वं ईश्वरस्य विभुत्वमितिनियम उपपद्यते-इत्यत्रसमा-धानकथनं । जीवविभूत्ववादादिनिरसनं । एकजीववादनिरसनञ्च। स्वतन्त्रः कारुणिक ईश्वरः स्वगुणेनावतारदशायामाश्रितार्थं स्वयमज्ञानदुःखादिकं सर्व्वस्य उत्पाद्य परार्थमेवानुभवतीति-तदभिनयमात्रमेवेतिनिरूपणं । जीवस्य ज्ञानस्वरूपत्वे ज्ञातृत्ववादानामौपचारिकत्वमेव स्यात् । न खलु धर्मभूतस्य ज्ञानस्वरूपस्य ज्ञातृत्वमुपपद्यते इति शङ्कानिरसनं । विवेकिनामपि विहितप-रित्यागे निषिद्धानुष्ठाने च भगवत्प्रयुक्तकारुणत्वखञ्जत्वाद्यल्पतरदण्डोपलम्भाच्च राजाज्ञानुपाल-कराजपुत्रन्यायेन यावच्छरीरपातं भगवदाज्ञानुपालनं कर्त्तव्यमेवेति प्रतिपादनं । यस्य हि यत् कर्म्म येनैव प्रकारेण भगवता विधीयते तस्य तु तत् कर्म्म तेनैव प्रकारेण अनुष्ठेयमिति भगवल्लक्ष्मणाचार्य्यसिद्धान्तवेदिनां तत्सम्प्रदायघण्टापथसार्थवाहकानां प्राचामाचार्य्याणां निष्क-ण्टको नीतिपथः । अत एव हि लोकेऽपि भागवतोत्तमैर्वर्णाश्रम-गोत्रप्रवरनियमेनैव सर्व्वाण्यपि कर्म्माणि विभज्यैवानुष्ठेयानीतिनिरूपणं । ज्ञानस्वरूपतया ज्ञानगुणकतया च प्रमाणप्रसिद्ध-स्यापि जीवस्य ज्ञानोत्पत्तिविनाशयोः प्रत्यक्षसिद्धत्वात् ज्ञाननित्यत्ववादो न घटते—इत्यत्र

समाधानकीर्त्तनं। स्वस्वरूपाविर्भावपूर्व्वकपरमात्मप्राप्तिरूपपरिपूर्णभगवदनुभवरसपरिवाहरूप-भगवत्कैङ्कर्य्यप्राप्तिरेव साक्षान्मोक्ष इति निरूपणं। कैङ्कर्य्यस्वरूपादिविवेचनं। भगवतो भक्ता-धीनत्वनिरूपणं। नारायणशब्दनिर्व्वचनं। भगवतः सर्व्वव्यापकत्वनिरूपणं। इदानीन्तनलीला-रसस्य पूर्व्वमविद्यमानत्वाद् भगवतोऽनवाप्तकामत्वमितिशङ्कानिरसनं। भगवदनुग्रहनिग्रह-योः स्वरूपादिविवेचनं। पूर्व्वपूर्व्वकर्म्मानुरोधेन भगवत्प्रेरित एव जीवः सर्व्वत्र पापेषु पुण्येषु च प्रवर्त्तते न तु स्वयमेवेतिनिरूपणं। शास्त्रेषु भक्तिप्रपत्त्योः साधारण्येन मोक्षोपायतया विधाने सत्यपि अनुष्ठानदशायामात्यन्तिकवैषम्यप्रदर्शनपूर्व्वकं तयोः स्वरूपादिविवेचनं। मुक्तानामव-स्थादिनिरूपणं। सायुज्यमेव साक्षान्मोक्षः, सालोक्यादौ तु तद्वचनमौपचारिकमितिनिरूपणं। मूलमन्त्रशरणागतिमन्त्रयोः विरोधभञ्जनं। भक्तियोगादिनिरूपणं।

---

**No. 2813.** गहनार्थप्रकाशिका। Substance, country-made paper, 12 × 3½ inches. Folia, 142. Lines, 10 on a page. Extent, 5,286 ślokas. Character, Maithilí. Date, Sk. 1770. Place of deposit, Jápharaganja, Baḍa A'khaḍá, Post Nasípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose. Correct.

**Gahanártha-prakáśiká.** A gloss on the Súrya-siddhánta, a treatise on astronomy. By Viśvanátha Dáivajṉa, son of Divákara Daivajṉa.

**Beginning.** यदर्च्चनाद् + + महेश्वरोऽपि कार्य्येषु धत्ते विभुतां प्रभावात्।
तं विघ्नविच्छेदकरं गणेशं सिन्दूरवर्णं सततं नमामि॥
स्वात्मानुरागविभवेन समस्तलोक-
मारञ्जयन् बुधगणस्पृहणीयमूर्त्तिः।
सद्वृत्तादिरमणीयगुणाभिरामो
रामो बभूव गणकावलिभालरत्नं।
अभ्यासेन सदैव जैमिनिगिरां वाचा महत्यागतो
व्याख्यानेन च भट्टतामभिलषामाचार्य्यतामावहन्।
भट्टाचार्य्य इति प्रगीतमहिमा दैवज्ञचूडामणे-
रामाद्राविर्बभूव + + सदृशः सोमः समुद्रादिव॥
— — — — — — — ।
तस्यानुजः सकलशास्त्रसरोजसूर्य्यः
कन्दर्पकेलिकमनीयशरीरकान्तिः।

आसीदसीमगुणदुग्धसमुद्रतुल्यः
श्रीकेशवः श्रुतिविलोचनलोचनश्रीः ॥
तस्यानुजो गणितशास्त्रविचारचित्तः
श्रीविश्वनाथचरणाम्बुजदत्तचित्तः ।
नत्वा परापरगुरूनथ विश्वनाथः
सूर्य्योक्तभावमधुना विशदीकरोति ॥
अमलगणकविद्योद्दामसद्ग्रन्थकर्त्ता
द्विजकुलतिलकोऽयं विश्वनाथाभिधानः ॥
रचयति बहु + + सूर्य्यसिद्धान्तटीकां
विशदगणितभावोदाहृति + + नाम्नीं ॥ इत्यादि ।

**End.** बीजसाधनमिदमतीन्द्रियज्ञानसाधनवता श्रीसूर्य्येण भूतानुकम्पार्थमुक्तं सूर्य्यभिन्नेनैव केनचिदाधुनिकेन कृतं तदित्यपि केचिदाहुः ॥

**Colophon.** इति श्रीदिवाकरभट्टदैवज्ञात्मजश्रीविश्वनाथदैवज्ञविरचिते सूर्य्यसिद्धान्तोदाहरणव्याख्याने गहनार्थप्रकाशिकायां बीजसाधनाध्यायः समाप्तश्चायं ग्रन्थः ॥

विषयः । सूर्य्यसिद्धान्तस्य व्याख्यानं ।

---

**No 2814.** वाग्भट्टालङ्कारटीका । Substance, country-made paper, 12 × 4 inches. Folia, 46. Lines, 10 on a page. Extent, 1,118 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharganj Baḍa A'khaḍá, Post Naśipur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose. Incorrect.

**Vágbhaṭṭálaṅkára-ṭíká.** A commentary on a treatise on rhetoric attributed to Vágbhaṭṭa. By A'dinátha.

**Beginning.** श्रीमते रामानुजाय नमः ।

श्रीमान् श्रीआदिनाथः श्रियमिह दिशतु श्रेयसीं भूयसीं वो
विभाणः सौरभेयं हृदयमवतु वः शङ्करः शङ्कराभः ।
सेव्यो भूतेर्विभूत्या परिकलिततनुर्वर्णनीयो य्यचौनै-
र्विभद्द + सुवर्णं तुहिनशिखरिणो भाति यः कामजेता ॥
स्वभावविभवावासं प्रतिभादानदक्षिणं ।
स्मरामि शिरसा + + गुरुपादरजःकणां ॥
बालानामवबोधाय स्वस्यार्थस्मरणाय च ।

वाग्भट्टालङ्कृतेः कुर्व्वे व्याख्यां संक्षेपयुक्तितः ॥

अथ शास्त्रस्य अविघ्नेन समाप्त्यर्थं श्रीवाग्भट्टदेवो विशिष्टेष्टदेवतानमस्कारमाह श्रिय-मित्यादि ।

**End.** प्रत्यपक्षे आचारेण परीतं तैस्तैः शास्त्रलोकविदैर्नैर्येरसैः शृङ्गारादिभि-रन्मयतां तद्रूपतां प्राप्तं गतं कल्पान्तरकालस्थायि जायते । इति ।

**Colophon.** इति श्रीआदिनाथकृता वाग्भट्टालङ्कारटीका समाप्ता ।

विषयः । वाग्भट्टालङ्कारस्य व्याख्यानं ।

---

**No. 2815.** मन्त्रदेवप्रकाशिका । Substance, country-made paper, 12 × 4 inches. Folia, 106. Lines, 13 on a page. Extent, 4,116 ślokas. Character, Nágara. Date, ? Place of deposit, Jáphargaṇj, Baḍa A'khaḍá, Post Naśipur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose and verse. Incorrect.

**Mantradeva-prakáśiká.** The origin, meaning and purport of víja mantras, and their use in the worship of S'ákta and S'aiva divinities. The work contains also a great many rituals and details of S'ákta religious duty; the whole drawn from the Tantras. By Vishṇudeva. It is dedicated to one Koṭís'vara.

**Beginning.** ओङ्कारात्माक्षरा + भुवनपशिव + + दक्षिणामूर्त्तिचित्ता
रत्नक्षेयम्बकोद्य + + हन + महागाणपत्यादिरूपिन् ।
आ + र्यै द्वादशार्यप्रिय व्रहरितनो श्रीवराहाख्य चक्रिन्
कृष्णात्म + म विष्णो विविधगुण महाशक्तिभास्वन्नमस्ते ॥
अनन्त नारायण राम योगिन् ब्रह्म प्रभो ज्ञानघनाद्य विष्णो ।
अनन्तयोगीश्वर भानुकृष्णरामाद्ययानन्द गुरो नमस्ते ॥
— — — — — — — — ।
अथ प्रपञ्चसारादिमन्त्रशास्त्रानुसारतः ।
गुरूपदिष्टमन्त्राणां देवतादि प्रकाश्यते ॥
मननात् त्राणधर्म्माणो गुप्तार्थभाजो वा मन्त्राः । तदुक्तं ।
गुप्तोपदेशान्मन्त्रोऽपि मननात् त्रायतेऽथ वा इत्यादि ।

**End.** एवं देवतातत्त्वरूपं ब्रह्म सत्यज्ञानानन्दाद्ययलक्षणमात्मरूपमेवेति तदेकमेव देवतातत्त्वमिति सिद्धं ।

श्रीमत्प्रपञ्चसारादिशास्त्रसङ्ग्रहविग्रहः ।

कृतिर्विजयते सैषा मन्त्रदेवप्रकाशिका ॥
परमाराध्यपौत्रस्य लक्ष्मीशहरिजन्मनः ।
कृतिः श्रीविष्णुदेवस्य श्रीमत्कोटीश्वरेऽर्पिता ॥

**Colophon.** इति श्रीमन्त्रदेवप्रकाशिकायां द्वात्रिंशः पटलः । श्रीरस्तु ।

विषयः । १प्रथमे मन्त्रस्वरूपनिरूपणं । मन्त्रशब्देन ब्रह्मविद्योच्यते इति निरूपणं । देवतास्वरूपकीर्त्तनं । सगुणादिब्रह्मस्वरूपकथनं । ब्रह्मविद्याङ्गभूतानां साकारपरमन्त्राणां विरोधपरिहारः । ब्रह्मविद्योपदेशप्रकारकथनं । २ये पटले साकारब्रह्मविद्यात्मकमन्त्रप्राधान्येन दीक्षाक्रमकीर्त्तनं । तत्र मासनक्षत्रराशिप्रभृतिनिरूपणादिकं । भूतकूटपरीक्षाविधिः । सिद्धसाध्यादिपरीक्षाविधिः । वैदिकमन्त्रे सिद्धादिपरीक्षा नास्तीति निरूपणं । मन्त्राणां सौम्यादिपरीक्षणं । ३—५ पटले,—दीक्षादौ माङ्गल्यजनकाङ्कुरार्पणविधानकीर्त्तनं । दीक्षादौ मण्डपकरणार्थं वास्तुबलिप्रकारकथनं । मण्डलोद्धारकथनं । दीक्षाभिषेकविधिकथनं । षट्त्रिंशत्कलानिरूपणं । पुरश्चरणाद्यनुष्ठानप्रकारकीर्त्तनं । भूतशुद्धिप्रकारकथनं । अन्यविधभूतशुद्धिकथनं । न्यासप्रकारकीर्त्तनं । ६—९ पटले,—जपादिप्रकारकीर्त्तनं । मालानिरूपणं । अन्यप्रकारेण पुरश्चरणविधिकथनं । मुद्रानिरूपणं । देवपूजाप्रकारकथनं । होमविधिकथनं । भुवनेश्वरीमन्त्रोपासनविधिकथनं । पूजाप्रयोगकथनं । प्रणवमातृकानिरूपणं । १०,११ पटले,—मातृकाख्यशब्दब्रह्मापन्नं नाम प्रपञ्चोपादानकारणं परं ब्रह्मैव मायया भुवनेश्वरीप्रकृतिरूपेण प्रपञ्चाकारेण विवर्त्तमानमिति तन्मन्त्रसाधनकीर्त्तनं । हृल्लेखायाः शक्तेः पार्व्वत्याः स्वदेहार्द्धनारीरूपमायाशवलितब्रह्मात्मकशिवसान्निध्याय ईप्सितत्वात् शक्तिमन्त्रोऽपि स्वप्रकाश्यदेवताद्वारेण शिवमन्त्रसन्निधिमपेक्षते—इति शैवमन्त्रन्यासपूजादिप्रकारकीर्त्तनं । शैवकल्पोक्तयन्त्रकथनं । १२—१४ पटले,—सर्व्वज्ञानप्रदक्षिणामूर्त्तिमन्त्राराधनप्रकारकथनं । उमामहेश्वरमन्त्रकथनं । अनुष्टुप्त्र्यम्बकाराधनप्रकारकीर्त्तनं । नीलकण्ठाष्टाक्षरमन्त्रविधिकीर्त्तनं । महानीलकण्ठमन्त्रविधिः । चिन्मन्त्रविधिः । मृत्युञ्जयाक्षरमन्त्रविधिः । आपदुद्धारवटुकभैरवमन्त्रविधिः । स्वामिकार्त्तिकमन्त्रविधिः । चण्डेश्वरमन्त्रविधिः । व्योमव्यापिमन्त्रविधिः । १५—१७ पटले,—शिवावतारगाणपत्यमन्त्रविधिः । तत्र तर्पणविधिकीर्त्तनं । हेरम्बमन्त्रविधिः । त्र्यक्षरगणपतिमन्त्रविधिः । क्षिप्रप्रसादनमन्त्रकथनं । हरिद्रागणपतिमन्त्रः । लक्ष्मीविनायकमन्त्रः । गणपत्यादिनानारूपधरस्य शिवस्य हरिहरादिनिदर्शनेन विष्णुस्वरूपैक्यात् शिवविष्ण्वोस्तादात्म्यमस्तीति सार्द्धं शिवमन्त्रैरर्थवाचकत्वेन लब्धसङ्गतिकानां वैष्णवमन्त्राणामनुष्ठानप्रकारकथनं । १८—२२ पटले,—नृसिंहमन्त्रविधानं । सर्व्वारिष्टविनाशनज्वालानृसिंहमन्त्रः । दशावतारनृसिंहमन्त्रः । अभयनृसिंहमन्त्रः । वराहमन्त्रकथनं । हयग्रीवमन्त्रकथनं । सुदर्शनमन्त्रकथनं । गोपालमन्त्रकथनं । सन्तानगोपालमन्त्रकथनं । श्रीकृष्णमन्त्रकथनं । वामनमन्त्रकथनं । यज्ञेश्वरवामनमन्त्रकथनं । भार्गवामनमन्त्रकथनं । श्रीराममन्त्रकथनं । श्रीकराष्टाक्षरमन्त्रकथनं ।

पुरुषोत्तममन्त्रकथनं। हृषीकेशमन्त्रकथनं। २३—२५, पटले,—लक्ष्मीमन्त्रकथनं। महालक्ष्मी-मन्त्रकथनं। कमलवनवासिनीमन्त्रकथनं। धरणीमन्त्रकथनं। सिद्धमहालक्ष्मीमन्त्रकथनं। ज्ञानशक्त्यात्मकवागीश्वर्य्यादिमन्त्राराधनकथनं। वाचस्पतिसरस्वतीमन्त्रकथनं। पारिजातसरस्वतीमन्त्रकथनं। त्रिपुरामन्त्रकथनं। कामबीजमन्त्रकथनं। काममालामन्त्रकथनं। ललितामन्त्रकथनं। गौरीमन्त्रकथनं। राजमुखीमन्त्रकथनं। अश्वारूढ़ामन्त्रकथनं। अन्नपूर्णामन्त्रकथनं। २६—३१, पटले,—भगवत्क्रियाशक्तिरूपदुर्गामन्त्रकथनं। नवदुर्गामन्त्रकथनं। शूलिनीदुर्गामन्त्रकथनं। दुर्गाहृदयमन्त्रकथनं। सूर्य्यमन्त्रकथनं। ग्रहपूजाहोमविधिकीर्त्तनं। चन्द्रमन्त्रकथनं। एवमङ्गारकादिमन्त्रकथनं। अग्निमन्त्रकथनं। तुरगाग्निविद्यामन्त्रकथनं। लवणमन्त्रकथनं। सर्व्वदेवतात्मनः सर्व्वशक्तेः सर्व्वावभासकतेजोमयस्य परमात्मनः सर्वात्मत्वद्योतनार्थं सर्व्वात्मप्रतिपादकगायत्रीमन्त्रोपासनाप्रकारकीर्त्तनं। गायत्रीजपविधिकथनं। निबन्धेऽस्मिन् सर्व्वत्रैव सर्व्वेषां मन्त्राणामृषिच्छन्दोदेवतादिकथनपूर्व्वकं पूजाविधिकीर्त्तनमिति ज्ञेयं। तथा सर्व्वेषां मन्त्राणां परब्रह्मैव देवता। हरिहरादयस्तु तद्विभूतिरूपतया न पृथक्त्वेन व्यपदिश्यन्ते।

---

**No. 2816.** अष्टश्लोकीव्याख्यानं। Substance, country-made paper, 10 × 4 inches. Folia, 14. Lines, 11 on a page. Extent, 33 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharganj, Baḍa Ákhaḍá, Post Naśípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose. Correct.

**Ashṭaśloki-vyákhyán'a.** A commentary on a hymn by Paráśara Bhaṭṭa in praise of Rámánuja. By Vaishṇavadása.

**Beginning.** श्रीपराशरभट्टाचार्य्यः श्रीरङ्गेशपुरोहितः।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे॥
वन्देऽहं घटिकाद्रीशं श्रीनिधिं करुणानिधिं।
वाधूलकुलदेवं तं सतामनवधिं निधिं॥
प्रणम्य देशिकान् सर्व्वान् अष्टश्लोक्या यथाश्रुतं।
अर्थो वैष्णवदासेन बालबोधाय वर्ण्यते॥

अथ परमकारुणिको भगवान् पराशरभट्टाचार्य्यः सकलचेतनोज्जीवनाय—इत्यादि।

**End.** इत्थं बालप्रबोधाय अष्टश्लोक्या यथाश्रुतं।
वर्णितोऽर्थो महात्मानः चन्तुमर्हथ साहसं॥

**Colophon.** इति श्रीमदष्टश्लोक्या व्याख्यानं। समाप्तं।

विषयः। पराशरभट्टाचार्य्यकृतरामानुजस्तोत्राष्टकस्य व्याख्यानं।

---





**No. 2817.** वेदान्तसारम् । Substance, country-made paper, 10 × 4 inches. Folia, 171. Lines, 9 on a page. Extent, 3,825 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharganj, Baḍa A'khaḍá, Post Naśípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose. Incorrect.

**Vedántasára.** A commentary on the Vishṇu-sahasra-náma section of the Mahábhárata. The object of the author is to explain the text in accordance with the Vedánta doctrine as expounded by Rámánuja. By Parás'ara Bhaṭṭácbárya.

**Beginning.** वन्दे गोविन्दतातं मुनिमथ मन+लक्ष्मणार्कं महान्तं ।
ध्यायेयं यामुनाचार्य्यं मम हृदि तनवे राममेवभि++ ।
पश्चाच्चं प्रेच्चिषीयप्रथममपि मुनिं नाथमीडे शठारिं
स्तौमि प्रेचेयलक्ष्मीं शरणमशरणः श्रीधरं संश्रयेऽहं ॥
— — — — — — — — ।
जातो लक्ष्मणमिश्रसंश्रयधनाच्छ्रीवत्सचिह्नाद्दषे-
र्भूयो भट्टपराशरेतिगणितः श्रीरङ्गभर्त्त्रा स्वयं ।
श्रीश्रीरङ्गपतिप्रसादद्वषया श्रीरङ्गनाथाह्वयः
श्रीरङ्गेश्वरकारितो विवृणुते नाम्नां सहस्रं हरेः ॥
— — — — — — — — ।

इह खलु निखिलोऽपि चेतयमानः प्रमाणतः प्रमेयं परिच्छिन्दंस्तच्चेत् प्रमेयमनुकूलं तदुपाददीत, यथा स्रक्चन्दनवनिताकनकादिकं—इत्यादि ।

**End.** न ते यान्ति पराभवमिति व्यापूरयन्ति शम् ।

**Colophon.** इति श्रीपराशरभट्टाचार्य्यरचितं सहस्रनामभाष्यं वेदान्तसारं समाप्तं ।

विषयः । महाभारतीयशान्तिपर्व्वान्तर्गतविष्णुसहस्रनामस्तोत्रस्य रामानुजमतानुसारेण व्याख्यानं ।

---

**No. 2818.** श्रीपतिपद्धतिः । Substance, country-made paper, 10 × 3 inches. Folia, 12. Lines, 4—5 on a page. Extent, 142 ślokas. Character, Maithili. Date, Sk. 1723. Place of deposit, Jápharganj, Baḍa A'khaḍá, Post, Naśípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Verse. Correct.

**S'rípati-paddhati.** A treatise on horoscopy. By S'rípati. A commentary on this work has been noticed under No. 2416, Vol. VII, p. 175.

**Beginning.** नत्वा तां गुरुदेवतां त्रिसमयज्ञानोद्गतेः कारणं
तत्पादाम्बुरुहप्रसादविकसद्बोधो बुधः श्रीपतिः ।
शिष्यप्रार्थनया विचार्य्य सकलान् होरागमार्थान्मुहु-
र्वक्ष्ये जातककर्मपद्धतिमहं होराविदां प्रीतये ॥
ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायादियन्त्रैः स्फुटं
तत्कालप्रभवा विलग्नसहिताः कार्य्यास्ततश्च ग्रहाः ।
सिद्धान्तोक्तपरिस्फुटोपकरणैस्ते चासकृत् कर्म्मणा
भावाः खेटदृशो बलानि च ततस्तेषां विचिन्त्यानि षट् ॥ इत्यादि ।

**End.** कण्टकादिपरिभावनानया प्रोक्तया सकलभावजातया ।
जातकोदितफलस्य निर्णयः प्रत्ययो भवति धीमतां सदा ॥

**Colophon.** इति श्रीपतिपद्धतौप्रकीर्णाध्यायोऽष्टमः । शकाब्दाः १०९७ ।

विषयः । जातकनिरूपणं । तत्र लग्नकथनं । भावसाधनकीर्त्तनं । ग्रहाणां दृष्ट्याद्यानयनप्रकारकथनं । बलाबलनिरूपणं । शुभाशुभनिरूपणं । आयुर्द्दशानिरूपणं । अरिष्टभङ्गकथनं । अन्तर्द्दशानिरूपणं । अष्टवर्गादिफलकीर्त्तनं । राजयोगादिफलकथनं ।

---

**No. 2819.** भरद्वाजसंहिता । Substance, country-made paper, 10 × 4 inches. Folia, 60. Lines, 4 on a page. Extent, 649 ślokas. Character, Nágara. Date, Sm. 1833. Place of deposit, Jápharganj, Baḍa A'khaḍá, Post, Naśipur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, old. Verse. Correct.

**Bharadvája-sañhitá.** A treatise on faith and secret worship with abundant details for the observance of the faithful. By Bharadvája. The work is evidently a fragment, probably a part of a Tantra.

**Beginning.** श्रुत्वा तु सकलान् धर्म्मान् सिद्धिमेषाञ्च शाश्वतीं ।
भूय एव मुनिश्रेष्ठमिदमूचुर्म्महर्षयः ॥
केनोपायेन भगवन् इह सर्व्वेऽपि जन्तवः ।
प्राप्नुयुः परमां सिद्धिं सद्योविगतकल्मषाः ॥
तेषां तद्वचनं श्रुत्वा भरद्वाजो महामनाः ।
सस्मार परमं गुह्यं पुनश्चेदमभाषत ॥ इत्यादि ।

End. इत्थं किलात्मनोऽन्यासां जातौ हस्त्याख्यपादपः ।
असौ फलमयः सेव्यस्तन्न चोत्पद्यते विना ॥
सुसूक्ष्मत्वाद्दुरापत्वान्महत्वाद्गौरवादपि ।
मयायं परमो धर्म्मः प्रोक्तः स्थित्यै पुनः पुनः ।

Colophon. इति भरद्वाजसंहितायां चतुर्थोऽध्यायः। लेखकपाठकयोः शुभं भूयात्। संवत् १८३३ ।

विषयः । १प्रथमेऽध्याये,—न्यासाख्ययोगनिरूपणं। तत्र तस्य प्रपत्तिरितिसंज्ञान्तरकथनं। अनन्तज्ञानशक्त्यादिकल्याणगुणसागरस्य परस्य ब्रह्मणो लक्ष्मीशस्य आत्मसमर्पणमेव प्रसादनोपाय इति निरूपणं। अत्र सर्वेषां वर्णानामधिकारकथनं । प्रपत्तिस्वरूपकीर्त्तनं । कायिकवाचनिकमानसिकभेदादस्यास्त्रैविध्यकथनं । पुनरस्याः सात्त्विकादिभेदेन त्रिविधत्वनिरूपणं। गुरुलक्षणं। आचार्य्यलक्षणं। दीक्षाविधिकथनं। प्रपत्त्यङ्गनिरूपणं। दास्यमेव प्रपन्नैराखाद्यमितिनिरूपणञ्च ।

२येऽध्याये,—प्रपत्तिवद्वृत्तिरपि भगवति कर्त्तव्येतिनिरूपणं। वृत्तिस्वरूपकथनं। अस्याः षडङ्गनिरूपणं। अनुकूलताकार्पण्यादीनां लक्षणं। वैराग्यज्ञानभक्तिप्रीत्यादीनां लक्षणं। वृत्त्याधिकारिनिरूपणं। भगवत्सेवनादिविधिकीर्त्तनं। प्रपन्नकृत्यनिरूपणं। ज्ञानयोगक्रियाचर्य्यादिषु फलकथनं। इज्याधिकारकथनं। वैष्णवशास्त्रनिरूपणं। भक्त्यधिकारकथनं। शङ्खचक्रादिचिह्नाधिकारकथनं। तप्तमुद्राधारणविधिकथनं। ऊर्द्धपुण्ड्रादिविधिकथनं। काष्ठबन्धनकौपीनादिविधिकथनं। सत्सेवाधिकारादिनिरूपणं। तत्प्रक्रियाकथनञ्च। गुर्वभिगमादिप्रकारकथनं।

३येऽध्याये,—भगवत्प्रीतिहेतुत्वेन स्वधर्म्माचरणप्रपन्नस्य भगवत्प्रीतिहेतुतया प्रतिषिद्धानां वर्ज्जनीयत्वनिरूपणं। प्रपन्नस्य देवतान्तरस्पर्शादिनिषेधात् कर्म्मसमृद्ध्यर्थमपि देवतान्तरस्तवननमस्कारादिवर्ज्जनविधानं। अन्यान्यप्रतिषिद्धवर्ज्जनकीर्त्तनं। तामसशास्त्रादिकथनं। दृष्टिविरुद्धाधिकारकथनं। भक्तिविरुद्धवर्ज्जननिरूपणं। प्रपन्नेन विष्णुचारहिते ग्रामे न भोक्तव्यमितिनिरूपणादिकं। चिह्नविरुद्धाधिकारकथनं। सेवाविरुद्धपरिहारकथनं। प्रपन्नस्य भगवत्प्राप्तिकथनञ्च।

४र्थेऽध्याये,—वैष्णवलक्षणादिकथनं। शुद्धमिश्रभेदेन द्विविधैकान्तिकभक्तनिरूपणं। ब्रह्मरुद्रादीनां जीवत्वकथनं। विष्णुविभूतित्वकथनञ्च। अवैष्णवेन सह प्रपन्नस्य सम्भाषणादिकरणनिषेधः। चक्रधारणादिकालनिरूपणं। भागवतज्ञानस्वरूपकीर्त्तनं। विशुद्धादिकैङ्कर्य्यनिरूपणं। भवगत्स्वरूपकीर्त्तनं। पञ्चसंस्कारनिरूपणं। सद्वृत्तिनिरूपणं। प्रपन्नवृत्तिनिरूपणं। कर्म्मयोगनिरूपणं। ज्ञानयोगनिरूपणं। भक्तियोगनिरूपणं। चातुराश्रमधर्म्मनिरूपणं। महापातकदृष्टिनिरूपणं। अपचारनिरूपणं। भक्तिमयीवृत्तिनिरूपणञ्च।

**No. 2820.** तत्त्वकौमुदीव्याख्या। Substance, country-made paper, 10 × 4 inches. Folia, 40. Lines, 8 on a page. Extent, 688 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharganj, Baḍa A'khaḍá, Post, Naśipur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, new. Prose. Generally correct.

**Tattva-kaumudí-vyákhyá.** A gloss on Váchaspati Miśra's *Tattva-kaumadí*—a treatise on the Nyáya. By Bhárati Yati, pupil of Bodháranyapati.

**Beginning.** यत्प्रसादादजं नित्यमात्मानमशरीरिणं।

विजज्ञौ (?) तान् गुरून् भक्त्या नमामि करुणाकरान्॥

सांख्यसप्ततिं व्याचिख्यासुराचार्य्यवाचस्पतिमिश्रः प्रारिप्सितग्रन्थस्य निष्प्रत्यूहपरिसमाप्ति-प्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च प्रधानस्य पुंसो भोगापवर्गार्थं प्रवृत्तिलक्षणशास्त्रता-त्पर्य्यं कथयन् प्रकृतिं पुरुषांश्च नमस्यति अजामेकामिति॥ इत्यादि।

**End.** क्व च वाचस्पतेः सूक्तिः क्व च मन्दस्य मे मतिः।

क्व चापि सन्मतं तत्त्वमिति शोध्यं मनीषिभिः॥

**Colophon.** इति श्रीबोधारण्यपतिशिष्यश्रीभारतीनामकयतिकृता तत्त्वकौमुदीव्या-ख्या समाप्ता।

विषयः। वाचस्पतिमिश्रकृततत्त्वकौमुद्या व्याख्यानं।

---

**No. 2821.** सुबोधिनी। Substance, country-made paper, 10 × 4 inches. Folia, 6. Lines, 8 on a page. Extent, 132 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharganj, Baḍa A'khaḍá, Post, Naśipur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, new. Prose. Generally correct.

**Subodhiní.** A gloss on the Rákshasa, Kávya a poem by Vararuchi Kavindra. (See *ante*, No. 782, Vol. II, p. 186). By Kavirája.

**Beginning.** कश्चिदनिर्द्दिष्टो नामा पुरुषः वनितां प्रति इमां प्रत्यक्षां गां वाचं बभाषे अब्रवीदित्यर्थः। किं कुर्वन् सन् वनं काननं विचरन् भ्रमन्। इत्यादि।

**End.** किं विशिष्टया देव्या रुचिरया शोभनया इत्यर्थः।

**Colophon.** इति श्रीकविराजविरचिता राक्षसकाव्यस्य सुबोधिनी समाप्ता।

विषयः। राक्षसकाव्यस्य व्याख्यानं।

---

**No. 2822.** दानपारिजातः। Substance, country-made paper, 12 × 4 inches. Folia, 211. Lines, 10 on a page? Extent, 4,989 ślokas. Character, Nágara. Date, Sk. 1522? Place of deposit, Jápharaganja, Baḍa Ákhaḍá, Post Naśípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, old. Prose and verse. Correct.

**Dánapárijáta.** A digest of the Smṛiti rules regarding religious gifts, and the rituals to be observed when consecrating them. By Kshemendra, No. 2262, (VII, 19) is a work of this description and bears the same name, but it is by a different author.

**Beginning.** जयतु सुरासुरपरिवृढमधुकरपरिलिह्यमानपदकमलः।
करुणापरीतचेता जगदधिनेता रामचन्द्रः॥
तत्र दानस्वरूपमाह देवलः।
अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनं।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य कथ्यतां॥ इत्यादि।

**End.** दानेन च तथा तासां कुलान्यपि समुद्धरेत्।
उदक्याद्युतिकादोषो नैव तत्र गृहे भवेत्॥

**Colophon.** इति महामहोपाध्यायश्रीक्षेमेन्द्रकृतौ दानपारिजातः समाप्तः। शकाब्दाः १५२२।

विषयः। दानस्वरूपविवेचनं। दानप्रशंसादिकथनं। दानाधिकारादिनिरूपणं। देयादेयनिरूपणं। देशकालादिनिरूपणं। दानविधिकीर्त्तनं। द्रव्यदेवतानिरूपणं। दानप्रतिग्रहविधिकीर्त्तनं। परिभाषाकथनं। सामान्यतः प्रतिमालक्षणं। विष्णुप्रतिमादिलक्षणं। मानपरिभाषाकीर्त्तनं। मण्डपनिर्म्माणविधिकीर्त्तनं। कुण्डनिर्म्माणविधिकथनं। योनिकुण्डविधिकथनं। अर्द्धचन्द्राभकुण्डनिर्म्माणविधिः। त्रिकोणकुण्डविधिः। पद्माकारकुण्डविधिः। षोड़शारचक्रविधिकथनं। लोकालोकरूपाणि। पुण्याहवाचनविधिः। संकल्पादिविधिकथनं। वास्तुपूजाविधिः। अधिवासनविधिः। द्वारपूजाविधिः। कलशस्थापनादिविधानं। मण्डलदेवतास्थापनादिविधिः। ग्रहस्थापनविधिः। होममन्त्रादिकथनं। जपसूक्तकथनं। क्रमेण ऋक्सामवेदादीनां मन्त्रकथनं। अभिषेकविधिः। षोड़शमहादानकथनं। तत्र तुलापुरुषदानप्रयोगः। होमविशेषे लोहकांस्यादितुलापुरुषदानविधिः। हिरण्यगर्भदानविधिः। ब्रह्माण्डदानविधिः। कल्पतरुदानविधिः। गोसहस्रदानविधिः। हिरण्यकामधेनुदानविधिः। हिरण्याश्वदानविधिः। हिरण्याश्वरथदानविधिः। कन्यादानविधिः। कपिलादानविधिः। महाकपिलादानविधिः। घृतधेनुविधिः। जलधेनुविधिः। क्षीरधेनुविधिः। दधिधेनुविधिः। मधुधेनुविधिः। रसधेनुविधिः।

शर्कराधेनुविधिः । कार्पासधेनुविधिः । लवणधेनुविधिः । सुवर्णधेनुदानविधिः । बन्ध्यात्वनाशकसुवर्णधेनुदानविधिः । हेमशृङ्गीदानविधिः । उभयतोमुखीदानपिधिः । वैतरणीदानविधिः । महिषीदानविधिः । मेषदानविधिः । हेमहस्तिरथदानविधिः । पञ्चलाङ्गलदानविधिः । धरादानविधिः । विश्वचक्रदानविधिः । कल्पलतादानविधिः । सप्तसागरदानविधिः । रत्नधेनुदानविधिः । महाभूतघटदानविधिः । स्वर्णदानविधिः । तिलदानविधिः । तिलकरकदानविधिः । गजदानविधिः । दासीदानविधिः । रथदानविधिः । महीदानविधिः । गृहदानविधिः । वास्तुशान्तिविधिः । शैलदानविधिः । गन्धमादनदानविधिः । लवणाचलदानविधिः । गुड़पर्व्वतदानविधिः । तिलाचलदानविधिः । कार्पासाचलदानविधिः । घृताचलदानविधिः । रौप्याचलदानविधिः । शर्कराचलदानविधिः । शिखरदानविधिः । भद्रनिधिदानविधिः । श्रानन्दनिदानविधिः । त्रिमूर्त्तिदानविधिः । द्वादशादित्यदानविधिः । लोकपालाष्टकदानविधिः । नवग्रहदानविधिः । श्रात्मप्रतिमादानविधिः । धनदमूर्त्तिदानविधिः । शालग्रामदानविधिः । कालपुरुषदानविधिः । कालचक्रदानविधिः । यमदानविधिः । शय्यावस्त्रपात्रस्थालीपुस्तकछत्रताम्बूलरत्नप्रपादीनां दानविधिः । धर्म्मघटदानविधिः । वनदानविधिः । श्रभयदानविधिः । गोपरिचर्य्याविधिः । श्रत्र सर्व्वत्र प्रयोगकथनं ।

---

**No. 2823. क्षमाषोडशीव्याख्या** | Substance, country-made paper, 12 × 5 inches. Folia, 11. Lines, 7 on a page. Extent, 2,156 ślokas. Character, Nágara. Date, ? Place of deposit, Jápharaganja, Baḍa A'khaḍá, Post Naśípur, Zillá Murshidábád, Gopáladása Mahanta. Appearance, fresh. Prose. Correct.

**Kshamáshoḍaśí-vyákhyá.** A gloss on a prayer in sixteen stanzas by Vedáchárya to Jina. By Varadá A'chárya.

**Beginning.** श्रीपराशरभट्टाचार्य्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥
वन्दे गुरुं दयाधीशं वात्स्यं वरगुणाकरं ।
यत्सूक्तिर्येतिराजोक्तिकैकिन्याः कालकालिका ॥
श्रुतप्रकाशिकाचार्य्यसुतेन रचिता स्तुतिः ।
श्रीरङ्गेशक्षमालम्बा गम्भीरार्था विविच्यते ॥

श्रादौ मङ्गलमाचरति श्रीरङ्गेशेति । इत्यादि ।

**End.** देहिनां सर्व्वपापापनुत्यै सर्व्वपापापनोदनाय समस्तदुरितापनोदनाय चक्रे विरचितवान् ।

**Colophon.** इति श्रीमद्वात्स्यवरदाचार्य्यकृता क्षमाषोड़शीव्याख्या समाप्ता ।

विषयः । वेदाचार्य्यकृतक्षमाषोड़शीस्तोत्रस्य व्याख्यानं ।

---

**No. 2824** अभिज्ञानशकुन्तलाविवृतिः । Substance, country-made paper, 13 × 4 inches. Folia, 122. Lines, 10 on a page. Extent, 4,538 ślokas. Character, Bengali. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámachánd. Appearance, old. Prose. Incorrect.

**Abhijnána-śakuntalá-vivriti.** A gloss on S'akuntalá, the well-known drama of Kálidása. By Rámabhadra Mahámahopádhyáya.

**Beginning.** व्रजशिशुवृन्दवयस्यं सततमुपास्यं विरिञ्चाद्यैः ।

तेजस्तमालनीलं किमपि मधुरमधुरं नमस्यामि ॥

क्व कालिदासकविता क्वाहं मन्दमतिर्वटुः ।

निर्म्मितो मधुचक्रस्य न पतङ्गः प्रभुर्भवेत् ॥

कवितां कालिदासस्य मन्ये (?) पीयूषवाहिनीं ।

रसिकाः श्रुतिमात्रेण माद्यन्ति कथमन्यथा ॥

अथ कविकुलचूड़ामणिर्भगवान् कालिदासः अभिज्ञानशकुन्तलाभिधानं दृश्यकाव्यं चिकीर्षुः आशीर्न्नमस्क्रियावस्तुनिर्द्देशो वापि तन्मुखमितिस्मरणात् काव्यादौ आशीः प्रस्तौति । या सृष्टिरिति । इत्यादि ।

**End.** नीललोहितो महादेवः ममापि पुनर्भवं पुनर्ज्जन्मग्रहणं क्षपयतु आत्मवत् निराकरोतु । इति शं । इति सप्तमोऽङ्कः ।

**Colophon.** इति श्रीमहामहोपाध्यायरामभद्रकृता अभिज्ञानशकुन्तलाविवृतिः समाप्ता ।

विषयः । कालिदासकृताभिज्ञानशकुन्तलाभिधाननाटकस्य व्याख्यानं ।

---

**No. 2825.** ज्योतिर्भास्करः । Substance, country-made paper, 12 × $3\frac{1}{2}$ inches. Folia, 67. Lines, 7 on a page. Extent, 1,323 ślokas. Character, Bengali. Date, Sk. 1686. Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámacháñd. Appearance, old. Prose and verse. Correct.

**Jyotirbháskara.** A digest of judicial astrology. By Chakrapáṇi Mahámahopádhyáya.

**Beginning.** नत्वा गिरिजया सार्द्धं गिरिशं जगतां गुरुं ।

ज्योतिर्भास्करसंज्ञोऽसौ क्रियते चक्रपाणिना ॥

अथ राश्यादिनिर्णयः। मेषवृषमिथुनकर्कटसिंहाः कन्या तुलाथ वृश्चिकभं। धनुरथ मकरः कुम्भो मीन इति च राशयः कथिताः। इत्यादि।

**End.** स्वप्ने पश्यति चात्मानं रत्नाम्बरविभूषणं।
मलिनाम्बरधारित्वमभ्यङ्गचौरनग्नता॥
उत्सवाचरणं पातो दोलारोहश्च निन्दितः॥

**Colophon.** इति श्रीमहामहोपाध्यायश्रीचक्रपाणिकृतौ ज्योतिर्भास्करः समाप्तः।

विषयः। राश्यादिनिर्णयः। राशीनां पर्य्यायकथनं। राशीनां क्रूरसौम्यादिविवेचनं। द्विपदचतुष्पदराशिकथनं। ग्राम्यारण्यजलराशिकथनं। वारस्वरूपकथनं। कालवेला। वारवेला। तिथिनिर्णयः। अवमचाद्दस्पर्शादिनिरूपणं। करणानि। नक्षत्रगणनिर्णयः। अधोमुखादिनक्षत्रनिरूपणं। नक्षत्रमुहूर्त्तनिर्णयः। योगनिर्णयः। दिक्पतिकथनं। लग्नमाननिर्णयः। होराद्रेष्काणादिनिरूपणं। नवांशत्रिंशांशादिनिरूपणं। मूलत्रिकोणादिकथनं। केन्द्रादिकथनं। उपचयसंज्ञा। द्वादशभावकथनं। ग्रहाणां शुभाशुभादिफलकथनं। दृष्टिकथनञ्च। ग्रहशुद्धिनिरूपणं। नक्षत्रादिशुद्धिः। अष्टवर्गकथनं। जन्मताराद्विवेचनं। अमृतादियोगनिर्णयः। संक्रान्तिनिरूपणं। बृहस्पतिसञ्चारादिफलकथनं। शनिराहुचक्रादिकथनं। कालाशुद्धिनिरूपणं। ग्रहणनिरूपणं। भूकम्पादिफलकथनं। विवाहनिरूपणं। गर्भाधानादिसंस्कारकथनं। चौरविधिः। परीक्षाकथनं। नववस्त्रादिपरिधानादिकथनं। पुष्करिण्यारम्भः। नौकागठनादिकथनं। वीजवपनादिकं। देवतागठनादिकं। गृहप्रवेशादिकथनं। ऋणदानादिकथनं। स्वप्नादौ शुभाशुभादिफलनिरूपणञ्च।

---

**No. 2826.** वेदान्तसिद्धान्तप्रदीपः। Substance, country-made paper, 14 × 4 inches. Folia, 112. Lines, 6 on a page. Extent, 2,864 ślokas. Character, Nágara. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámcháñd. Appearance, old. Prose. Correct.

**Vedánta-síddhánta-prodípa.** A summary of the Vedánta doctrine. By Niyamánunda. Hall's Contributions.

**Beginning.** अखण्डं सच्चिदानन्दं सृष्टिस्थित्यन्तकारणं।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये॥

अथ आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्चेति श्रवणादिविधिरुपलभ्यते। श्रोतव्य इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः। विचारस्य वेदान्ता विषय इति शक्यते ज्ञातुं। तथाहि तद्विजिज्ञासस्व सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इत्यादिश्रुतितः अमृतत्वकामेन अद्वैतात्मविचार एव वेदान्तवाक्यैः कर्त्तव्य इति ज्ञायते। इत्यादि।

**End.** एवमर्थाद्ब्रह्मज्ञानाज्जीवगतानर्थनिवृत्तिपूर्व्वकं जीवब्रह्मैक्यरूपमनृतत्वं सिद्धातीति ।

**Colophon.** इति परमहंसपरिव्राजकाचार्य्यभगवत्पूज्यपादशिष्यश्रीनियमानन्दविरचितो वेदान्तप्रदीपः समाप्तः । समाप्तश्चायं ग्रन्थः ।

विषयः । ब्रह्मणः जगज्जन्मस्थितिलयकारणत्वरूपं लक्षणद्वयमिति तन्निरूपणं । परिणामविवर्त्तयोः स्वरूपकथनं । जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्त्तमानतया उपादानमिति निरूपणं । ईश्वरलक्षणं । जीवलक्षणं । विश्वतैजसप्राज्ञादीनां लक्षणं । पारमार्थिक-व्यवहारिक-प्रातिभाषिकभेदेन जीवस्य त्रैविध्यकथनं । ईश्वरस्य सर्व्वज्ञत्वसंस्थापनं । जीवस्य किञ्चिज्ज्ञत्वोपपादनं । आवरणविक्षेपशक्तिनिरूपणं । अध्यासादिस्वरूपविवेचनं ।*अद्वितीये ब्रह्मणि वेदान्तानां समन्वयकथनं । प्रपञ्चस्य मिथ्यात्वसंस्थापनं । कर्म्मणां चित्तशुद्धिद्वारा विद्योपयोगित्वकथनं । निर्गुणस्य ब्रह्मण उपास्यत्वनिरूपणं । जीवन्मुक्तिनिरूपणं । अपवर्गकारणकथनमुखेन विविधवादकथनं । मुक्तस्य ब्रह्मभावापत्तिनिरूपणञ्च ।

---

**No. 2827.** कृत्यचन्द्रिका । Substance, country-made paper, 13 × 4 inches. Folia, 120. Lines, 7 on a page. Extent, 3,019 ślokas. Character, Bengali. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámchāñd. Appearance, old. Prose and verse. Incorrect.

**Kṛitya-chandriká.** A calendar of the feasts and fasts enjoined in the Smṛitis, and including the rituals meet for such occasions. By Rudradhara Mahámahopádhyáya. This is distinct from the work noticed under No. 523 of Vol. II, p. 2.

**Beginning.** घनीभूतपरानन्दं प्रनम्य नन्दनन्दनं ।

रुद्रधरेण क्रियते रम्येयं कृत्यचन्द्रिका ॥

तत्रादौ विधिस्वरूपं निरूप्यते । अत्यन्ताप्राप्तौ प्रापणं विधिः । तदुक्तं भट्टपादैः । विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते । इत्यादि ।

**End.** अथ फाल्गुनामावास्या । तत्र लिङ्गपुराणे फाल्गुनतिथिप्रक्रमे विशेष उक्तः ।

अमावास्यां त्रयः पूज्या रुद्रब्रह्मानलास्तथा ।

मांसौदनैः पूरिकाभिः पूतस्वात्मा सबान्धवः ॥

अमावास्यां प्राप्य इति शेषः ।

**Colophon.** इति महामहोपाध्यायश्रीरुद्रधरविरचिता कृत्यचन्द्रिका समाप्ता ।

विषयः। विधिस्वरूपकथनादिकं। प्रतिपदादितिथिस्वरूपनिरूपणं। कालपरिमाणकथनं। मासादिमानकथनं। तिथिद्वैधनिरूपणं। एकभक्तव्रतनिरूपणं। नक्तव्रतविधिनिर्णयः। नक्तव्रतनिर्णयः। अयाचितव्रतनिर्णयः। युग्मतिथिनिरूपणं। सामान्यतः प्रतिपन्निर्णयः। चैत्रप्रतिपत्भाद्रप्रतिपत्कार्त्तिकशुक्लप्रतिपत्कृत्यनिरूपणं। तत्र मार्गपालीबन्धनविधिः। कृष्णिकाकर्षणविधिः। बलिपूजनविधिः। द्वितीयानिर्णयः। भ्रातृद्वितीयाविधिः। तृतीयानिरूपणं। चैत्रशुक्लतृतीयां सौभाग्यशयनव्रतविधिः। अक्षयतृतीया। ज्येष्ठे रम्भातृतीयाविधिः। चतुर्थीनिर्णयः। चैत्रशुक्लचतुर्थीविधिः। वरदाचतुर्थीविधिः। नागचतुर्थीविधिः। गणेशचतुर्थीविधिः। पञ्चमीनिर्णयः। नागपञ्चमीविधिः। षष्ठीनिर्णयः। सप्तमीनिर्णयः। अष्टमीनिर्णयः। अशोकाष्टमीविधि। जन्माष्टमीविधिः। ज्येष्ठाष्टमीविधिः। नवरात्रपूजाविधिः। कुमारीपूजाविधिः। कुण्डनिर्माणविधिः। बुधाष्टमीविधिः। नवमीनिर्णयः। श्रीरामनवमीविधिः। दशमीनिर्णयः। एकादशीनिर्णयः। तत्र उपवासस्वरूपकथनं। तत्र नित्यानित्यविवेचनं। हरिवासरसंज्ञाकथनं। उपवासप्रतिनिधिकथनं। स्त्रीणां व्रतविधिकीर्त्तनं। शुद्धविद्धयोः स्वरूपकथनादिकं। द्वादशीनिर्णयः। श्रवणद्वादशीविधिः। विष्णुशृङ्खलयोगकथनं। त्रयोदशीनिर्णयः। मदनत्रयोदशीविधिः। चतुर्दशीनिर्णयः। शिवरात्रिनिर्णयः। पूर्णिमानिर्णयः। उपाकर्म्मकालनिर्णयः। पवित्रारोपणविधिः। कोजागरकृत्यनिरूपणं। कार्त्तिकपूर्णिमायां काम्यवृषोत्सर्गविधिः। नीलवृषोत्सर्गविधिः। फाल्गुण्यां दोलिकाविधिकथनं। योगविशेषकथनं। अर्द्धोदयादियोगकथनं। अमावास्यानिरूपणञ्च।

---

**No. 2828.** श्राद्धचन्द्रिका। Substance, country-made paper, 14 × 4½ inches. Folia, 112. Lines, 6 on a page. Extent, 2,372 ślokas. Character, Nágara. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámchāñd. Appearance, fresh. Prose and verse. Incorrect.

**S'ráddha-chandriká.** A summary of the rules for the performance of S'ráddhas. By Rudradhara Mahámahopadhyáya. This is a companion volume to the work noticed under the next preceding No.

**Beginning.** गोविन्दं सच्चिदानन्दं जगदानन्दकन्दलं।

वन्दे वृन्दारकैर्वन्द्यं सानन्दं नन्दनन्दनं॥

चण्डेश्वरं गुरुं नत्वा मातरं पितरं तथा।

रुद्रधरेण क्रियते रम्येयं श्राद्धचन्द्रिका।

तत्र कस्तावत् श्राद्धपदवाच्यः।

सम्बन्धपदोपनीतान् पितॄनुद्दिश्य द्रव्यत्यागः श्राद्धमिति वर्द्धमानः। इत्यादि।

**End.** पिण्डप्रतिपत्तिमाह मत्स्यपुराणं।

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा।

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत् तीर्थे विचक्षणः। इति।

**Colophon.** इति महामहोपाध्यायश्रीरुद्रधरकृता श्राद्धचन्द्रिका समाप्तिमागात्। समाप्तोऽयं ग्रन्थः।

विषयः। श्राद्धलक्षणादिनिरूपणं। श्राद्धकरणावश्यकतानिरूपणं। पार्व्वणस्य प्रतिमासकर्त्तव्यत्वविधानं। प्रतिपार्व्वणाशक्तस्य कर्त्तव्यत्वविधानं। सामान्यतः श्राद्धकालनिरूपणं। श्राद्धदेशनिरूपणं। श्राद्धदेवनिरूपणं। श्राद्धविधिकथनं। तत्र आसननिरूपणं। दर्भकथनं। अनुज्ञाकथनं। पिण्डपितृयज्ञातिदेशकथनं। कुशासनविधिः। आवाहनविधिः। अर्घ्यदानविधिः। गन्धादिदानविधिः। पुष्प-धूप-दीपाच्छादन-यज्ञोपवीतदानविधिः। पात्रस्थानादिविधिः। श्राद्धपूर्व्वदिने निमन्त्रणविधिकथनं। ब्राह्मणलक्षणादिकथनं। अग्नौकरणविधिः। कृतशेषदानविधिः। श्राद्धे विहिताविहितविधानं। परिवेशनविधिः। अन्नोत्सर्गानन्तरकृत्यनिरूपणं। पिण्डदानविधिः। मलमासे सपिण्डोत्तरश्राद्धनिषेधः। जीवत्पितृकश्राद्धविधिः। मघात्रयोदशीश्राद्धविधिः। तीर्थश्राद्धविधिः। नवोदकश्राद्धविधिः। नवान्नश्राद्धविधिः। अष्टकाश्राद्धविधिः। पौर्णमासीश्राद्धविधिः। अमावास्याश्राद्धकालादिनिरूपणं। एकोद्दिष्टश्राद्धविधिः। आभ्युदयिकश्राद्धविधिः। आद्यश्राद्धात् पूर्व्वकृत्यनिरूपणं। आद्यश्राद्धकालादिनिरूपणं। सपिण्डीकरणविधिः। साम्वत्सरिकश्राद्धविधानञ्च।

---

**No. 2829.** विवादचन्द्रिका। Substance, country-made paper, 14 × 4 inches. Folia, 235. Lines, 6 on a page. Extent, 4,826 ślokas. Character, Nágara. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámcháñd. Appearance, old. Prose and verse. Incorrect.

**Vivάda-chandriká.** A digest of Smṛiti rules regarding jurisprudence and civil and criminal law. By Rudradhara Mahámahopadhyáya. This is another companion of the work noticed under No. 2827.

**Beginning.** कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारं।

सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि॥

मन्वादिशास्त्रमालोच्य ज्ञात्वा च विदुषां मतं।

कृता रुद्रधरेणेयं रम्या विवादचन्द्रिका॥

अथ ऋणादानं। तत्र वृहस्पतिः।

पदाङ्गसहितस्त्वेष विवादः परिकीर्त्तितः।

विवादकरणान्यत्र पदानि शृणु तानि तु॥ इत्यादि।

**End.** चातुर्व्वर्ण्यस्य या सृतिरसजात्यादिसम्भवा ।
तस्य धर्म्माः समुद्दिष्टा जातिः सा परिकीर्त्तिता ॥

असजातिरसवर्ण इत्यर्थः ।

**Colophon.** इति श्रीमहामहोपाध्यायश्रीचन्द्रधरकृता विवादचन्द्रिका समाप्ता ।

विषयः । ऋणादानविवादपदनिरूपणं । अकृतवृद्धिनिरूपणं । परमवृद्धिनिरूपणं । वृद्धि निषेधः । आधिविधिकथनं । प्रतिभूविधिकथनं । उद्ग्रहणविधिकथनं । निक्षेपविधिः । अस्वामिविक्रयविधिः । सम्भूयसमुत्थानविधिः । दत्ताप्रदानिकविधिः । अभ्युपेत्य शुश्रूषाविधिः । दास्यमोक्षविधिः । वेतनस्यानपक्रियाविधिः । पण्यस्त्रीविधिः । स्वामिपालविवादनिरूपणं । संविद्व्यतिक्रमविधिः । विक्रीयासम्प्रदानविधिः । क्रीत्वानुशयविधिः । सीमाविवादनिरूपणं । सेतुविधिः । कृष्टाकृष्टविधिः । शस्यरक्षादिविधिः । अदण्ड्यनिरूपणं । वाक्पारुष्यविधिः । दण्डपारुष्यविधिः । स्तेयादिविधिः । प्रकाशतस्करातस्कराद्यन्वेषणविधिः । तदतिदेशविधिः । साहसदण्डविधानं । घातकान्वेषणविधिः । सङ्ग्रहणविधिः । अभिगमदण्डविधानं । कन्यादूषणविधिः । बन्धक्यादिगमनविधिः । स्त्रीपुंधर्म्मविधिः । स्त्रीरक्षाविधिः । प्रोषितभर्त्तृकाधर्म्माः । मृतभर्त्तृकाधर्म्माः । नियोगविधिः । परपूर्व्वाविधिः । दायभागविवेचनं । तत्र जीवत्पितृक-विभागः । अनेकप्रमीतमातृकभ्रातृकविभागः । विभागानधिकारिणः । अविभाज्यनिरूपणं । स्त्रीधनकृत्यं । स्त्रीधनविभागः । अप्रजस्त्रीधनविभागः । अवलुप्तधनविभागः । नानावर्णविभागः । विभक्तजविभागः । क्षेत्रज-पौनर्भव-कानीन-गूढोत्पन्न-सहोढ़-दत्तक-क्रीत-स्वयमुपागत-अपविद्ध-कृत्रिम-शूद्रापुत्रादिविभागादिककथनं । पुत्रत्वविवेचनं । पुत्रातिदेशनिरूपणं । निन्दितपुत्रकथनं । अपुत्रधनविभागः । संसृष्टधनविभागः । विभागनिर्णयः । विभक्तकृत्यनिरूपणं । द्यूतसमाह्वयविधिः । क्रियाभेदविधिः । प्रकीर्णकविधिकथनं । शुल्कादिविधिः । दण्डप्रणयनविधिः । दण्डोत्कर्षापकर्षादिविधिः । ब्राह्मणपरिहारविधिः । नगरपरिहार-विधिः । दण्डसंज्ञाविधिः । मानसंज्ञाविधिः । नैगमादिसंज्ञाविधानकीर्त्तनञ्च ।

---

**No. 2830.** प्रायश्चित्तविवेकः । Substance, country-made paper, 13 × 4 inches. Folia, 76. Lines, 6 on a page. Extent, 1,596 ślokas. Character, Bengali. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámcháñd. Appearance, fresh. Prose and verse. Correct.

**Práyaśchitta-viveka.** A summary of the Smriti rules regarding expiations. By S'ríkara A'chárya. This is distinct from the work noticed under No. 415, Vol. I, p. 236.

**Beginning.** प्रणम्य कामदं रामं सच्चिदानन्दविग्रहं ।
प्रायश्चित्तविवेकोऽयं श्रीनाथेन वितन्यते ॥

तत्रादौ प्रायश्चित्तस्वरूपं विविच्यते। हारीतः प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तं। इत्यादि।

**End.** सम्वर्त्तः। विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेत्। एतद्बलात्कारविषयं इति शूलपाणिः। वस्तुतस्तु बलात्कारे अज्ञानादाधिक्यं ज्ञेयमिति।

**Colophon.** इति महामहोपाध्यायश्रीकराचार्य्यसूनुश्रीनाथाचार्य्यविरचितः प्रायश्चित्तविवेकः समाप्तः।

विषयः। प्रायश्चित्तस्वरूपकथनं। महापातकादिनिरूपणं। गुरुप्रायश्चित्ते लघुपापनाशकथनं। विजातीयप्रायश्चित्ताद्विजातीयपापनाशकथनं। तन्त्रप्रसङ्गनिरूपणं। चान्द्रायणादौ भोजनपरिसंख्याकथनं। प्रायश्चित्तोपदेशविधिकथनं। प्रायश्चित्तपूर्व्वाहकृत्यं। बाल्यादिभेदात् प्रायश्चित्तविधिकथनं। धेनुमूल्यव्यवस्थाकथनं। ब्रह्महत्यादिप्रायश्चित्तकथनं। ज्ञानकृतादिनिरूपणं। अतिपातकोपपातकप्रायश्चित्तविधिकथनं। विप्रादिस्वामिगोवधप्रायश्चित्तं। एकाहायनादिगोवधप्रायश्चित्तं। रोधादिनिमित्तकगोवधप्रायश्चित्तं। गोवधापवादकथनं। रजस्वलास्पर्शप्रायश्चित्तं। अन्त्यजस्त्रीगमनभोजनप्रायश्चित्तं। चाण्डालाद्यन्नभोजनप्रायश्चित्तं। उच्छिष्टस्य चण्डालादिस्पर्शप्रायश्चित्तं। गोमांसादिभक्षणप्रायश्चित्तं। यज्ञोपवीतच्छेदनादिप्रायश्चित्तं। क्रोधाद्भार्य्यायां मातृत्वादिवदतः प्रायश्चित्तं। अभक्ष्यभक्षणप्रायश्चित्तं। रेतोमूत्रपुरीषभक्षणप्रायश्चित्तकथनञ्च।

---

**No. 2831.** शुद्धिविवेकः। Substance, country-made paper, 13 × 4 inches. Folia, 128. Lines, 5 on a page. Extent, 1,960 ślokas. Character, Bengali. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámachāñd. Appearance, fresh. Prose and verse. Correct.

**S'uddhi-viveka.** A digest of the Smṛiti rules regarding purification. By S'rínátha A'chárya, son of S'ríkara A'chárya. This is distinct from Nos. 949 and 1736, noticed in Vols. II, 338 and V, 25, respectively.

**Beginning.** प्रणम्य सच्चिदानन्दं वागीशं जगतां प्रभुं।
श्रीरामं कमलाकान्तं परमात्मानमीश्वरं।
श्रीकराचार्य्यपुत्रेण श्रीनाथेन सतां मुदे।
विवेकः शुद्धिविषये क्रियते परमादरात्॥

तत्रादौ शुचितत्कालजीवी कर्म्म कुर्य्यादितिश्रुत्या शुद्धिरहितस्य कर्म्मण्यनधिकारावगमात् प्रथमतः अशौचं निरूप्यते। इत्यादि।

End. दक्षिणहस्तेन अस्थिसञ्चयमादाय दक्षिणां दिशं पश्यन् ओँ नमोऽस्तु धर्म्मराजायेति जलं प्रविश्य स मे प्रीतो भवत्वित्युच्चार्य्य प्रक्षिपेत् । इति

Colophon. इति श्रीमहामहोपाध्यायश्रीकराचार्य्यसूनुश्रीनाथाचार्य्यविरचितः शुद्धिविवेकः समाप्तः। समाप्तश्चायं ग्रन्थः।

विषयः। अशौचपदार्थविवेचनं। अशौचसङ्करनिरूपणं। गर्भस्रावाशौचं। स्त्र्यशौचं। बालाद्यशौचं। सगुणाद्यशौचं। विदेशस्थाशौचं। सपिण्डाद्यशौचं। मृत्युविशेषाशौचं। सद्यःशौचं। शवानुगमनाद्यशौचं। सहानुगमनविधिकीर्त्तनं। मुमूर्षुकृत्यनिरूपणं। पर्णनरदाहविधिः। द्रव्यशुद्धिनिरूपणं। उदकादिदानविधिः। शोकापनोदनं। अशौचान्तद्वितीयदिनकृत्यनिरूपणं। प्रेतक्रियाधिकारिणः। दानविधिः। वृषोत्सर्गविवेचनं। चन्दनधेनुविधिः। सापिण्ड्यादिनिरूपणं। अन्त्येष्टिविधिः। अस्थिप्रक्षेपविधिकीर्त्तनञ्च।

---

**No. 2832** नृसिंहचम्पूः। Substance, country-made paper, 8 × 3 inches. Folia, 22. Lines, 8 on a page. Extent, 508 ślokas. Character, Nágara. Date, ? Place of deposit, Naśipur, Zillá Murshidábád, Rájá Rámachāñd. Appearance, new. Prose and verse. Correct.

**Nṛisiñha-champú.** A poetico-prose romance founded on the story of Prahláda. By Kes'ava Bhaṭṭa, of the family of Laugákshi.

Beginning. कनकरुचिदुकूलः कुण्डलोल्लासिगल्लः
शमितभुवनभारः कोऽपि लीलावतारः।
त्रिभुवनसुखकारी शेषशायी मुकुन्दः
परिकलितरमाङ्गो मङ्गलं नस्तनोतु॥
श्रीलौगाक्षिकुलारविन्दतरणिर्मध्यन्दिनाम्नायवि-
न्मीमांसायुगतन्त्रतर्कचतुरः साहित्यरत्नाकरः।
काव्यं श्रीन्हरेः करोति सुकृती गोदातटप्रस्फुरत्-
पुण्यस्तम्भनिवासिकेशवसुतानन्तात्मजः केशवः।
विष्णोर्नाभिसरोरुहे कमलभूः पाथोनिधौ माधवः
कैलासे सपरिग्रहस्त्रिनयनः पातालगः पन्नगः।
कश्चित्कालममंस्त चारुवसतिं स्वाध्यामहो यद्भया-
द्देवोपद्रवकृद्धिरण्यकशिपुर्दैत्याधिराजोऽभवत्॥ इत्यादि।

End. काव्यं कर्त्तुमजानतापि रुचिरा चम्पूरियं गुम्फिता
श्रीलक्ष्मीनृहरिप्रतापमहिमा सोऽयं समुज्जृम्भते।

यत् स्रुते सलिलं नितान्तविमलं चन्द्रोपलं शीतलं
सोऽयं सान्द्रसुधामयस्य महिमा शीतद्युतेः केवलं ॥

**Colophon.** श्रीमन्नौगाचिकुलोत्पन्नभट्टकेशवविरचितं नृसिंहचम्पूकाव्यं समाप्तं ।

विषयः। प्रथमस्तवके,—हिरण्यकशिपुतेजःप्रचयेन प्रतप्तानां सुमनसां ब्रह्मलोकगमनपूर्व्वकं सार्द्धं तेन विष्णुलोकगमनादिवर्णनं। प्रह्लादस्य जन्मादिवर्णनं।

२ये स्तवके,—अथ कदाचित् असुराधिपः दण्डनीतिप्रबोधाय प्रह्लादं भार्गवस्य निजकुलगुरोर्गेहे प्रेषयामास। सच अध्ययनारम्भसमये वन्दितमुकुन्दचरणारविन्दं प्रह्लादं प्रतिप्रकुपितो भार्गवः एवं प्राह, रे दुरात्मन्! किं जल्पसि, तदिदानीमुपदिशामि सम्यगाकर्णय नोदीरय हरेरभिधामपीति। अथ हालाहलकल्पं जल्पनमेतदाकर्ण्य खिन्नहृदयः स गुरोः समीपे सनातनधर्म्मप्रतिष्ठां कथयामास। ३ये स्तवके,—प्रह्लादमुखात् हरिभक्तिमाहात्म्यं निशम्य 'विषमे पथि गन्तुं प्रवृत्तोऽयमिति' निश्चित्य दैत्याधिपः विविधमुपायमन्वतिष्ठत् यदा प्रह्लादं ततो निवर्त्तयितुं न प्रबभूव तदा शस्त्रादिना व्यापादयैनमिति दानवानादिदेश। अथ जलाग्निविषप्रयोगभृगुपातनादितो भगवत्कृपया प्रह्लादस्य रक्षावर्णनं। तत्र तत्र प्रह्लादकृतस्तोत्रकीर्त्तनञ्च। ४र्थे—५मे च स्तवके नृसिंहरूपेण भगवदाविर्भाववर्णनं। तद्दर्शनेन भीतयोः हिरण्यकशिपुतत्पत्न्योः संवादादिवर्णनं। अथ दैत्याधिपं विदीर्णमाकर्ण्य प्रमुदितमनसः सर्व्वे सुमनसः तत्र समेत्य नृहरेः पुरतो गन्तुमशक्ताः सन्तस्तुष्टुवुः। तत्र देवगणकृतस्तोत्रकीर्त्तनं। नृहरेः क्रोधानलोपशान्तिमपश्यतां ब्रह्मादीनां केवलं गमनपौर्व्वापर्य्योपदेशरचनयैव अवकाशपरिकल्पनवर्णनं। पद्मायाः आगमनादिवर्णनं। प्रह्लादकृतभगवत्क्रोधशान्तिवर्णनं। देवान् प्रति प्रत्येकं भगवत आप्यायनवर्णनं। प्रह्लादस्य राज्याभिषेकमहोत्सववर्णनञ्च।

---

**No 2833.** वाग्भूषणकाव्यम्। Substance, country-made paper, 8 × 3 inches. Folia, 20. Lines, 4 on a page. Extent, 200 ślokas. Character, Nágara. Date, ? Place of deposit, Naśipur, Zillá Murshidábád, Rájá Rámachánd. Appearance, fresh. Verse. Correct.

**Vágbháshaṇa-kávya** A poem giving illustrations of a variety of verbal poetical ornaments. By Rámachandra.

**Beginning.** विप्राधिपारिरिपुसूनुविरोधिताता
मित्रात्मजारिजनकारिसुताङ्कसंस्थः।
पार्थाप्रजाग्रजनकाग्रजपुत्र-
ज्येष्ठो ददातु कुचमध्यमुखः सुखं वः ॥ १ ॥

**End.** पाण्ड्या पक्षितमक्षिते मनुजाप्रीताघपर्णीभक्तेः

धृते श्रीहरिसम्भवेन गुरुणा श्रीरामचन्द्रेण नः ।
इत्थं गूढपदं मतिप्रदमहो वाग्भूषणाख्यं कृतं
काव्यं व्यक्रियतेऽत्र येन विदुषा तं तं नमामो वयं ॥ १ ॥

**Colophon.** इति श्रीरामचन्द्रकृतं वाग्भूषणकाव्यं सम्पूर्णं ।

विषयः । प्रहेलिकाश्लेषादिमयैः श्लोकशतकैः देवानां स्तोत्रकीर्त्तनं ।

---

**No. 2834.** वाग्भूषणव्याख्या । Substance, country-made paper, 8 × 3 inches. Folia, 25. Lines, 6 on a page. Extent, 486 ślokas. Character, Nágara. Date, ? Place of deposit, Naśípur, Zillá Murshidábád, Rájá Rámachánd. Appearance, fresh. Prose. Correct.

**Vágbhúshaṇa-vyákhyá.** A commentary on the poem noticed under the next preceding No. By Rámachandra, the author of the poem.

**Beginning.** भवभयहरमेकं भानुकोटिप्रकाशं
करधृतशरचापं कालमेघावभासं ।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं
कमलविशदनेत्रं सानुजं राममीडे ॥
नत्वा गुरुं राममभीष्टदेवं
भक्ताश्रयोः स्वेन कृतस्य तन्वीं ।
काव्यस्य वाग्भूषणसंज्ञकस्य
व्याख्यां करोति स्म स रामचन्द्रः ॥ विप्रेति ।

**End.** काव्यस्य वाग्भूषणसंज्ञकस्य
गूढाक्षरस्य स्वकृतस्य चित्रां ।
व्याख्यां प्रचक्रे शतकस्य सूरि-
र्विद्वन्मुदे भार्गवरामचन्द्रः ॥

**Colophon.** इति श्रीरामचन्द्रकृता वाग्भूषणव्याख्या समाप्ता ।

विषयः । निजकृतवाग्भूषणकाव्यस्य व्याख्यानं ।

---

**No. 2835.** नायकरत्नम्, वा न्यायरत्नम् । Substance, palm-leaf, 15 × 1 inches. Folia, 105. Lines, 4 on a page. Extent, 1,890 ślokas. Character, Uriyá. Date, ? Place of deposit, Purí, S'aṅkara A'chárya's Maṭha. Appearance, decayed. Prose. Generally correct.

**Náyaka-ratna** ALIAS **Nyáya-ratna.** A commentary on Párthasárathi Miśra's *Nyáya-sútra-málá*. By Rámánuja A'chárya. The text has been noticed under Nos. 1557 and 1887, Vols. IV, 134, and V, 203 respectively. This is probably the same with Mr. Hall's *Nyáya-ratna*, Contributions, p. 28.

**Beginning.** (प्रथमतः अष्टौ पत्राणि खण्डितानि ।)

अध्यापनविधिप्रयुक्तत्वेनैवाध्ययनानुष्ठानसिद्धेरनाकाङ्क्षितत्वेनाक्षरमपि तन्न स्वीकार्य्यमिति भावः । ननु यद्यर्थज्ञानं न प्रयोजनं स्यात् । इत्यादि ।

**End.** तस्य करणं निगमयति पार्थसारथिमिश्रेणेति ।

विच्छिन्नसर्व्वसन्देहा सर्व्वग्रिष्यहितैषिणी ।

जातवेद्गुरुव्याख्या लोके विजयतेतरां ॥

**Colophon.** इति श्रीरामानुजाचार्य्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने नित्यकाम्यविवेकव्याख्यानं समाप्तं ।

विषयः । पार्थसारथिमिश्रकृतन्यायरत्नमालाभिधानमीमांसाप्रकरणस्य व्याख्यानम् ।

---

**No. 2836.** धर्म्ममीमांसापरिभाषा । Substance, palm-leaf, 18 × 1¼ inches. Folia, 11. Lines, 5 on a page. Extent, 203 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, Rámadása Maṭha. Appearance, new. Prose. Generally correct.

**Dharmamímáñsá-paribháshá.** An epitome of the Mimáñsá Sútra of Jaimini. By Apyayí Díkshita, son of Rañgarája Adhvarívara, of the race of Bharadvája.

**Beginning.** अथ धर्म्ममीमांसाशास्त्रे द्वादशाध्याय्यामथातो धर्म्मजिज्ञासेति सूत्रे प्रमाणस्वरूपसाधनफलैः साभासैः धर्म्मस्य विचारं प्रतिज्ञाय तत्र प्रथमेऽध्याये प्रमाणं निरूपितं । इत्यादि ।

**End.** मात्रे प्रवृत्तिः, सोपकारः शास्त्रप्रसङ्गः इत्यादिरूपेण द्वादशे प्रसङ्गः सापवादो निरूपितः ॥

**Colophon.** इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य्यविश्वजिद्याजिरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतिर्धर्म्ममीमांसापरिभाषा समाप्ता ।

विषयः । संक्षेपेन मीमांसासूत्रस्य द्वादशाध्यायविवरणकथनं । तत्र अधिकरणस्वरूपादिविवेचनं । अतिदेशस्वरूपादिविवेचनं । ऊहस्वरूपादिविवेचनं । क्वचित् प्रत्यम्नानात् प्राकृतपदार्थानां निवृत्तिकथनं । सापि अनेकधा । यथाहि,—क्वचिदुपदिष्टपदार्थगतश्रुतनैर-

पेक्षविरोधानिवृत्तिः। क्वचिदविरोधेऽपि नैरपेक्ष्यान्निवृत्तिः। क्वचिन्नैरपेक्ष्याभावेऽपि नियमव-शान्निवृत्तिः। क्वचित् प्रतिषेधात् प्राप्तपदार्थनिवृत्तिश्चेति। तन्त्रस्वरूपनिरूपणं। तच्च त्रिविधं फलतन्त्रं पदार्थतन्त्रं अनुष्ठानतन्त्रञ्चेति। प्रसङ्गनिरूपणं। स च अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः प्राकार्थप्रसङ्गश्चेति त्रिधेतिनिरूपणञ्च।

---

**No. 2837.** वाङ्मयविवेकः। Substance, palm-leaf, 16 × 1¼ inches. Folia, 103. Lines, 6 on a page. Extent, 3,321 ślokas. Character, Uriyá. Date, 38th year of the reign of king Mukunda. Place of deposit, Purí, S'añkara A'chárya's Maṭha. Appearance, new. Prose and verse. Incorrect.

**Váñmaya-viveka.** A treatise on versification. By Chintámaṇi Mis'ra.

**Beginning.** प्रणतशिरसो यत्पादाब्जे सृजन्ति गिरः + +
रपि जड़धियो रिङ्गद्भृङ्गातरङ्गसुनिर्मलाः।
रचिततनुतयो वागीशाद्याः सदा यमुपासते
भवभयभिदे तस्मै नारायणाय नमो नमः॥
— — — — — — —।
आसीदासिन्धुवेलावनितलविमलीकारिकीर्त्तीन्दुरश्मि-
र्भारद्वाजान्ववायाम्बुदहवनरविर्विष्णुभक्त्येकतानः।
विद्वद्वादीभसिंहः सुललितकविताकालिदासावतारः
श्रीसिद्धेशस्य सूनुर्जगति हरिहरो वाजपेयी चिताग्निः॥
— — — — — — — —।
य उत्कलेश + + दीचिताख्यः लब्धप्रसिद्धिर्विदुषामधीशः।
सदातिथेयस्पृहणीयकीर्त्तिराजन्मदूरीकृतनिन्द्यमार्गः॥
नारायणपदाम्भोजचञ्चरीकायितान्तरः।
तस्य चिन्तामणिर्नाम सूनुः श्रीमा + कोऽजनि॥
यः सम्बरारिचरितं त्रिशिरोवधञ्च
कादम्बरीरससुधामसभाप्रमोदं।
अचावलीमपि च कंसवधञ्च कृत्य-
पुष्पाञ्जलिसमितिवर्णनमप्यकार्षीत्॥
येन प्राबन्धि संक्षेपादभिधानसमुच्चयः।
गद्यं हृद्यतरञ्चैव वासुदेवस्तवाश्रयं।
— — — — — —।

वाङ्मयं नाम या काचिद्वर्णानां सन्ततिर्बुधैः ।
छन्दोऽपराभिधा नेह लोके सम्परिकीर्त्त्यते ॥ इत्यादि ।

**End.** कौऽणीयं (?) वराहीयां दीपिकां रत्नमालिकां ।
तथा महाकविकृतान् प्रयोगानभिगम्य च ॥
वीक्ष्य सम्यग्विचार्य्यैव तेषां मतैः कृतो यतः ।
तद्वाङ्मयविवेकोऽयमशङ्कं स्पृश्यतां जनैः ॥
शरमुनिरसवेदमिते सम्प्राप्ते कलियुगस्याब्दे ।
क्षेत्रे श्रीपुरुषोत्तमनाम्नि ग्रन्थोऽयमाचरितः ॥
स्वकृतैः परकृतैश्च सलक्ष्यैरिह लक्षणैः ।
ग्रन्थाः शतद्वययुताः संख्याताखिलसहस्रकाः ॥

**Colophon.** इति श्रीचिन्तामणिमिश्रविरचिते वाङ्मयविवेके गद्याद्यभिधानाख्यः । पूर्णः षष्ठः परिच्छेदः ।

श्रीमन्मुकुन्दनृपतेरष्टत्रिंशकेऽङ्के राममिश्रेण ।
ज्येष्ठे मासि दशम्यां वाङ्मयविवेको मयालेखि ॥

**विषयः ।** छन्दोलक्षणादिनिरूपणम् ।

---

**No. 2838.** विष्णुभक्तिचन्द्रोदयः । Substance, palm-leaf, 18 × 1¼ inches. Folia, 175. Lines, 4 on a page. Extent, 2,697 ślokas. Character, Nágara, Date, ? Place of deposit, Purí Rámadása Maṭha. Appearance, fresh. Prose and verse. Incorrect.

**Vishṇu-bhakti-chandrodaya.** A treatise on devotion to Vishṇu, supplying rules for the observance of all the principal Vaishṇava fasts, festivals, and ceremonies, and describing in detail the duties of Vaishṇavas. By Nṛisiñháraṇya Muṇi.

**Beginning.** वन्देऽहं श्रीनृसिंहेशं पुण्यारण्यं गुरूत्तमं ।
श्रीराममन्त्रराजस्य वैष्णवाह्लादसिद्धये ॥
आविर्बभूव लोकेऽस्मिन् सद्भक्ताह्लाददायकः ।
श्रीविष्णुभक्तिचन्द्रोऽयं विष्णुप्रेमाब्धिवर्द्धनः ॥
तस्य श्रुतेरेककलात्मकस्य छाया + नेका + तमः प्रबन्धः ।
शैथिल्यमेतीन्द्रिय + + भ्रान्त्या नानाकरायाभगतौ क्षमायां ॥ इत्यादि ।

**End.** श्रीविष्णुभक्तिचन्द्रोदयः सत्षोड़शकलायुतः।
सेव्यतां सेव्यतां शश्वद्भगवद्भक्तिवर्द्धनः॥
— — — — — —।
नृसिंहारण्यविख्यातो विष्णुधर्म्मप्रकाशकः।
विचार्य्य विष्णुशास्त्राणि चक्रे ग्रन्थं महामुनिः॥

**Colophon.** इति श्रीनृसिंहारण्यमुनिविरचिते श्रीविष्णुभक्तिचन्द्रोदये ग्रन्थे षोड़शकलाप्रकरणं। समाप्तोऽयं ग्रन्थः॥

विषयः। गुरूपत्तिविधिकथनं। शिष्यलक्षणकथनं। गुरुलक्षणकथनं। श्रीवैष्णवदीक्षाग्रहणस्य आवश्यकताकथनं। विष्णुमन्त्रमाहात्म्यकीर्त्तनं। मन्त्रसाधनप्रकारकथनं। तत्र ध्यानादिप्रकारनिरूपनं। पुरश्चरणविधिकथनं। मन्त्रसिद्धिलक्षणकथनं। वैष्णवानामाह्निककृत्यविधिकथनं। तत्र प्रातःकृत्यविधानकथनं। ब्रह्मध्यानविधिकथनं। जलपार्थिवभस्मादिसप्तविधस्नाननिरूपणं। अभिषेकविधिकथनं। प्राणायामविधिकथनं। अरुणोदयान्ते स्तोत्रपाठादिविधिकथनं। शालग्रामशिलामाहात्म्यकथनं। तिलकधारणविधिकथनं। सर्व्वतोभद्रादिमण्डलविधिकथनं। विष्णुस्थानसम्मार्ज्जनादिविधिकथनं। विष्णुपादोदकमाहात्म्यकथनं। रक्तवस्त्रादिधारणप्रतिषेधपूर्व्वकं शुक्लवसनधारणविधिकथनं। ऊर्द्धपुण्ड्रधारणादिविधिकथनं। गोपीचन्दनादिमाहात्म्यकीर्त्तनं। तप्तशङ्खचक्रादिचिह्नधारणावश्यकताकथनं। तुलस्यादिमालाधारणविधिनिरूपणं। प्रथमतो गुरुपूजाविधिकथनं। शालग्रामशिलालक्षणादिनिरूपणं। विष्णोर्महास्नपनविधिकथनं। ततो घण्टावादनमाहात्म्यकथनं। तुलसीचन्दनादिदानमाहात्म्यकथनं। चामरादिव्यजनमाहात्म्यकथनं। केतक्यादिपुष्पदानमाहात्म्यकीर्त्तनं। आरात्रिकविधिकथनमुखेन धूपदीपादिदानविधिकथनं। विष्णुपादोदकमाहात्म्यादिकथनं। विशेषेण तुलसीमाहात्म्यकथनं। तुलसीपूजनविधिकथनं। वैष्णवलक्षणादिकथनं। श्रीमद्भागवतमाहात्म्यकथनं। विष्णुकथाश्रवणादिमाहात्म्यकथनं। भागवतधर्म्मनिरूपणं। प्रेमभक्तिलक्षणतच्चिह्नादिकीर्त्तनं। विष्णुभक्तिस्वरूपादिनिरूपणं। तत्र अविहित-विहितादिभेदेन तद्विभागकथनं। श्रवणकीर्त्तनादिलक्षणकथनं। तत्तन्माहात्म्यकथनञ्च। साधुसङ्गमाहात्म्यकथनं। अथ मध्याह्ने भगवत्पूजाविधिकथनं। भगवन्निवेदितवस्तुग्रहणकथनमुखेन दाननिवेदनयोः स्वरूपभेदनिरूपणं। भगवन्नैवेद्यमाहात्म्यकथनप्रसङ्गेन पितृश्राद्धादौ तद्दानावश्यकताकथनं। सायाह्ने विष्णोराधानविधिकथनं। विष्णोर्नाममाहात्म्यादिकीर्त्तनं। विष्णोः पुरतः नृत्यगीतादिकरणमाहात्म्यकथनं। चतुःषष्ठ्युपचारेण विष्णोराराधनविधिकथनं। एकादशीमाहात्म्यादिकथनं। तद्व्रतोपवासादिविधिनिरूपणं। दशमीमहोत्सवविधिनिरूपणं। अष्टमहाद्वादशीमाहात्म्यादिकीर्त्तनं। हरिवासरजागरणमाहात्म्यकथनं। पारणादिविधिकथनं। अथ दोलयात्राविधिकथनादिकं। एवं क्रमेण द्वादशमासीययात्राविधिकथनं। ऋतुविशेषे पुष्पविशेषदानविधिकथनं। जन्माष्ट-

मीमाहात्म्यादिकथनं। तत्र पूजाविधिकथनञ्च। श्रवणद्वादशीविधिकथनं। कार्त्तिकमासमाहात्म्यकथनं। प्रबोधन्येकादशीमाहात्म्यकथनं। अथ विशेषेण रथयात्राविधिकथनं। माघमाहात्म्यकथनं। तत्र परशुरामार्च्चनविधिकथनञ्च।

---

**No. 2839.** रामरहस्यम्, सदाशिवसंहितोक्तम्। Substance, palm-leaf, 17 × 1¼ inches. Folia, 106. Lines, 4 on a page. Extent, 1,643 ślokas. Character. Nágara. Date, ? Place of deposit, Purí, S'rírámadása Maṭha. Appearance, new. Verse. Generally correct.

**Ráma-rahasya.** On devotion to Ráma as the Supreme Divinity. Anonymous. It professes to be an extract from the Sadáśiva Sañhitá, and is quite distinct from the work of this name noticed under No. 2663 *ante*, p. 125.

**Beginning.** चक्षुःपादोरुरोभिश्च वाचया हृदयेन च।
रामं स्मरामि भक्तानां भजमानं मनोरथान्॥
वेत्तारं रामकामानां वक्तारं शृण्वतां सतां।
लक्ष्मीवन्तं लसल्लक्ष्मजातं लक्ष्मणमाश्रये॥
रामरामरहस्यानि सङ्गाप्याणि प्रकुर्व्वते।
तिरस्कुर्व्वत आमुक्तोर्युक्तोऽञ्जलिर्हनूमते (?)॥
कैलासे मेरुसङ्काशे नानारत्नविचित्रिते।
नानागुल्मलतास्तोमद्रुमराजिविराजिते॥
सर्व्वदा सुखमासीनौ नानाख्यानककोवि+।
सर्व्वज्ञौ सर्व्वलोकेशौ पार्व्वतीपरमेश्वरौ॥
रम्ये वसन्तसमये कामकोत्सवबर्द्धने।
कदाचित् कौतुकाविष्टौ चक्रतूरसवत्कथां॥ इत्यादि।

**End.** रामध्यानप्रभावेण रामनामानुकीर्त्तनैः।
विमला पार्व्वती नाम लोकपूज्या हि वर्त्तते॥
पार्व्वतीशिवरामाणां सीतायाश्च विशेषतः।
प्रसादं लभते सद्यः श्रोता वक्ता च कारकः॥

**Colophon.** इति श्रीसदाशिवसंहितायामुमामहेश्वरसंवादे श्रीरामरहस्ये विंशोऽध्यायः। समाप्तोऽयं ग्रन्थः।

विषयः। शिवाशिवयोः संवादेन श्रीराममाहात्म्यकथनं। साधुसङ्गमाहात्म्यकथनं।

विष्णुभक्तिप्रशंसाकीर्त्तनं। भगवद्दास्यमाहात्म्यकथनं। रामनाममाहात्म्यकथनं। वासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धरूपचतुर्व्यूहनिरूपणं। रामस्य परब्रह्मत्वकथनं। रामकुण्डजानकीकुण्डादिमाहात्म्यकथनं। गोमतीतीरे गोपगोपीभिः सार्द्धं श्रीरामस्य क्रीड़ादिवर्णनं। श्रीरामस्य लीलाध्यानप्रकारकथनं। सीतामाहात्म्यकथनं। अशोकवने सीतया सह रामस्य विलासवर्णनं। सीतारामयोर्विश्रम्भालापादिवर्णनं। तयोरनुरागेङ्गितादिवर्णनञ्च। सहस्रेण स्त्रीणां सार्द्धं रामस्य रासलीलावर्णनं। सीतायाः मानादिवर्णनं। सीतारामयोरुक्तिप्रत्युक्तिवर्णनव्याजेन सम्भोगवर्णनं। सीतायाः कन्दुकक्रीड़ावर्णनं। प्रमत्तानां सीतादीनां कलहवर्णनं। रामस्य ब्रह्मस्वरूपत्ववर्णनं। सत्त्वरजस्तमोगुणानां कार्य्यभेदकथनं। भगवल्लीलानुकरणमाहात्म्यकीर्त्तनं।

---

**No. 2840.** सुदर्शनशतकम्। Substance, foolscap-paper, 15 × 5 inches. Folia, 25. Lines, 4 on a page. Extent, 250 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, Rághavadása Maṭha. Appearance, new. Verse. Generally correct.

**Sudarśana-śataka.** A century of verses in praise of the Sudarśanachakra of Vishṇu. By Kuranáráyaṇa.

**Beginning.** सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चि-
र्बाह्यावाह्यान्धकारक्षतजगदगदङ्कारभूम्ना स्वधाम्ना।
दोःखर्ज्जूदूरगर्ज्जद्दिबुधरिपुबधूकण्ठवैधव्यकल्या
ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि॥ १॥
प्रत्युद्यातं मयूखैर्नभसि दिनकृतः प्राभवं प्रभाभि-
र्भूमौ सौमेरवीभिर्दिवि परिवसितं दीप्तिभिर्देवधाम्नाम्।
भूयस्यै भूतये वः स्फुरतु सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं
चाक्रं जाग्रत्प्रतापं त्रिभुवनविजयव्यग्रमुग्रं महस्तत्॥ इत्यादि।

**End.** पद्यानां तत्त्वविद्याद्युमणिगि + + वीद्धाङ्कसंख्याधराणाम्
अर्च्चिष्यङ्गेषु नेम्यादिषु च परमतः पुंसि षड्विंशतिश्च।
सङ्क्षेः सौदर्शनं यः पठति शतमिदं कूरनारायणेन
प्रोक्तं निर्विष्टभोगो भजति स परमां चक्रसायुज्यलक्ष्मीं॥

**Colophon.** इति सुदर्शनशतकं समाप्तम्॥

विषयः। स्तोत्रव्याजेन सुदर्शनचक्रस्य अरनाभिज्योतिरादिवर्णनं।

---

**No. 2841.** सुदर्शनशतकव्याख्यानम्। Substance, foolscap-paper, 15 × 5 inches. Folia, 50. Lines, 9 on a page. Extent, 1,630 ślokas. Character, Nágara, Date, Sm. 1932. Place of deposit, Purí, Rághavadása Maṭha. Appearance, new. Prose. Generally correct.

**Sudarśanaśataka-vyákhyana.** A commentary on the work noticed under the next preceding No. Anonymous.

**Beginning.** रङ्गेशविज्ञप्तिकरा+यस्य चकार चक्रेशनुतिं निदत्तये।
समाश्रयेऽहं वरपूरवीयं तं कूरनारायणनामिनं + ॥

वाञ्छेति। वाञ्छश्च अवाञ्छश्च तौ च तावन्मकारौ च। — — — काञ्छेषु विषयेषु अभो ग्येषु स्रक्चन्दनादिषु विषयेषु भोग्यताभ्रान्तिः॥ इत्यादि।

**End.** सौदर्शनं स्तोत्रं यः पठति स पुरुषः निर्व्विष्टभोगः, उपभुक्त इव लौकिकसुखः। तदनन्तरं परमां चक्रसायुज्यलक्ष्मीं प्राप्नोति।

**Colophon.** इति सुदर्शनशतकव्याख्यानं समाप्तं। संवत् १९३२।

विषयः। कूरनारायणकृतसुदर्शनशतकस्य व्याख्यानम्।

---

**No. 2842.** कालमाधवीयविवरणम्। Substance, country-made paper, 12 × 4 inches. Folia, 65. Lines, 11 on a page. Extent, 2,188 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, Gopála Tírtha Maṭha. Appearance, new. Prose. Correct.

**Kálamádhavíya-vivaraṇa.** A gloss on the Kálamádhavíya, a treatise on time meet for sacrifices. By Tarkatilaka, younger brother of Mohana-madhusúdana.

**Beginning.** सिन्दूरप्रतिपूजितवदनः प्रत्यूहकन्दलीकदनः।
सनयविनयनतमघः श्रियं सदा नः सदा दिशतु॥
माथुरविप्रः श्रीमान् सुदर्शनः स्वस्य बोधाय।
श्रीमाधवपदचिन्तां मोहनमिश्रोपदेशतः कुरुते॥
— — — — — — — —।
अचर्णीयमिदं तत्त्वं लचर्णीयं प्रविश्य च।
तचर्णीयं न तत्त्वज्ञै रचर्णीयं विचक्षणैः॥

वागीशाद्या इति। वागीशो ब्रह्मा तदाद्या देवा निखिलकार्य्यारम्भे यं प्रणम्य कृतकृत्याः सिद्धकार्य्याः। इत्यादि।

**End.** खमुनिरसेन्दुमितेऽब्दे माधवशुक्लद्वितीयायां।
रचितं विवरणमेतन्मनीषिणा तर्कतिलकेन॥
द्वारकादासपुत्रस्य द्वारकानाथसेविनः।
इत्यवंशप्रसूतस्य कृतिः प्रचरताचिरं॥

**Colophon.** इति श्रीमोहनमधुसूदनानुजतर्कतिलकरचितं कालमाधवीयविवरणं सम्पूर्णं।

**विषयः।** माधवाचार्य्यकृतकालनिर्णयस्य व्याख्यानम्।

---

**No. 2843. किरणावलीभास्करः।** Substance, country-made paper, 12 × 3½ inches. Folia, 103. Lines, 12 on a page. Extent, 3,476 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, Gopála Tírtha Maṭha. Appearance, old. Prose. Generally correct.

**Kíraṇávalí-bháskara.** A gloss on Udayana Ácharya's Nyáya-kiraṇávalí, which is a commentary on Prasastapáda Ácharya's work on the Mímáñsá aphorisms. By Padmanátha Miśra, son of Balabhadra, a younger brother of Viśvanátha. The text has been noticed under No. 1968, vol. V, p. 289 and another commentary under No. 1080, Vol. III, p. 50.

**Beginning.** उपदिष्टा गुरुचरणैरस्पृष्टा वर्द्धमानेन।
किरणावल्यामर्थास्तन्यन्ते पद्मनाभेन॥
विलसद्वर्द्धमानापि तिरोहितदिवाकरा।
सकलार्थप्रकाशाय न क्षमा किरणावली॥
बलभद्रमुखाम्भोजवचनादुदयाचलात्।
उदितो भास्करस्तस्मादादरेण निषेव्यताम्॥

विघ्नध्वंसकामनया कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति। विद्येति। विद्यैव या सन्ध्या तस्या उदयाद्रिकादविद्यैव या रजनी—इत्यादि।

**End.** भाष्यस्येति शब्दतात्पर्य्यमाह। इतीति॥
यस्तर्कदुस्तरतरार्णवकर्णधारो
वेदान्तवर्त्मनिरताध्वगसार्थवाहः।
श्रीपद्मनाथरचितेन दिवाकरेण
तुष्टोऽस्मनास्तु स कृती बलभद्रमिश्रः॥

**Colophon.** इति श्रीवल्लभद्रात्मजविजयश्रीगर्भसम्भवविश्वनाथानुजसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्य्यमिश्रश्रीपद्मनाभकृतः किरणावलीभास्करः सम्पूर्णः ।

विषयः । उदयनाचार्य्यकृतन्यायकिरणावल्या व्याख्यानम् ।

---

**No. 2844.** ब्रह्मरामायणम् । Substance, palm-leaf, 17 × 1¼ inches. Folia, 34. Lines, 4 on a page. Extent, 507 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, S'rírámadása Maṭha. Appearance, new. Verse. Incorrect.

**Brahma-rámáyaṇa.** A poem descriptive of the Rása festival celebrated by Ráma. The MS. is incomplete, and the author's name is not apparent. It is perhaps an extract from one of the Upapuráṇas.

**Beginning.** भूषण्ड उवाच ।

गरुडेनाथ संपृष्टो भूषण्डः प्राह कौतुकात् ।
श्रूयतां तार्क्ष्य काकुत्स्थरासकेलिमहोत्सवः ॥
व्यासनारदयोर्यच्च संवादः समजायते ।
रासकेलिर्न वा कस्य प्रमोदायाभिजायते ॥
सीताभर्त्तुर्भगवतो विलासः कस्य गोचरः ।
योगेनापि न यल्लेशं प्रभुर्ज्ञातुं पितामहः ॥ इत्यादि ।

**End.** रासोत्सवं ये शृण्वन्ति पुण्यं राघवसीतयोः ।
ते परां भक्तिमासाद्य यान्ति पार्षदतां हरेः ॥

**Colophon.** इति श्रीब्रह्मरामायणे रासक्रीड़ायां पूर्णकन्यागणमनोरथो नाम सप्तदशोऽध्यायः ।

विषयः । श्रीरामचन्द्रस्य रासक्रीड़ावर्णनं । तत्र भूषण्डेन सह गरुड़स्य संवादेन रामस्यावतारप्रयोजनकथादिकीर्त्तनं । सीतया सह रामचन्द्रस्य विवाहोत्सववर्णनं । तत्र मार्गकृष्णपञ्चम्यां तद्विवाहः समजायतेति कथनं । कार्त्तिकपूर्णिमायां रामस्य रासलीलाकथनं तद्वर्णनञ्च । वैजयन्त्यादिलक्षणकथनं । रासस्थलीवर्णनं । कामिनीनां रामप्रमोदनवर्णनं । तत्रद्विषष्टिरमणीनां श्रेष्ठत्वकथनं । तासां सङ्गीतादिकरणवर्णनञ्च ।

---

**No. 2845.** प्रबोधसुधाकरः । Substance, country-made paper, 12 × 5 inches. Folia, 12. Lines, 10 on a page. Extent, 390 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, Gopála Tírtha Maṭha. Appearance, old. Verse. Incorrect.

**Prabodha-sudhákara.** A metrical disquisition on the non-dual theory of the Vedánta and the supreme divinity of Krishṇa. By S'áṅkara Áchárya, disciple of Govinda. Hall's Contributions, p. 103.

**Beginning.** नित्यानन्दैकरसं सच्चिन्मात्रं स्वयं ज्योतिः ।
पुरुषोत्तममजमीशं वन्दे श्रीयादवाधीशं ॥
यं वर्णयितुं साक्षात् श्रुतिरपि मूकेव मौनमाचरति ।
सोऽस्माकंमनुजानां किं वाचां गोचरो भवति ॥
यद्यप्येवं विदितं तथापि परिभाषितो भवेदेव ।
अध्यात्मशास्त्रसारहरिचिन्तनकीर्त्तनाभ्यासैः ॥ इत्यादि ।

**End.** यद्यपि गगनं शून्यं तथापि जलदामृतांशुरूपेण ।
चातकचकोरनाम्नोर्दृष्टभावात्पूरयत्याशाम् ॥
तद्भजतां पुंसां दृग्वाङ्मनसामगोचरो हरिः ।
कृपया फलयत्यचिरात् सत्यानन्दामृते विपुलम् ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्गोविन्दभगवत्पादपूज्यश्रीमच्छङ्कराचार्य्यविरचितः प्रबोधसुधाकरः समाप्तः ॥

विषयः । आत्मानात्मविवेककथनं । विषयनिन्दाकीर्त्तनं । मनसो निन्दाकीर्त्तनं । तयोर्निग्रहोपायकीर्त्तनं । मायासिद्धिकथनं । लिङ्गदेहादिनिरूपणं । अद्वैतसिद्धिकथनं । भक्तिनिरूपणं । श्रीकृष्णभक्तिमाहात्म्यकथनं । श्रीकृष्णस्य परात्मस्वरूपत्वकथनं । सगुणनिर्गुणयोर्ब्रह्मणोरैक्यनिरूपणञ्च ।

---

**No. 2846.** पदभावार्थचन्द्रिका । Substance, country-made paper, 16 × 5 inches. Folia, 73. Lines, 10 on a page. Extent, 2,745 ślokas. Character, Nágara. Date, ? Place of deposit, Purí, Rághavadása Maṭha. Appearance, fresh. Prose. Incorrect.

**Padabhávártha-chandriká.** A commentary on the Gíta-govinda of Jayadeva. By S'ríkáṇta Miśra. Other commentaries have been noticed under Nos. 928, 929, 1317, and 1397 in the preceding volumes.

**Beginning.** समस्तगोपसुन्दरीविलासरासमण्डितः ।
करोतु भावुकं मधौ मनोजमानदो हरिः ॥
गीतगोविन्दटीकेयं पदभावार्थचन्द्रिका ।
मद्दादाज्ञाङ्कतारम्भा साहसेति वितन्यते ॥

नोदाहरन्ति विशदाः सुरतानीकसागरम् ।

इति श्रीपरमानन्दरतिवर्णनमीर्य्यते ॥

अथैतत् काव्यस्य द्वादशसर्गीयस्य निर्व्विघ्नसमाप्त्यर्थं परमाभीष्टदेवताराधामाधवस्य रमणलक्षणं मङ्गलमादावाचरति । मेघैरित्यादिना । राधामाधवयो रहःकेलयः एकान्तक्रीड़ा-जयन्ति सर्व्वोत्कर्षेण वर्त्तन्ते । इत्यादि ।

**End.** एतत्काव्यविवेचनं प्रणयिनां यत्संशयोन्मूलनात्
पुण्यं यच्च हरिस्मृतेः प्रतिपदव्याख्यासु मे सञ्चितं ।
तेन प्रीतमनास्तनोतु सततं श्रेयो मम श्रीपतिः
शश्वन्मङ्गलमातनोत्वपि सतां सङ्गायतां शृण्वतां ।

**Colophon.** इति श्रीगीतगोविन्दटीकायां मिश्रश्रीकान्तविरचितायां पदभावार्थच-न्द्रिकायां द्वादशः सर्गः ।

विषयः । जयदेवकृतगीतगोविन्दस्य व्याख्यानम् ।

---

**No. 2847.** वाक्यवृत्तिप्रकाशिका । Substance, palm-leaf, 16 × 1¼ inches. Folia, 22. Lines, 4 on a page. Extent, 467 ślokas. Character, Bengali. Date, ? Place of deposit, Purí, S'añkara A'chárya's Maṭha. Appearance, new. Prose. Correct.

**Vákyavritti-prakáśiká.** A commentary on the *Vákyavritti* of S'añkara A'chárya. Other commentaries have been noticed under Nos. 178, 1324 and 1445.

**Beginning.** श्रुतिस्मृतिपुराणानामालयं करुणालयं ।
नमामि भगवत्पादशङ्करं लोकशङ्करं ॥
ब्रह्माहमेतन्मयि भाति विश्वं
श्रीमाध्वप्राज्ञगुरोः प्रसादात् ।
अनर्थविश्वेश्वरपण्डिताख्यः
तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यं ॥

परमकृपानिधिः श्रीमच्छङ्कराचार्य्यस्तापत्रयार्कसन्तप्तानाम् अपरिमितजननादिसंसाराध्व श्रमपरिखेदितानामात्मज्ञानशिशिरमधुरजलाकाङ्क्षिणां विदूरशारीरकमीमांसाजलाधार-गमनासमर्थानां वाक्यवृत्त्यभिधानोपदेशप्रकरणप्रपापरिकल्पनेनान्तःशीतलतां विगतक्लेशताञ्च आपादयन् — — — — — — — नमस्कुरुते । सर्गस्थितिप्रलयहेतुमित्यादिना ।

**End.** सर्व्वगतत्वेन जीवस्य तत्प्राप्तेरयुक्तत्वात्। प्राप्तिर्नाम तद्भावोपपत्तिरिति ज्ञापयन्नाह कैवल्यमिति।

**Colophon.** इति श्रीमद्दयोगिमाधवप्राज्ञगुरुप्रसादासादितापरिमितज्ञानानन्दविश्वेश्वरपण्डितविरचिता वाक्यवृत्तिप्रकाशिका समाप्ता।

विषयः। शङ्कराचार्य्यविरचितवाक्यवृत्तिनामकवेदान्तप्रकरणस्य व्याख्यानम्।

---

**No. 2848. उपदेशसाहस्रीटीका, (मूलसहिता।)** Substance, country-made paper, 13 × 2½ inches. Folia. 168. Lines, 7 on a page. Extent, 2,884 ślokas. Character, Bengali. Date, ? Place of deposit, Purí, S'añkara A'chárya's Maṭha. Appearance, decayed. Prose. Correct.

**Upadeśa-sáhasrí-ṭíká.** A commentary on the *Upadeśa-sáhasríka* of S'añkara A'chárya. By A'nandajnána, disciple of S'uddhánanda. The text and other commentaries have been noticed under Nos. 1474 and 1475.

**Beginning.** प्रणम्य कृष्णं प्रणतार्त्तिहारिणं
गुरूनपि स्वान् परमात्मरूपिणः।
मया सहस्रीविवृतिर्विधीयते
कृतापि मन्दोपकृतिप्रसिद्धये॥

सकलोपनिषदर्थसारसंग्राहिकामुपदेशसाहस्रीं गद्यपद्यात्मिकां प्रारभमाणो भगवान् भाष्यकारश्चिकीर्षितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचरगमनाभ्यां — — — — — अस्य शारीरकप्रकरणस्य तदीयमेवानुबन्धजातं सूचयति। चैतन्यमिति। इत्यादि।

**End.** अभ्यासो ग्रन्थस्य गद्यपद्यात्मनः समाप्त्यर्थः।
उपदेशसहस्रीयं गद्यपद्यमयी मया।
व्याकृता व्याकृताप्यन्यैर्मन्दानुग्रहसिद्धये॥
व्याक्रिया सत्क्रिया सेयं कुर्व्वती शर्म्म निर्म्मलं।
कृतिनां कृतविद्यानामाश्रिता पुरुषोत्तमं॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतोपदेशसाहस्रीटीका समाप्ता।

विषयः। शङ्कराचार्य्यकृतोपदेशसाहस्र्याः गद्यपद्यात्मिकायाः व्याख्यानम्।

---

**No. 2849.** षट्पदीमञ्जरी। Substance, country-made paper, 12 × 3 inches. Folia, 13. Lines, 12 on a page. Extent, 536 ślokas. Character, Bengali. Date, Sk. 1646. Place of deposit, Puri, S'añkara A'chárya's Maṭha. Appearance, old. Prose. Incorrect.

**Shaṭpadí-manjarí.** A commentary on a poem in six stanzas by S'añkara A'chárya. By S'añkaránanda Tírtha, disciple of S'ivanáráyaṇánanda Tírtha.

**Beginning.** निजेष्टसम्प्रदायकं + + कल्पभूरुहाकृतिं।
दुरन्तविघ्नवारिदप्रभञ्जनं निरञ्जनं॥
मदीयचित्तसारसप्रबोधभास्करं परं।
रसालमूलवासिनं भजामि विघ्ननायकं॥
— — — — — — —।

अथ सच्चिदानन्दात्मकमद्वितीयं ब्रह्मैव विमलसत्त्वप्रधानमायोपाधिकं सदीश्वरभावमुपाजगाम। जीवेशावभासेन करोतीति श्रुतेः। स च मायाप्रतिविम्बित ईश्वर इति संक्षेपकृतप्रकटार्थकारविद्यारण्यमतानुसारिणः। इत्यादि।

**End.** भगवद्भक्तिगन्धाढ्यैः कुसुमैर्वाङ्मयैः कृता।
षट्पदीमञ्जरी सम्यक् योजिता कृष्णपादयोः॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीशिवनारायणानन्दतीर्थगुरुचरणसेवकश्रीशङ्करानन्दतीर्थविरचिता षट्पदीमञ्जरी सम्पूर्णा। शकाब्दाः १६४६।

विषयः। शङ्कराचार्य्यकृतषट्पद्यभिधानसन्दर्भस्य व्याख्यानम्।

---

**No. 2850.** प्रत्यक्षालोकटिप्पनी। Substance, country-made paper, 15 × 2 inches. Folia, 121. Lines, 6 on a page. Extent, 4,338 ślokas. Character, Bengali. Date, Sk. 1523. Place of deposit, Puri, S'añkara A'chárya's Maṭha. Appearance, old. Prose. Correct.

**Pratyakshâloka-ṭippaní.** Notes on Jayadeva Miśra's *Pratyakshâloka* which is on its turn a gloss on the Pratyaksha section of Gañgeśa's *Chaturvarga-chintámaṇi.* By Harídása Nyáyálañkára Bhaṭṭáchárya. *Cf. ante,* V, 299.

**Beginning.** वक्षाणीत्यादि। अत्र अधिकरणभेदे प्रतिविम्बभेदस्य आदर्शभेदादौ लोकसिद्धत्वात्। शास्त्रेऽपि जीवाधिकारादौ द्विचन्द्रभ्रमवत् तथैवोपपादितत्वादयमर्थः। इत्यादि।

End. तथा च यथार्थत्वमौत्सर्गिकमित्यर्थः। नतेे + + खि ज्ञत्वभिप्रायेणाह-भट्टाङ्करिति ॥

Colophon. इति महामहोपाध्यायश्रीहरिदासभट्टाचार्य्यकृता प्रत्यक्षालोकटिप्पनी समाप्ता।

शाके त्रियुग्मविशिखक्षणदाधिनाथे
मासे + + सुरधुनीसविधे चतुर्थ्यां।
श्रीसार्व्वभौमप्रवि (?) प्रणयेनलब्ध-
कन्दर्परायपदवीक इदं लिलेख ॥

विषयः। जयदेवमिश्रकृतप्रत्यक्षालोकस्य व्याख्यानम्।

---

No. 2851. अनुमानालोकव्याख्या। Substance, country-made paper, 15 × 2 inches. Folia, 133. Lines, 6 on a page. Extent, 4,738 ślokas. Character, Bengali. Date, Sk. 1522. Place of deposit, Puri, S'añkara Áchárya's Maṭha. Appearance, very old. Prose. Correct.

**Anumánáloka-vyákhyá.** Notes on Jayadeva Miśra's gloss on the first book of Gaṅgeśa's Chintámaṇi. By Haridás Nyáyálañkára Bhaṭṭacharya.

Beginning. गौर्य्या इति—

अनुमानेति। तत्त्वचिन्तामणेर्ग्रन्थस्यानुमानपरिच्छेदे तद्रूपैकखण्डे षष्ठ्यर्थे सप्तमी। प्रत्यक्षानन्तरं प्रत्यक्षोद्देशानन्तरं तल्लक्षणान्तरं प्रत्यक्षनिरूपणान्तरं। अनुमानलक्षणं अनुमान-निरूपणं। इत्यादि।

End. एतस्यैवानन्दस्यान्यानि भूतानि इत्यादि श्रुतेः।
तत्त्वज्ञाने च प्रारब्धातिरिक्तसकलकर्म्मनाश इत्याहुः ॥

Colophon. इति महामहोपाध्यायश्रीहरिदासन्यायालङ्कारभट्टाचार्य्यविरचितानुमानालोकव्याख्या समाप्ता। शुभमस्तु १५२२।

विषयः। जयदेवमिश्रकृतानुमानखण्डालोकस्य व्याख्यानम्।

---

No. 2852. शब्दमण्यालोकटिप्पनी। Substance, country-made paper 15 × 2 inches. Folia, 62. Lines, 6 on a page. Extent, 2,278 ślokas. Character, Bengali. Date, Sk. 1521. Place of deposit, Purí, S'añkara Áchárya's Maṭha. Appearance, old. Prose. Incorrect.

**S'abdamaṇyáloka-ṭippaní.** Notes on Jayadeva Miśra's gloss on the third book of Gañgeśa's Chintámaṇi. By Haridása Nyáyálañkára Bhaṭṭácharya. *Cf. ante*, V, 299.

**Beginning.** यत्त्विति। + + + क्रियाविशेषणं। अथ शब्दस्यानन्तर्य्यवचनत्वेन आनन्तर्य्यवचनार्थशब्देन सूच्यत इत्यन्वयः। तच्च आनन्तर्य्यं लट्प्रत्ययान्तत्वेन इत्यादि।

**End.** स्वस्य च गतिः। समाधानं + त्तिद्वयेनेत्यादि। स + वदिति। स + तिरस्कारण इत्यादौ उपसत्या प्रतिरूपकेण समास इति भावः। सति प्रमाणभेद इति पाठः।

**Colophon.** इति महामहोपाध्यायश्रीहरिदासन्यायालङ्कारभट्टाचार्य्यकृता शब्दमण्यालोकटिप्पनी समाप्ता। शकाब्दाः। १५११।

विषयः। जयदेवमिश्रकृतशब्दमण्यालोकस्य व्याख्यानम्।

---

**No. 2853.** न्यायकणिका। Substance, country-made paper, 14 × 4 inches. Folia, 268. Lines, 10 on a page. Extent, 3,853 ślokas. Character. Nágara. Date, ? Place of deposit, Puri, S'añkara Ácharya's Maṭha. Appearance, old. Prose. Generally correct.

**Nyáya-kaṇiká.** A gloss on the Mímáṅsá treatise entitled *Vidhi-viveka*. By Váchaspati Miśra.

**Beginning.** साधने पुरुषार्थस्य सङ्गिरन्ते चयीविदः।
बोधं विधौ समायत्तमतः स प्रविविच्यते॥

स खलु शब्दभेदो वा लिङादिः। तद्व्यापारा + तिशयो वा प्रवृत्तिहेतुरुपेयते। अर्थभेदो वा। यदभिधानाच्छब्दोऽपि तथा व्यवदेश्यः। इत्यादि।

**End.** तथापि किमायातं विधावित्यत आह। साधनत्वं चास्य विधिरित्युक्तं।

**Colophon.** इत्याचार्य्यवाचस्पतिमिश्रविरचिता न्यायकणिका समाप्ता।

विषयः। विधिविवेकाभिधानमीमांसाप्रकरणस्य व्याख्यानम्।

---

**No. 2854.** अद्वैतमकरन्दटीका। Substance, country-made paper, 9 × 4 inches. Folia, 41. Lines, 8 on a page. Extent, 368 ślokas. Character, Bengali. Date, Sk. 1551. Place of deposit, Purí, S'añkara Ácharya's Maṭha. Appearance, old. Prose. Generally correct.

**Advaita-makaranda-ṭíká.** A gloss on the *Advaita-makaranda*, a Vedánta treatise on non-duality by Lakshmídhara. By Sárvabhauma Bháṭṭácharya.

Beginning. देवो निजाज्ञानवशेन साक्षी
जीवो मनःस्पन्दितमीश्वरश्च ।
जगन्ति जीवानपि वीक्षते यः
स्वस्थः स्वयं ज्योतिरहं स एकः ॥
श्रीवासुदेवविदुषा गौड़ाचार्य्येण यत्नतः ।
अद्वैतमकरन्दस्य क्रियते परिशोधनं ॥

गुरुदेवतानमस्कारस्य फलमाह ग्रन्थारम्भ इति । यद्यपि नमस्कार एव मङ्गलं तथापि तज्जन्यो धर्म्मोऽत्र मङ्गलपदेनोक्तः । इत्यादि ।

End. अहं प्रत्यगात्मा महः प्रकाश इति ॥
श्रीवन्द्यान्वयकैरवामृतरुचो वेदान्तविद्यामयाद्-
भट्टाचार्य्यविशारदान्नरहरेर्यं प्राप भागीरथी ।
गौड़ाचार्य्यवरेण तेन रचिता लक्ष्मीधरोक्तेरियं
शुद्धिः काचन वासुदेवकृतिना विद्वज्जनप्रीतये ॥
अद्वैतसारमकरन्दविशुद्धिरेषा
दोषान् विधूय विहिता बहुवादि + + ।
श्रीनीलशैलवसतेर्मुनिमानसाब्ज-
भृङ्गस्य सादरमकारि मयोपकारः ॥
कर्णाटेश्वरकृष्णरायनृपतेर्गर्व्वाग्निनिर्व्वापके
अत्र न्यस्तभरोऽभवद्गजपतिः श्रीरुद्रभूमीपतिः ।
तस्य ब्रह्मविचारचारुमनसः श्रीकूर्म्मविद्याधर-
स्यानन्दो मकरन्दशुद्धिविधिना सान्द्रो मया मन्दतः ॥

Colophon. इति श्रीमद्गौड़ाचार्य्यसार्व्वभौमभट्टाचार्य्यविरचिता अद्वैतमकरन्दटीका समाप्ता । शकाब्दाः । १५५१ ।

विषयः । लक्ष्मीधरकृताद्वैतमकरन्दाभिधेयवेदान्तप्रकरणस्य व्याख्यानम् ।

---

**No. 2855.** गोविन्दाष्टकव्याख्यानम् । Substance, palm-leaf, 17 × 1¼ inches. Folia, 11. Lines, 4 on a page. Extent, 236 ślokas. Character, Bengali. Date, ? Place of deposit, Puri, S'añkara A'chárya's Maṭha. Appearance, new. Prose. Correct.

**Govindáshṭaka-vyákhyána.** A commentary on S'añkara A'chárya's hymn in praise of Govinda. Anonymous.

Beginning. श्रीमत्पूर्णात्मब्रह्मणस्य पदपङ्कजद्वयं ।
प्रणम्य क्रियते टीका गोविन्दाष्टकगामिनी ॥

इह सकललोकहितावतारो भगवान् महाविष्णुः भूवनितयाभ्यर्थितोऽत्र भूभारपरिजिहीर्षया यदुकुले किलावतीर्णः सनकादिमुनिजनैरनुदिनमनुगीयमानसुचरितो भगवान् नन्दगोपवेश्मनि विजहार। तमेव विहारं अष्टभिः श्लोकैः — — — — — — अभिष्टौति सत्यमिति ।

End. सम्यक् निरुपद्रवः सन् आप्नोति । मद्भक्ता यान्ति मामपीति भगवद्वचनात् ।

Colophon. इति गोविन्दाष्टकव्याख्यानं समाप्तं ।

विषयः । शङ्कराचार्य्यकृतगोविन्दाष्टकस्य व्याख्या ।

---

No. 2856. यतिधर्म्मसमुच्चयम् । Substance, country-made paper, 11 × 4 inches. Folia, 128. Lines, 10 on a page. Extent, 2,380 ślokas. Character, Nágara. Date, Sm. 1668. Place of deposit, Puri, S'aṅkara A'chárya's Maṭha. Appearance, old. Prose and verse. Generally correct.

**Yatidharma-samuchchaya.** This work has already been noticed under No. 1756 (*ante*, V, 75). Here is given a fuller abstract of its contents.

Beginning. प्रणम्य विष्णुमात्मानं सच्चिदानन्दमुक्तिदं ।
\+ + + + + विश्वेशं मायया धृतविग्रहं ॥
विश्वेश्वरसरस्वत्या क्रियते वेदमानतः ।
यतेः परमहंसस्य धर्म्माणामेष सङ्ग्रहः ॥

तत्र सन्न्यासाश्रमकालनिर्णयः जावालश्रुत्या विहितः। ब्रह्मचर्य्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेदिति । इत्यादि ।

End. न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते ।
मलाक्तञ्च दशाहीनं वर्ज्जयेदम्बरं यतिः ॥

Colophon. इति श्रीपरमहंसपरिव्राजकविश्वेश्वरसरस्वतीसंग्रथिते यतिधर्म्मसमुच्चये निवृत्तधर्म्मानुष्ठानाचारः सम्पूर्णः । संवत् १६६८ ।

विषयः । सन्न्यासाश्रमप्रवेशकालनिरूपणं । तदधिकारिनिरूपणं । सन्न्यासलक्षणकथनं । सन्न्यासविधिकथनं । तत्र तप्तकृच्छ्रादिव्रतस्वरूपादिकथनं । दैव-आर्ष-भूत-पितृ-मातृश्राद्धाद्यष्टविधश्राद्धविधिकथनं । तत्र आत्मनः श्राद्धविधिकथनञ्च । तर्पणादिकथनं । होमविधिकथनं । शिखायज्ञोपवीतयोरप्सु होमविधिकथनं । दण्डग्रहणविधिकथनं । एकदण्डित्रिदण्डिभेदनिरू-

पणं। भिक्षुधर्म्मनिरूपणं। यतिधर्म्ममाहात्म्यकीर्त्तनं सन्न्यासमाहात्म्यकथनं। वस्त्रादिधारण-विधिनिरूपणमुखेन यतीनां कौपीनयुगलं कन्था दण्डश्चेति चत्वार्य्येव प्रसाधनानि नान्यदिति-निरूपणं। क्वचित् चीमाजिनादिधारणविधिकथनं। भक्ष्याभक्ष्यनिरूपणं। अहिंसासत्यास्तेया-दिरूपदशविधव्रतानुष्ठानावश्यकतानिरूपणं। परमहंसलक्षणकथनं। भिक्षोरपि ब्रह्मचर्य्यानु-ष्ठानविधिकथनं। यतीनां स्वधर्म्मनिरूपणं। परिव्राजकशब्दनिर्व्वचनकथनं। श्रवणमनननिदि-ध्यासनविधिकथनं। तत्र योगानुष्ठानप्रकारकथनञ्च। अथ यतीनां स्नानोपवासव्रताद्यनुष्ठान-विधिकथनं। शौचादिविधिकथनं। दन्तधावनादिविधिकथनं। भिक्षूणां त्रिसन्ध्यस्नानानुष्ठा-नविधिः। तत्कर्त्तव्यताकथनं। कमण्डलुप्रक्षालनादिविधिकथनं। कौपीनप्रक्षालणादिविधिक-थनं। आचमनादिविधिकथनं। तर्पणविधिकथनं। भिक्षाटनजपध्यानस्नानशौचसुरार्च्चन-रूपषट्कर्म्मानुष्ठानावश्यकताकथनं। भोजनविधिकथनं। अक्षमालादिविधिकथनं। यतीना-ममेध्यादिस्पर्शजनितप्रत्यवायपरीहारविधिकथनं। स्वाध्यायविधिकथनं। यतीनां वासस्था-नादिनिरूपणं। चातुर्मास्यविधिकथनं। यतीनां चौरविधिकथनं। प्रतिग्रहविधिकथनं। प्रायश्चित्तविधिकथनं। यतीनाञ्च प्रतिषिद्धानि। तत्र ताम्बूलादिवर्ज्जनावश्यकताकथनं। अवी-रादितः प्रतिग्रहादिनिषेधकथनं। तत्र अवीरादिलक्षणकथनं। अथ कुटीचक-बहूदक-हंस-परमहंसभेदेन भिक्षुकाणां चतुर्व्विधत्वकथनं। भिक्षुकपरिचर्य्यामाहात्म्यकथनं। भिक्षुकाणाम-न्त्येष्टिविधिकथनं। तत्र पुत्रादीनां कर्त्तव्यतादिनिरूपणं। तत्र सूतकैकोद्दिष्टादिनिषेधकथनं। एकादशाहे पार्व्वणकर्त्तव्यताकथनं। एवं संवत्सरेऽपि कर्त्तव्यमितिकथनं। तत्र च शिष्याणां कर्त्तव्यतानिरूपणं। कुटीचकस्य मरणे दाहविधिकथनं। यतीनां भोज्यान्नस्य विशेषेण परिशु-द्धादिनिरूपणं। यतीनां सामान्यतः कर्त्तव्यानि। तत्त्वज्ञानोपायकथनं। महावाक्यविचारवि-धिकथनं। जीवन्मुक्तलक्षणादिकथनञ्च।

---

**No. 2857.** वैयाकरणजीवातुः, वा चाङ्गसूत्रम्, (टीकासहितः।) Substance, palm-leaf, 15 × 1 inches. Folia, 35. Lines, 4—5—6 on a page. Extent, 690 ślokas. Character, Nágara. Date, ? Place of deposit, Puri, Rághavadása Maṭha. Appearance, new. Text, verse. Commentary, prose. Incorrect.

**Vaiyákaraṇa-jíbátu** ALIAS **Chánga-sútra.** An essay on the philosophy of grammar, on the nature and powers of words and the nature and characteristics of grammatical aphorisms. Anonymous.

**Beginning.** टीकायाः,—

गणेश्वरं नमस्कृत्य बालविज्ञानसिद्धये।
क्रियते चाङ्गसूत्राणां व्याख्या सत्यदबोधिनी॥

प्रणम्येति । चाङ्गुनामा अहं परमात्मानं प्रणम्य नमस्कृत्य एवं वक्ष्यमाणं वैयाकरणानां जीवातुं जीवनौषधं करोमि ।

मूलस्य,—

प्रणम्य परमात्मानं सुगतं द्वैतखण्डितं ।
वैयाकरणजीवातुं चाङ्गुरेतं करोम्यहम् ॥
संज्ञा च परिभाषा च विधिर्नियम एव च ।
प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणं ॥
गोयुथोऽथ नद्यौघोतो मण्डूकप्लुतसंज्ञकः ॥
सिंहावलोकनामा स्यादधिकारश्चतुर्व्विधः । इत्यादि ।

**End.** मूलस्य,—

या स्युः सेनासुराशालानिशाच्छाया द्रुमाः पुनः ।
उपज्ञोपक्रमौ नित्यं तदा त्विह प्रकाशने ॥
रात्राह्नौ पुंसि विज्ञेयावहो सुदिनपुण्यतः ।
पथोऽव्ययात् परो क्लीवे न क्लीवेति प्रदर्शनं ॥

इति वैयाकरणजीवातौ चाङ्गुकृते समासोद्देशः ।

टीकायाः,—

सुदिनपुण्यतस्तु सुदिनाहं पूण्याहं अपथं । कापथः । पथि चेति कादेशः । विपथं विपथः ।

**Colophon.** इति वैयाकरणजीवातौ चाङ्गुकृते समासोद्देशः ।

विषयः । संज्ञापरिभाषादिरूपषड्विधसूत्रलक्षणकथनं । गोयूथनद्यादिस्रोतोरूपादि-चतुर्व्विधाधिकारनिरूपणं । उक्तार्थलिङ्गार्थादिस्वरूपकथनं । वाचकादौ संख्यापुरुषलिङ्गादि-विवेचनं । धातोरर्थविशेषे द्विकर्म्मत्वनिरूपणं । उपसर्गयोगात् धातोरर्थान्तरग्रहणनिरूपणं । आगमस्वरूपादिकथनं । वालुकानां (?) चातुर्व्विध्यनिरूपणं । परस्मैपदादिस्वरूपनिरूपणं । वर्त्तमानादिकालस्वरूपनिरूपणं । निष्ठाप्रत्ययादिस्वरूपकथनं । भावादिवाच्यस्वरूपकथनं । षट्कारकस्वरूपकथनं । समासे लिङ्गान्तरप्राप्तिनिरूपणादिकञ्च ।

---

**No. 2858.** सावित्रीपञ्जरः । Substance, country-made paper, 12 × 4 inches. Folia, 6. Lines, 11 on a page. Extent, 135 ślokas. Character, Nágara. Date, ? Place of deposit, Puri, S'añkara Áchárya's Maṭha. Appearance, fresh. Verse. Incorrect.

**Sávitrí-panjara.** Rules for the adoration of the Divinity through the Gáyatrí verse. It is an extract from the Vaśishṭha-sañhitá.

**Beginning.** भगवन्तं देवदेवं ब्रह्माणं परमेष्ठिनं ।
विधातारं विश्वसृजं पद्मयोनिं प्रजापतिं ॥
शुद्धस्फटिकसङ्काशं महेन्द्रशिखरोपमं ।
विद्युत्पिङ्गजटाजूटतड़ित्करकमण्डलुः ॥ इत्यादि ।

**End.** किमत्र बहुनोक्तेन शृणु नारद तत्त्वतः ।
यं यं काममभिध्यायंस्तं तमाप्नोति नित्यशः ॥

**Colophon.** इति श्रीवसिष्ठसंहितायां सावित्रीपञ्जरविभागो+नाम षष्ठोऽध्यायः ।

विषयः । गायत्रीमाहात्म्यकीर्त्तनव्याजेन तन्न्यासध्यानादिनिरूपणं ।

---

**No. 2859.** छान्दोग्योपनिषद्वृत्तिः । Substance, country-made paper, 13 × 3 inches. Folia, 140. Lines, 6 on a page. Extent, 2,354 ślokas. Character, Bengali Date, ? Place of deposit, Purí, S'añkara A'chárya's Maṭha. Appearance, old. Prose. Incorrect.

**Chhándogyopanishad-vṛitti.** A gloss on the Chhándogya Upanishad of the Sáma Veda. By Bhagavadbhávaka.

**Beginning.** अचिन्त्यशक्तिमीश्वरं जगत्पतिं परायणं ।
मनोवचोमलापहं नमामि नित्यमच्युतं ॥

अथ छान्दोग्योपनिषत्पदार्थविवरणं संक्षेपेणोच्यते । ओं नमो भगवते वासुदेवाय । ओमित्येतदक्षरमित्यादि । यद्यप्यन्यत्रोपासनालम्बनमक्षरमङ्गीथाक्षरलम्बनं परमित्यादौ तथाप्यत्र शब्दस्वरूपं वक्ष्यमाणगुणविशिष्टमुपास्यं । इत्यादि ।

**End.** गृहस्थविषयत्वात् न आश्रमान्तरापादनं । स खल्वेवं वर्त्तयन् यावदायुषं न स पुनरावर्त्तत इति ।

**Colophon.** इति भगवद्भावककृतायां छान्दोग्योपनिषद्वृत्तौ अष्टमोऽध्यायः ।

विषयः । छान्दोग्योपनिषदो व्याख्यानम् ।

---

**No. 2860.** कृत्यकल्पतरुः, (मोक्षकाण्डम् ।) Substance, country-made paper, 10 × $2\frac{1}{2}$ inches. Folia, 117. Lines, 7 on a page. Extent, 2,457 ślokas. Character, Bengali. Date, ? Place of deposit, Puri, S'añkara A'chárya's Maṭha. Appearance, decayed. Prose and verse. Correct.

**Kritya-kalpataru.** An elaborate digest of the Smriti rules on duty. Under No. 2147, (VI, 28) has been noticed that section of the work which refers to time meet for religious observances. The MS. under notice contains the section devoted to salvation—Moksha-káṇḍa. The author's name is Lakshmidhara Bhaṭṭa.

**Beginning.** (प्रथमपत्रं विलुप्ताक्षरप्रायम् ।)

यज्ञेन देवानाप्नोति वैराजं तपसा + + ।
सन्न्यासाद्ब्रह्मणः स्थानं वैराग्यात् प्रकृतौ लयं ॥
ज्ञानात् कैवल्यमाप्नोति पञ्चैता गतयः स्मृताः ।

तत्र वैराजं स्थूलमहाभूतशरीरभोक्तृ + + वच्छिन्नपरमात्मस्वरूपं विराट् । इत्यादि ।

**End.**

तथा सर्व्वभूतात्मभूतस्य सम्यग्भूता + पश्यत ।
देवा + मार्गे मुह्यन्ति उपक्रम्य पदैः + + ॥
यथा गतिर्न दृश्येत तथैवास्य महात्मनः ॥

**Colophon.** इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण श्रीहृदयात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ मोक्षकाण्डं समाप्तं ।

विषयः । तत्र मोक्षस्वरूपकथनं । तदधिकारिनिरूपणं । वानप्रस्थाश्रमविधिकथनं । पचमानकाः अपचमानकाश्चेति वानप्रस्था द्विविधाः । अथ पचमानकाः पञ्चविधाः सर्व्वारण्यका, वैतुषिकाः, कन्दमूलभक्षाः, शाकभक्षाश्चेति । एवं क्रमेण सर्व्वत्र अवान्तरभेदनिरूपणं । वानप्रस्थधर्म्मकथनं । अथ यत्याश्रमनिरूपणं । तत्र सन्न्यासविधिकथनं । यतिधर्म्मकथनं । वैराग्यस्वरूपादिकथनं । संसारस्य अनित्यतादिनिरूपणं । विषयस्वरूपादिकथनं । अर्थपुत्रदारादिनिन्दनं । स्वर्गकामनादिनिन्दनं । कामक्रोधादिवर्ज्जनं । इन्द्रियजयविधिकथनं । अथ चतुर्व्विंशतितत्त्वकथनं । तत्र सृष्टिप्रक्रियाकथनञ्च । शरीरचिन्तनं । देहशारीरविवेकः । तत्र जीवब्रह्मात्मभावकथनं । ज्ञानकर्म्मयोगनिरूपणं । तत्त्वज्ञानहेतुकथनं । अथ योगविधिकथनं । तत्र योगाङ्गादिनिरूपणं । आहारादिनियमकथनं । मुक्तलक्षणकथनं । ध्येयस्वरूपकथनं । योगविभूत्यादिनिरूपणं । स्थितप्रज्ञचरितकीर्त्तनं । योगभ्रष्टस्य गतिकथनं । उत्क्रान्त्यादिनिरूपणं । अर्च्चिरादिमार्गनिरूपणञ्च ।

---

**No. 2861.** न्यायसिद्धान्तमाला । Substance, country-made paper, 12 × 3 inches. Folia, 203. Lines, 7 on a page. Extent, 4,418 ślokas. Character, Nágara. Date, SM. 1750. Place of deposit, Puri, S'aṅkara A'chárya's Maṭha. Appearance, decayed. Prose. Incorrect.

**Nyáyasiddhánta-málá.** A commentary on a portion of the Gautama Sútra on the Nyáya doctrine. By Jayaráma Nyáyapanchánana Bhaṭṭácharya.

**Beginning** ॐ नमो जगदुत्पत्तिस्थितिसंहारकारिणे ।
गुणत्रयमन्नद्धाय निर्गुणाय चिदात्मने ॥
प्रणयचपलगोपीमण्डलोल्लासिशीलं ।
शिशुगणकरतालीकल्पितानल्पलीलं ।
पदभरचलदुर्व्वीक्षिप्तनृत्यानुकारं
व्रजभुवि नररूप चित्स्वरूपं प्रपद्ये ।
विश्रान्तैः सुचिरं भवाध्वनि समासैर्व्यं बधैरादरा-
दुद्यन्मानकदम्बसिद्धसुभगाश्वत्थ स्थिरच्छायकं ।
दुस + + रादिकुभिनिवहान निर्द्दूय युक्तक्रमै-
र्न्यायारण्यमवारणं वितनुते श्रीन्यायपञ्चाननः ॥
सद्युक्तिमुक्ताफलकैर्नु निसूत्रेषु गुम्फिता ।
न्यायसिद्धान्तमालेयं हृदि धीरैर्निधीयतां ॥
— — — — — — — ।
धीरश्रीजयरामेण रामेणेव महोदधेः ।
न्यायसिन्धोः परं पारं गन्तुमध्वा निबध्यते ॥
आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यीत्यादिश्रुतेः । इत्यादि ।

**End.** शब्दत्वमेवान्यथा प्रमाणत्वमेनेति सिद्धं चत्वारि प्रमाणानीति शिवं ।
शब्दार्थनिर्णयो नाम गुरोरपि स + + टः ।
किञ्चित् श्रीजयरामोक्तं सुधीभिरभिधीयतां ॥

**Colophon.** इति महामहोपाध्यायश्रीजयरामन्यायपञ्चाननभट्टाचार्य्यकृतायां न्याय-सिद्धान्तमालायां प्रमाणलक्षणप्रकरणम् । संवत् १७५० ।

विषयः । प्रमाणलक्षणान्तं गोतमसूत्रस्य व्याख्यानम् ।

---

**No 2862.** तत्त्वविवेकः । Substance, country-made paper, 11 × 4 inches Folia, 150. Lines, 10 on a page. Extent, 3,504 ślokas. Character, Bengali. Date, ? Place of deposit, Puri, S'añkara Áchárya's Maṭha. Appearance, old. Prose. Correct.

**Tattva-viveka.** A dissertation on the non-dual theory of the Vedánta and salvation by its means. By Nrisiñhásrama Muni, disciple of Jagannáthásrama. *Cf.* Hall's "Contributions," p. 155.

**Beginning.** विश्वस्य योनिं विश्वेशं विज्ञानानन्दविग्रहं ।
नरकेशरिणं वन्दे प्रत्यञ्चं पुरुषोत्तमम् ॥
साक्षात्कृतब्रह्मभासा प्रहसन्मुखपङ्कजं ।
महीयांसमहं वन्दे गरीयांसं जगत्पतिं ॥
गुरूणा करुणापूर्व्वमुपदिष्टाद्वयात्मनः ।
कुर्व्वे तत्त्वविवेकं तं वीक्षतां + + केशरी ॥

•इह खलु कश्चित् कुतश्चिद् भाग्योदयान्नित्यलोकं नित्यादिभिराराधिताराध्यपादभगवद्-नुग्रहादतिविमलमानसः स्वयमेवेत्थं जगत्तत्त्वमालोचयति । इत्यादि ।

**End.** क्वाहं महीयसा शास्त्रं वात्सल्यं क्व गुरोरिदम् ।
अपि चाण्डालकलशे काशते खलु भास्करः ॥

**Colophon** इति श्रीमद्वेदान्तसाराभिज्ञश्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीनृसिंहाश्रम मुनिविरचिते तत्त्वविवेके द्वितीयपरिच्छेदः ।

विषयः । नित्यादिकर्म्मणां पापनिवर्त्तकत्वेन ब्रह्मज्ञानोपकारकत्वात् तदनुष्ठानावश्यकतानिरूपणं । ब्रह्मजिज्ञासाकर्त्तव्येत्यत्र जिज्ञासापदार्थविवेचनं । साधनचतुष्टयसम्पन्न एव तत्राधिकारी सच परमहंस एवेतिनिरूपणञ्च अध्यासस्वरूपादिविवेचनं । असद्वादनिरसनं । अहङ्कारात्मनोभिन्नत्वप्रतिपादनं । इत्यवच्छिन्नचैतन्यादिस्वरूपविवेचनं । स्वप्नजागरणस्वरूपादिकथनं । आत्मसद्भावे प्रमाणनिरूपणं । आत्मनः स्वगोचरप्रकाशत्वकथनं । तत्स्वरूपकथनञ्च । नानाजीववादकथनं । एकजीववादनिरूपणं । द्वैतोपासनया नाविद्यानिवृत्तिरपि तु अद्वैतोपासनेनेति विवेचनं । ब्रह्मज्ञानस्वरूपकथनं अज्ञानस्वरूपादिकथनञ्च । अथ निरस्तसमस्तकल्पनानर्थनिरतिशयानन्दात्मकं चैतन्यं त्वमदलक्ष्यमिति त्वम्पदार्थनिरूपणं । ब्रह्मणि प्रमाणचिन्तनं । वेदप्रामाण्यकथनं । विधिस्वरूपादिविवेचनं । ब्रह्मणः सच्चिदानन्दरूपत्वनिरूपणं । ब्रह्मजीवयोरभेदकथनं । जीवस्य औपाधिकत्वनिरूपणं । अद्वैतवाद एव सर्व्वदोषरहित इति निर्णयः । मोक्षस्वरूपादिनिरूपणं । तत्र जीवस्य अद्वैतब्रह्मसाक्षात्काराद्भेदभ्रमनिवृत्त्या सच्चिदानन्दब्रह्मावाप्तिरितिकथनञ्च ।

---

**No. 2863.** महावाक्यसिद्धान्तः । Substance, country-made paper, 11 × $8\frac{1}{2}$ inches. Folia, 3. Lines, 12 on a page. Extent, 90 ślokas. Character, Bengali. Date, ? Place of deposit, Puri, S'añkara A'chárya's Matha. Appearance, fresh. Prose and verse. Incorrect.

**Mahávákya-siddhánta.** On the true meaning of the maxim "thou art that,"—a Vedánta disquisition. By S'añkara A'chárya.

**Beginning** अथ महावाक्यार्थप्रबोधप्रकारं व्याख्यास्यामः। ॐतत्त्वमसीति महावाक्यमिति शिष्यं प्रतिज्ञापयेत्।

**End.** नाहं देहो न मे देहः केवलोऽहं सनातनः।
ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक्॥

एकमेवाद्वितीयं ब्रह्म नेह नास्ति न किञ्चन इति श्रूयते॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्कराचार्य्यविरचितमहावाक्यसिद्धान्तः सम्पूर्णः।

विषयः। तत्त्वमस्यादिमहावाक्यस्य व्याख्यानम्।

---

**No. 2864.** तत्त्वबोधिनी। Substance, country-made paper, 12 × 4½ inches. Folia, 229. Lines, 16 on a page Extent, 18,240 ślokas Character, Nágara. Date, ? Place of deposit, Puri, S'añkara A'chárya's Maṭha. Appearance, fresh. Prose. Incorrect.

**Tattvabodhiní.** A commentary on Sarvajṉátma Munis'vara's abridgment of the Vedánta aphorisms. By Nṛisñás'rama, disciple of Jagannáthásrama. *Cf.* Hall's "Contributions," p. 91.

**Beginning.** (प्रथमतस्त्रीणि पत्राणि खण्डितानि।)

पदस्य च तद्भावाद्विरुद्धयोरैक्यानुपपत्तेरित्याशङ्क्य प्रत्यगभिन्नं परमपदं विशिनष्टि अविक्रियमिति। कर्तृत्वादिविक्रियाशून्यमित्यर्थः। प्रत्यगभिन्नब्रह्मस्वरूपचैतन्यं चि—इत्यादि।

**End.** श्रीमज्जगन्नाथगुरोरनुग्रहः
प्रविश्यमायोजयदत्र (?) कर्मणि।
अतोऽयमस्यप्रसमनुग्यवन्नम +
प्रवृत्तिरेषेति बुधाः क्षमध्वं॥ (?)।

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यजगन्नाथाश्रमश्रीचरणप्राप्तविद्यनिखिलविद्वज्जनमनोहरश्रीमन्नृसिंहाश्रमश्रीचरणविरचितायां संक्षेपशारीरकव्याख्यायां तत्त्वबोधिनीसमाख्यायां फलाख्यश्चतुर्थोऽध्यायः समाप्तः॥

विषयः। सर्व्वज्ञात्ममुनीश्वरकृतसंक्षेपशारीरकाभिधानप्रकरणस्य व्याख्यानम्।

---

**No. 2865.** संसारतरणिः । Substance, country-made paper, 12 × 4 inches. Folia, 300. Lines, 6—7 on a page. Extent, 6,557 ślokas. Character, Nágara. Date, Sm. 1581. Place of deposit, Puri, S'añkara A'chárya's Maṭha. Appearance, old. Prose. Incorrect. Corrupt.

**Sañsára-ṭaraṇí.** A commentary on the Nirváṇa section of the Yogavás'ishṭha Rámáyaṇa. Author's name not made out.

**Beginning.** स्वाविद्याकल्पितद्वैतं नरसिंहाभिधं महः ।
वेदान्तवेद्यं वन्देऽहं परमानन्दविग्रहं ॥
सर्व्वगुणम + + प्रसादवो
जीवजात + + + श्रुतिर्गणौ ।
तस्य वेदगदितस्य वर्ण्यते
किं महत्त्वमखिलात्मनो गुरोः ॥
— — — — — — — — ।

अथ सत्यज्ञानानन्दाद्वितीयः परमात्मा भगवान् नारायणः — — — — प्राणिनामभ्युदयनिःश्रेयसार्थमुपायोपेयतया स्थितं कर्म्मज्ञानलक्षणं वेदार्थं मरीच्यादिभ्यः सनकादिभ्यश्च उपदिदेश । — — — — — — — — तच्च वशिष्ठरामसंवादं दिव्यज्ञानसम्पन्नो भगवान् वाल्मीकिः द्वात्रिंशच्छ्लोकसहस्रैः निबबन्ध । इत्यादि ।

**End.** असंवेदनं तुष्णीम्भाव इति । यच्च नैष्कर्म्यं प्रस्तुतं तन्न्याय उपसंहार इति सर्व्वं समञ्जसं ।

**Colophon.** इति संसारतरणिनाम्नि वाशिष्ठविवरणे निर्व्वाणप्रकरणयोगसप्तभूमिकोपाख्यानं चित्वारिंशत्तमः सर्गः । शुभमस्तु । संवत् १५८१ ।

विषयः । योगवाशिष्ठरामायणीयनिर्व्वाणप्रकरणस्य व्याख्यानम् ।

---

**No. 2866.** श्यामातापन्युपनिषत् । Substance, country-made paper, 9 × $3\frac{1}{2}$ inches. Folia, 3. Lines, 8 on a page. Extent, 42 ślokas. Character, Nágara, Date, ? Place of deposit, Puri. S'añkara A'chárya's Maṭha. Appearance. fresh. Prose. Incorrect.

**S'yámátápanyupanishat.** An Upanishad inculcating the divinity of S'yámá, a form of Durgá. The work is devoted to the Víjamantra of the goddess. Anonymous.

**Beginning.** ओं अथ हैनं ब्रह्मरन्ध्रे ब्रह्मस्वरूपिणीमाप्नोति शुभगां त्रिगुणितां मुक्तां सुभगां कामरेफेन्दिरां बिन्दुमेलनरूपां समष्ठिरूपिणीं । इत्यादि ।

**End.** स चावयोर्मिचभूतो भवति इत्याह भगवान् शिवः। निर्व्विकल्पेन मनसा षः सर्व्वम्।

**Colophon.** इति श्यामातापणी उपनिषत्।

विषयः। श्यामाया बीजत्वतन्माहात्म्यादिकथनं।

---

**No. 2867.** सिद्धान्तसङ्ग्रहविवृतिः। Substance, country-made paper, 13 × 2½ inches. Folia, 41. Lines, 8 on a page. Extent, 922 ślokas. Character, Bengali. Date, ? Place of deposit, Puri, S'añkara Áchárya's Maṭha. Appearance, old. Prose and verse. Incorrect.

**Siddhánta-sañgraha-vivṛiti.** A commentary on Bhojarája's treatise entitled *Siddhánta-sañgraha,* which treats of the supreme divinity of S'iva. By Somes'vara.

**Beginning.** सोमं सोमेश्वरं नत्वा सोमसोमार्द्धधारिणं।
सोमेश्वरेण विवृतो भोजसिद्धान्तसङ्ग्रहः॥

अथ शब्दब्रह्मणस्तात्पर्य्यमविद्वांसो न परं ब्रह्माधिगच्छेयुः। तदस्य कुत्र तात्पर्य्यमित्यपेचायां परमकारुणिको भोजराजो निजशक्तिसिद्धपरमेश्वरत्व + भावे सत्तासमानाख्यब्रह्मणि परकोटौ शिवस्वरूपे सर्व्वेषां पुराणानां मुख्यतस्तात्पर्य्यप्रदर्शनमुखेन तदुपदिशति, शिवरूपेति। मङ्गलपूर्व्वकं पुराणार्थं संगृह्णाति। सच्चिदानन्दमयः परमात्मा शिवः इत्यादि।

**End.** एवञ्च सर्व्वदा सर्व्वत्र सर्व्वेषां + + रूपः शिव एव सर्व्वात्मना उपास्यः। तस्यैव च ईश्वरत्वा + देवादिर्य्योपाधिकनिरूपितानि तान्यपि सर्व्वैस्तथैव उपास्यानि + इति सिद्धं।

**Colophon.** इति चैविध्य(द्य)महोपाध्यायसप्तविंशतिशाखाध्यायिसर्व्वाङ्गोपाङ्गपारगप्रतिसक्तसोमयाजिश्रीसोमेश्वरविरचिता भोजराजकृतसिद्धान्तसङ्ग्रहविवृतिः परिपूर्णा॥

विषयः। भोजराजपुराणसिद्धान्तसङ्ग्रहाभिधानसन्दर्भस्य व्याख्यानम्।

---

**No. 2868.** प्रायश्चित्तमनोहरः। Substance, palm-leaf, 15 × 1¼ inches. Folia, 67. Lines, 4 on a page. Extent, 1,273 ślokas. Character, Nágara. Date, ? Place of deposit, Puri, Rághavadása Maṭha. Appearance, new. Prose and verse. Generally correct.

**Práyaschittva-manohara.** An elaborate digest of the Smṛiti rules on expiations. By Murári Mis'ra, son of Kṛishṇa Mis'ra.

Beginning श्रीमन्मुरारिमिश्रेण कृष्णमिश्रस्य सूनुना ।
क्रियते व्यवहारार्थं प्रायश्चित्तमनोहरः ॥

तत्र प्रायश्चित्तं नाम भविष्यद्दुःखोत्पादकाधर्म्मविनाशककार्य्यविशेषः । तत्र प्रायश्चित्तातिशये गुरुत्वादादौ महापातकित्वं निरूप्यते । इत्यादि ।

End. यावद्गङ्गाब्धि ++ प्रपतति तपनः शम्भुरम्भोजसंस्थो
यावद् + + + + + + चन्द्र इन्द्रोऽप्युपेन्द्र ।
गोपीनाथप्रसादाद्विरचितरुचिरः कृष्णमिश्रेण तावद्-
ग्रन्थोऽयं कण्ठदेशे विलुठतु कृतिनां हारवत् स्त्रीजनानां ॥

Colophon. इति प्रायश्चित्तमनोहरः समाप्तः ।

विषयः । प्रायश्चित्तलक्षणं । ब्राह्मणनिरूपणं । ब्रह्महत्यादिमहापातकनिरूपणं । कामकृतादिपापलक्षणकथनं । घातकलक्षणादिकथनं । चौर्य्यादिलक्षणकथनं । अर्थशास्त्रधर्म्मशास्त्रयोर्विरोधे समन्वयकथनं । प्रायश्चित्तापवादकथनं । ब्रह्मवधप्रायश्चित्तकथनं । एवं सुरापानादिप्रायश्चित्तकथनं । गोवधप्रायश्चित्तादिकथनं । प्रायश्चित्तप्रशंसाकीर्त्तनं । अनाश्रमिप्रायश्चित्तकथनं । सन्ध्यातिक्रमप्रायश्चित्तकथनं । अग्न्युत्सादनप्रायश्चित्तकथनं । पञ्चयज्ञाननुष्ठानप्रायश्चित्तकथनं । असत्प्रतिग्रहप्रायश्चित्तकथनं । अपेयादिपानप्रायश्चित्तकथनं । कृततैलाभ्यङ्गस्य मूत्रोच्चारादिप्रायश्चित्तकथनं । देवतानिन्दाप्रायश्चित्तकथनं । व्रात्यप्रायश्चित्तकथनं । गोगमनमुखमैथुनादिप्रायश्चित्तकथनं । अस्पृश्यस्पर्शनादिप्रायश्चित्तकथनं । श्वादिदंशनप्रायश्चित्तकथनं । अग्नौ पादप्रतापनादिप्रायश्चित्तकथनं । व्रणे कृम्युत्पत्तिप्रायश्चित्तकथनं । पतितप्रायश्चित्तकथनं । ब्राह्मणस्य शूद्रशवानुगमनादिप्रायश्चित्तकथनं । अभक्ष्यभक्षणादिप्रायश्चित्तकथनं । तत्र लसुनादिभक्षणप्रायश्चित्तनिरूपणञ्च । वटादिपत्रभोजनप्रायश्चित्तकथनं । एकादश्यादिव्रतभङ्गप्रायश्चित्तकथनं । शूद्रपौरहित्यप्रायश्चित्तकथनं । श्राद्धे भोजनप्रायश्चित्तकथनं । अगम्यागमनादिप्रायश्चित्तकथनं । क्षत्रियादिवधप्रायश्चित्तकथनं । वृक्षादिच्छेदनप्रायश्चित्तकथनं । अविक्रेयविक्रयप्रायश्चित्तकथनं । ब्रह्मचर्य्यात् स्खलनप्रायश्चित्तकथनं । कूटसाक्ष्यप्रायश्चित्तकथनं । दुर्भरणप्रायश्चित्तकथनं । मृतगर्भसंस्कारणकर्त्तुः प्रायश्चित्तकथनं । जातिभ्रंशकरप्रायश्चित्तकथनं । देवतापराधप्रायश्चित्तकथनं । नीलवस्त्रादिधारणप्रायश्चित्तकथनं । प्रायश्चित्ते प्रतिनिधिविवेचनं । स्त्रीणां प्रायश्चित्ते विशेषकथनं । द्रव्यशुद्धिनिरूपणं । भूमिशुद्ध्यादिनिरूपणं । सगोत्राविवाहप्रायश्चित्तकथनं । गृहदाह प्रायश्चित्तकथनञ्च ।

---

**No. 2869.** प्रमाणरत्नमालानिबन्धः । Substance, country-made paper, 14 × 3 inches. Folia, 160. Lines, 10 on a page. Extent, 5,184 ślokas. Character, Bengali, Date, ? Place of deposit, Puri, S'añkara Áchárya's Maṭha. Appearance, decayed. Prose. Correct.

**Pramáṇa-ratnamálá-nibandha.** A commentary on Ánandabodha's *Pramáṇa-málá,* a treatise on the Vedánta doctrine of evidence. By Anubhútisvarúpa Yati. *Cf.* Hall's "Contributions," p. 159.

**Beginning.** भूतानां भाक्तिभूतिस्थितिहतिभजनं स्याद्यतो भूतयोने-
राराध्येन्द्रोऽध्वरे + सुरपुररमणं सुन्दरं राज्यमाप ।
गन्धर्व्वैः सिद्धसाध्यैः सुरनरनिकरैः किन्नरैरर्च्यमानो
स्तत्याद्यैश्चिन्तरामैस्तुरगतनु + + सोऽयमव्यान्मुरारिः ॥
श्रीमदानन्दबोधस्य जगदानन्ददायिनः ।
प्रमाणरत्नमालाया निबन्धः क्रियते मया ॥

तत्र प्रमाणमालाख्यं प्रकरणं चिकीर्षुराचार्य्यश्चिकीर्षितस्य प्रकरणस्याविघ्नेन परिसमाप्तिप्रचयपरिपन्थिकल्मषनिवृत्तये विशिष्टेष्टदेवताप्रणतिलक्षणमङ्गलाचरणच्छलेन प्रकरणप्रतिपाद्यमर्थं संक्षेपतो दर्शयति आनन्दमात्मानमिति ।

**End.** किन्तु बाधकमप्यस्तीत्याह तथात्व इति । रजतादेः स्वविषयज्ञानाभावकाले सत्त्व इति ।

**Colophon.** अतःपरं खण्डितत्वात् परिशेषवाक्यं नोपलभ्यते ।

विषयः । आनन्दबोधकृतप्रमाणरत्नमालाभिधानवेदान्तप्रकरणस्य व्याख्यानम् ।

---

**No. 2870.** सर्व्वार्थचिन्तामणिः । Substance, country-made paper, 10 × 4 inches. Folia, 105. Lines, 14 on a page. Extent, 2,469 ślokas. Character, Nágara. Date, Sm. 1886 Place of deposit, Ájimganj, Ráy Dhanapat Siñha, Bahádur. Appearance, fresh. Prose and verse. Incorrect.

**Sarvártha-chintámaṇi.** A treatise on astrological calculations. Anonymons.

**Beginning.** श्रीमद्देवगिरेस्तटाधिनिलयं श्रीवङ्कटेशं गुरुं
नत्वा व्यङ्कटनायकं त्वनुदिनं जातोऽप्यप + सुधीः ।
ज्योतिःशास्त्रमहाब्धिपारगमने वक्ष्यामि पोतात्मकं
ज्योतिःशास्त्रविवेक + + विदुषां सर्व्वार्थचिन्तामणिं ॥
गौर्व्वाम्बुजरुचिं देवीं सकृत् यान्ति (?) मनोरथं ।

देवाः प्रणम्य यं सर्व्वे तं नमामि गजाननं ॥
वागविभूतिप्रदा देवी या श्वेताम्बुरुहस्थिता ।
कर्पूरधवलाकारा स्वयं तिष्ठतु वाचि मे ॥
मेषादिराशयः सर्व्वे दिनेशप्रमुखा ग्रहाः ।
ये च लोकोपकर्त्तारः पान्तु मामिह ते सदा ॥
यज्जातके निगदितं मुनिमानवानां
न + + केऽपि सकलं कथयन्ति + + ।
प्रश्नोऽपि जन्मसदृशो भवति प्रभेदः
प्रश्नस्य चात्र जननस्य न किञ्चिदस्ति ॥ इत्यादि ।

**End.** यद्वा योगराश्यंशावदशायां योगराशीशापहृतौ वा केन्द्रस्य यदि पुत्रयोः वसुस्तुतादयस्तदा पुत्रभे केन्द्रेशः ।

**Colophon.** इति श्रीसर्व्वार्थचिन्तामणिः सम्पूर्णः । संवत् १८८६ ।

विषयः । ग्रहाणामुत्तमांशादिभेदकथनं । चणिकग्रहनिरूपणं । तन्वादिभावस्थाननिरूपणं । लग्नादिबलाबलनिरूपणं । केन्द्रस्थग्रहफलादिकथनं । ग्रहाणां भावादिनिरूपणं । आयव्ययभावादिनिरूपणं । विविधयोगनिरूपणपूर्व्वकं तत्र प्रत्येकं फलकथनं । जातकभङ्गनिरूपणं । दशाफलकथनं । अन्तर्दशादिनिरूपणञ्च ।

---

**No. 2871.** कालभैरवाष्टकम् । Substance, country-made paper, 10 × 4 inches. Folium, 1. Lines, 24. Extent, 18 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráy Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect.

**Kálabhairaváshṭaka.** A hymn in honour of Kálabhairava, a form of S'iva, in eight stanzas. By S'añkara Ácházrya.

**Beginning.** देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरं ।
नारदादियोगिवृन्दवन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे ॥
भानुकोटिभास्वरं भवाब्धितारकं परं
नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम् ।
कालकालमम्बुजाङ्घ्रिमास्य + + नश्वरं

काशिकापुराधिनाथकालभैरवं भजे ॥ इत्यादि ।

**End.** कालभैरवाष्टकं पठन्ति ये मनोहरं
ज्ञानमुक्तिसाधनं प्रशस्तपुण्यवर्द्धनम् ।
शोकमोहदैन्यलोभकोपतापनाशनं
ते प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं ध्रुवम् ॥

**Colophon.** इति श्रीशङ्कराचार्य्यकृतकालभैरवाष्टकं सम्पूर्णम् ।

विषयः । स्तोत्रव्याजेन कालभैरवस्य रूपगुणादिमाहात्म्यकथनं ।

---

**No. 2872.** अष्टोत्तरशतनामस्तोत्रम् । Substance, country-made paper, 10 × 4 inches. Folia, 3. Lines, 10 on a page. Extent, 52 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráy Dhanapat Siṅh, Bahádur. Appearance, new. Verse. Incorrect.

**Ashṭottara-śatanáma-stotra.** A hymn in praise of Vishṇu. Its speciality is, that in it 108 names of the divinity are recited with reference to the sacred place in which each name is best known. Anonymous.

**Beginning.** अष्टोत्तरशतस्थानेष्वाविर्भूतं जगत्पतिम् ।
नमामि जगतामीशं नारायणमनन्यधीः ॥
श्रीवैकुण्ठे वासुदेवमामोदे कर्षणाह्वयं ।
प्रद्युम्नं प्रमोदाख्ये सम्मोदे चानिरुद्धकं ॥
सत्यलोके तथा विष्णुं पद्माक्षं सूर्य्यमण्डले ।
क्षीराब्धौ शेषशयनं श्वेतद्वीपेतु तारकं ॥ इत्यादि ।

**End.** अष्टोत्तरशतं विष्णोः स्थानानि पठितानि च ।
अधीताः सकला वेदाः कृताश्च विविधा मखाः ॥
अवगाढानि तीर्थानि ध्यातस्तु भगवान् हरिः ।
सम्पादिता तथा मुक्तिः परमानन्ददायिनी ॥

**Colophon.** इति श्रीमदष्टोत्तरशतनामस्तोत्रं ॥

विषयः । अष्टोत्तरशतस्थानेषु भगवतो वासुदेवस्य नामभेदकथनपूर्व्वकं तन्माहात्म्यकीर्त्तनम् ।

---

